# अध्यात्मरामायणम्

महाराजश्रीविश्वनाथसिंहजूदेवविरचितव्यङ्ग्य-
प्रकाशिकाटीकासहितम्



सम्पादकः
प्रभातशास्त्री

प्रकाशक:
प्रभातशास्त्री
दारागंज-प्रयागः ।

Published With The Financial Assistance From The Ministry Of Education And Culture, Government Of India' New Delhi

•

शिक्षा तथा संस्कृति मंत्रालय, भारत सरकार
नयी दिल्ली की आर्थिक
सहायता से प्रकाशित ।

प्रथमसंस्करणम्
संवत् २०४० वि०
सन् १९८४ ई०

मूल्यम् : ७० रूप्यकाणि

मुद्रक:
सम्मेलनमुद्रणालय: प्रयागः ।



# ADHYĀTMA RĀMĀYAṆAM

*WITH*

THE COMMENTARY

*OF*

VIŚWANĀTHA SINGHJU DEVA

KNOWN AS

VYAṄGYA PRAKĀŚIKĀ



EDITED

*By*

**PRABHĀTA ŚĀSTRĪ**

# उपोद्घातः

## वाल्मीकिरामायणम्

मर्यादापुरुषोत्तमश्रीरामचन्द्रस्य पवित्रचरित्रचित्रणात्मकमादिकविमहर्षिवाल्मीकिना प्रणीतम्—आदिकाव्यं रामायणं समग्रे भारते चिरकालात् मननशीलानां मुनीनां तत्त्वचिन्तकानां दार्शनिकानां कल्पनाजगति विचरणशीलानां सिद्धसारस्वतकवीनां लोकभाषायां गीतलेखकग्राम्यकवीनां रामकथाऽऽधारेण नृत्यकारिणां तरुणीतरुणानाञ्च प्रेरणाप्रदायकम्। भारताद् सुदूरेषु देशदेशान्तरेष्वपि रम्येयं रामायणी कथा वाल्मीकिरामायणप्रभावात् लोकप्रिया वर्तते। तस्मादेव बहवो विद्वांसो भगवन्तं रामचन्द्रं परब्रह्मपरमात्मनोऽवतारं स्वीकृत्य साकाररूपेण निराकाररूपेण चाऽऽराधनाय पाण्डित्यपूर्णान् सरलान् सरसांश्च बहून् ग्रन्थान् प्रणीय भारतीयजनसमाजान् रामकथाकण्ठहारानचर्करुः।

क्रान्तिदर्शिनः कवयो वाल्मीकिरामायणात् प्रेरणामवाप्य संस्कृतभाषायां प्रादेशिकभाषायाञ्च पौराणिकपद्धत्या चरितवर्णनात्मकशैल्या च बहूनां रामायणानां नाटकानां चम्पूनां महाकाव्यानाञ्च रचनां विदधुः। तासु कृतिषु महाकविभासस्य 'प्रतिमानाटकम्' भवभूतेः 'उत्तररामचरितम्' मुरारेः 'अनर्घराघवम्' राजशेखरस्य 'बालरामायणम्' दिङ्नागस्य 'कुन्दमालानाटकम्' कालिदासस्य 'रघुवंशम्' कुमारदासस्य 'जानकीहरणम्' धाराधीशभोजस्य 'चम्पूरामायणम्' संस्कृतसाहित्यानुरागिणां सहृदयानां सुधीधौरेयाणां समाजे बहूनि लोकप्रियाणि वर्तन्ते। मुद्रणप्रधानेऽप्यस्मिन् युगे रामचरितमवलम्ब्य लिखितानां बहूनां महाकाव्यानां नाटकानां चम्पूनां रामायणानाञ्च पाण्डुलिपयोऽद्यावध्यमुद्रिता एव कर्पटावेष्टितास्ता भारतीयपुस्तकालयेषु वैदेशिकेषु संग्रहालयेषु च राराजन्ते।

## अध्यात्मरामायणम्

सत्यपि महनीये रमणीये वाल्मीकीये रामायणे कस्मात् कारणात् प्रस्तुतस्य अध्यात्मरामायणस्य रचना सञ्जातेत्यत्र किञ्चिद्विवेचनं न भविष्यत्यप्रासङ्गिकम्। बौद्धा विद्वांसः साधारणजनसमाजेषु विद्वद्वर्गेषु च भगवतीं सीतां भगवन्तं रामचन्द्रं प्रति—अश्रद्धोत्पादनाय 'दशरथजातकम्' पालिभाषायां प्रणीतवन्तः। जातकमिद

'जातकट्ठवण्ना', नामके पुस्तके संगृहीतमस्ति। अस्य जातकस्य 'हिन्दीभाषायामनुवादस्सञ्जातः। अस्मिन् जातके रामायणी कथा बौद्धैः विद्वद्वर्यैः विकृतरूपेण जनतानां पुरतः प्रस्तुतीकृता। बहुमान्येषु वाल्मीकिरामायणाद्याकरग्रन्थेषु भगवतः श्रीरामचन्द्रस्य जन्मभूमिः 'अयोध्या' सुविख्याता। परन्तु 'दशरथजातके' रामजन्मभूमिः 'वाराणसी' निगदिता। तथैव जातकानुसारेण भगवती सीता जनकसुता न, अपि तु दशरथपुत्री तथा तदीयोद्वाहो रामचन्द्रेण साकं समभवदित्यादि महती विडम्बना भारतीयेतिहासपुराणविरुद्धा समुपकल्पिता बौद्धैः।

[२](इयमेव दशा रामायणीयकथायाः जैनप्रणीतेषु रामकथाविषयकेषु ग्रन्थेष्वपि वरीवर्ति। ईशवीयतृतीयशताब्द्यां जैनपण्डितैः भगवतः रामचन्द्रस्य नामैव परिवर्तितम्। तद्रचितेषु रामचरितवर्णनात्मकेषु ग्रन्थेषु श्रीरामचन्द्रस्य नाम 'पद्म' इति विद्यते। रामस्य पद्म इति नाम स्वीकृत्य विमलसूरिनामा जैनविद्वान् जैनमहाराष्ट्रीप्राकृते ईशवीयचतुर्थशताब्द्यां पौराणिकपद्धत्या[३] 'पऊमचरियम्' ग्रन्थं जग्रन्थ। अयमेव ग्रन्थः ६७८ ईशवीये वत्सरे प्रसिद्धजैनकविरविषेणाचार्येण[४] 'पद्मचरितम्'-इति नाम्ना संस्कृतभाषायामनूदितः। ईशवीये अष्टमे वत्सरे स्वयम्भूदेवाभिधानो जैनकविः 'पऊमचरिउ'-इति नामकं ग्रन्थमपभ्रंशभाषायां व्यरचयत्। अस्य नामान्तरं रामायणपुराणमप्यस्ति। ग्रन्थेऽस्मिन् सन्ति पञ्चकाण्डानि। अस्य प्रारम्भिककाण्डस्य नाम बालकाण्डं विहाय विद्याधरकाण्डं व्यदधात्। अस्मिन् विद्याधरकाण्डे शिवभक्तो रावणः रामभक्तस्सुग्रीवभ्राता बालिश्च जिनभक्तरूपेण कविना चित्रितौ। अस्यैव अयोध्याकाण्डे रामस्य वनवासकालं चतुर्दशवर्षात्मकं नोल्लिख्य कविना षोडशवर्षात्मको व्यलेखि। अस्मिन्नेव काव्ये रामभ्रात्रा भरतेन जिनचैत्यालये वनवासादागते रामेऽहं जिनमतानुयायी भविष्यामीति प्रतिज्ञा उदघोषि। अस्यैव काव्यस्योत्तरकाण्डे भगवती सीताऽपि जैनमते दीक्षिता सञ्जाता। एतादृशी स्वयम्भूः कल्पना जैनकविस्वयम्भूदेवेनाऽकारि। भारतीयपरम्पराऽनुसारेण पवनपुत्रो हनुमान् सर्वत्रैव आजन्म बालब्रह्मचारिरूपेण वर्णितोऽस्ति। किन्तु काव्येऽस्मिन् अतुलबलशालिनः पवनपुत्रस्य विवाहमप्यकारयत् स्वयम्भूदेवः। तदनुसारेण हनूमतः पत्नीद्वयमासीत्। एका पंकजरागा द्वितीया च पद्मरागाभिधाना। विमलसूरिणा

---

१. अवलोक्यताम्––जातकस्य चतुर्थखण्डम्––३२५ तमं पृष्ठम्। प्रकाशकः––हिन्दी-साहित्य-सम्मेलनप्रयागः।

२. दृश्यताम्––( ) एतत्कोष्ठान्तर्गतांशकृते डॉ० फादरकामिलबुल्केरचितरामकथायाः ६६ तमपृष्ठादारभ्य ८६ तमपृष्ठपर्यन्तम्।

३. प्रकाशकः––भारतीयविद्याभवनम्––बम्बई।

४. प्रकाशकः––भारतीयज्ञानपीठम्––वाराणसी।

महाराष्ट्रीप्राकृते प्रणीते 'पऊमचरियम्' नामके रामायणे हनूमतः पत्न्याः नाम अनंग-कुसुमा-इत्युदलेखि। रामस्य अष्टसहस्राणि लक्ष्मणस्य च षोडशसहस्राणि पत्न्यो वर्णिताः।)

संस्कृते [1]अञ्जनापवनजयनामकमेकं नाटकमस्ति। अस्य नाटकस्य प्रणेता जैन-मताऽनुयायी, हस्तिमल्लनामकः कविः। अनेन कविनाऽञ्जना हनूमतः पत्नी-रूपेण चित्रिता। द्वादशशताब्द्यां समुत्पन्नेन काव्यानुशासनलेखकेन हेमचन्द्राचार्येण 'त्रिषष्टिशलाकापुरुषचरिताभिधानो' ग्रन्थो व्यलेखि। ग्रन्थेऽस्मिन् जैनधर्मोपदेशकचतु-र्विंशतितीर्थङ्कराणां वर्णनेन साकं जैनमतावलम्बिनां महापुरुषाणां वर्णनप्रसङ्गे अष्टमबलदेवरूपेण भगवतो रामचन्द्रस्याऽपि वर्णनमकारि हेमचन्द्राचार्येण।

इत्थं बौद्धैः पालिभाषायां जैनविद्वद्भिः संस्कृत-प्राकृत-अपभ्रंशभाषासु मर्यादापुरुषो-त्तमरामचन्द्रस्य जगज्जननीजनकात्मजायाः पवनपुत्रहनुमतः स्तोत्रपात्रं पवित्रं चरित्रं भ्रष्टरूपेण रामभक्तानां जनानां समक्षे उपस्थापितम्। अमी बौद्धजैनकवयो जनतायाः पुरत ईदृग्रूपेण रामायणकथाप्रस्तुतीकरणे प्रतिपलं कस्मात् कारणात् प्रयत्नशीला आसन् अयमपि विषयो विचारकोटिमवगाहते। अधुना यथा रामायणकथा तदाधारेण निर्मित-नाटकाभिनयश्च बोभवीति तथैव [2]प्राचीनकालेऽपि रामायणकथाया रमणीयरामायणीय-नाटकानामभिनयस्य च परम्पराऽऽसीदिति प्रतीयते। कथाश्रवणे नाटकाभिनयप्रेक्षणे च महान् जनसम्मर्दः भवति स्म इत्यप्यनुमानसापेक्षम्। एवं बौद्धमठे बौद्धभिक्षूणां तथा जैनमन्दिरे जैनमुनीनाञ्च प्रवचनप्रदानस्य तथा तद्धर्मप्रचारकनाटकानामभिनयस्य च परम्पराऽऽसीदित्यनुमिनोमि। किन्तु एतेषां प्रवचनश्रवणे श्रोतॄणां नाटकाऽभिनयदर्शने दर्शकानां तादृशः सम्मर्दः न सञ्जायते स्म यादृशो रामायणकथाश्रवणे तदाधृत्य लिखि-तानां रूपकाणामभिनयदर्शने च अजायत। एतेनाऽतिरुष्टाः खिद्यमानमानसा ईर्ष्यालवो बौद्धा जैनाश्च श्रीरामचन्द्रस्य चरित्रहनने प्रवृत्ता अभवन्। अस्यैव परिणामोऽस्ति यद् भारतवर्षस्य राष्ट्रियमहाकाव्यवाल्मीकिरामायणनायकस्य मर्यादापुरुषोत्तमश्रीराम-चन्द्रस्य रामायणस्यान्यपात्राणाञ्च चरित्रं दूषयितुं जैनाः स्वकीयग्रन्थेषु बौद्धा जातकेषु मनसा वाचा कर्मणा प्रायतन्त। एतेन चेखिद्यमानमानसः कश्चित् विद्वान् श्रीरामचन्द्रं परब्रह्मपरमात्मनः पूर्णावतारं द्योतयितुं 'अध्यात्मरामायण' मरीरचत्।

## अध्यात्मरामायणस्य रचयिता

ईदृशस्य दार्शनिकचिन्तनभृतस्य शिवपार्वतीसंवादात्मकस्याऽस्य रामायणस्य रचयिता

---

१. प्रकाशकः—माणिकचन्द्रदिगम्बरजैनग्रन्थमालाभावनगरम्।

२. द्रष्टव्यम्—हरिवंशपुराणस्य विष्णुपर्वणि ९३ तमोऽध्यायः।

कः ? स भारतवर्षस्य कस्मिन् प्रदेशे कस्मिन् काले बभूव इत्यादिविषये बहुवैमत्यं वरीवर्ति। इदमेव प्रधानं कारणमस्ति यद् भारतीयविदुषां समाजे—एतद्ग्रन्थसम्बन्धिनः सर्वेऽपि प्रश्ना अद्यावधि अनिर्णीता विवादविजृम्भिताश्च वर्तन्ते। क्रमशः विचारयामः। अस्य लेखकः मदीयं रामायणं वाल्मीकिरामायणमिव समादरं प्राप्नोत्विति भावनया भावितो भूत्वेदं रामायणं वेदव्यासरचितब्रह्माण्डपुराणान्तर्गतमित्युदघोषयत्। इत्थमस्य रचयिता महर्षिवेदव्यासः इति विचारधारा श्रद्धालुभक्तजनानां समुदाये प्रचलिता सञ्जाता। प्रसिद्धजर्मनविदुषा आफ्रेक्टमहाभागेन [1]'कैटलागस कैटलागारम्'—नामके ग्रन्थे इटालियनविदुषा डॉ० एल० पी० टे० सी० टरीमहोदयेन 'रामचरितमानस और वाल्मीकिरामायणपुस्तकस्य' [2]प्राक्कथने च अध्यात्मरामायणलेखको वेदव्यास एवेति प्रतिपादितम्। डॉ० राघवन् महोदयेनाऽपि[3] 'न्यूकैटलागस कैटलागारम्' ग्रन्थे अध्यात्मरामायणं ब्रह्माण्डपुराणान्तर्गत-मित्युद्घोषितम्। अस्य रामायणस्य संस्कृतटीकाकारः शृङ्गवेरपुराधीशः [4]श्रीरामवर्ममहोदयः 'अध्यात्मरामायणरचयिता' महर्षिवेदव्यासः—इत्यवोचत्। अस्य रामायणस्य अंग्रेजीभाषाऽनु-वादकेन [5]श्रीबैजनाथमहोदयेनाप्यनया विचारधारया सह स्वभूमिकायां सहमतिः प्रकटिता। अमीषां सर्वेषां विद्वद्धौरेयाणाम्—'अध्यात्मरामायणम्' ब्रह्माण्डपुराणान्तर्गतं वेदव्यास-प्रणीतञ्चेति प्रतिपादनं विनिगमनाविरहसंवलितम्।

गीताप्रेसगोरखपुरतः प्रकाशिते 'अध्यात्मरामायणे' 'इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे अध्यात्मरामायणम्' संपूर्णमित्युल्लेखोऽपि निराधारः। प्रकाशिते ब्रह्माण्डपुराणे पूर्वखण्डः

---

१. अवलोक्यताम्—ए पोर्शन आफ दि ब्रह्माण्डपुराण
कैटालागस कैटलागारम्। पृष्ठम् ११।

२. हमें विदित है कि तुलसीदास ने रामायण के रहस्यात्मक पुनः कथन अध्यात्म-रामायण का भी उपयोग किया, जिसे ब्रह्माण्डपुराण में सम्मिलित किया गया है। (ग्रन्थोऽयम्-अंग्रेजीभाषाऽनूदितस्य मूलरूपेण—इटालियनभाषायां डॉ० एल०पी० टेसीटरी-प्रणीतशोधप्रबन्धस्याऽनुवादात्मकः। हिन्दीभाषाऽनुवादकः डॉ० राधिकाप्रसादत्रिपाठी)।

३. ए पोर्शन आफ दि ब्रह्माण्डपुराण।
न्यू कैटलागस कैटलागारम् प्रथमभागः। पृष्ठम् १४८।

४. परमदयालुर्भगवान् साक्षाद् वेदव्यासः स्फुटं बोधयितुं नारदब्रह्मसंवादरूपेण ब्रह्माण्ड-पुराणे अध्यात्मरामायणसंहितां चक्रे। अध्यात्मरामायणस्य श्रीरामवर्मकृतसेतुनामटीकातः, पृष्ठम् १।

५. दि अध्यात्मरामायण इज ए कैनोनिकल बुक् ऑफ् वैष्णवाज् एण्ड इज् ए पार्ट आफ् ब्रह्मपुराण। एक्स्ट्रा वाल्यूम। पृष्ठम् १। प्रकाशकः-पाणिनि आफिस इलाहाबाद १९१३। पृष्ठम् १५।

उत्तरखण्डश्च न स्तः। [1]एतद् विपरीतं ब्रह्माण्डपुराणस्य विभाजनं प्रक्रियापादः उपोद्घातः तथा उपसंहारपादश्च इति त्रिषु रूपेषु वर्तते। अस्य पुराणस्य सप्तमाध्याये रावणबालि-सुग्रीवप्रभृतीनां जन्मकथा तु वरीवर्ति किन्तु अध्यात्मरामायणमाहात्म्यन्नास्ति।

अस्य लेखकः क इत्यस्मिन् विषये प्रयागविश्वविद्यालयस्य दिवंगतप्राध्यापकश्रीरघु-वरमिट्ठूलालशास्त्रिमहोदयः[2] प्रयागस्थगङ्गानाथझाशोधसंस्थानपत्रिकायामेकं लेखमु-ल्लिख्य अध्यात्मरामायणप्रणेता श्रीरामानन्दाचार्य इति प्रत्यपादयत्। शास्त्रिमहो-दयानामुक्तमतस्य मुख्याऽऽधारः[3] भविष्यपुराणे वर्तमानं काशीस्थशिवोपासकश्रीरामशर्मणो निम्नलिखितं कथानकं वर्तते—

रामशर्मा स्थितः काश्यां शङ्करार्चनतत्परः।
शिवरात्रे द्विजो धीमान् (श्री) विमुक्तेश्वरस्थले।
एकाकी जागरन् ध्यानी जप्त्वा पञ्चाक्षरं शुभम्॥
तदा प्रसन्नो भगवान् शङ्करो लोकशङ्करः।
वरं ब्रूहीति वचनं तमाह द्विजसत्तमम्॥
रामशर्मा शिवं नत्वा वचनं प्राह नम्रधीः।
भवान्यस्य समाधिस्थो ध्याने यस्य परो भवान्॥
स देवो हृदये मह्यं वसेत्तव वरात्प्रभो!।
इत्युक्तवचने तस्मिन् विहस्याह महेश्वरः॥
एका वै प्रकृतिर्माया त्रिधा ब्रह्मस्वरूपिणी।
शून्यं भूता व्यवस्यैव पुरुषस्यार्द्धतैजसम्।
गृहीत्वा लोकजननी पुंक्लीबौ सुषुवे सुतौ॥
पुमान् नारायणः साक्षात् गौरश्चाष्टभुजैर्युतः।
त्रिधा बभूव भगवान् स्वेच्छया विश्वरक्षकः॥
अर्धतेजास्स वै विष्णुर्वनमाली चतुर्भुजः।
क्षीरशायी स आदित्यः स्वयं सद्गुणदेवता॥
अर्धतेजा द्विधा सैव नरनारायणावृषी।
जिष्णुर्विष्णुः स वै ज्ञेयः पर्वते गन्धमादने॥

---

१. ब्रह्माण्डपुराणम्। प्रकाशकः—खेमराजश्रीकृष्णदासः बम्बई।

२. दि आथरशिप आफ दि अध्यात्मरामायण गङ्गानाथझारिसर्चइन्स्टीट्यूटजनरल जिल्द १। प्रथमभागः फरवरी १९४३-४४। पृष्ठम् २१५।

३. भविष्यपुराणस्य तृतीयप्रतिसर्गपर्वणि १९तमे अध्याये २१-३२तमाः श्लोकाः। पृष्ठम् ३५८-३५९। प्रकाशकः—खेमराजश्रीकृष्णदासः बम्बई।

क्लीवः संकर्षणः साक्षाद् ब्रह्मरूपं त्रिधाऽभवत्।
पूर्वार्द्धात् गौरशेषश्च परार्धाद् रामलक्ष्मणौ॥
गौरशेषो द्वापरान्ते बलभद्रः स वै स्वयम्।
रामलक्ष्मणयोर्ध्यानं बलभद्रस्य पूजनम्।
सदा मया च कर्तव्यं तत्प्राप्य त्वं सुखी भव॥
इत्युक्त्वाऽन्तर्दधे देवो रामानन्दस्य चाऽभवत्।
कृष्णचैतन्यमागम्य द्वादशाब्दवयोवृतम्॥
शिष्यो भूत्वा स्थितस्तत्र कृष्णचैतन्यपूजकः।
कृतं तदाज्ञया तेनाध्यात्मरामायणं शुभम्॥

भविष्यपुराणस्य प्रस्तुतकथानकमेवं सूचयति यद् द्वादशवर्षीयश्रीकृष्णचैतन्यस्यादेशेन—'अध्यात्मरामायणकर्तृत्वेन' चर्चितो रामानन्दो रामावतसंप्रदायप्रवर्तकाच्छ्रीरामानन्दाचार्यादभिन्न एव इति स्वीकरोति रघुवरमिट्ठूलालः। एतद्विषये ममायं तर्को यद् विवेचनविश्लेषणप्रधाने वर्तमाने वैज्ञानिकयुगे इतिहासपण्डिताः भविष्यपुराणे [1]ऐतिहासिकव्यक्तिविषयकं कथानकम्—ऐतिहासिकमहापुरुषजन्मतिथ्यादिसामञ्जस्यरहितं नितान्तं कल्पनाकलितं मन्यन्ते। अस्य पुराणस्य [2]संस्करणचतुष्टयं वर्तते। पुराणस्य रचनाकालविषयेऽपि विदुषां समाजे बहुवैमत्यं वरीवर्ति। अस्यां दशायां यस्य पुराणस्य रचानाकालो विवादास्पदः चत्वारि संस्करणानि च सन्ति तस्य कथनं प्रामाणिकन्न। अस्याऽप्रामाणिकत्वेऽपरमपि कारणमस्ति।

---

१. द्रष्टव्यम्—इस पुराण के विषय में सबसे अधिक गड़बड़ी दिखाई पड़ती है।
पुराणविमर्शपृष्ठम् १५१। आचार्य बलदेवउपाध्याय।

२. द्रष्टव्यम्—इसकी बहुत सी कथाएँ आधुनिक प्रक्षिप्त प्रतीत होती हैं। पर विद्वानों का कहना है कि व्यास जी ने अपनी दिव्यदृष्टि द्वारा भविष्य को प्रत्यक्ष कर लिखा है, अन्यथा भविष्य वर्णन के विना इस पुराण का भविष्य नाम कैसे चरितार्थ हो सकता है? फिर भी यह स्वीकार नहीं किया जा सकता है कि यह ज्यों का त्यों उपलब्ध है। इसके प्रतिसर्गपर्व में बहुत सी कथायें प्रक्षिप्त प्रतीत होती हैं और इसके बहुत से शब्द भी आधुनिक मालूम पड़ते हैं, 'जैसे' देहलीं प्रति गच्छतः। और प्रसिद्ध-प्रसिद्ध राजाओं का वर्णन चलते-चलते विक्टोरिया पर रुक जाता है। यदि यह व्यासकृत होता तो एडवर्ड और जार्ज आदि का भी वर्णन अवश्य होता। श्लोकनिर्माणशैली नवीन मालूम पड़ती है। ......इस समय चार प्रकार के भविष्यपुराण उपलब्ध हैं, सब में कुछ भेद है।
पुराणतत्त्वमीमांसापृष्ठम् १७८-१७९। डॉ० श्रीकृष्णमणित्रिपाठी।

पद्यप्रणयनप्रवीणाः पण्डितगणाः समये-समये पद्यानि प्रणीय तान्यस्य पुराणस्यांशभूतान्यकुर्वन्। इदमेव कारणमस्ति यदस्मिन् पुराणे श्रीविक्टोरियामहाराज्ञ्याः वर्णनं विराजते।

एतेन प्रतीयते यदष्टादशशताब्दीपर्यन्तं श्लोकनिर्माणनिपुणाः पण्डितगणा स्वस्वकल्पितान् श्लोकान् भविष्यपुराणे समावेशयितुं समचेष्टन्त। यद्यहं तुष्यतु दुर्जनन्यायेन भविष्यपुराणे वर्णितस्य शिवोपासकरामशर्मणः कथां प्रामाणिकीं स्वीकृत्य अध्यात्मरामायणप्रणेता रामानन्दाचार्य एव इति स्वीकरोमि—र्ताह—अस्य पुराणस्य प्रतिसर्गपर्वणि रामानन्दसमुत्पत्तिवर्णनात्मके सप्तमाध्याये चर्चितेन जन्मकथाविषयकेण रामशर्मणः कथानकेन सहाऽस्य सामञ्जस्यं कथं निर्वहेत्? तद् यथा—

इत्युक्त्वा स्वस्य बिम्बस्य तेजोराशिसमन्ततः।
समुत्पाद्य कृतः काश्यां रामानन्दस्ततोऽभवत्॥
देवलस्य च विप्रस्य कान्यकुब्जस्य वै सुतः।
बाल्यात्प्रभृति स ज्ञानी रामनामपरायणः॥
पित्रा मात्रा परित्यक्तो राघवं शरणागतः।
तदा तु भगवान् साक्षात् चतुर्दशकलो हरिः॥
सीतापतिस्तद्हृदये निवासं कृतवान् मुदा।
इति ते कथितं विप्र! मित्रदेवांऽशतो यथा॥
रामानन्दस्तु बलवान् हरिभक्तेश्च सम्भवः।

भविष्यपुराणस्याऽनेन कथानकेन वाराणसीस्थशिवोपासकरामशर्मा रामोपासकरामानन्दाचार्यात् भिन्नजनोऽस्तीति स्पष्टतया प्रतीयते। रामानन्दाचार्यस्य जन्मस्थली वाराणसी इति भविष्यपुराणस्य कथनं न समीचीनम्। यतो हि रामानन्दीयसाधवस्तथा [1]इतिहासकारास्तत्संप्रदायाऽऽचार्याः रामानन्दस्य जन्मस्थानं प्रयागं मन्वते। रामानन्दाचार्येण स्वकीये [2]श्रीवैष्णवमताब्जभास्करप्रारम्भे, भगवतो रामचन्द्रस्य वन्दनया सार्धं

---

१. अगस्त्यसंहिता एवं भक्तमाल से प्राप्त सूचनाओं के आधार पर रामानन्द के जीवनवृत्त का निर्माण निम्नलिखित ढंग से किया जा सकता है—रामानन्द का जन्म प्रयाग में पुण्यसदन शर्मा के घर संवत् १३५६ वि० माघकृष्णसप्तमी में सूर्य के सात दण्ड चढ़ने पर सिद्धि योग चित्रा नक्षत्र कुम्भ लग्न में हुआ था। माता का नाम सुशीला देवी था।...स्वामी जी के जीवन पर प्रकाश डालनेवाले अन्य ग्रन्थों 'प्रसंगपारिजात' 'भविष्यपुराण' आदि की प्रामाणिकता नितान्त संदिग्ध है।

हिन्दीसाहित्यकोशपृष्ठम् ६४८।

२. श्रीमन्तं श्रुतिवेद्यमद्भुतगुणग्रामाग्र्यरत्नाकरं,
प्रेयः स्वेक्षणसंसुलज्जितमहीजाताक्षिकोणेक्षितम्।

मान्यानां स्वगुरूणां स्मरणमथ च स्वभक्तेभ्यः 'रां रामाय नमः' 'श्रीमद्रामचन्द्र-चरणौ शरणं प्रपद्ये' 'श्रीमते रामचन्द्राय नमः' एतेषां मन्त्राणां जपोपदेशश्च कृतः।

[1]रामार्चनपद्धतौ तु स्वकीयसमस्तगुरुजनान् श्लोकत्रयेषु सादरं संस्मृत्य [2]अन्ते च

---

भक्ताशेषमनोऽभिवाञ्छितचतुर्वर्गप्रदं स्वर्द्रुमं।
रामं स्मेरमुखाम्बुजं शुचिमहानीलाश्मकान्तिं भजे ॥

—श्रीवैष्णवमताब्जभास्करः, पृष्ठम् १।

इत्थं तत्त्वादिविज्ञोऽखिलविविदिषया विश्रुतः श्रौतनिष्ठो,
रामानन्दोऽभिवन्द्यो जगति सुरसुरानन्दपृष्टो गरिष्ठः।
प्राचार्य्याऽऽचार्य्यवर्यात् यतिपतिसहितान् प्रोक्तवांस्तत्प्रणम्य,
श्रीमांस्तस्मै रमेशं शरणमुपगतस्तद्विजिज्ञासुमुख्यैः ॥

—तत्रैव, पृष्ठम् ११।

जाप्यस्तत्तारकाख्यो मनुवरमखिलैर्वह्निबीजं यदादौ,
रामो ङेप्रत्ययान्तो रसमितशुभदस्वक्षरः स्यान्नमोऽन्तः।
मन्त्रो रामद्वयाख्यः सकृदिति चरमप्रान्वितो गुह्यगुह्यो,
भूताक्ष्युत्सख्यवर्णः सुकृतिभिरनिशं मोक्षकामैर्निषेव्यः ॥

—तत्रैव, पृष्ठम् २४–२५।

१. रामानन्दबुधो दयाजलनिधिं श्रीराघवानन्दनं,
श्रीमन्तं मुनिपुङ्गवं च हरियानन्दं श्रियानन्दकम्।
देवानन्दमयो सदागुणगणैराढ्यं मुनीशं वरं
द्वारानन्दमुनिं मुनीश्वरवरं रामेश्वरं सद्वरम् ॥
श्रीमन्तं मुनिवर्यमेव च सदाचार्य्यं च गङ्गाधरं,
वन्द्यं तं पुरुषोत्तमं च सदयं देवाधिपं सद्वरम्।
वैराग्यादिनिधिं गुणैकनिलयं श्रीवोपदेवं कविम्,
श्रीविद्यागुणवारिधिं मुनिवरं श्रीमाधवाचार्य्यकम् ॥
कूरेशं यतिराजमद्भुतगुणं रामानुजं सद्वरं,
पूर्णं श्रीमुनियामुनं मुनिवरं श्रीराममिश्रं तथा।
श्रीमन्तं मुनिपुण्डरीकनयनं नाथं मुनिं श्रीशठ-
द्वेषं श्रीपूतनापतिं जनकजां रामं सदा संश्रये ॥

—रामार्चनपद्धतिः, पृष्ठम् ४-५।

२. रामानन्दकृता सेयं श्रीरामार्चनपद्धतिः।
मुमुक्षूणां मुदे भूयाच्छ्रीरामप्रीतिकारिणी ॥

—रामार्चनपद्धतिः, पृष्ठम् ३६।

ग्रन्थकाररूपेण श्रीरामानन्दाचार्येण स्वनाम व्यलेखि। एतद्विपरीतम्—अध्यात्मरामायणप्रारम्भे शिवस्य दक्षिणामूर्तिस्वरूपस्य वन्दना वर्तते। अध्यात्मरामायणस्याऽन्ते च रामार्चनपद्धताविव पुस्तकलेखकरूपेण रामानन्दाचार्यस्य नाम न प्राप्यते। श्रीरामानन्दाचार्येण रामार्चनपद्धतौ स्वपूर्वाचार्याणां स्मरणप्रसङ्गे रामानुजाचार्योऽपि स्मृतिपथन्नीतः। एतेन प्रतीयते यत् श्रीरामानन्दाचार्यः विशिष्टाद्वैतवादी आसीत्। तस्यां दशायां यदि 'अध्यात्मरामायणम्' विशिष्टाऽद्वैतमताऽनुयायिनो रामानन्दस्य रचना स्यात् तदा अध्यात्मरामायणप्रारम्भे [1]शिवस्य तादृशदक्षिणामूर्तिस्वरूपस्य वन्दना न भवेत्। भारतीया विद्वत्तल्लजा इमं ग्रन्थं श्रीशङ्कराचार्यस्य अद्वैतवादेन प्रभावितं मन्यन्ते। तथासति [2]श्रीशङ्कराचार्यस्य अद्वैतवादेन पूर्णतया प्रभावितस्य—अध्यात्मरामायणस्य रचयिता विशिष्टाद्वैतवादिश्रीरामानन्दाचार्य एव इति रघुवरमिट्ठूलालशास्त्रिमहोदयानां कथनमयुक्ततरम्।

पुनः प्रश्न उदेति—यदि प्रौढभाषायां प्रणीतस्य अध्यात्मरामायणस्य लेखकः रामानन्दाचार्यो नास्ति, तर्ह्यन्यः कः अध्यात्मरामायणरचयिता? स च भारतवर्षस्य कस्य प्रदेशस्य निवासी? अत्र वयं ब्रूमो यदस्य रामायणस्य रचयिता कश्चन दाक्षिणात्यो विद्वान् प्रतीयते। तत्र प्रथमो हेतुस्त्वयम्—षोडशशताब्द्यां मलयालमभाषायाः सुकविः [3]एषु तुञ्छन् महोदयः तेलुगुलिप्यां अध्यात्मरामायणस्य प्रतिलिपिं विधाय तस्यामेव भाषायां पद्यैरनूदितवान्। स च केरलीयजनसमाजेषु प्रथितिमाप्य सांप्रतमपि नितरामादरमादधाति।

---

१. अप्रमेयत्रयातीतनिर्मलज्ञानमूर्तये ।
मनोगिरां विदूराय दक्षिणामूर्तये नमः॥

—अध्यात्मरामायणमङ्गलाचरणम्।

२. अध्यात्मरामायण का स्पष्ट उद्देश्य है—शंकराचार्य के सुप्रसिद्ध वेदान्त के आधार पर रामभक्ति का प्रतिपादन।

डॉ० फादरकामिलबुल्केरचितरामकथापृष्ठम् १५१-१५२।

अध्यात्मरामायण का दार्शनिक सिद्धान्त अद्वैतवाद है।

रामचरितमानस का तुलनात्मक अध्ययन, डॉ० राममूर्ति शर्मा पृष्ठम् ६४।

३. इतना पता चलता है कि उनका जन्म ईसा की सोलहवीं शताब्दी में हुआ। उनके नाम रामन और रामानुजन थे। वे तिरूर स्टेशन से थोड़ी दूर तुंचनपरंपु कहलानेवाले स्थान पर जन्मे थे। चेंपकश्शेरी नामक छोटे केरलीयराज्य के अधीश्वर की आज्ञा से उन्होंने तेलुगु लिपि में लिखित अध्यात्मरामायणम् की मलयालम में प्रतिलिपि तैयार की थी। इस प्रक्रिया के साथ ही साथ उस प्रतिभावान् ने अध्यात्मरामायणम् का मलयालम कविता में अनुवाद भी किया।

रामचरितमानस का तुलनात्मक अध्ययन डॉ० विश्वनाथ अय्यर पृष्ठम् २०५।

रामायणेऽस्मिन् बहुषु स्थलेषु तद्धितप्रत्ययान्ताः पौत्रिकं तानवं पौरोहित्यं यमसादनं नैषादिवचनमित्यादयः शब्दाः प्राप्यन्ते।[1] दाक्षिणात्यपण्डितानां विषये 'तद्धितप्रियाः दाक्षिणात्याः' इत्याभाणकं विद्यते। एतेनाप्यस्य लेखको दाक्षिणात्यः सिद्धो भवति इति द्वितीयो हेतुः। ग्रन्थेऽस्मिन् भवमोक्षप्राप्तिकृते भगवद्भक्तिरेव प्रधानं साधनमिति ग्रन्थकारेण प्रतिपादितम् अस्मात् कारणादेवाऽस्य रामायणस्य विभिन्नेषु काण्डेषु विभिन्नेषु प्रसङ्गेषु वारं वारं भक्तेर्महिमा भक्तियोगस्य गरिमा नवधाभक्तिस्वरूपस्य वर्णना प्राप्यन्ते।[2] पद्मपुराणीयश्रीमद्भागवतमाहात्म्याऽनुसारेण भक्तेरुत्पत्तिस्थानं द्रविडप्रदेश एव इति तार्तीयीको हेतुः।[3]

---

१. ततः सुमित्रा संप्राप्ता जगृध्नुः पौत्रिकम् चरुम्।

—बालकाण्डतृतीयाऽध्यायस्य ११शः श्लोकः।

तदा माया शनैर्याति तानवं प्रतिपद्यते।

—बालकाण्डसप्तमाऽध्यायस्य ३९ तमः श्लोकः।

पौरोहित्यमहं जाने विगर्ह्यं दूष्यजीवनम्।

—अयोध्याकाण्डद्वितीयाऽध्यायस्य २८ तमः श्लोकः।

तदा प्राणान् परित्यज्य गच्छामि यमसादनम्।

—अयोध्याकाण्डचतुर्थाऽध्यायस्य १३शः श्लोकः।

श्रुत्वा नैषादिवचनं श्रीरामस्तमथाऽब्रवीत्।

—अयोध्याकाण्डषष्ठाऽध्यायस्य २५ तमः श्लोकः।

२. 'भक्तिः प्रसिद्धा भवमोक्षणाय, नान्यत्ततः साधनमस्ति किञ्चित्'।

—बालकाण्डप्रथमाऽध्यायस्य ११शः श्लोकः।

'कर्मयोगो ज्ञानयोगो भक्तियोगश्च शाश्वतः'

'भेददृष्टिश्च संरम्भी भक्तो मे तामसः स्मृतः'

'अर्चादौ भेदबुद्ध्या मां पूजयेत् स तु राजसः'

'कर्तव्यमिति वा कुर्याद् भेदबुद्ध्या स सात्त्विकः'।

—उत्तरकाण्डस्य सप्तमाध्यायस्य ५९, ६१, ६२, ६३ तमश्लोकांशाः।

३. उत्पन्ना द्रविडे साऽहं वृद्धिं कर्णाटके गता।

क्वचित् क्वचिन्महाराष्ट्रे गुर्जरे जीर्णतां गता॥

तत्र घोरकलेर्योगात्, पाखण्डैः खण्डिताङ्गका।

दुर्बलाऽहं चिरं याता, पुत्राभ्यां सह मन्दताम्॥

वृन्दावनं पुनः प्राप्य, नवीनेव सुरूपिणी।

जाताऽहं युवती सम्यक्, प्रेष्ठरूपा तु साम्प्रतम्॥

—पद्मपुराणीयश्रीमद्भागवतमाहात्म्यात् पृष्ठम् २७।

चतुर्थो हेतुः--रामायणप्रारम्भे ग्रन्थकारेण कृतस्य शिवस्य दक्षिणामूर्तिस्वरूपस्य वन्दनात्मकं मङ्गलाचरणमस्ति। उत्तरभारते शिवस्य दक्षिणामूर्तिस्वरूपस्योपासनाया आराधनायाश्च परम्परा नाऽस्ति। दक्षिणभारते पुरेव सांप्रतमपि शङ्करस्य दक्षिणामूर्तिस्वरूपस्योपासनापद्धतिः विशेषरूपेण प्रचलिताऽस्ति। इदमेव कारणमस्ति यद् दाक्षिणात्या जनाः स्वसुतानां नाम दक्षिणामूर्तिरिति प्रायः कुर्वन्ति।

प्रदर्शितेनाऽनेन कारणचतुष्टयेनाऽस्य रामायणस्य रचयिता तान्त्रिकोपासनां प्रति आस्थावान् कश्चन दाक्षिणात्यो विद्वान् सिद्ध्यति। अत्रान्यदपि प्रमाणं गृह्यताम्—विदेशीयविद्वान्[1] जे० एन् फर्कुहरमहोदयोऽपि कथयति यद् रामानन्दसंप्रदायस्य प्रवर्तकः रामानन्दाचार्यः स्वेन साकं दक्षिणभारतादुत्तरभारते अध्यात्मरामायणमानीतवान्।

पुनः प्रश्न उत्तिष्ठते--दक्षिणभारते आन्ध्रकेरलकर्नाटकतमिलनाडुनामानश्चत्वारः प्रदेशा वर्तन्ते। एतेषु प्रदेशचतुष्टयेषु कः प्रदेशोऽस्य रामायणस्य रचयितुः जन्मभूमिः? अस्याऽपि निर्णयो ग्रन्थस्याऽऽन्तरिकसाक्ष्यमेवाधृत्य कर्तुं शक्यते। रामायणेऽस्मिन् विभिन्नकाण्डेषु भक्तिस्वरूपवर्णनं पदे पदे दरीदृश्यते। समालोचकचणाः[2] सुधीगणा अपि कथयन्ति-- अध्यात्मरामायणस्य मुख्यमुद्देश्यमस्ति शङ्कराचार्यसिद्धान्ताऽनुसारेण रामभक्तेः प्रतिपादनम्। अस्मिन्नेव प्रसङ्गे इतः पूर्वम् प्रमाणतया उद्धृतेषु पद्मपुराणीयश्लोकेषु 'उत्पन्ना द्रविड़े साऽहं वृद्धिं कर्नाटके गता' इति श्लोकांशेन सूच्यते यद् द्रविड़देशापेक्षया कर्नाटकप्रदेशे पुरा भक्तेः महान् प्रचारः प्रसारश्चास्ताम्। अस्यां दशायामस्य रामायणस्य रचयिता कर्नाटकप्रदेशीय इति कथयितुं सुशकम्। अस्याऽनुमानस्यापरोऽप्याधारोऽस्ति— पुरा आन्ध्रकेरलतमिलनाडुप्रदेशापेक्षया[3] कर्नाटकप्रदेशे जैनधर्मस्याधिकप्रसार आसीत्। तत्रत्या राष्ट्रकूटनृपा अपि जैनमताऽनुयायिन आसन्। सांप्रतमपि कर्नाटकप्रदेशे जैनानां

---

१. द्रष्टव्यम्—दि हिस्टारिकल पोजिशन आफ रामानन्द आई० आर० ए० एस० १९२०, १८५ तमात् पृष्ठादारभ्य १९२ तमपृष्ठपर्यन्तम्।

२. अध्यात्मरामायण का स्पष्ट उद्देश्य है, शंकराचार्य के सुप्रसिद्ध वेदान्त के आधार पर रामभक्ति का प्रतिपादन करते हुए वाल्मीकीय रामकथा को किंचित् परिवर्तन के साथ प्रस्तुत करना।

डॉ० फादर कामिलबुल्केरचितरामकथापृष्ठम् १५१-१५२।

३. द्रष्टव्यम्—वैष्णव तथा शैवमतों के साथ ही साथ जैनधर्म का भी विपुल प्रचार इस प्रान्त में बहुत पहले से ही था।

आचार्य बलदेव उपाध्याय (आचार्य सायण और माधव) पृष्ठम् १२।

बहूनि मन्दिराणि वर्तन्ते। अपभ्रंशभाषायां 'पउमचरिउ' रचयिता 'स्वयम्भूनामको' जैनकविः कर्नाटकप्रदेशनिवासी आसीत्। अनेन स्वकाव्ये रामस्य चरित्रं विकृतरूपेण चित्रितम्। संस्कृतभाषायामपि जैनकविरविषेणाचार्येण प्रणीतं पद्मचरिताभिधानन्नाम काव्यं वरीवर्ति। अस्मिन् काव्येऽपि 'पउमचरिउ' समान रामस्य कथानकं भ्रष्टरूपेण—वर्णितं दरीदृश्यते। इत्थं काव्यद्वयेऽपि रामस्य विकृतचरितं प्रपठ्य समुद्भूतया प्रतिक्रियया खिन्नतः कर्नाटक-प्रदेशनिवासिनः कस्यचिद् रामभक्तविदुषः मनसि मर्यादापुरुषोत्तमरामचन्द्रस्य परब्रह्म-परमात्मात्मस्वरूपं साधयितुं पुना रामकथालेखनप्रेरणा स्वाभाविकी। अस्या एव परिणतिः 'अध्यात्मरामायणस्य' संरचना। एवं सति कर्नाटकप्रदेशनिवासी एवाऽस्य रचयिता सिध्यति।[1]

## अध्यात्मरामायणस्य समयः

पुनरस्य अध्यात्मरामायणस्य समयः कः? इति प्रश्नः समुज्जृम्भते। अस्मिन् विषयेऽप्यद्यावधि कोऽपि प्रामाणिकस्सर्वजनमान्यो निर्णयो न सञ्जातः।[2] कियन्तो विद्वज्जनाः केवलमनुमानाऽऽधारेणाऽस्य रचनाकालमीशवीयवर्षस्य चतुर्दशशताब्दीं पञ्चदशशताब्दीञ्च मन्यन्ते। अत्राऽपि विप्रतिपद्यते—

तमिलभाषायां महाकविकम्बन्कृतमेकं रामायणं वरीवर्ति यत् तत्रत्या जना कम्ब-रामायणं कथयन्ति। अस्य रामायणस्य मर्मज्ञाः समीक्षकचणाः[3] विद्वद्गणाः अदसीयं लेखनकालं द्वादशशताब्दीं स्वीकुर्वन्ति। रामायणेऽस्मिन् प्रारम्भिकेषु मङ्गलाचरणात्मकेषु पद्येषु एकमेतादृक् पद्यमस्ति। तद् यथा—

देवपाडैयिन् इक्कदै शैय्कुवर,<br>मुवर् आन् अवर तम् मुलुम् पुनदिय।<br>ना विनार् उरैयिन् पडिनान् तमिल्प्,<br>पाविनाल् इदु उरैत्तिय पण्यु अरो॥

अस्यार्थः—देववाण्यां ये त्रयो महापुरुषा रामायणं रचयामासुः, तेषु आदिकवि-महर्षिवाल्मीकिरचनाऽनुसारेण अहं तमिलपद्येषु इदं रामायणं रचयामि।

---

१. द्रष्टव्यम्—अन्त और बाह्य साक्ष्यों से यह कर्णाटक प्रदेश के निवासी सिद्ध होते हैं। रामचरितमानस का तुलनात्मक अध्ययन, : डॉ० देवेन्द्रकुमार जैन पृष्ठम् ९१।

२. अवलोक्यताम्—डॉ० फादरकामिलबुल्केकृतरामकथापृष्ठम् १६६।
अध्यात्मरामायणकलकत्तासंस्करणम् डॉ० प्रबोधचन्द्रबाग्चीकृतभूमिकापृष्ठम् ८।

३. अवलोक्यताम्—कंबन का समय निश्चित नहीं है। कुछ विद्वान् उन्हें ईसवी नवीं शताब्दी का मानते हैं। किन्तु अधिक प्रामाणिक समय बारहवीं शताब्दी है। डॉ० न० वि० राजगोपालनकंबरामायणस्य भूमिकापृष्ठम् ६।

अस्मिन् पद्ये महाकविकम्बन्महाभागेन स्वरामायणस्य निर्माणे प्रेरणाप्रदायकानां त्रयाणां रामायणानां चर्चा संविहिता। एतेषु रामायणत्रयेषु एकं रामायणं महर्षिवाल्मीकिप्रणीतमभीष्टमस्ति कविकम्बन्महाभागस्य–इति तु स्पष्टतया प्रतीयते। शेषरामायणद्वयविषये [1]केचन विद्वद्वर्य्याः एकं योगवशिष्ठरामायणं द्वितीयञ्च अध्यात्मरामायणं प्रणिगदन्ति। अन्ये च अध्यात्मरामायणस्य स्थाने कुमारदासप्रणीतं 'जानकीहरणं' कथयन्ति। अपरे पण्डितजनाश्च 'जानकीहरणं' रामायणन्नाऽस्ति अपितु रामकथानकमावृत्य लिखितं ललितं रसरञ्जितं महाकाव्यं वरीवर्ति; अतस्तन्न स्वीकुर्वन्ति। तर्हि तत्स्थाने अध्यात्मरामायणस्यैव स्वीकरणमुचितमिति प्रजल्पन्ति। अयमेव पक्षः समीचीनः। यतो हि अध्यात्मरामायणे कम्बरामायणे च बहुषु स्थलेषु साम्यं दरीदृश्यते इत्यभिवदन्ति बहवः कम्बरामायणपारायणप्रवीणाः पण्डितवर्य्याः। कम्बरामायणस्य रचनाकालं तमिलसाहित्यस्य अध्येतारः वेत्तारश्च[2] विद्वत्तल्लजाः द्वादशशताब्दीं कथयन्ति। अस्यां दशायाम्-अध्यात्मरामायणरचनाकालः एकादशशताब्दी भवितुमर्हति यतो हि प्राचीनकाले मुद्रणयन्त्राणां द्रुतगामियात्रासम्बन्धिसाधनानाञ्च नितरामभावः आसीत्। अतो ग्रन्थकारैः निर्मितानां ग्रन्थानां विशालतमस्य भारतवर्षस्य समस्तेऽपि भूभागे प्रचाराय

---

१. पठ्यताम्—संस्कृत के तीन रामायणकर्ता हैं—वाल्मीकि, वशिष्ठ और बोधायन। कुछ विद्वान् वशिष्ठ के स्थान पर व्यास का नाम लेते हैं जिन्होंने अध्यात्म रामायण की रचना की थी। कम्ब ने भी कई स्थानों पर अध्यात्मरामायण का अनुसरण किया है।

डॉ० न० वी० राजगोपालन्कृतकम्बरामायणहिन्दीभाषानुवादस्य अस्यैव पद्यस्योपरि टिप्पणी पृष्ठम् २।

अस्यैव पद्यस्योपरि डॉ० रामेश्वरदयालुअग्रवालमहोदयानामीदृशी टिप्पणी–कम्बन् का प्रधान उपजीव्य वाल्मीकिरामायण है, यद्यपि वे दो अन्य रामायणों से प्रभावित हैं, जिनमें एक तो निश्चय ही अध्यात्मरामायण है।—इसमें वाल्मीकिरामायण का तो स्पष्टोल्लेख है ही, दूसरी रचना अध्यात्मरामायण है, क्योंकि इसका कम्बरामायण के कई स्थलों पर प्रत्यक्ष प्रभाव पड़ा है।

कम्बरामायण और रामचरितमानस पृष्ठम् १२७।

२. द्रविड़ भाषाओं का रामकथा–सम्बन्धी सबसे प्राचीन काव्यग्रन्थ कम्बन्कृत रामायण है–जिसकी रचना बारहवीं शताब्दी ई० में हुई थी।

डॉ० फादर कामिलबुल्केकृतरामकथापृष्ठम् २२२।

कम्बन् का समय निश्चित नहीं है। कुछ विद्वान् उन्हें ईसवी नवीं शताब्दी का मानते हैं, किन्तु अधिक प्रामाणिक समय बारहवीं शताब्दी है।

डॉ० न० वि० राजगोपालनकंबरामायणस्य भूमिकापृष्ठम् ६।

प्रसाराय च शतवर्षाणि [1]केचन शताब्दीद्वयसमयं मन्यन्ते। अध्यात्मरामायणस्य [2]प्रस्तुतटीकाकारश्रीविश्वनाथसिंहेनाऽप्यस्यां टीकायामेव वाह्यसाक्ष्याऽऽधारेण अध्यात्मरामायणस्य रचना श्रीमध्वाचार्यात् पूर्वं सञ्जाता इति प्रतिपादितम्। मध्वाचार्यस्य जन्मकालं [3]डॉ० सुरेन्द्रनाथदासगुप्तमहामहोपाध्याय डॉ० उमेशमिश्र-[4]पण्डितबलदेवउपाध्यायप्रभृतयो विद्वांसः ११९९ ईसवीयवर्षमामनन्ति। अनेन प्रसंगेनाऽप्यध्यात्मरामायणस्य रचनाकालः एकादशशताब्दी एव सिध्यति।[5]

मध्वाचार्योद्धृताः श्लोकाः

मध्वाचार्येण स्वकीये पूर्णप्रज्ञभाष्ये अन्यत्राऽपि चास्य रामायणस्य बहवः श्लोका उद्धृताः। किन्तु ते सर्वे श्लोका अध्यात्मरामायणस्य मदीयहस्तलिखितप्रतौ गीताप्रेसगोरखपुरात्, गंगाविष्णुश्रीकृष्णदासबंबईमहानगराच्च मुद्रिते संस्करणे च नैव दृश्यन्ते। अस्मिन् विषये मध्वमतानुयायिनः केचन विद्वांसः कथयन्ति—[6]श्रीमध्वाचार्येण स्वीये भाष्ये 'इत्यध्यात्मे' इति नाम्ना ये श्लोकाः उद्धृताः ते श्लोकाः अध्यात्मनामकस्य भिन्नग्रन्थस्य सन्ति न तु अध्यात्मरामायणस्य। अपरमपि कारणं ददति ते तद् यथा—यदि आचार्यपादस्य–अध्यात्मरामायणमभीष्टं स्यात् तदा 'अध्यात्मरामायणे' इति आचार्यवर्य्येण कथन्न लिखितम्? इति वदन्ति। अस्मिन् विषयेऽपि ब्रूमो वयम्—अध्यात्मनामकः यदि कोऽपि ग्रन्थः स्यात् तदा डॉ० आफ्रेक्टमहोदयः स्वकीये [7]'कैटलागस कैटलागारम्' नामधेये

---

१. उस काल में जबकि मुद्रणकला का पूर्णतया अभाव था, किसी ग्रन्थ की प्रसिद्धि होने में २०० या २५० वर्ष का समय लग सकता है।

अध्यात्मरामायण का एक विवेचनात्मक अध्ययन।

लेखिका—डॉ० विजयश्री, पृष्ठम् २३२।

२. द्रष्टव्यम्—प्रस्तुतरामायणस्य पृष्ठम् ९।

३. भारतीय दर्शन का इतिहास चतुर्थ भागः। पृष्ठम् ५२।

४. भारतीयदर्शनपृष्ठम् ४२६।

५. भारतीयदर्शनपृष्ठम् ४९६।

६. योगिनः प्रति स्मर्येते स्मार्ते चेते। ४।२।१६।२२।

गत्यनुस्मरणाद् ब्रह्म चन्द्रं वा गच्छति ध्रुवम्।

अननुस्मरतः काले स्मरणं प्राप्य वै गतिः॥ इत्यध्यात्मे

हृदिस्थेनैव हरिणा तस्यैवानुग्रहेण तु।

उत्क्रान्तिर्ब्रह्मरन्ध्रेण तमेवोपासतो भवेत्॥ ब्रह्मसूत्रभाष्यात् ४।२।९।१७।

७. द्रष्टव्यम्—कैटलागस कैटलागारम् पृष्ठम् ११।

बृहत्सूचीपत्रे, डॉ॰ राघवन्महोदयश्च[1] न्यू कैटलागस कैटलागारम् नामके ग्रन्थे च अध्यात्मग्रन्थस्याऽप्युल्लेखमवश्यं विदध्यात्। अस्यां दशायां माध्वमताऽनुयायिनां विदुषामिमे श्लोका अध्यात्मनामकस्य भिन्नग्रन्थस्य सन्तीति कथनमप्रामाणिकम्। अतो मध्वाचार्येण स्वकीये भाष्ये प्रयुक्तेन इत्यध्यात्मशब्देन अध्यात्मरामायणमेवाभीष्टम् आचार्यपादस्य इति कथनं युक्तिसहम्। इदमेव कारणमस्ति यच्छ्रीमध्वाचार्यमहाभागः स्वीये पूर्णप्रज्ञभाष्ये सर्वत्र ग्रन्थानां पूर्णनाम 'स्कन्दपुराणे ब्रह्मवैवर्तपुराणे' च नोल्लिख्य इति स्कान्दे, इति ब्रह्मवैवर्ते इत्येव लिलेख।

अध्यात्मे–इति नाम्ना पूर्णप्रज्ञभाष्ये उद्धृताः श्लोका मदीयहस्तलिखितप्रतौ गीताप्रेसगोरखपुरात् गंगाविष्णुश्रीकृष्णदासबम्बईनगराच्च मुद्रिते अध्यात्मरामायणे च नैव प्राप्यन्ते। तर्हि पुनरिमे श्लोकाः कुत्रत्याः? विषयमिममवलम्ब्य विचार्यताम्—

अध्यात्म इतिपदेन श्रीमध्वाचार्यविहिते ब्रह्मसूत्रस्य भाष्ये उल्लिखितश्लोकानाम्-अध्यात्मरामायणस्य मम प्रतौ गीताप्रेसगोरखपुरात् बम्बईमहानगराच्च मुद्रिते प्रतिद्वये च अप्राप्त्या इत्थं प्रतीयते यद् वाल्मीकिरामायणस्येव अध्यात्मरामायणस्याऽपि पश्चिमोत्तरीयगौडीयदक्षिणप्रदेशीयेतिसंस्करणत्रयमासीत्। अद्यावधि दक्षिणप्रदेशस्थहस्तलिखितप्रतीनामाधारेण-अध्यात्मरामायणस्य किमपि संस्करणम् न प्रकाशितम्। गौडीयसंस्करणस्य कलकत्तासंस्कृतसीरीजनामकग्रन्थमालायां नगेन्द्रनाथसिद्धान्तरत्नस्य संपादकत्वे प्रकाशनं सञ्जातम्। अत्र पुराऽप्रकाशितनरोत्तमप्रणीतटीकाया अमुद्रिताया गोपालचक्रवर्तिटीकायाः प्रकाशिताया रामवर्मटीकायाश्च सारांशो वर्तते। इदं संस्करणं बंगप्रदेशे प्राप्तानां चतसृणां हस्तलिखितप्रतीनां साहाय्येन संपादकेन संपादितम्। अनेन संस्करणेन सार्धं स्वकीयहस्तलिखितप्रतेः गीताप्रेसप्रतेश्च तुलनां विधाय अध्ययने कृते सति प्रत्येकसर्गे श्लोकसंख्यानां, श्लोकेषु पाठान्तराणां काण्डानां नामसु च महदन्तरं प्राप्यते। कलकत्तासंस्करणे सर्गस्य स्थाने अध्यायस्य प्रयोगो वर्तते। अस्मिन् संस्करणे अध्यात्मरामायणस्य माहात्म्यं प्रथमाध्यायस्यांशोऽस्ति। एतद्विपरीतं मम प्रतौ गीताप्रेसप्रतौ च अध्यात्मरामायणमाहात्म्यम्-अध्यायस्यांशो नाऽस्ति। एवमेव कलकत्तासंस्करणे प्रथमकाण्डस्य नाम आदिकाण्डं षष्ठकाण्डस्य नाम लंकाकाण्डं वर्तते। एतद् विपरीतं मम प्रतौ गीताप्रेससंस्करणे च आदिकाण्डस्य नाम बालकाण्डं लङ्काकाण्डस्य युद्धकाण्डमस्ति। कलकत्तासंकरणस्य-आदिकाण्डस्य[2] तृतीयाऽध्यायस्याऽऽरम्भे निम्नलिखितश्लोकाः सन्ति—

सूर्यवंशेऽभवत् राजा दिलीप इति विश्रुतः।
तस्य पुत्रो रघुर्नाम महाबलपराक्रमः॥

---

१. द्रष्टव्यम्—न्यू कैटलागस कैटलागारम् पृष्ठम् १४८।
२. ,, ,, कलकत्ता संस्करणस्य ५३ पृष्ठम्।

यश्चक्रे हयमेधानां शतमिन्द्रसमः प्रभुः।
तस्य पुत्रोऽभवन्नाम्ना अज इत्यभिविश्रुतः॥
तस्य पुत्रो दशरथः श्रीमान् सत्यपराक्रमः।
अयोध्याधिपतिर्वीरः सर्वलोकेषु विश्रुतः॥

स्वीयप्रतौ बालकाण्डस्य तृतीयाध्यायाऽऽरम्भे अधस्तनाः श्लोका वर्तन्ते—

अथ राजा दशरथः श्रीमान्सत्यपराक्रमः।
अयोध्याधिपतिर्वीरः सर्वलोकेषु विश्रुतः॥
सोऽनपत्यत्वदुःखेन पीडितो गुरुमेकदा।
वसिष्ठं स्वकुलाचार्यमाहूयेदमभाषत॥
स्वामिन्! पुत्राः कथं मे स्युः सर्वलक्षणलक्षिताः।
पुत्रहीनस्य मे राज्यं सर्वं दुःखाय कल्पते॥

कलकत्तासंस्करणस्य प्रारम्भिकं श्लोकद्वयं मम प्रतौ गीताप्रेसगोरखपुरसंस्करणे च किञ्चित् पाठान्तरेण सह ईदृग्रूपेण प्राप्यते—

अथ राजा दशरथः श्रीमान् सत्यपराक्रमः।
अयोध्याधिपतिर्वीरः सर्वलोकेषु विश्रुतः॥
सोऽनपत्वत्त्वदुःखेन पीडितो गुरुमेकदा।
वसिष्ठं स्वकुलाचार्यमभिवाद्येदमब्रवीत्॥

स्वकीयप्रतौ प्रथमश्लोकस्य द्वितीयचरणे सत्यपराक्रमः गीताप्रेससंस्करणे च सत्यपरायणो वर्तते। स्वप्रतेः द्वितीयश्लोकस्य चतुर्थचरणे 'आहूयेदमभाषत' इत्यस्य स्थाने गीताप्रेससंस्करणे 'अभिवाद्येदमब्रवीत्' इति वरीवर्ति। कलकत्तासंस्करणे बालकाण्डस्य [1]तृतीयाध्याये संपादकेन पादटिप्पण्यामेतादृशाः श्लोका उद्धृता येषां संख्या एकनवतिः (९१) वरीवर्ति। इमे श्लोकाः मम प्रतौ गीताप्रेससंस्करणे च नैव सन्ति। इयमेव स्थितिः कलकत्तासंस्करणस्य अन्यकाण्डेष्वपि दरीदृश्यते। अयोध्याकाण्डस्य [2]तृतीयाध्यायस्य १६ षोडशसंख्यकश्लोकोपरि संपादकेन टिप्पण्यां निम्नलिखिताः श्लोका दर्शिताः।

प्रियां प्रियहिते युक्तां भार्यां नित्यमनुव्रताम्।
स तां विज्ञाय सन्तप्तां कैकेयीं पार्थिवोऽब्रवीत्॥
करिष्यामि तव प्रीतिं सुकृतेनाथ नः शपे।
तुष्टा तेनाऽऽत्मवाक्येन दृष्ट्वाऽतिप्रियमात्मनः॥

---

१. अवलोक्यताम्—५६ पृष्ठादारभ्य ६३ पृष्ठपर्यन्तम। अध्यात्मरामायणस्य कलकत्तासंस्करणम्।

२. दृश्यताम्—अध्यात्मरामायणस्य कलकत्तासंस्करणस्य पृष्ठम् १६२।

व्याजहार महाघोरं कैकेयी भूषणप्रिया।
यथा धर्मेण शपसे वरं मह्यं ददासि च॥
तच्छृण्वन्तु समागम्य देवाः शक्रपुरोगमाः।
चन्द्रादित्या ग्रहाश्चैव नमो रात्र्यहनी दिशः॥
वरं मह्यं ददात्वेतत् तन्मे शृणुत देवताः।
इति देवी महेष्वासं परिगृह्याभिपद्य च॥
ततो वच उवाचेदं वरदं काममोहितम्।

इमे श्लोकाः कलकत्तासंस्करणसंपादकश्रीनगेन्द्रनाथसिद्धान्तरत्नमहोदयेन पाठसंपादनाय एकत्रीकृतस्य मातृकाचतुष्टयस्य एकस्यां मातृकायामधिगताः। एतेषां सर्वेषां श्लोकानामुपरि मातृकाचतुष्टयेषु टीका नाऽऽसीत्। अस्मात् कारणात् संपादकेन इमे श्लोकाः टिप्पण्यामुद्धृताः। मम प्रतौ गीताप्रेसप्रतौ च इमे श्लोका नैव सन्ति।

अनेन विवेचनेन विश्लेषणेन च अध्यात्मरामायणस्य त्रयः पाठाः सन्तीति मदीयकथनस्य भवति संपुष्टिः। मम प्रतिः गीताप्रेसप्रतिश्च पश्चिमोत्तरीयपाठपरम्परामनुसरतः। किन्तु मध्वाचार्येण स्वीये ब्रह्मसूत्रभाष्ये ये श्लोका उदाहृताः ते सर्वे अध्यात्मरामायणस्य दाक्षिणात्यपाठमनुवर्तन्त इति निश्चप्रचम्।

आर्षप्रयोगाः

अध्यात्मरामायणस्य कतिपयेषु श्लोकेषु व्याकरणविरुद्धा अशुद्धाः प्रयोगाः प्राप्यन्ते। टीकाकारमते ते सर्वे आर्षप्रयोगाः सन्ति। अनेनाऽपि प्रतनतमोऽयं ग्रन्थः एतस्मिन् विषये शङ्काया अवसरो न दृश्यते।

पाठकानां पुरतः अध्यात्मरामायणे विद्यमानाः कतिपय आर्षप्रयोगाः प्रस्तूयन्ते। यथा—

'धनुरेतत्पणं कार्यमिति चिन्त्य कृतं तथा'।

—बालकाण्डस्य षष्ठाऽध्याये ६८ तमः श्लोकः।

अत्र चिन्त्य इति प्रयोगस्तु चिन्तनीयः। विचिन्त्य इत्युचितः।

'पश्यन्तु जानकीं सर्वे पादचारेण गच्छतीम्।'

—अयोध्याकाण्डस्य पञ्चमाध्याये ५ मः श्लोकः।

इह गच्छतीमित्यपाणिनीयः। गच्छन्तीमित्युचितः।

'तत्र सिंहासने नित्यं पादुके स्थाप्य भक्तितः'।

—अयोध्याकाण्डस्य नवमाध्याये ७१ तमः श्लोकः।

स्थाप्य इत्यत्र 'ल्यप्' आर्षः। स्थापयित्वा इति समीचीनोऽस्ति।

'निद्रया परिवृतो यदा स्वपे राममेव मनसानुचिन्तयन्'।

—अरण्यकाण्डस्य षष्ठाध्याये २३ तमः श्लोकः।

श्लोकेऽस्मिन् स्वपे इत्यत्र आत्मनेपदम् आर्षम्।

'इत्युक्त्वा लक्ष्मणं भक्त्या करे गृह्य स मारुतिः'।

—किष्किन्धाकाण्डे पञ्चमाध्याये ३९ तमः श्लोकः।

श्लोकेऽस्मिन् गृह्य इत्यशुद्धः। संगृह्य इत्युचितः।

'एवं विचिन्त्य हनुमानधो दृष्टिं प्रसारयत्'।

—सुन्दरकाण्डस्य प्रथमाध्याये ३७ तमः श्लोकः।

अत्र अडभाव आर्षः।

'शिरोऽस्य रोधयद् द्वारं कायो नक्राद्यचूर्णयत्'।

—युद्धकाण्डस्य अष्टमाध्याये ३० तमः श्लोकः।

अत्र रोधयदिति चिन्त्यः। अरोधयदित्युचितः।

'पितरो ऋषयः साध्या गन्धर्वाप्सरसोरगाः'।

—युद्धकाण्डस्य त्रयोदशाध्याये २ तीयः श्लोकः।

'पितरो ऋषयः' 'अप्सरसोरगाः' इत्यत्र च सन्धिरार्षः'।

'त्वं मे नाथो नाथितकार्याखिलकारी'।

—युद्धकाण्डस्य त्रयोदशाध्याये १४शः श्लोकः।

इह अखिलशब्दस्य परनिपात आर्षः।

रामायणेऽस्मिन् च्युतसंस्कृतिदोषयुक्ता ग्रन्थकारेण प्रयुक्ता एतादृशा बहवोऽशुद्ध-शब्दाः सन्ति। ते सर्वे नागेशभट्टशिष्येण शृङ्गवेरपुराधीशेन श्रीरामवर्मणा सेतुनामिकायां स्वटीकायामार्षशब्देन चर्चिताः। कालान्तरेण विद्वज्जनैः आर्षशब्दानां स्थाने पाठभेदं परिकल्प्य बहूनामार्षशब्दानामस्तित्वमेव समाप्यत। विस्तरभिया ते सर्वेऽत्र नोदाह्रियन्ते।

## अध्यात्मरामायणस्य टीकाकाराः

संस्कृतभाषायां रचितानि आनन्दाऽग्निवेशभुशुण्डीत्यादिनामधेयानि बहूनि रामायणानि राराजन्ते। तेषु विद्वद्वर्य्यैः केवलं वाल्मीकिरामायणोपर्य्येव बह्व्यष्टीकाः प्रणीताः। अन्येषां रामायणानामुपरि नैव। किन्तु अध्यात्मरामायणमधिकृत्य संस्कृतभाषायां टीकाकर्तारो बहवो विद्वांसो वर्तन्ते। डॉ० आफ्रेक्टमहोदयः 'कैटलागसकैटलागारम्' नामके स्वग्रन्थे प्रस्तुतटीकाकारश्रीविश्वनाथसिंहस्य नामोल्लेखनेन सह आयोजीभट्टकृष्ण-नाथबलभद्रमहीधरयतीशनामकानामन्येषां पञ्चटीकाकाराणामपि नामान्युल्लिलेख। एतदतिरिक्ता अध्यात्मरामायणस्य शृङ्गवेरपुराऽऽधीशरामवर्मनरोत्तमगोपालचक्र-वर्तिनामानस्त्रयः टीकाकर्तारोऽपि सन्ति। येषां नामोल्लेखः डॉ० आफ्रेक्टमहोदयेन न कृतः। इत्थमस्य रामायणस्य व्याख्याकर्तारो नव सुधियस्सन्ति। अस्य रामायणस्यो-त्तरकाण्डीयं पञ्चमाध्यायं विबुधा रामगीतां वदन्ति। अस्या गीताया अपि संस्कृतभाषायां

श्रीमद्भगवद्गीताया इव स्वतन्त्ररूपेण टीकाः सन्ति।[1] भागवतस्य प्रसिद्धटीकाकार-श्रीश्रीधरस्वामिमहाभागेनाप्यदसीयगीतायाः टीका विहिता। टीकेयं वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयपुस्तकालयहस्तलिखितग्रन्थसंग्रहविभागे वरीवर्ति। अद्यावधि टीकेयं प्रकाशिता नाऽस्ति। एतेनाप्यस्य ग्रन्थस्य विद्वत्समाजे लोकप्रियता प्राचीनता च दन्ध्वन्येते।

प्रस्तुता 'व्यङ्ग्यप्रकाशिका' नामिका टीका रीवांनरेशश्रीविश्वनाथसिंहजूदेवमहाभागेन कृता। अस्या उल्लेखः [2]डॉ० आफ्रेक्टमहोदयेनाऽपि स्वग्रन्थे विहितः। द्वितीयन्नाम अस्याः 'ध्वनिप्रकाशिका' वर्तते। प्रत्येकाध्यायसमाप्तौ पुष्पिकायां टीकाकारेण टीकानाम ध्वनिप्रकाशिका लिखिता। टीकासमाप्तौ अधस्तनेन पद्येन—

अध्यात्मरामायणस्य टीका व्यङ्ग्यप्रकाशिका।
श्रीविश्वनाथस्वान्तःस्थश्रीरामेण प्रकाशिता॥

व्यङ्ग्यप्रकाशिकेत्यस्या नाम सुस्पष्टमुदघोषि। एवञ्च नामद्वयस्य मध्ये टीकाकारस्य किन्नाम अभीष्टमासीत्? प्रतीयते यट्टीकालेखनप्रारम्भे विश्वनाथसिंहस्येहाऽऽसीद्यट्टीकायाः नाम ध्वनिप्रकाशिका स्यात्। अतोऽयं प्रत्येकाध्यायस्य समाप्तेरनन्तरं टीकानाम ध्वनिप्रकाशिका इति लिलेख। टीकासमाप्तेरनन्तरं तस्य विचारे परिवर्तनं सञ्जातम्। तेन व्यङ्ग्यप्रकाशिकेति नाम तेन व्यधायि। इदमेव नाम ग्रन्थकारस्याऽभीष्टमासीत्। यदि विश्वनाथसिंहस्य ध्वनिप्रकाशिकेति नाम अभीष्टं स्यात्तदोपरितने श्लोके तस्यैव प्रयोगं विदध्यात्। अस्य शब्दस्य प्रयोगेणाऽपि श्लोके वृत्तविषयिणी काचित् त्रुटिः न समायाति। श्लोकनिर्माता कोऽपि विद्वान् श्लोकनिर्माणकाले सम्यग्रूपेण विचारकरणानन्तरमेव अभीष्टशब्दस्य प्रयोगं विदधाति।

## टीकाकारस्य परिचयः

विन्ध्यपर्वतमालयाऽऽवृतं वर्तमानमध्यप्रदेशस्य बघेलखण्डक्षेत्रं चिरकालाद् यथा स्वकीयशूरतायै प्रथितमासीत् तथैव तस्य परिधौ स्थितस्य रीवाराज्यस्य क्रमशोऽध्यक्षा नरेशा द्वादशशताब्दीतः प्रारभ्य अष्टादशशताब्दीपर्यन्तं स्वकीयवैदुष्याय विदुषामाश्रयाय च विख्याता आसन्।

अस्मिन्नेव राजकुले ज्यौतिषशास्त्रसम्बन्धिनः [3]'सारावली' ग्रन्थस्य रचयिता

---

१. द्रष्टव्यम्—ए डिस्क्रेप्टिव केटलाग आफ् दि संस्कृत मेनुस्क्रिप्ट, गवर्नमेन्ट-संस्कृतकालेजलाइब्रेरी, वाराणसी चतुर्थभागः। पृष्ठम् २४४।

२. द्रष्टव्यम्—कैटलागस कैटलागारम् प्रथमभागः पृष्ठम् ४८।

३. प्रकाशकः—मोतीलाल बनारसीदासः वाराणसी।

महाराजकर्णदेवः, कामशास्त्रीयप्रसिद्धपुस्तकस्य [1]कन्दर्पचूडामणेः कर्ता श्रीवीरभद्रदेवः, ब्रह्मसूत्रस्य राधावल्लभीयभाष्यप्रणेता, संस्कृतहिन्दीभाषायामनेकग्रन्थानां लेखकस्सुकविश्च महाराजश्रीविश्वनाथसिंहजूदेवः, बहूनां हिन्दीग्रन्थानां निर्माता संस्कृतस्याऽपि विद्वान् प्रथितकविः, महाराजरघुराजसिंहश्च बभूवुः।

विद्याव्यसनिनामेतेषां नरेशानां छत्रच्छायायां ब्राह्मस्फुटसिद्धान्तस्य रचनाकारः ब्रह्मगुप्तः[2] वीरभानूदयमहाकाव्यस्य सर्जकः कविमाधवउरूव्यः, रसतरंगिणीरसमञ्जर्यो रचयिता महाकविर्भानुदत्तः [3]रामचन्द्रयशःप्रबन्धस्य प्रणेता, अकबरीयकालिदासपदवीविभूषितः गोविन्दभट्टः, नैयायिकगङ्गेशोपाध्यायस्य तत्त्वचिन्तामणेर्व्याख्याता पद्मनाभमिश्रः, [4]अमरकोषस्य सुधाटीकाया लेखको भट्टोजिदीक्षितपौत्रः भानुजिदीक्षितः [5]ऐतिहासिकबघेलवंशवर्णनस्य कर्ता रूपणिशर्मा, होत्रकल्पद्रुमस्य निर्माता याज्ञिक-समाट् औपगविः, संगीतसम्राट् तानसेनश्च स्वस्वप्रतिभाया विकासं चक्रुः।

अध्यात्मरामायणस्य प्रस्तुतव्यङ्ग्यप्रकाशिकाटीकाप्रणेता महाराजश्रीविश्वनाथसिंहजूदेवः रींवाराज्यस्य राजा आसीत्। एतदीयदीक्षागुरोर्नाम प्रियादासः। अनेन साहित्यसर्जनस्य प्रेरणा स्वपितुः हिन्दीभाषायाः कवेः महाराजजयसिंहात् संप्राप्ता। इतिहासलेखकाः श्रीविश्वनाथसिंहस्य शासनकालं १८३३ ईशवीयवर्षादारभ्य १८५४ वर्षपर्यन्तमामनन्ति। मृत्युसमये अदसीया अवस्था षण्मासोत्तरपञ्चषष्टिवर्षाणामासीत्। इमे यथा सफलशासकास्तथैव संस्कृतहिन्दीभाषयोः सिद्धसारस्वताः कवयश्च आसन्। अदसीयाः संस्कृतहिन्दीभाषायां रचिताः विभिन्नविषयका ग्रन्थाः सन्ति। एतेषु कियत्यः कृतयः मौलिक्यः कियत्यश्च टीकात्मिका भाष्यात्मिकाश्च। एतासु कृतिततिषु अधिकांशकृतयः अद्यावध्यप्रकाशिताः सन्ति। अस्य कृतिविषये पुण्यपत्तनस्थभाण्डारकरशोधसंस्थान-निदेशकः स्वर्गीयश्री पी० के० गोडेमहोदयोऽपि गवेषणापूर्णं लेखमलिखत। आचार्यरामचन्द्रशुक्लमहाभागः स्वकीये [6]"हिन्दीसाहित्य का इतिहासनामके ग्रन्थेऽस्य हिन्दीभाषायां लिखितानां ग्रन्थानां चर्चां चकार। अत्र एतदीयसंस्कृतकृतीनां समासेन संस्तवः संप्रदीयते पाठकानां पुरतः—

---

१. बम्बईनगरात् प्रकाशितः।

२. रींवानगरात् प्रकाशितः।

३. प्राच्यवाण्यां कलकत्तानगरात् प्रकाशितः।

४. प्रकाशकः—चौखम्बासंस्कृतग्रन्थमाला वाराणसी।

५. रींवानगरात् प्रकाशितः।

६. द्रष्टव्यम्—हिन्दीसाहित्य का इतिहास पृष्ठम् ३१६–१७।

## १. सङ्गीतरघुनन्दनम्

महाकविजयदेवस्य गीतगोविन्दपरम्परायां प्रणीतमिदं रागकाव्यं षोडशसर्गात्मकम्। रागकाव्येऽस्मिन् श्रीरामचन्द्रस्य रसिकोपासनानुसारि श्रृंगाररससिक्तं वर्णनं वरीवर्ति। महाराजश्रीविश्वनाथसिंहेन स्वयमेवास्य व्यङ्ग्यार्थचन्द्रिकानामिका टीका कृता। तत्र माधुर्यभृतस्य गद्यस्याऽपि प्रयोगः प्राप्यते। काव्यमिदं सरलं सरसं सहृदयहृदयावर्जकम्।

## २. रामचन्द्राह्निकम्

कृतिरियमष्टाध्यायेषु विभक्ता। अत्र तत्रभवतः रामचन्द्रस्य दैनन्दिनक्रियमाण-कार्यकलापस्य हृदयहारि वर्णनमवाप्यते। भव्ये काव्येऽस्मिन् कोमलपदपरिवृतस्य पद्यस्य मध्ये मध्ये हृद्यस्य गद्यस्य प्रयोगोऽस्ति। अस्यां दशायामिदं चम्पूकाव्यमिति कथनमसमीचीनन्न। ग्रन्थकारेणैवाऽस्य टीकाऽपि विहिता। अस्य काव्यस्याऽन्याऽपि विशेषता वर्तते। अत्र होलीमहोत्सवस्य मनोहरवर्णनं हिन्दीच्छन्दसां प्रयोगश्च परिदृश्यते। कार्येऽस्मिन् लेखकेन महती सफलता समधिगता। एतस्मात् पूर्वं होलीमहोत्सवस्य हिन्दी-च्छन्दसां प्रयोगस्य च परम्परा प्रायः संस्कृते नैवाऽऽसीत्।

## ३. आनन्दरघुनन्दननाटकम्

रामायणकथाऽऽधारेण लिखितेऽस्मिन् नाटके सप्त अङ्काः सन्ति। अद्यावधि अप्रकाशितमिदं नाटकम्।[1] अनेनैव नाम्ना हिन्दीभाषायामनूदितस्यास्य नाटकस्यां प्रकाशनं सञ्जातम्। अनुवादको ग्रन्थकार एव। हिन्दीसाहित्यस्येतिहासलेखकान विचारे तु हिन्दीभाषाया इदं प्रथमन्नाटकम्। नाटकेऽस्मिन् लेखकेन पात्राणां नाम परिवर्तितम्। सीताया महिजा, रामस्य हितकारी, परशुरामस्य रैणुकेयः, तथा जनकस्य सीरकेतु-रिति नामानि कृतानि। एवमन्येषां पात्राणां नामसु परिवर्तनमस्ति। एतस्मात् पूर्वं रामकथामादाय लिखितेषु संस्कृतनाटकेषु पात्राणां नामसु परिवर्तनन्नास्ति। अनया दृष्ट्या लेखकस्यायं प्रथमः नूतनश्च प्रयत्नः प्रशंसनीयः। ग्रन्थकारेण पद्याऽपेक्षया गद्ये भवभूतेः मालतीमाधवनाटकसमाना समासपूर्णा पदावली प्रयुक्ता। समीक्षकचणानां विद्वद्गणानां मते नाटकेऽस्मिन् नाटकीयतत्त्वानां सर्वथाऽभावो वर्तते। अस्तु। लेखकस्य मुख्यमुद्देश्यमस्ति स्वपाठकानां पुरतः श्रीरामचन्द्रस्य पवित्रचरित्रस्य प्रस्तुतीकरणम्।

---

१. प्रकाशकः—विन्ध्यप्रदेशीयहिन्दीसाहित्यसम्मेलनम्—रींवा।

## ४. वाल्मीकीयरामायणटीका

चिरकालाद् वाल्मीकिरामायणं साधारणजनसमाजेषु विद्वद्वर्गेषु चातीव लोकप्रियम्। समग्रभारते चास्याऽऽर्षकाव्यस्य अध्ययनस्यानुशीलनस्य गहनचिन्तनस्य च महती परम्परा दृश्यते। इदमेव प्रधानं कारणं यदस्य काव्यस्योपरि संस्कृतभाषायामनेकाष्टीकाः समजायन्त। तासु कियत्यः प्रकाशिताः कियत्यः अप्रकाशिताश्च सन्ति। आसु टीकासु विद्वद्धौरेयैः कियत्यः स्वसंप्रदायानुसारिण्यः कियत्यश्च ताटस्थ्येन प्रणीताः। महाराजश्रीविश्वनाथसिंहेनाऽप्यस्य आर्षकाव्यस्योपरि [1]'तात्पर्यतरणिनाम्नी टीका रचिता। टीकेयमद्यावध्यप्रकाशिताऽस्ति। अस्याष्टीकायाश्चर्चा श्रीकृष्णमाचारीमहाभागेन [2]''हिस्ट्री आफ क्लासिकल्स संस्कृतलिट्रेचर' नामके पुस्तके डॉ० आफ्रेक्ट महोदयेन कैटलागस कैटलागारम्' ग्रन्थे च कृता।

## ५. श्रीमद्भागवतटीका

अस्याष्टीकाया नाम चण्डभास्करः। भगवतः श्रीरामचन्द्रस्यानन्यभक्तेन श्रीविश्वनाथसिंहेन श्रीमद्भागवतस्येयं टीका कस्मात् कारणात् कृतेत्यस्मिन् विषये अदसीयसुतेन महाराजश्रीरघुराजसिंहेन हिन्दीभाषायां प्रणीते पद्यात्मके [3]''रामरसिकावली नामके ग्रन्थे एका घटनोल्लिखिता। एकदा काशीनरेशेन श्रीविश्वनाथसिंहस्य सन्निकटे 'देवीभागवतम्' अध्ययनाय प्रहितम्। अस्य प्रतिक्रियायां श्रीविश्वनाथसिंहेन श्रीमद्भागवतोपरि [3]''चण्डभास्कराभिधामभिनवां टीकां प्रणीय काशीनरेशस्य पार्श्वे प्रेषिता। किन्तु खेदाऽऽस्पदोऽयं विषयो यदद्यावधि टीकेयं प्राप्ता न सञ्जाता।

## ६. सुमार्गटीका

महाराजश्रीविश्वनाथसिंहस्य गुरुरासीत् सन्तप्रियादासः। अनेन सुमार्गनामको ग्रन्थः प्रणीतः। महाराजश्रीविश्वनाथसिंहेनाऽस्य ग्रन्थस्योपरि ज्योत्स्नानामिका टीका कृता। समासेनाऽयमेवास्य परिचयः।

---

१. कैटलागस कैटलागारम् प्रथमभागः पृष्ठम् ५२३।

२. द्रष्टव्यम्—हिस्ट्री आफ क्लासिकल्स संस्कृतलिटरेचर : श्रीकृष्णमाचारी, पृष्ठम् २४।

३. एक समय महं काशीनरेशा। करि देवी भागवतहिं वेशा।।
विश्वनाथ के निकट पठायो। यह भागवत सत्य अस गायो।।
पितु किय चण्ड भास्कर ग्रन्था। श्री भागवत सत्य सत पंथा।।
—रामरसिकावली पृष्ठम् ९८७।

७. वेदस्तुतिटीका

श्रीमद्भागवतस्य दशमस्कन्धस्योत्तरार्द्धे सप्ताशीतितमेऽध्याये नारदनारायण-संवादरूपेण भगवतः स्तुतिर्वर्तते। पुराणमर्मज्ञा विज्ञा विद्वांस इमामेव वेदस्तुतिं कथयन्ति। भागवते वर्तमानाया अस्याः स्तुतेर्वैदुष्यवलिता ललिता व्याख्या विहिता। युगलदासेन प्रकाशिते स्वकीये विश्वनाथचरित्रनामके पुस्तके अस्याष्टीकायाश्चर्चा कृता। खण्डित-रूपेण रींवायाः सरस्वतीकोषभाण्डारे कृतिरियं वर्तते।

८. श्रीरामरहस्यत्रयार्थः

मङ्गलाचरणेन सार्द्धमत्र नवश्लोकाः सन्ति। लघुकायेऽस्मिन् पुस्तके वैष्णवसंप्रदाये मान्यानां 'श्रीमते रामानुजाय नमः' 'श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये' 'ओम् नमः सीतारामाभ्याम्' इति मन्त्रत्रयाणां जपोपासनासाधनासरणीनां संक्षेपेण प्रामाणिकं विवेचनं वरीवर्ति। अस्य लघुकायस्य पुस्तकस्य महन्तश्रीरामानुजदासेन रामरहस्यनाम्नी टीकाऽपि कृता।

९. रामगीताटीका

स्कन्दपुराणान्तर्गतनिर्वाणखण्डस्य ३२, ३३, ३४ संख्यकाऽध्यायत्रयेषु श्रीरामचन्द्रस्य शुकसनकसंवादात्मिका स्तुतिर्वर्तते। विद्वद्वर्गेषु अध्यायत्रयात्मिकेयं स्तुतिः रामगीता कथ्यते। श्रीविश्वनाथसिंहेनाऽस्याः प्रबोधिकानामिका टीका प्रणीता। अदसीया हस्त-लिखिता प्रतिः सतनानगरस्य रामवनतुलसीपुस्तकालये राराजते।

१०. धनुर्विद्या

अथर्ववेदस्योपवेदो धनुर्वेद इति विद्वांसो वदन्ति। धनुर्वेदविषयकः धनुर्विद्या-प्रतिपादकोऽयं ग्रन्थः। ग्रन्थेऽस्मिन् बाणस्य कदा केन प्रकारेण सञ्चालनं विधातव्यमित्यस्य लेखकेन पाण्डित्यपूर्णं विवेचनं विहितम्। संस्कृतभाषायामेतत्सबन्धि साहित्यं स्वल्प-मात्रायामस्ति। अनया दृष्ट्याऽस्य ग्रन्थस्याऽस्ति महत्त्वम्।

११. धर्मशास्त्रत्रिंशत्श्लोकी

पुस्तकेऽस्मिन् चातुर्वर्ण्यविभाजितहिन्दूजातेः प्रतिदिनं विधीयमानानां कार्यकलापानां मरणाऽन्ते क्रियमाणश्राद्धादिकृत्यानाञ्च सम्बन्धे समासेन लेखकेन स्वाभिमत प्रकटितम्।

### १२. तत्त्वमस्यर्थसिद्धान्तः

छान्दोग्योपनिषदि समागतस्य 'तत्त्वमसि' इति वाक्यस्य विश्लेषणं विवेचनञ्च विहितं श्रीविश्वनाथसिंहेनाऽस्मिन् पुस्तके। विवेचनप्रसङ्गे लेखकेन मान्यानां शङ्कररामानुजमध्वप्रभृतीनामाचार्यवर्य्याणां मतान्युल्लिख्य स्वसिद्धान्ताऽनुसारेण तत्त्वमसीतिवाक्यस्य विशदा व्याख्या विहिता।

### १३. रामपरत्वम्

स्वस्मिन् काले प्रथितयशसां पण्डितशिरोमणिश्रीअनन्ताचार्यमहाभागानां पार्श्वे महाराजश्रीविश्वनाथसिंहेन यत् पत्रं प्रहितं तस्यैव नाम 'रामपरत्वम्' लेखकेन कृतम्। लघुकायेऽस्मिन् पुस्तके भगवान् श्रीरामचन्द्रः परब्रह्मपरमात्मस्वरूपमित्यस्य प्रतिपादनमस्ति।

### १४. ब्रह्मसूत्रम्

षोडशशताब्द्या मध्यभागे श्रीहितहरिवंशनाम्नो महात्मनो जन्म मथुराजनपदस्य बादनामके ग्रामे बभूव। साधकप्रवरोऽयं राधावल्लभीयसम्प्रदायस्य प्रवर्तको बुधवर्यैः कथ्यते। महाराजश्रीविश्वनाथसिंहेनैतदीयसम्प्रदायानुसारेण पाण्डित्यपरिलसितं ब्रह्मसूत्रस्य भाष्यं विहितम्। भाष्यमिदं राधावल्लभीयभाष्यनाम्ना प्रथितमद्यावध्यप्रकाशितं वर्तते।

### १५. सर्वसिद्धान्तम्

महाराजकुमारश्रीविश्वनाथसिंहस्य लघुकायोऽयं ग्रन्थो महत्त्वपूर्णः। ग्रन्थकर्त्रा संपूर्णग्रन्थः प्रश्नोत्तरपद्धत्या प्रणीतः। तात्कालिको मिथिलादेशीयविद्वान् भिक्षुकाचार्यओझामहोदयो महाराजकुमारश्रीविश्वनाथसिंहं वेदान्तविषयकं प्रश्नं पप्रच्छ। महाराजकुमारेण तेषां प्रश्नानामुत्तरं सरलसुबोधभाषायामस्मिन् पुस्तके प्रदत्तम्। ग्रन्थविवेचनविषयस्तु अद्वैतवादखण्डनं द्वैतवादमण्डनञ्च वरीवर्ति। ग्रन्थस्याऽस्य नामोल्लेखः 'डा० आफ्रेक्टमहोदयेनाऽपि 'कैटलागस कैटलागारम्'–नामके स्वग्रन्थे कृतः। तार्किकपद्धत्या विहितस्य प्रश्नोत्तरस्वरूपस्य रोचकत्वात् सुन्दरशैल्यां लेखकेन ग्रथितत्वाच्च पाठकानां पुरतः उद्ध्रियते कियानंशोऽत्र। तद् यथा—

**प्रश्नः**

भो महाराजकुमारविश्वनाथसिंहदेव ! भवन्निर्मितभाषाप्रबन्धरामायणप्रतिपादितश्रीरामचन्द्रपरत्ववैष्णवपरत्वपर्यालोचनया बुद्धिमत्प्रवराग्रगणनीयसमधिगतसमस्तवेदान्ततत्त्वभवदमात्यश्रीमद्भोदूलालसततप्रतिपादिताद्वैतमतपर्यालोचनयैकदण्डिद्विदण्डित्रिदण्डिवाराणसीवासिकतिपयपण्डितोदितनानामतसन्ततश्रवणेनाधीतमहाभाष्यान्तव्याकरणशङ्कर-

---

१. द्रष्टव्यम्—कैटलागस कैटलागारम्—प्रथमभागः, पृष्ठम् ५८५।

रामानुजमध्वविष्णुस्वामिनिम्बार्कभाष्यपदपदार्थानुगुणबोधानुसारेण सकलमतसामंजस्यप्रति-भासे परस्परविरोधेन च परिश्रान्तचित्तः कृतमहानुभावानवरतसहवासं श्रीराधारमणचरण-कमलमकरन्दनिरन्तरास्वादासादितपरमानन्दसार्वज्ञ्यश्रीमत्प्रियादासाचार्यकृपालब्धश्रीराम-दीक्षं प्रतिक्षणवेदान्ताद्यखिलशास्त्रार्थावगाहनविशुद्धधिषणं त्वामहं पृच्छामि। मत्प्रश्नानुसारेण सर्वं समाधाय मां बोधय येन वेदप्रतिपादितेषु मतेषु भवन्मतमेव सन्मतमिति निश्चित्याऽद्यप्रभृत्यहमपि तदेवाऽनुसरिष्यामि। मादृशपण्डितबोधनेनैव त्वन्मतस्य स्थैर्यमनवरतप्रचारश्च किमिति भाषाप्रबन्धेन भाषामात्रज्ञबोधनेनेति।

प्रसङ्गेऽस्मिन् भिक्षुकाचार्येण प्रश्नकाले श्रीविश्वनाथसिंहो महाराजकुमारेति पदेन सम्बोधितः। एतेन प्रतीयते यत् तदानीं श्रीविश्वनाथसिंहो राजकुमार एवाऽऽसीत् राजपदं नालञ्चकार। भिक्षुकाचार्येण प्रश्नप्रसङ्गे-अद्वैतमताऽवलम्बिनः एतदीयमन्त्रिभोदूलालस्य चर्चा कृता। एतेन संसूचितो भवति यददसीयमन्त्रिमहोदयः-अद्वैतवादी स्वयं महाराजकुमारश्रीविश्वनाथसिंहश्चाऽऽसीद् द्वैतवादी।

**उत्तरम्**

भो भिक्षुकाचार्य ! यद्यपि त्वादृशानां प्रश्नं समाधातुं नाऽहं समर्थस्तथाऽपि मदन्तः-करणविराजमानश्रीमद्गुरुचरणाः सर्वं समाधास्यन्तीति काममाक्रियतामाशङ्केति।

**प्रश्नः**

भो राजकुमारश्रीविश्वनाथसिंह ! सर्वतः परः पदार्थः कः ? जीवज्ञेयाः के पदार्थाः ? सर्वप्रतिपादितं सर्वाऽविरुद्धं मतं किं ? कर्तव्यं च किमिति ?

**उत्तरम्**

भो भिक्षुकाचार्य ! शृणु। सर्वतः परः पदार्थः श्रीरामचन्द्रः तन्नामरूपलीलाधामगुणाः नित्यत्वेन जीवज्ञेयाः सर्वप्रतिपादितं सर्वाऽविरुद्धं मदाचार्यद्वैतमतं कर्तव्या तद्भक्तिरिति।

**प्रश्नः**

भो युवराज ! वेदशास्त्राऽविरुद्धं द्वैतमतमङ्गीकृतं येन प्रकारेण रामभावना प्रतिपादिता साऽप्यङ्गीकृतेति। श्रीभक्ताधिराजस्य महादेवस्याऽवतारः शङ्कराचार्य इति लोके प्रसिद्धत्वात् यच्छङ्कराचार्येण कष्टकल्पनयाऽद्वैतमतं प्रकाशितं तन्निजद्वैतमतस्थापनकारणम्। श्रीमहादेवः पार्वतीं प्रति पद्मपुराणे उत्तरखण्डे द्वादशी-माहात्म्योपक्रमे पाखण्डनिरूपणप्रस्तावे उवाचेति—

परेशजीवयोरैक्यं मयाऽत्र प्रतिपाद्यते।
ब्रह्मणोऽस्य स्वयं रूपं निर्गुणं वक्ष्यते तथा।
सर्वस्य जगतोऽप्यस्य मोहनार्थं कलौ युगे॥
वेदार्थवन्महाशास्त्रं मायया यदवैदिकम्।
मयैव कल्पित देवि ! जगतां नाशकारणात्॥

मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते।
मयैव कल्पितं देवि! कलौ ब्राह्मणरूपिणे॥

इत्यादि तथा च।

**उत्तरम्**

भो द्विज! मोहनार्थमद्वैतमतं शङ्कराचार्येण प्रकाशितं तन्मतस्य तु नास्तिकमत-मिलितत्वान्नास्तिकत्वमिति। शङ्करो व्यवहारदशायां जगतः सत्त्वं परमार्थदशायां मिथ्यात्वञ्च मनुते—

सत्त्वं तु द्विविधं प्रोक्तं संवृतं पारमार्थिकम्।
संवृतं व्यवहार्य्यं स्यान्निवृत्तौ पारमार्थिकम्॥
द्वे सत्त्वे समुपाश्रित्य बौद्धानां कर्मचोदनेति।

अपि च मायावादिनां दृष्टिः सृष्टिः स्वीकृता यदैव दृष्टिस्तदैव सृष्टिः दृष्ट्यभाव इति सा चैषा क्षणिकविज्ञानवादे अर्थानामर्थात्क्षणिकत्वं चिन्मात्राद्वैतवादे क्षणिकविज्ञा-नमस्तीति स्वीकारात्। अतस्तन्मतस्य तन्मतसमानत्वमिति। किञ्च मायिकमतं शून्यवादान्नाऽतिरिच्यते। अविद्याऽवच्छिन्नं ज्ञानं जगत्सर्वं ज्ञानमिति भावनयाऽविद्याविनाशे ज्ञानमात्रमवशिष्यते इति निर्गुणचिद्द्वैतिनो मतम्। संवृत्त्यवछिन्नं शून्यं जगत् सर्वं शून्यमिति भावनया तद्विनाशे शून्यमात्रमवशिष्यते इति माध्यमिकमतम्। अतस्तस्य समा-नत्वमिति।

ननु मायावादिनां मते विद्यानाशे ज्ञानं पूर्णमवशिष्यते माध्यमिकमते तु शून्यमिति कथं तयोरैक्यमिति चेन्न। यावन्मूलाज्ञानं तावदेव ज्ञानमवशिष्यते मूलाज्ञाननाशे ज्ञानमपि नश्यत्यतः शून्यमात्रावशेषमित्याशयात्। किञ्च प्रच्छन्नतया ब्रह्म नाऽस्तीत्यपि वदन्ति। तथा हि निष्क्रियत्वेन क्रियावत्त्वस्य निर्गुणेन गुणवत्त्वस्य धार्मिकत्वेन जातिमत्त्वस्य चिन्मात्रत्वेन द्रव्यवत्त्वस्य च चरमाऽवस्थायां निरानन्दत्वेनाऽनन्दस्वरूपतया मिथ्यात्वनाशदृष्टान्तेन शून्यत्वं मायिकत्वेन वेदान्तं मिथ्यात्वञ्चेति वदन्तीत्यतो नास्तिकमतशङ्करमतयोः समानत्वमिति।

ननु नास्तिकमतशङ्करमतयोरैक्यं चेत् तर्हि शङ्करेण नास्तिकमतखण्डनं कृतमिति कथं संगच्छत? इति चेच्छृणु। प्राचीनमतखण्डनेन नवीनमतस्थापनमित्येतावतैव तन्मत-खण्डनं कृतं तेनेति। यथा नागेशो व्याकरणे दीक्षितमतखण्डनेन नवीनमतं स्थापितवान्। तथेति विशेषः। अतोऽद्वैतमतस्य प्रच्छन्नबौद्धत्वमिति सज्जना वदन्ति। मनोनाशवास-नाक्षययुक्ता महतो मतवादविनिर्मुक्ता दार्वश्मवत्स्थिता अष्टमीं भूमिकां प्राप्ता ये तेषां गतिर्निरूपिता प्राक्। इमे तु वादप्रवराः। एषामगतिस्त्वद्वैतवादिग्रन्थेऽपि प्रथिता। तथाहि—

कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः।
तेऽपि यान्ति तमो नूनं पुनरायान्ति यातनाम्॥

इत्यभियुक्तोक्तेः।

शङ्कराचार्यस्याऽवतारे किं कारणं केषामवतारास्ते किञ्च भवदाचार्यः कस्याऽवतारस्ते वदतश्च किं कारणम्।

भो विप्र! शृणु। यदा शङ्कराचार्यस्याऽवतारस्तदा स्वस्वमतरक्षणार्थं श्री-ब्रह्मरुद्रसनकादीनां स्वसम्प्रदाये निम्बार्कविष्णुस्वामिमध्वरामानुजाख्याश्चत्वारोऽवतारा बभूवुः। तथा च भविष्ये—

श्रीब्रह्मरुद्रसनकाद्याः वैष्णवाः क्षितिपावनाः।
चत्वारस्ते कलौ भाव्या सम्प्रदायप्रवर्तकाः॥
निम्बार्कश्च विष्णुस्वामिमध्वरामानुजाख्यया।
भविष्यन्ति प्रसिद्धास्ते ह्युत्कले पुरुषोत्तमाः॥
इति—
मध्वो ब्रह्मा शिवो विष्णुर्निम्बार्कः सनकस्तथा।
शेषो रामानुजो रामो रामानन्दो भविष्यति॥

इति भार्गवपुराणे च। परमतखण्डनपूर्वकस्वमतस्थापकानां परस्परविवदमानानां चतुर्णामाचार्याणां मतविरोधमवगत्य श्रीविष्णुचैतन्यभक्ताऽवतारसमनन्तरं लब्धपरम-प्रियसखीरूपरासमण्डलवर्तमानो मुक्तः श्रीशुकाचार्यस्तेषां मतानां तात्पर्यार्थिकत्वं प्रतिपादयितुं नारदद्वारा समागतब्रह्मसम्प्रदाये श्रीप्रियादासाचार्यरूपेण प्रादुर्बभूव। तथा च भविष्ये—

अति प्रभावसंयुक्तश्चैतन्य इति विश्रुतः।
भक्ताऽवतारस्त्वपरो भविष्यति महीतले॥
तस्य शिष्यप्रशिष्यैस्तु शास्त्रज्ञैर्ग्रन्थकारिभिः।
किञ्चित्कालं तु शास्त्राणि स्थास्यन्ति मनुसत्तम!॥
भविष्यति यदाभावस्तच्छिष्येषु महात्मनाम्।
अवतीर्य शुकस्तत्र प्रियाचार्यो भविष्यति॥

न च मुक्तस्य प्राकृतकर्मफलभोगाऽसंभवाज्जननादिकं कथमिति वाच्यम्। कृष्ण-वज्जीवोद्धरणाय स्वेच्छया भगवदिच्छया प्रादुर्भावत्र एव तात्पर्यात्। इति सम्प्रदायप्रवर्त-काचार्योत्पत्तिवर्णनं नाम प्रथमो विवेकः।

लघुकायेऽस्मिन् पुस्तके खण्डनमण्डनप्रसङ्गे ग्रन्थकारेण स्वस्मात् कियत्पूर्ववर्तिवैया-करणशिरोमणिनागेशभट्टमहाभागानां भार्गवनन्दिवाराहस्कन्दप्रभृतिपुराणोपपुराणानाम्-आनन्दब्रह्मसुदर्शनभरद्वाजहनुमत्सनत्कुमारहिरण्यगर्भबृहत्वशिष्ठसदाशिवपरमसिद्धान्त-

संहितानां बहूनामुपनिषद्ग्रन्थानाञ्चोल्लेखः प्रमाणत्वेन प्रस्तुतीकृतः। एतेन पुस्तकस्य परमोपादेयता च प्रतीयते।

उपरि चर्चितेषु महाराजश्रीविश्वनाथस्य केचन ग्रन्था मौलिकाः केचन च टीकाऽऽत्मिकाः वर्तन्ते। अदसीयेषु ग्रन्थेषु ब्रह्मसूत्रस्य राधावल्लभीयमतसम्बन्धिभाष्यं महत्त्वपूर्णा कृतिरस्ति। ग्रन्थस्याऽस्य प्रकाशनन्नितरामावश्यकम्। संस्कृतभाषायामस्य लेखकस्य सन्त्यपरेऽपि ग्रन्थाः। न ते महत्त्वशालिनः। अतो नाऽत्र चर्चिताः।

मम प्रतिः

कतिपयवर्षेभ्यः प्राक् सटीकं हस्तलिखितमिदम्—'अध्यात्मरामायणम्' स्वर्गीयमदीयबाल्यकालीनसतीर्थ्येन ब्रजभाषाकविना सुहृद्वर्य्यपण्डितबद्रीप्रसादमिश्रमहोदयेन मह्यमुपायनीकृतम्। अवाप्य तदुपेक्षात्मिकया दृष्ट्या अक्षिलक्ष्यीकृत्य स्वकीये सङ्ग्रहे न्यस्तीकृतम्। कार्यव्यापृतेनाऽन्यग्रन्थसंपादनसंलग्नेन च मया तदानीं तन्नाऽधीतम्। कियत्कालानन्तरं कर्पटावृतस्याऽस्य रामायणस्याऽध्ययनस्येहा मनसि जागरिता। कृतेऽध्ययने ज्ञातं यद्रामायणेऽस्मिन् रींवानरेशमहाराजश्रीविश्वनाथसिंहेन प्रणीता टीकावरीवर्ति। टीकायां टीकाकारकृते प्रारम्भिकमङ्गलाचरणे 'युक्तो नैकसखीव्रजेन सततं सीतासमालिङ्गितः' इति पद्यांशेन मदीयेयं धारणा समजनि यदियं टीका रामरसिकोपासनासम्प्रदायानुसारिणी वर्तते। अन्वेषणप्रवीणैः पण्डितैः सह सम्पर्के सञ्जाते सूचना मिलिता यट्टीकेयमद्यावधि प्रकाशिता नाऽस्ति। अस्यां दशायामेतत्प्रकाशनाय मनसि समुत्थिते संकल्पे सम्पादनसौकर्य्याय सटीकस्याऽस्य रामायणस्याऽपराऽपि प्रतिरन्वेषणीयेति विचिन्त्य रींवानगरस्थपण्डितैः राजगृहसम्पृक्तजनैश्च सह पत्रव्यवहारो विहितो मया। ततो वृत्तं लब्धं यद् रींवानरेशस्य सरस्वतीभाण्डारसङ्ग्रहालये तत्रत्येषु पण्डितपरिवारेष्वपि सटीकस्याऽस्य रामायणस्य द्वितीया प्रतिर्न विद्यते। तर्हि मयैकमात्रस्वप्रत्याधारेणैव संपादनं कर्तुं निरणायि। एतस्मिनन्तरे संस्कृतसाहित्यविदुषा इन्दौरनगरनिवासिना डा० लक्ष्मणनारायणशुक्लमहोदयेन मदन्तिके सूचना प्रहिता यद् रींवापार्श्वस्थसतनानगरस्य रामवनतुलसीसंग्रहालये सटीकस्याऽस्य रामायणस्यैका प्रतिरुपलब्धाऽस्ति। उदन्तेनाऽनेन मुदमनुभवता मया तस्याः प्रतेः प्रतिलिपिप्राप्तये प्रायत्यत। किन्तु तत्रत्यैः मुख्याधिकारिश्रीशारदाप्रसादमहोदयैः (संप्रति स्वर्गीयैः) सूचितं यत् प्रतिलिपिकाराणामभावात् मदीयसंस्थायां प्रतिलिपिकरणस्य काऽपि व्यवस्था नाऽस्ति। भवन्तोऽत्रैव समागत्य अवलोकयन्तु। अतस्तत्र गत्वैव पाठभेदसंकलनाय भ्रष्टपाठशुद्धकरणाय च मया निसचायि। अस्याः प्रतेरुल्लेखस्तु 'मम प्रति' रिति शब्देन सर्वत्र समकेति। अस्याः स्वरूपसंस्तवस्त्वित्थम्—

प्रतिलिपिकारेणाऽस्मिन् पुस्तके सर्वत्र हस्तनिर्मितकर्गदः प्रयुक्तः। लिपिस्तु

देवनागरी। समस्ते ग्रन्थे प्रतिलिपिकाराणां वैभिन्न्याल्लिपिभेदः संवृत्तः। लिपिः प्रायः सुवाच्या सुपठनीया पूर्णरूपेण शुद्धा स्वच्छा च न। सामान्यतः प्रत्येकपृष्ठे चतुर्दशपङ्क्तयः सन्ति। क्वचन-क्वचन च द्वादश वा षोडश पंक्तयोऽपि सन्ति। प्रत्येककाण्डस्य पृष्ठसंख्या भिन्नाऽस्ति। यथा--बालकाण्डे एकोनपञ्चाशत् पृष्ठानि, अयोध्याकाण्डे पञ्चाशत्, अरण्यकाण्डे षट्त्रिंशत्, किष्किन्धाकाण्डे एकोनपञ्चाशत्, सुन्दरकाण्डे एकत्रिंशत्, युद्धकाण्डे त्र्यशीतिः, उत्तरकाण्डे च पञ्चाशीतिर्वर्तन्ते। ग्रन्थाऽन्ते वशिष्ठसंहिता-सदाशिवसंहिता-शिवसंहितानां कियानंशोऽस्ति। पुष्पिकास्वरूपं तदेव यत्पुस्तकाऽन्ते मुद्रितम्।

रामवनप्रतिः

सतनानगरस्य रामवनपुस्तकालयस्य द्वितीयप्रतेः परिचयस्तत्रत्यसूचीपत्रे यथाऽस्ति तथाऽत्राविकलमुद्ध्रियते—

रामवन-पाण्डलिपिक्रमांक ११९० अन्तिम उल्लेख—

अध्यात्मरामायणस्य टीका व्यङ्ग्यप्रकाशिका।
श्रीविश्वनाथ-स्वान्तःस्थ-श्रीरामेण प्रकाशिता॥

इति सिद्धि-श्रीमहाराजाधिराज-श्रीविश्वनाथसिंह-विरचितायां बृहद्ब्रह्माण्ड-पुराणान्तर्गताध्यात्मरामायण-टीकायां उत्तरकाण्डे नवमोऽध्यायः।

ग्रन्थ के आरम्भ में स्वामी रामानुज और प्रियादास की वन्दना की गई है, सखी-सम्प्रदाय के मतों का प्रतिपादन है। बालकाण्ड में ७ अध्याय—५५ पत्रा, अयोध्या में ९ अध्याय–३२ पत्रा, अरण्य में १० अध्याय–३७ पत्रा, किष्किन्धा में ९ अध्याय–३९ पत्रा, सुन्दरकाण्ड में ५ अध्याय–२१ पत्रा, युद्धकाण्ड में १६ अध्याय–९५ पत्रा और उत्तरकाण्ड में ९ अध्याय–७७ पत्रा है। ७७ से ८९ पत्रा तक भरद्वाज-वशिष्ठ-संवाद के रूप में परमधाम का वर्णन जुड़ा हुआ है।

सम्पादन-सम्बन्धे

प्रस्तुतटीकासंपादनाऽऽधारभूतस्य प्रतिद्वयस्य तुलनाऽऽत्मकदृष्ट्या पठनेन प्रतिपृष्ठस्य लिपेरवलोकनेन च सुस्पष्टं कथयितुं न शक्यते यद् रामवनप्रतिर्मम प्रतेः प्रतिलिपिरथवा मम प्रती रामवनप्रतेः प्रतिलिपिर्वर्तते। किंत्विदं सत्यं भाति यत् प्रतिद्वयमपि परस्परप्रति-लिपिस्वरूपम्। मदीयमिदमनुमानं सहेतुकम्। तथाहि–अस्य रामायणस्योत्तरकाण्डस्य पञ्चमाध्यायः रामगीता कथ्यते। तत्रत्यस्य २९ संख्यकश्लोकस्य टीका प्रतिद्वयेऽपि नाऽस्ति। तथैव प्रस्तुतरामायणस्याऽन्तिमः टीकाकारप्रणीतः प्रतिलिपिकाराऽनवधानतया दूषितः पद्यांशः-'प्रियायै गिरिशस्तस्मै गूढं व्याख्यातवान् स्वयम्' 'श्रीरामो जयति सुरासर-सिकश्रीजानकीसंयुतः' इति चाऽविकलमुभयत्राऽवाप्यते। एतेनाऽनुमीमहे यत्प्रतिद्वयमपि परस्परप्रतिलिपिभतमस्ति। पूर्णरूपेण शुद्धता तु प्रतिद्वयेऽपि न दरीदृश्यते। मम प्रतौ

यास्त्रुटयो दृष्टिपथमायान्ति ता रामवनप्रतौ न वर्तन्ते। याश्च रामवनप्रतौ दृश्यन्ते, ता मम प्रतौ न सन्ति। अस्मिन् विषयेऽपि पाठाऽऽलोचनसिद्धान्तपण्डिताः प्रतिलिपिकारैरेतादृशी त्रुटिः क्रियते, सा च तेषां सहजा मनोवैज्ञानिकी प्रकृतिरिति कथयन्ति[1], तथेदृशी हस्तलिखितप्रतिश्चैकवंशा प्रतिरिति मन्यन्ते।

पाठाऽऽलोचनसिद्धान्ताऽनुसारेण कस्याऽपि ग्रन्थस्य समालोचनाऽऽत्मकसंस्करणरूपेण प्रकाशनाय संपादनाय च[2] बह्वीनां हस्तलिखितप्रतीनामेकत्रीकरणन्नितान्तमावश्यकम्। तदाऽऽधारेणैव कस्याऽपि ग्रन्थस्य समालोचनात्मकसंस्करणस्य संपादनं सुकरं सुसमीचीनञ्च भवति। पूनाबड़ौदानगराभ्यां[3] महाभारतस्य[4] वाल्मीकिरामायणस्य च बह्वीर्हस्तलिखितप्रतीरेकत्रीकृत्य ताभ्यः पाठभेदं निश्चित्य-अन्ताराष्ट्रियख्यातिप्राप्तानां डॉ० विष्णु एस० सुक्थंकर, डॉ० सुशील कुमार डे, डॉ० फ्रेंकलिन एडगर्टन, डॉ० रामचन्द्रनारायण दाण्डेकर डॉ० हरीदामोदरवेलंकरप्रभृतिविदुषां संपादकत्वे महाभारतस्य षोडशभागेषु तथा डॉ० पी० एल० वैद्य, डॉ० डी० आर० मनकद, श्रीउमाकान्तप्रेमानन्दशाहाऽऽदिपण्डितानां संपादकत्वे वाल्मीकिरामायणस्य सप्तभागेषु प्रकाशनं सञ्जातम्। महाभारतस्य आदिपर्वप्रस्तावनायां डॉ० विष्णु एस्० सुक्थंकरमहाभागैः पाठाऽऽलोचनसिद्धान्तस्य वैदुष्यवलितं विवेचनं विश्लेषणञ्चाऽपि विहितम्।

प्रस्तुतरामायणस्य टीकायाः बहुहस्तलिखितप्रतीनां प्राप्त्यभावात् प्राप्तप्रतिद्वयस्य च पूर्णशुद्धताराहित्याच्च संपादने यत्र-तत्र महत्काठिन्यं समुपस्थितम्। यथामति तत्तत् स्थलं स्वविवेकेन संपादितम्। स्थलविशेषोपरि टिप्पणी च कृता।

रसिकसम्प्रदायः

प्रस्तुतव्यङ्ग्यप्रकाशिकाटीका भगवतः श्रीरामचन्द्रस्य रसिकसम्प्रदायाऽनुसारिणी वर्तते। अस्य सम्प्रदायस्य अवान्तरभेदाः जानकीसम्प्रदायरहस्यसम्प्रदायजानकीवल्लभसम्प्रदायसियारामसंप्रदायाः सन्ति। एतत्सम्प्रदायसाधवः पण्डिताश्च रसिकसम्प्रदायस्य सुव्यवस्थितरूपप्रदाता प्रचारकः प्रसारकः साधकशिरोमणिः षोडशशताब्द्यां समुत्पन्नः श्रीअग्रदासस्वामिमहाभागोऽस्तीति मन्यन्ते। साम्प्रदायिका जना अस्य अग्रअली-इति नामान्तरमपि कथयन्ति। प्रारम्भिकसमयेऽस्य महात्मनः साधनास्थलं जयपुरनगरस्थितं

१. भारतीय पाठालोचन की भूमिका पृष्ठम् ४५। डॉ० एस० एम० कत्रे।

२. तत्रैव परिशिष्टपृष्ठम् १६७।

३. प्रकाशकः—भण्डारकर ओरियण्टल रिसर्च इन्स्टीट्यूट, पूना।

४. प्रकाशकः—ओरियण्टल इन्स्टीट्यूट, बड़ौदा।

गलतागादीनामक पीठमासीत्। कियत्कालानन्तरं तस्मिन्नेव नगरे रैवासास्थाने स्वतन्त्ररूपेणाऽयं महात्मा पीठं संस्थाप्य रसिकसंप्रदायानुसारिरामभक्तिप्रचारे सर्वतोभावेन दत्तचित्तस्सञ्जातः। एतदर्थम्—अनेन महानुभावेन हिन्दीभाषायां पदावलीध्यानमञ्जरीनामकं ग्रन्थद्वयं प्रणीय साधारणजनसमाजस्य कृते गोपनीयभूतस्य रसिकसम्प्रदायस्य सिद्धान्तस्वरूपं सर्वजनाय सुलभीकृतम्। एतदीयशिष्यःभक्तमालग्रन्थ-रचयिता नाभादासः आसीत्। यस्य संप्रदाये 'नाभा अली' इत्यपरमपि नामाऽस्ति। एतस्मात् पूर्वमस्य संप्रदायस्य ज्ञानाधिकारिणः एतदीयसम्प्रदाये मान्यतमग्रन्थश्रीहनुमत्-संहिताऽनुसारेण[1] साधारणजना नैवाऽऽसन्—यथा——

उपादिशेच्च सम्बन्धं परीक्ष्य विधिवज्जनम्।
वैपरीत्यञ्च नो कार्यं कदाचित् भावज्ञातृभिः॥
अस्याऽधिकारिणो लोके केऽपि केऽपि महामुने!।
अतः सर्वप्रयत्नेन गोपनीयं सदैव हि॥

——श्रीहनुमत्संहिता, पृष्ठम् ६।

एतत्सम्प्रदायभक्ताः साधवो विद्वांसश्च कृष्णस्य रासलीलामिव मर्यादापुरुषोत्तम-रामचन्द्रस्याऽपि रासलीलां मन्यन्ते कालेऽभिनयन्ति च। एतत्सम्प्रदायसिद्धान्त-प्रतिपादकाः श्रीसीतोपनिषद्श्रीविश्वम्भरोपनिषद्श्रीमैथिलीमहोपनिषद्श्रीरामरहस्यो-पनिषद्श्रीहनुमत्संहिताश्रीशिवसंहिताश्रीलोमशसंहिताश्रीबृहद्ब्रह्मसंहिताश्रीअगस्त्यसंहिता श्रीवाल्मीकिसंहितावशिष्ठसंहिताभुशुण्डीरामायणबृहत्कोशलखण्डआनन्दरामायणजानकी-गीतप्रभृतिग्रन्थाः देववाण्यां वर्तन्ते। हिन्दीभाषायान्तु संस्कृतभाषाऽपेक्षया भूयांसो ग्रन्थाः सन्ति।

भुशुण्डिरामायणस्य पूर्वखण्डे पञ्चविंशाध्यायादारभ्य षट्त्रिंशाऽध्यायपर्यन्तं रामरासनामका अध्याया वर्तन्ते। रामायणेऽस्मिन् रामरासकृतेऽयोध्यायां प्रमोदवनस्याऽपि कल्पना कृता। इदं वनमेव रामस्य रासलीलास्थानमस्ति। रामायणेऽस्मिन् एतद्विषयकाः श्लोका इमे सन्ति। यथा——

'रासं चकार रामाभिः परमैश्वर्यभावितः।'

——पञ्चविंशाध्याये चतुर्थश्लोकांशः।

'पिधाय योनिं करपद्मसंपुटे परस्पराऽसक्तिसुसंगतोरुकाः।'

——अष्टविंशाध्याये ४७ संख्यकश्लोकांशः।

---

१. ग्रन्थोऽयं श्रीलक्ष्मीनारायणमुद्रणालयमुरादाबादनगरात् १९०१ तमेसवीये वर्षे पत्राकाररूपेण मुद्रितः।

ततोऽस्य वक्त्रं शनकैः प्रदृश्य बभाण बाला मृदुवल्गुभाषिता।
अलं जवेन प्रिय मुञ्च मां नन नेति समर्द्दविलोलविग्रहा।
सभाष्यमाणोऽपि जवेन योनिं बभञ्ज तस्याः खलु दीनभाषितम्।

... ... ...

कृतोद्धतां निर्दयसौरतक्रियां तत्याज मूर्च्छायितविग्रहां ताम्।

—तत्रैव ५२, ५३, ५४, संख्यकश्लोकांशाः।

भुशुण्डिरामायणे रामरासवर्णनप्रसङ्गे ईदृशानि बहूनि पद्यानि प्राप्यन्ते। पाठकानां पुरतः मर्यादापुरुषोत्तमरामचन्द्रस्य रसिकसम्प्रदाये कीदृग्रूपस्योपासना भवतीति संसूचनार्थमिमे श्लोका उद्धृताः। आनन्दरामायणस्य विलासकाण्डेऽपि भगवतः श्रीरामचन्द्रस्य शृङ्गारिस्वरूपस्य वर्णनं दरीदृश्यते। हिन्दीभाषाकविकृतनखशिखवर्णनमिवाऽस्मिन् रामायणेऽपि भगवतीसीतायाः स्वरूपवर्णनमित्थं प्राप्यते—

त्वद्रूपसदृशां नान्यां पश्यामि जगतीतले।
प्रतिपच्चन्द्रकलया स्पर्धयन्ति नखानि ते।
जघनं मांसलं रम्यं वर्तुलं गजकुम्भवत्।

पीतं विलोमसुस्निग्धं मम चित्तैकमोहनम्।
नाऽहं ते वर्णने शक्तो रतिस्थानस्य भामिनि !।।
गंभीरा वर्तुला नाभिस्तव रम्या प्रदृश्यते।

—विलासकाण्डे द्वितीयसर्गे ३९, ४७, ४८ संख्यकाः श्लोकाः।

आनन्दरामायणेऽपि ईदृशाः श्लोका बहवः सन्ति। ते नाऽत्र उद्धियन्ते।

एतत्सम्प्रदायाचार्याः कथयन्ति यद् महर्षिवाल्मीकिप्रणीतरामायणेऽपि शृङ्गारभावनाबोधकाः श्लोका वर्तन्ते। एतत्कृते जयपुरस्य गलतापीठस्वामिना मधुराचार्येण सुन्दरमणिसन्दर्भनामैको ग्रन्थो व्यरचि। तत्र वाल्मीकिरामायणस्य बहूनां श्लोकानां व्याख्या शृङ्गारपरका विहिता। अत्र षट् सन्दर्भा आसन्। येषु सुन्दरमणिसन्दर्भः पूर्णः अपूर्णश्च वैदिकमणिसन्दर्भोऽवाप्यते। एतदीयं मङ्गलाचरणं प्रपठ्यताम्—

[1]प्रोद्यद्भानुसपत्नरत्ननिकरैर्देदीप्यमाने महा-
मोदे दिव्यतराऽतिमञ्जुवनितावृन्दैः सदा सेवितम्।
रासोल्लासमुखैश्च व्याकृततमं दिव्ये महामण्डपेऽ-
योध्यामध्यप्रमोदशुभ्रविपिने रामं ससीतं भजे।।

---

१. रामभक्तिसाहित्य में मधुर उपासनापुस्तकादुद्धृतः पृष्ठम् १७३। श्रीभुवनेश्वरप्रसादमिश्रमाधवः।

उत्तरकाण्डस्य पञ्चमाध्याये ५७ तमश्लोकपूर्वार्द्धस्य प्रतिच्छविः

| पङ्क्तिः | अशुद्धशब्दरूपम् | पङ्क्तिः | अशुद्धशब्दरूपम् | पङ्क्तिः | अशुद्धशब्दरूपम् |
|---|---|---|---|---|---|
| ३ | हिरण्यथै | १४ | सच्चिदात्मिका | १६ | तिप्टन् |
| ७ | माणतः | १४ | पतिपादकः | १८ | य वेद |
| ९ | निवर्तये | १६ | न भेद | १८ | वहनां |
| ११ | ततत्वज्ञान | | | | |

एतेषां शुद्धरूपाणि प्रस्तुतपुस्तकस्य ५६६ तमपृष्ठे द्रष्टव्यानि ।

वाल्मीकिरामायणविषये मधुराचार्येण सुन्दरमणिसन्दर्भे इत्थमगादि "कृत्स्नस्याऽपि श्रीमद्रामायणस्य निरतिशयनिर्दोषनित्यरसमयत्वम्'। अस्मिन्नेव ग्रन्थे मधुराचार्येण जारशब्दस्य उपपतिशब्दस्य च विचित्रा व्युत्पत्तिः विहिता। तद् यथा–जारयति[२] ससारबीजं नाशयतीति जारः, उप समीपं अन्तर्यामिरूपेण व्यक्तरूपेण वा स्थित्वा पाति रक्षति पुष्णातीति उपपतिः'–अस्य आचार्यवर्यस्य वाल्मीकिरामायणसम्बन्धेऽपीदृशी धारणा वरीवर्ति–[३]'कृत्स्नं रामायणं काव्यं सीतायाश्चरितं महत्' 'रामायणं नारीप्रधानमिति प्राधान्येन शृङ्गाररस एवात्र प्रतिपाद्यते'। एतत्कृता शृङ्गारस्य दार्शनिकी व्याख्याऽपि पठ्यताम्–[४]"नहि मिथुनमेव शृङ्गारः तस्य घृणितत्वप्रसिद्धेः अपि तु आनन्दाऽपरनामकः परमप्रीतिरूपः चित्तस्य ब्रह्माऽवगाहिपरिणामः प्रसिद्धः'। एतेन एतत्सम्प्रदायाचार्याणामभिप्रायोऽपि व्यज्यते। ते कथयन्ति यदस्मदीयसम्प्रदायस्य मूलस्रोतः आदिरामायण एव दृश्यते। अतोऽस्माकं सम्प्रदायोऽयं न नूतनः अपि तु प्रत्नतमः।

इमे इदमपि कथयन्ति यद्भगवतो रामचन्द्रस्य भगवतीसीतायाश्च शृङ्गाररसरञ्जितवर्णनमष्टमशताब्द्यां समुत्पन्नस्य महाकविकुमारदासस्य जानकीहरणमहाकाव्येऽपि च प्राप्यते। यथा—

इति सपदि वदन् वदान्यवर्यः शयनशिलातलमिन्दुपादधौतम्।
अलसतरगतिर्नरेन्द्रकन्यामनुगमयन्मदमन्थरः प्रपेदे॥
अथ सुरतमखे सुखं समाप्ते मदनहुताशनदग्धमानहव्ये।
चषकमधुनि सन्निविष्टबिम्बं मुखमनयद्दयितासखः स सोमम्॥
दुहितुरवनिभर्तुरुन्मयूखं मणिचषकं परिमण्डलं विहाय।
प्रियमुखपरिभुक्तधामवाञ्छा करकमलं नयति स्म हेमशुक्तिम्॥
नियतमिह पतन्ति दन्तधारा मदनमदोद्धतयोरितीव भीत्या।
अधरकिशलये विहाय यूनोर्मधु पिबतोर्नयनान्यवाप रागः॥
मुहुरपि मधुपो विवृद्धतृष्णो न विरमति स्म पिबन् सुगन्धि हृद्यम्।
युवतिमुखमसंशयं यतो यत् सरसिरुहं परमार्थतस्तदेतत्॥
अचकमत मधु प्रियामुखेन क्षितिपसुतः प्रणयादसौ वितीर्णम्।
अधरमितवतो व्रणस्य दाहात् स्फुटरचितभ्रुकुटिर्मधुस्रवेण॥

---

१. रामभक्ति साहित्य में मधुर उपासना पुस्तकादुद्धृतः पृष्ठम् १७४।
२. रामभक्ति साहित्य में मधुर उपासना पुस्तकादुद्धृतः पृष्ठम् १७५।
३. रामभक्ति साहित्य में मधुर उपासना पुस्तकादुद्धृतः पृष्ठम् १७५।
४. रामभक्ति साहित्य में मधुर उपासना पुस्तकादुद्धृतः पृष्ठम् १७५।

इति सपदि निशामतीयतुस्तौ प्रविधुतकौसुमभक्तिसूत्रशेषम्।
रतिकलहकचग्रहेण माल्यं विलुलितकेशसमर्पितं दधानौ।।

[1]अष्टमसर्गः

अत्र बौद्धकविना सीतारामचन्द्रयोर्मदिरापानमपि वर्णितम्।

अस्मिन् प्रसङ्गे दामोदरमिश्रकविकृतहनुमन्नाटकस्य पद्यान्यपि सम्प्रदायपण्डिताः प्रमाणत्वेन उपस्थापयन्ति—

द्यूते पणः प्रणयकेलिषु कण्ठपाशः, क्रीडापरिश्रमहरं व्यजनं रतान्ते।
शय्यानिशीथसमये जनकात्मजायाः, प्राप्तं मया विधिवशादिदमुत्तरीयम्।।
आलिङ्गिताऽत्र सरसीरुहकोरकाक्षी, पीताधरेति मधुरे विधुमण्डलास्या।
रङ्गावतारमकरन्दविमर्दितानि, पुष्पाण्यमूनि दयिते! क्व गतेत्यरोदीत्।।
सीतेति हा जनकवंशजवैजयन्ति! हा मद्विलोचनचकोरनवेन्दुलेखे!
इत्थं स्फुटं बहु विलप्य विलप्य रामस्तामेव पर्णवसतिं परितश्चचार।।
हा जानकि! प्रचलितोत्पलपद्मनेत्रे! हा मे मनःकमलकाननराजहंसि!
एष प्रिये! तव वियोगजवह्निदग्धो, दीनं प्रयामि भवतीं क्व विलोकयामि।।

—हनुमन्नाटकस्य पञ्चमाऽङ्के १-५-८-९ संख्यकश्लोकाः

इत्थमेतत्सम्प्रदायसाहित्यं यद्यपि संस्कृते स्वल्पतमं, किन्तु हिन्दीभाषायां प्रचुरतमं वर्तते। महामहोपाध्याय[2] डॉ० गोपीनाथकविराजमहोदयेनाऽपि डॉ० भगवतीप्रसादसिंह-रचितस्य 'रामभक्ति में रसिकसंप्रदाय' इति नामकस्य ग्रन्थस्य भूमिकायामेवमभाणि-'देववाण्यां मूलसंहितादिरूपेण पञ्चाशद्ग्रन्थाः सन्ति, हिन्दीभाषायामष्टौ शतानि तथाऽऽनुषङ्गिकग्रन्थाः शतादधिकाः प्राप्यन्ते'।

यथा कृष्णभक्तानां साधनास्थलं वृन्दावनं शैवानामानन्दवनं तथैव सीतारामभक्तानां रसिकसम्प्रदायाऽनुयायिनां कृते अयोध्यापुरी वर्तते। इमे प्रतिपादयन्ति यत्पुरीयं प्रत्नतमा। अथर्ववेदेऽप्यस्याः सङ्केतात्मकेषु शब्देषु दार्शनिकचिन्तनभृतं वर्णनमवाप्यते।

अष्टचक्रा नवद्वारा देवानां पूरयोध्या।
तस्यां हिरण्ययकोशः स्वर्गो ज्योतिषाऽऽवृतः।।

—अथर्ववेदे १०।२।३१

मन्त्रेऽस्मिन् प्रयुक्तानामष्टचक्रानवद्वाराप्रभृतिशब्दानां मुख्याऽऽशयः कः इत्यस्य विस्तृतं वर्णनं संहिताग्रन्थेषु वर्तते। साम्प्रदायिका विद्वांसः कथयन्ति—एतन्मन्त्राऽऽधारेणैव

---

१. जानकीहरणम् : पृष्ठम् १०७-१०८।

२. द्रष्टव्यम्—रामभक्ति में रसिक संप्रदाय भूमिकापृष्ठम् ४।

साकेते 'कनकभवनं' निर्मितम्। साकेते सप्तावरणं वरीवर्ति। एतत् सर्वं[1] वशिष्ठसहितायां वर्णितमस्ति। सम्प्रदायेऽस्मिन् हनूमान् चारुशीलासखीरूपेण भक्तैः स्मर्यते। संस्कृतभाषायां चारुशीलास्तोत्रमपि वर्तते। भगवतः श्रीरामचन्द्रस्य चारुशीलाहेमाक्षेमावरारोहापद्मगंधासुभगाचन्द्रकलालक्ष्मणेतिनामिकाश्चाऽष्टौ सख्यः सन्ति, तथैव भगवत्याः सीतायाः श्रीप्रसादसखीचन्द्रकलाविमलामदनकलाविश्वमोहिनीऊर्मिलाचंपककलारूपलतानामधारिण्योऽष्टावेव सख्यः। एतासां सखीनां समूहे चारुशीलायाः महान् समादरः। अस्याः आज्ञां सर्वा अपि सख्यः सादरं स्वीकुर्वन्ति। अस्य सम्प्रदायस्याऽनुयायिनो विशिष्टाऽद्वैतवादिनः द्वैतवादिनोऽपि सन्ति। केषाञ्चिद् विदुषां मते श्रीरामानन्दाचार्यप्रवर्तितस्य रामावतसम्प्रदायस्याऽन्तर्गतोऽयं सम्प्रदायः।

रसिकसम्प्रदायस्याऽयमत्यन्तसंक्षिप्तसंस्तवोऽस्माभिः प्रदत्तः। परिचयप्रदाने काचित्त्रुटिरभूच्चेत् तत्कृते 'करकृतमपराधं क्षन्तुमर्हन्ति सन्तः' इत्यनुस्मृत्य साम्प्रदायिकाः साधवः साधका विद्वांसश्च क्षमिष्यन्ते। अस्य सम्प्रदायस्य विस्तृतपरिचयावाप्तये डॉ० [2]भगवतीप्रसादसिंहस्य 'रामभक्ति में रसिक संप्रदाय' तथा श्रीभुवनेश्वरनाथमिश्रमाधवस्य [3]'रामभक्ति-साहित्य में मधुर उपासना' नामनी पुस्तकेऽवलोकनीये।

अनेन सम्प्रदायेन काशिकेयपरम्परायामधीतिनः पण्डिता अपि प्रभाविताः सन्तः सम्प्रदायेऽस्मिन् दीक्षिताः सञ्जाताः। तेषु पण्डितेषु[4] शास्त्रार्थमहारथिपण्डितउमापतित्रिपाठिमहाभागानान्नाम उल्लेखनीयम्। रसिकसम्प्रदायेऽस्मिन् त्रिपाठिमहोदयः प्रसिद्धेः परां कोटिमापन्नः साधुसमाजेषु श्रद्धाऽऽस्पदमहामान्यो विद्वान् आसीत्।

अस्य विद्वत्तल्लजस्य जन्मभूमिः देवरिया मण्डलाऽन्तर्गतपिण्डीनामा ग्रामो वर्तते। एतदीया जन्मतिथिः १८५१ तमवैक्रमसंवत्सरस्य आश्विनकृष्ण-नवमी विद्यते। तदनुसारेण १७९४ तमेसवीयवर्षं भवति। एतेषां शिक्षा वाराणस्यामेव बभूव। अनेन विद्वद्वर्य्येण द्वाचत्वारिंशद्ग्रन्थानां रचना संविहिता। कोविद इत्युपनाम्ना हिन्दीभाषायामपि कविता कृता। एतत्प्रणीता ग्रन्थाः प्रायोऽप्रकाशिता एव वर्तन्ते। तेषु 'सख्यसरोजभास्कर' नामको ग्रन्थः रसिकसम्प्रदायेषु आदराऽऽस्पदम्। पण्डितोऽयं नेपालदेशमपि ययौ। तदानीं तत्र राणासुरेन्द्रविक्रमशाहमहोदयानां शासनमासीत्। शास्त्रार्थेषु तत्रस्थान्

---

१. खण्डितरूपेण संहितेयं मदन्तिके वर्तते।

२. प्रकाशकः—अवधसाहित्यमन्दिर, बलरामपुर, गोंडा (उत्तरप्रदेशः)।

३. प्रकाशकः—विहारराष्ट्रभाषापरिषद्, पटना।

४. द्रष्टव्यम्—रामभक्ति में रसिक संप्रदाय पृष्ठम् ४५५।

डॉ० भगवतीप्रसादसिंहः

राजपण्डितान् पराजित्य दक्षिणायामेकलक्षमुद्रा नृपतेरवाप्य ताः तत्रत्यपण्डितेभ्यो वितीर्य भारतवर्षं समाययौ। त्रिपाठिमहोदयः पुनरत्राऽऽगत्य समग्रस्य भारतस्य यात्रां चकार। पण्डितवरेण्योऽयं भारतस्य विभिन्नप्रदेशेषु स्थितानां राज्ञां सभायां समुपस्थाय तद्राज्यराजपण्डितमण्डलीभिः सह शास्त्रार्थं संविधाय शास्त्रार्थे विजयी भूत्वा विभिन्न-नृपतिततिभ्यः सम्मानमवाप्य प्रस्तुतरामायणस्य टीकाकारमहाराजश्रीविश्वनाथसिंहस्य वैदुष्यं संश्रुत्य रींवामपि जगाम। एतदीयराजसभायां सर्वेषां विद्वद्वर्य्याणां समक्षे आशीर्वादात्मकं हिन्दीभाषायाः बरवैनामके वृत्ते निर्मितमधस्तनं पद्यं पण्डितवरेण्योऽयं पपाठ—

यस्य हृदोऽवनिजाता जातु न यातु।
विश्वनाथविश्वाद्यस्स त्वां पातु॥

हिन्दीभाषायाश्छन्दस्याशीर्वादात्मकं संस्कृतपद्यं निशम्य महाराजसहिताः सकला बुधवराश्चमत्कृताः। पुनर्भगवतस्य प्रथमपद्यस्याऽनेकप्रकारमर्थजातमस्माच्छ्रुत्वा सर्वे मुमुदिरे मेनिरे चेमं प्रकाण्डपण्डिततल्लजम्। तेन गुणग्राहिणा राज्ञा महत्सम्मानमस्य विहितम्। इत्थं बहुराजराजिभ्यो विजयजनितसम्मानं समवाप्य भगवतः श्रीरामचन्द्रस्य जन्मभूमिमयोध्यामाजगाम। साकेतनिवासकाले स्ववैदुष्येण अवधप्रदेशवासिहिन्दुय-वननृपतीन् भूमिपतींश्च प्रभाव्यायोध्यायां तेभ्यः भूमिं भवनञ्चावाप्य सखीभावेन रामचन्द्रस्योपासनाकरणार्थैकं सुन्दरं मन्दिरं निर्माय तत्रैवाऽयं यावज्जीवनं न्युवास। साम्प्रतमप्येतन्मन्दिरमेतदीयकुलजानामधिकारे वरीवर्ति।

भगवतः श्रीरामचन्द्रस्य रसिकोपासनासम्प्रदायस्यैतिहासकाऽध्ययनेनानुशीलनेन च बहूनां विदुषां मतमिदं वर्तते यत् सम्प्रदायोऽयं [1]कृष्णोपासनापरम्परया पूर्णरूपेण प्रभावितः। विषयेऽस्मिन् विद्वद्वर डा० गोपीनाथकविराजमहोदयैरियमेव भावनो-द्भाविता। अस्य सम्प्रदायस्य मान्यतमग्रन्था अपि सन्तीति प्रणिगदन्ति ते—सीतापति-श्रीरामचन्द्रस्य सभायां देवकीनन्दनश्रीकृष्णप्रभृतयः सदोपतिष्ठन्ते। प्रमाणत्वेन शिव-संहितोक्तं श्रीरामचन्द्रस्य वर्णनं पाठकानां पुरतः प्रस्तूयते—

---

१. द्रष्टव्यम्—वैष्णवसाधना के ऐतिहासिक क्रम परिणति के अनुशीलन से ज्ञात होता है कि इस रस साधना की धारा विशेष रूप से श्रीकृष्णोपासना के भीतर से ही प्रवाहित हुई है।

रामभक्ति में रसिकसम्प्रदाय भूमिकापृष्ठम् ४।

डॉ० भगवतीप्रसाद सिंह।

[1]आसीनं तमयोध्यायां सहस्रस्तम्भमण्डिते।
मण्डपे रत्नसंज्ञे च जानक्या सह राघवम्॥
मत्स्यः कूर्मः किरिर्नैको नारसिंहोऽप्यनेकधा।
वैकुण्ठोऽपि हयग्रीवो हरिः केशववामनौ॥
यज्ञो नारायणो धर्मपुत्रो नरवरोऽपि च।
देवकीनन्दनः कृष्णो वासुदेवो बलोऽपि च॥
वृष्णिगर्भो मधून्माथी गोविन्दो माधवोऽपि च।
वासुदेवोऽपरोऽनन्तः संकर्षण इरापतिः॥
प्रद्युम्नोऽप्यनिरुद्धश्च व्यूहाः सर्वेऽपि सर्वदा।
रामं सदोपतिष्ठन्ते रामाऽऽदेशे व्यवस्थिताः॥
एतैरन्यैश्च संसेव्यो रामो नाम महेश्वरः।
तेषामैश्वर्यदातृत्वात् तन्मूलत्वान्निरीश्वरः॥
इन्द्रनामा स इन्द्राणां पतिः साक्षी गतिः प्रभुः।
विष्णुः स्वयं स विष्णूनां पतिर्वेदान्तकृद्विभुः॥
ब्रह्मा स ब्रह्मणां कर्त्ता प्रजापतिपतिर्गतिः।
रुद्राणां स पती रुद्रो रुद्रकोटिनियामकः॥
चन्द्रादित्यसहस्राणि रुद्रकोटिशतानि च।
अवतारसहस्राणि शक्तिकोटिशतानि च॥
ब्रह्मकोटिसहस्राणि दुर्गाकोटिशतानि च।
महाभैरवकालादिकोट्यर्बुदशतानि च॥
गन्धर्वाणां सहस्राणि देवकोटिशतानि च।
सभां यस्य निषेवन्ते स श्रीराम इतीरितः॥

परन्तु बहवो विद्वांसोऽत्र प्रत्यवतिष्ठन्ते। वस्तुतोऽयं रसिक सम्प्रदायः आस्थासाधनाभ्यामभिभूतोऽस्ति। एताभ्यां विना कोऽपि मानवः केष्वपि कार्येषु सिद्धिं साफल्यञ्च-नैव प्राप्नोति। उक्तञ्च—'यादृशी भावना यस्य सिद्धिर्भवति तादृशी'। आस्तां तावद् गूढतमोऽयं विषयः।

## भूयोऽपि रचनाकालप्रसङ्गः

सिंहाऽवलोकनन्यायेनाऽस्य रामायणस्य रचनाकालविषये भूयःकिमप्यभिदध्महे। [2]केचन

---

१. द्रष्टव्यम्—सङ्गीतरघुनन्दनटीकापृष्ठम् २०।

२. द्रष्टव्यम्—रामकथा, पृष्ठम् १२२, १२३, १२४।

डॉ० फादरकामिलबुल्के

भारतीयाः विदेशीयाश्च विद्वांसो वाल्मीकिरामायणोत्तरकाण्डस्य महर्षिवाल्मीकि-कर्तृत्वविषये परस्परं विवदन्ते। भारतीयपरम्परानुसारेण धार्मिकग्रन्थानां फलश्रु-प्रणयनाऽनन्तरं ग्रन्थस्य समाप्तिस्सञ्जायते। वाल्मीकिरामायणस्य [1]युद्धकाण्डसमाप्तौ फलश्रुतिर्वरीवर्ति। अनया वाल्मीकिरामायणस्य समाप्तिः स्पष्टतया प्रतीयते। पुनः उत्तरकाण्डस्य प्रणयनं कथम्? अतोऽस्य काण्डस्य प्रणेता अन्यः कश्चन रामभक्तेर्विद्वान् न तु महर्षिवाल्मीकिः इति प्रजल्पन्ति नीरक्षीरविवेकचणाः समीक्षकगणाः। स्वमतपुष्टये-इमे कथयन्ति यद् गुप्तकालिकानि यानि [2]चित्रफलकानि शिलापट्टानि च नचनाकुठारा-मध्यप्रदेशस्थदेवगढ़कर्नाटकप्रदेशस्थपातकलाप्रभृतिस्थानेषु प्राप्तानि तानि सर्वाणि षष्ठसप्तमशताब्दीयानि सन्ति। एतेषु शिलापट्टेषु चित्रफलकेषु च श्रीरामचन्द्रस्य पवित्रं चरित्रं चित्रितमस्ति। अत्राङ्कितानि चित्राणि अयोध्याकाण्डस्य रामराज्याभिषेक-पर्यन्तमात्राण्येव। एतेन प्रतीयते यत् षष्ठसप्तमशताब्द्यां जनसमाजेन विद्वद्वर्गेण च उत्तरकाण्डस्य प्रामाणिकता नाभ्युपगताऽऽसीत्। अतो वाल्मीकिरामायणस्योत्तरकाण्डे वर्णिताया घटनाया एतेषु चित्रफलकेषु शिलापट्टेषु च चित्रणन्न दृश्यते।

इयमेव स्थितिः प्रस्तुतस्य अध्यात्मरामायणस्याऽपि विद्यते। रामायणेऽस्मिन् युद्धकाण्डस्य षोडशाध्यायाऽन्ते पञ्चत्रिंशश्लोकादारभ्याऽष्टचत्वारिंशश्लोकपर्यन्तभागे रामायणस्य समाप्तिसूचिका फलश्रुतिर्वर्णिताऽस्ति। तेन ज्ञायते यदध्यात्मरामायणोत्तर-काण्डस्य प्रणेता कश्चिदन्यो धीधनोऽस्ति तथाऽस्य रामायणस्य रचनाकालोऽपि प्रत्नतम एव। यतोऽध्यात्मरामायणप्रणेतुः समक्षे वाल्मीकिरामायणं युद्धकाण्डपर्यन्तमेवाऽऽसीत्। अथवा उत्तरकाण्डसहितस्य वाल्मीकिरामायणस्य सद्भावेऽपि तस्य प्रामाणिकता सन्दिग्धाऽऽसीत्। वाल्मीकिरामायणस्योत्तरकाण्डस्येयं स्थितिः पञ्चमशतके षष्ठशतके वाऽविद्यत। एवञ्च स एव समयोऽध्यात्मरामायणस्य सम्भाव्यते। पुनरपरः प्रश्नः समुत्तिष्ठते यत् सम्पूर्णाऽध्यात्मरामायणस्य लेखकः एक एव जनः अथवा उत्तरकाण्ड-स्याऽन्यः? प्रश्नोऽयं ताटस्थ्येन मीमांसामपेक्षते। यद्यपि विषयेऽस्मिन् श्रीउमाकान्त-प्रेमानन्दशाहमहोदयेन वाल्मीकिरामायणस्य समालोचनात्मकसंस्करणस्योत्तरकाण्ड-भूमिकायां सूक्ष्मेक्षिकया चिन्तनं कृतम्, तथाप्यस्याऽध्यात्मरामायणस्य रचनाकाल-विषयकं नूतनं प्रश्नं भाषाशास्त्रदृष्ट्या समाधातुं विद्वद्वरेण्या विनिवेद्यन्तेऽस्माभिः।

---

१. द्रष्टव्यम्—वाल्मीकिरामायणस्य युद्धकाण्डम्, पृष्ठम् १४५१-१४५२।

२. द्रष्टव्यम्—उत्तरकाण्डस्य भूमिकापृष्ठम् ५०-५१।

संपादकः—उमाकान्तप्रेमानन्दशाहः प्रकाशकः-ओरियन्टल इन्स्टी-ट्यूट, बड़ौदा।

व्यङ्ग्यप्रकाशिकाटीकाकारमहाराजश्रीविश्वनाथसिंहस्य पूर्वजा राजानो रामानुजाचार्यप्रवर्तितस्य श्रीसम्प्रदायस्याऽनुयायिनः आसन्। चिरकालात् रीवानगरस्थित-लक्ष्मणबागपीठस्य रामानुजाचार्यमतावलम्बिजनसमुदाये आदराऽऽस्पदं स्थानं वरीवर्ति। एतदीयः पीठाऽधिपतिः साम्प्रतमप्यस्य रीवाराजपरिवारस्य राजगुरुपदेन व्याह्रियते। श्रीसम्प्रदाये लक्ष्म्या सार्धं विष्णोरुपासना भवति। किन्तु महाराजविश्वनाथसिंहस्तारुण्य एवान्तरिकप्रेरणया भगवतो रामचन्द्रस्य रसिकसम्प्रदाये दीक्षामधिगतः। राममन्त्रस्य दीक्षां[1] स्वगुरुप्रियादासादवाप्य [2]महाराजकुमारावस्थायामेव विश्वनाथसिंहो यत्र तत्र अनवद्येन गद्येन परिलसितं श्रृंगाररसरञ्जितं सीतारामचन्द्रस्य रासलीलावर्णनाऽञ्चितं षोडशसर्गविभक्तं गीतगोविन्दमिव सरसं सहृदयहृदयानन्दनं सङ्गीतरघुनन्दनन्नाम भव्यं काव्यं रचयामास। स्वयमेव व्यङ्ग्यार्थचन्द्रिकानामिका टीकाऽप्यस्य काव्यस्य रचिता श्रीविश्वनाथसिंहेन।

अस्य काव्यस्य प्रारम्भिकेषु मङ्गलाचरणात्मकेषु 'रासेश्वरीं हृदि भजे निमिराज-पुत्रीम्' 'श्रीरामं रासरसिकं जगत्प्राणसुतं नुमः'—इति पद्येषु च भगवतीं सीतां रासेश्वरीं रामचन्द्रञ्च रासरसिकमभिधायासौ रसिकसम्प्रदायं प्रति स्वकीयामास्थां प्रकटयामास। अस्य काव्यस्यैकादशसर्गे जानकीरघुनन्दनयोर्नृत्यस्याऽपि वर्णनं विहितवानयं यथा—

नृत्यति रसिकशिरोमणिरामः।<br>
यस्य चरणचरणं विलोक्य परिमुञ्चति मानं कामः॥<br>
कुञ्चद्भृकुटिभावसंसूचनचेतश्चोरणचतुरः।<br>
सखीसमर्पितवीटीचर्वितदरचलकुञ्चितचिकुरः॥<br>
सङ्गीतकतरलिम्ना गर्विततडिद्गर्वपरिहारी।<br>
तरुणीरश्मिसितस्मितदर्शनवनिता विस्मृतकारी॥<br>
ससखीसीतासङ्गीतेक्षणसुखितशिरःसञ्चाली।<br>
विश्वनाथनिनदेन निन्द्यते समदमदननिनदाली॥

—सङ्गीतरघुनन्दनम् पृष्ठम् ९९।

---

१. द्रष्टव्यम्—गुरुप्रियादास जी से राममंत्र बीज पाय,<br>
सतगुरू भाव जल सीचि कै बढ़ाये हैं।<br>
कीरति सुधाई रसिकन सुखदाई बिन,<br>
देखें को प्रतीति कोई कोई जन पाये हैं।

रसिकप्रकाश भक्तमाल, पृष्ठम् १२५।

रामभक्ति में रसिकसम्प्रदाय पुस्तकादुद्धृतः पृष्ठम् ४३२।

२. अवलोक्यताम्—सङ्गीतरघुनन्दनपुष्पिका—इति श्रीमन्महाराजकुमारश्रीविश्व-नाथसिंहदेवकृते सङ्गीतरघुनन्दने भवनरासवर्णनं नाम द्वितीयसर्गः।

उपरितनकाव्यस्य चर्चाकरणस्यायमभिप्रायो यन्महाराजाधिराजपदप्राप्तिपूर्वमेव श्रीविश्वनाथसिंहो रामभक्तेरवान्तरभेदभूतेऽस्मिन् रसिकसम्प्रदाये पूर्णरूपेण दीक्षितो बभूव। अतोऽस्य सम्प्रदायस्याऽनेन युवावस्थायामेव मार्मिकतत्त्वं सम्यक्तया परिज्ञाय साम्प्रदायिकग्रन्थानां गहनतमाऽध्ययनं विधाय च विदुषां मते शङ्कराचार्याद्वैतवादप्रभावितस्याऽध्यात्मरामायणस्य रसिकसम्प्रदायानुसारिणी व्यङ्ग्यप्रकाशिका टीका विहिता।

श्रीविश्वनाथसिंहेन, रसिकसम्प्रदायस्य मर्यादापुरुषोत्तमरामचन्द्रं जगज्जननीं सीताञ्च प्रति कीदृशी मान्यता वर्तते—इति सर्वं सङ्गीतरघुनन्दनकाव्ये चित्रितम्। अधिकं किं ब्रूमः काव्येऽस्मिन् भगवान् रामचन्द्रः पाठकानां पुरतः श्रृंगाररसस्य मूर्तिमान् विग्रह इव प्रस्तुतीकृतो लेखकेन। रामतापनीयोपनिषदि रामशब्दस्य निर्वचनमित्थं प्राप्यते—

रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि।
इति रामपदेनाऽसौ परब्रह्माभिधीयते॥

—षष्ठो मन्त्रः, पृष्ठम् १४।

एतद्विपरीतमस्य रामायणस्य टीकायां रमणात् मुक्तानां रासमण्डलगतानां रमणात् रामः इति। सङ्गीतरघुनन्दस्य [1]टीकायां तु रामशब्दस्य व्युत्पत्तिरित्थं कृताऽस्ति- रमन्ते सख्योऽस्मिन्निति रामः। एवमेव अध्यात्मरामायणस्य टीकायां सीताराम इति पदस्य सीतया सह रासे रमते असौ सीतारामः इति निरुक्तिः प्राप्यते। एतेन पाठकाः अनुमिन्वन्तु-महाराजविश्वनाथसिंहस्य अध्यात्मरामायणटीकाकरणस्य मुख्यमुद्देश्यं किमस्तीति। अनया टीकया रसिकसम्प्रदायस्य दार्शनिकसिद्धान्तो व्याख्यातः। अस्याऽनुभूतिः टीकापठनेन पाठकानां हृदि स्वयमेव भविष्यति। रसिकसम्प्रदायमते रामचन्द्रोऽयोध्यां विहाय न क्वाऽपि गच्छति 'अयोध्यान्तु परित्यज्य स क्वचिन्नैव गच्छति' इत्युक्तेः। एतादृशी उक्तिः वशिष्ठसंहितायामपि दृश्यते—

क्षणं हित्वा न तद्धाम क्वचिद् याति स्वयं प्रभुः।
० ० ०
रामस्याऽतिप्रियं धाम नास्त्यनेन समं क्वचित्।
अतोऽयोध्यां रसज्ञा ये सर्वदा पर्युपासते।
० ० ०
सदैकरसरूपा याऽयोध्या भूमौ प्रकाशते।

भगवतो रामचन्द्रस्य सदाऽयोध्यानिवाससम्बन्धे विश्वनाथसिंहेन अयोध्याकाण्डस्यैकस्य श्लोकस्य टीकायामित्थमभाणि—

---

१. द्रष्टव्यम्—सङ्गीतरघुनन्दनम् पृष्ठम् २२।

"[1]व्यापकस्य नारायणस्य वनगमनेऽपि आवेशिनः श्रीरामस्य कुत्राऽपि गमनाभावात् नारायणस्याऽपि व्यापकत्वेनात्रावस्थानसद्भावाच्च वियोगो नाऽस्तीति ज्ञात्वेत्यर्थः। संशयग्रन्थिं रामो वनं गच्छति उत्तमां निरीक्ष्य कैकेयी तमत्रैव स्थापयेदित्येतद्रूपं जहुः। रामं नित्यसाकेतरासविहारिणम्-अन्वचिन्तयन्नेवेति भावः। 'रासमण्डलगं रामं गीत-नर्तनतत्परम्। यो वै विकल्पयेद्विष्णुं जीवन्मुक्तः स उच्यते। इति स्कान्दे कोशलखण्डे।'

एवमेव बालकाण्डस्य चरमाध्याये साकेते[2]–इत्यादिश्लोकस्य टीकायामपि टीकाकर्त्रा स्पष्टरूपेण–'साकेते अयोध्यायां सदा भाति तां विहाय क्वापि न गच्छतीत्यर्थः। एतेन अयोध्याधिकरणकरासविहारस्याऽतिप्रियत्वं ध्वनितम्' इति निगदितम्। इत्थमस्मिन् रामायणे वाल्मीकिरामायणाद् भिन्ना सीता मायास्वरूपाऽप्यस्ति। मायासीतायाः कल्पना ऽध्यात्मरामायणकारेण अरण्यकाण्डस्य सप्तमाध्यायप्रारम्भे कृता। तद् यथा—

अथ रामोऽपि तत्सर्वं ज्ञात्वा रावणचेष्टितम्।
उवाच सीतामेकान्ते शृणु जानकि! मे वचः॥
रावणो भिक्षुरूपेण आगमिष्यति तेऽन्तिकम्।
त्वं तु छायां त्वदाकारां स्थापयित्वोटजे विश।
अग्नावदृश्यरूपेण वर्षं तिष्ठ ममाज्ञया।
रावणस्य वधान्ते मां पूर्ववत्प्राप्स्यसे शुभे!॥
श्रुत्वा रामोदितं वाक्यं सापि तत्र तथाऽकरोत्।
मायां सीतां बहिः स्थाप्य स्वयमन्तर्दधेऽनले॥

एतेषूद्धृतेषु श्लोकेषु रामायणरचनाकारेण सीताद्वयस्य कल्पना कृता। एतद्विपरीतं श्रीविश्वनाथसिंहेन एतेषां श्लोकानां व्याख्याप्रसंगे सीतात्रयं कल्पितम्। तद्–यथा–[3]सीतायाः त्रीणि रूपाणि—'नित्यसाकेतवासिनः प्रेमा, अयोध्यातः वनं प्रति गन्तुः आदिनारायणस्य लक्ष्मीर्लङ्कागमनकारिणी मूलप्रकृतिः। सैव वेदवतीपर्यायाच्छाया। त्वं स्वच्छायां वेदवतीं त्वल्लीनत्वेन त्वदाकारां मूलप्रकृतिमपि उटजे पर्णशालायां संस्थाप्य अग्नौ विशेत्यर्थः।'

एवमेव टीकाकारश्रीविश्वनाथसिंहेन साम्प्रदायिकशिवसंहिताऽनुसारेण टीकाया-मेकस्मिन् स्थले[4] 'इति शिवसंहितायां रावणद्वयस्योक्तेः' इत्युल्लिख्य भगवती सीतेव रावणद्वयं स्वीकृतम्।

इत्थमस्यां टीकायामेतादृशानि बहूनि स्थलानि वर्तन्ते, यत्र रामायणपात्राणां विषये

---

१. द्रष्टव्यम्—प्रस्तुरामायणस्य पृष्ठम् १२८।
२. द्रष्टव्यम्—प्रस्तुतरामायणस्य पृष्ठम् ८२।
३. द्रष्टव्यम्—प्रस्तुतरामायणस्य पृष्ठम् २२२।
४. द्रष्टव्यम्—प्रस्तुतरामायणस्य पृष्ठम् ४५१।

आश्चर्यकारीणि लोकेषु प्रायः अप्रचलितानि तथ्यानि प्राप्यन्ते। तत्र तत्र टीकाकारेणाऽनेकेषां ग्रन्थानां वचनान्युद्धृतानि। ते च ग्रन्था महता प्रयासेनाऽपि नावेदिषत। तेषु कियन्तः प्रकाशिताः कियन्तोऽप्रकाशिताश्चापि सन्ति। ये ग्रन्थाः प्रकाशिताः सन्तोऽपि साम्प्रदायिकानां महात्मनां पार्श्वेऽवतिष्ठन्ते ते तानसाम्प्रदायिकानाञ्जनानां पुरतो नोपस्थापयन्ति संवृण्वन्ति च। अस्मात्कारणाद् यत्र-तत्र टीकायामागतेषु उद्धरणेषु प्रतिलिपिकाराणां प्रमादादशुद्धयः प्राप्यन्ते।

टीकेयं क्वचित्-क्वचिद् विशुद्धवैष्णवसिद्धान्तानुसारिणी वर्तते। [1]उत्तरकाण्डस्य पञ्चमाध्याये ४६ संख्यकश्लोकटीकायां टीकाकारेण भगवतः पूजापद्धतिर्वैष्णवसिद्धान्ताऽनुसारेण सविस्तरं लिखिता।

टीकेयं शृङ्गवेरपुराधीशश्रीरामसिंहवर्मप्रणीतसेतुनामटीकातः प्रभाविता[2]। सा टीका प्रकाशिताऽस्ति। तदानीन्तनेष्विदानीन्तनेष्वपि विद्वद्वर्गेषु 'शृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः'––इति मनोरमाशब्दरत्नप्रारम्भे लिखितवता श्रीरामसिंहराजपण्डितेन नागेशभट्टेन रचितेयं टीकेति किंवदन्ती वरीवर्ति। प्रस्तुतटीकाकारेण यत्र-तत्र 'भट्टाः' इति शब्देन सा टीका चर्चिता।

टीकाविषये किं कथयामः। संस्कृतभाषायाः शब्दसम्पदाऽनन्तपाराऽस्ति। एतदीयं व्याकरणं प्रत्नतमं विस्तृतं वैज्ञानिकञ्च वर्तते। शब्दनिर्वाचकानां धातूनां संख्याऽपि महीयसी। एभिः कारणकलापैः कस्याऽपि शब्दस्य श्लोकस्य च [3]व्युत्पत्तिबलाद् भिन्नार्थकरणे परमसौविध्यं भवति। एतत्कृते उणादिसूत्रन्तु कल्पतरुकल्पमेव। अस्यैव परिणामोऽस्ति यद्देववाण्यामनेकार्थककाव्यानामवाप्तिर्भवति। एतादृशेषु काव्येषु [4]हरिदत्तसूरिराघवनैषधीय[5] [6]वेंकटाध्वरिकवियादवराघवीयदैवज्ञसूर्यरामकृष्णविलोम [7]चिदम्बरकविराघवपाण्डवयादवीयादीनि प्राप्यन्ते। चिदम्बरकविना तु [8]पञ्चकल्याणनामकं पञ्चार्थकं चम्पूकाव्यं प्रणीतम्। अस्मिन् चम्पूकाव्ये रामकृष्णशिवविष्णुसेनापतिस्वामिकार्तिकेयानां वैवाहिकं कथानकं वर्णितमस्ति। वैवाहिकी कथा एकसार्धमेव चलति।

---

१. द्रष्टव्यम्––प्रस्तुतरामायणस्य पृष्ठम् ५६०।

२. द्रष्टव्यम्––प्रस्तुतरामायणस्य पृष्ठम् २६७-४२५।

३. एतत्कृते प्रस्तुतरामायणस्य परिशिष्टे विचित्रा व्युत्पत्तयः पठितव्याः।

४. बम्बईनगरात् काव्यमालायां प्रकाशितम्।

५. काव्यमालायां प्रकाशितम्।

६. वाराणसीतः प्रकाशितम्।

७. अप्रकाशितम्।

८. अप्रकाशितम्।

पण्डितशिरोमणिपरिव्राजकाचार्यमधुसूदनसरस्वती महिम्नःस्तोत्रस्य[1] विष्णुपरकां टीकामरीरचत्। पण्डितकृष्णदत्तमैथिलमहाभागेन गीतगोविन्दस्य [2]शैवपरकव्याख्या विहिता। अप्पयदीक्षितेन वाल्मीकिरामायणस्य [3]शैवपरकोऽर्थो विहितः। शङ्कराचार्यस्य [4]आनन्दलहरीस्तोत्रस्य विष्णुपरकव्याख्या मुद्रिताऽस्ति। अस्यां दशायां यदि महाराज-विश्वनाथसिंहेनाप्यस्य रामायणस्य व्याकरणमहिम्ना रसिकसम्प्रदायानुसारिणी टीका लिखिता तर्हि किमाश्चर्यम् ?

## उपसंहारः

सति महनीये वाल्मीकिरामायणेऽस्य रामायणस्य रचनायाः का आवश्यकताऽऽसी-दित्यस्य तर्कसंवलितं कारणं प्रदत्तम्। पुना रामायणमिदं वेदव्यासप्रणीतबृहद्ब्रह्माण्डपुराणा-न्तर्गतं वर्तते इति ये विद्वद्धौरेया मन्यन्ते तेषामपि मतं सयुक्ति खण्डितम्। वस्तुतो नेदं रामायणं प्रकाशितब्रह्माण्डपुराणे वरीवर्त्ति—इति सप्रमाणं प्रतिपादितम्। केचन विद्वांसोऽस्य रामायणस्य रचयितारं रामानन्दाचार्यमामनन्तीति मतमपि प्रखण्ड्याऽस्याऽध्यात्म-रामायणस्य लेखकः कश्चिद् दाक्षिणात्यो विद्वान्—इति विचारप्रचारः प्रथमवारं प्रतिष्ठापितः। उपोद्घातेऽस्मिन्नस्य रामायणस्याऽपि गौडीयो दाक्षिणात्यः पश्चिमोत्तरी-यश्चेति पाठत्रयमस्ति—इत्यद्यावध्यचर्चितसिद्धान्तः स्थिरीकृतोऽस्माभिः। अस्य रामायणस्य रचनाकालविषये कतिपयविद्वद्वर्गैः मान्यमीसवीयपञ्चदशशताब्दीसमयमस्वीकृत्य सप्रमाणं तर्कपुरस्सरं तमिलकम्बरामायणाऽऽधारेण एकादशशताब्दीरचनाकालः स्थापितः। रामायणे विद्यमानेष्वार्षप्रयोगेषु कतिपयानामुल्लेखमुखेनाऽस्य प्राचीनतमत्वे हेतुः प्रदर्शितः। एतस्मिन् प्रसङ्गे पण्डितजगति अस्य रामायणस्य मान्यताप्रमाणीकरणाय बहूनां टीका-काराणां नामोल्लेखं विधाय संस्कृतजगत्यपरिचितस्य हिन्दीसाहित्ये प्रथितयशसः श्रीविश्व-नाथसिंहजूदेवस्य संक्षिप्तः संस्तवः प्रदत्तः। ततो भगवतो रामचन्द्रस्य रसिकसम्प्रदाया-ऽनुसारं प्रणीताऽप्रकाशितध्वनिप्रकाशिकाटीकायाः सम्बन्धे सम्पादनसिद्धान्तं प्रतिपाद्य रसिकसम्प्रदायस्य समासेन परिचयं प्रदाय च 'भूयोऽपि रचनाकालः' इति शीर्षकेऽस्य रामायणस्य युद्धकाण्डान्ते फलश्रुतिलेखनाऽनन्तरं ग्रन्थसमाप्तिसूचनायां जातायां पुनः

---

१. वाराणसीतः प्रकाशितम्।

२. अप्रकाशितरूपेण मदन्तिकेऽस्ति।

३. द्रष्टव्या—गीताप्रेसगोरखपुरतः प्रकाशितवाल्मीकिरामायणस्य भूमिका

४. मध्यप्रदेशस्थितदतियास्थानात् प्रकाशितम्।

उत्तरकाण्डस्य लेखनं कथमित्याशङ्कां सम्भाव्य अस्य काण्डस्य रचयिता—अध्यात्म-रामायणस्य लेखक एवाऽन्यो वा कश्चिद् विद्वतल्लज इति नूतनतमः प्रश्नः समीक्षकाणां पुरतः प्रस्तुतीकृतः।

प्रस्तुतटीकायाः सम्पादनकार्यं मया प्राक् कियद्वर्षेभ्यः वसन्तपञ्चम्यां पूर्वोक्तैक-मात्रस्वप्रत्याधारेण प्रारब्धम्। ततः काले काले महती बाधा समुपस्थिता। सा कदाचित् गार्हिकी कदाचित् सामाजिकी कदाचित् स्वास्थ्यिकी च। सम्पादनप्रसङ्गे तदा महत् काठिन्यं समुपस्थितम् यदा प्रतिलिपिकाराणामसावधानतया अज्ञानतया च भ्रष्टाक्षरविलुप्ताक्षर-सहितानां रसिकसम्प्रदायसिद्धान्तविचारग्रन्थिग्रथितानाञ्च वाक्यानां पठनमर्थावगाहनञ्च कर्तव्यतामापतितम्। अस्यां दशायां मया निश्चितं यदेका मुद्रणयोग्या प्रतिर्लेखनीया। तदनन्तरं रामवनप्रत्या समानान्तरेण प्रपठ्य पाठभेदं विलिख्यैका शुद्धा मुद्रणयोग्या प्रतिः प्रस्तुता। तस्याश्च टंकणं कारयित्वा वर्षैकं यावत् मुद्रणार्थं विभिन्नमुद्रणालयेषु प्रयतितवान्। परं गुरुतरकार्यभिया न कोऽपि तत् स्वीकृतवान्। अन्ततः सम्मेलनमुद्रणालयो ऽस्य मुद्रणाय यथा कथञ्चिन्नियोजितः, किन्तु तत्रापि महामन्थरगत्या-अस्य मुद्रणं सम्पूर्णतामगात्। मुद्रणानन्तरं प्राप्तेऽवकाशे उपोद्घातलेखनकार्यं प्रारब्धम्। किन्तु 'श्रेयांसि बहुविघ्नानि' इत्याभाणकं चरितार्थयन्नहमुपोद्घातलेखनमध्य एव सहसोच्चरक्त-चापेन पीडितस्सञ्जातः। तदनन्तरं चिकित्सकैः परीक्ष्य साधारणकोटिको हृद्रोगो निर्णीतः कियत्कालं पूर्णविश्रामायोपदिष्टश्च। तेन लेखनकार्ये विरामोऽभूत्। पुनर्यदा परीक्षानन्तरं चिकित्सकैः स्वस्थतोद्घोषिता तदा तैर्लेखनकार्याय निवारितेनापि मया यथा कथञ्चिदुपोद्घातस्य शेषांशो यथामति पूरित एव। मत्कार्यं कीदृशं जातमिति तु सारासार-विवेकिभिर्विपश्चिदपश्चिमैरेव निर्णेष्यते। अहं तु मानवसुलभत्रुट्यर्थं तान् क्षमामेव याचे।

अस्य ग्रन्थस्य टीकासम्पादनकार्ये येषां महानुभावानां कृतिभ्यः सहायताधिगता तान् सर्वान् प्रति कृतज्ञतां ज्ञापयामि। कार्येऽस्मिन् वाराणसीस्थसम्पूर्णानन्दसंस्कृत-विश्वविद्यालयसाहित्यविभागाध्यक्षेण निदेशकेन च डॉ० कैलासपतित्रिपाठिमहाभागेन कृतं साहाय्यं सकार्तज्ञ्यं स्मरामि वितरामि च तस्मै नैकान् धन्यवादान्। पुनरत्र पण्डितप्रवरतारिणीशझामहोदयेन महती सहायता संविहिता। तत्कृते मदन्तिके कृतज्ञताज्ञापनाय कोऽपि शब्द एव नास्ति। तथापि केवलं धन्यवादं प्रदायौपचारिकीं परम्परां परिपालयामि। एवमेव व्याकरणाचार्यशेषधरद्विवेदिमहोदयेनाप्यस्य ग्रन्थस्य आदित आरभ्य समाप्तिपर्यन्तं टंकितस्य समस्तप्रतेः टकणजनितदोषदूरीकरणाय कठोर-श्रमपूर्वकं या सहायता विहिता साऽपि हृदाऽभ्युपगम्यते। व्याकरणाचार्यपण्डितसुन्दरलाल-द्विवेदिमहोदयेनाऽपि प्रतिलिपिकरणे सहायता संविहिता। तं प्रत्यप्याभारप्रदर्शनं विदधे।

सुरुचिपूर्णसुन्दरमुद्रणाय सम्मेलनमुद्रणालयकर्मचारिणो विशेषतश्च शिवनारायणझा तथा विजयनारायणमालवीयः धन्यवादार्हाः। अन्तयाङ्गलभाषाविदोऽस्मिन्नुपोद्घाते मयोद्भावितेभ्यः कतिपयनव्यतथ्येभ्योऽवगतान् कर्तुकामायोपोद्घातस्याङ्गलभाषानुवादकाय पाश्चात्त्यपौरस्त्यदर्शनशास्त्रकोविदाय पार्वतीमहाकाव्यलेखकाय सुहृद्वराय साहित्य-वाचस्पति—डॉ० रामानन्दतिवारीमहाभागाय नैकशो धन्यवादान् वितीर्य सप्रश्रयं कृताञ्जलिरहं जानकीजानिं शिरसाऽभिवाद्य रामायणस्याऽस्यैकं पद्यं संस्मृत्य च विरमामि—

> हत्वा युद्धे दशास्यं त्रिभुवनविषमं वामहस्तेन चापं,
> भूमौ विष्टभ्य तिष्ठन्नितरकरधृतं भ्रामयन्बाणमेकम्।
> आरक्तोपान्तनेत्रः शरदलितवपुः सूर्यकोटिप्रकाशो,
> वीरश्रीबन्धुराङ्गस्त्रिदशपतिनुतः पातु मां वीररामः॥

वसन्तपञ्चमी
७।२।८४

प्रभातशास्त्री



# PREFACE

The *Adhyatma Ramayana*, as its very name indicates, is a spiritualistic version of *Ramayana* which is known as the first epic of Sanskrit language and is composed by Valmiki, the first classical poet of Sanskrit. Valmiki's *Ramayana* embodies, in excellent poetry, the story of Rama who is treated as the incarnation of Vishnu (the protector God). Several versions of *Ramayana* were written in Sanskrit after Valmiki. Later, versions of *Ramayana* were also produced in the regional languages of India: the *Rama-charita-manasa* of Tulsidas, written in Hindi, is highly popular in North India; *Ramayana* of Krittivasa is famous in Bengali; Kamban's *Ramayana* in Tamil is popular in the South. The story of Rama has inspired poets of several languages in the country.

The *Adhyatma Ramayana* in Sanskrit is a spiritual adaptation of the story of Rama. The *Ramayana* of Valmiki is counted among the two great Epics of ancient Indian tradition. It is second only to the *Mahabharata* in volume but is second to none in cultural importance and poetic excellence. The *Adhyatma Ramayana* is comparatively smaller in volume, but it is rich in philosophical and spiritual significance. The Valmiki *Ramayana* is treated as History also, along with the *Mahabharata*. Rama is depicted in it as a Great Person, endowed with noblest qualities of a kingly hero, but he is not yet transformed into a Divine Being or an incarnation of God.

In the *Adhyatma Ramayana*, Rama is depicted as the Supreme God-head, much like Krishna of the *Bhagawadgita*. Rama in it is regarded as identical with the Supreme Being known in the Vedanta as Brahman. The identity of Rama with the Supreme

Brahman is disclosed by Mahadeva to Parvati in the very first chapter of the *Adhyatma Ramayana.* (Vedas 16, 31, 47.)

The Valmiki *Ramayana* has been the source of inspiration for a long time to the spiritual seekers, philosophers, poets, dramatists etc.. The story of Rama has been popular through the influence of *Ramayana* in countries outside India also, particularly in the countries of South-East Asia. Poets have written many works and dramas based on the theme of *Ramayana.*

The story of Rama was presented by the Jain and Buddhistic authors in a distorted form which reflected adversely on the glorious character of Rama, Sita etc.. Sita was depicted as the sister of Rama and their marriage was designed to bring ignominy to the heroes of *Ramayana.* Why the Jain and Buddhistic authors indulged in such a sacrilege is difficult to understand and needs to be investigated. However, the editor of this edition of *Adhyatama Ramayana* is of the opinion (which is expressed by him in the editorial preface) that the *Adhyatma Ramayana* was composed by some one to counteract these sacrilegious designs of Jain and Buddhistic authors and to restore the divine dignity of the story of *Ramayana* and its characters.

The author of the *Adhyatma Ramayana* has depicted Rama as the incarnation of the Supreme God.

**Author of the** *Adhyatma Ramayana*

Who was the author of the *Adhyatma Ramayana,* at what time he lived and to which region of the country did he belong ? These are the questions concerning the *Adhyatma Ramayana* which are difficult to answer. Scholars are divided in their opinion about these questions. In order to ensure the fame of the book like Valmiki *Ramayana,* its author declared it to be the creation of Veda Vyasa. Thus it came to be known as the work of Veda Vyasa. The Italian scholar, Dr. L. P. Tessitori, supports this view in his book

on the comparative study of *Ramacharita-manasa* and Valmiki *Ramayana*. Dr. Raghavan regards it as a part of *Brahmanda Puraua*. Rama Verma, the commentator of the *Adhyatma Ramayana*, regards Veda Vyasa as the author of the original work. The edition of *Adhyatma Ramayana* published by, the Gita Press, Gorakhpur, ends with the words, 'Here ends the *Adhyatma Ramayana* which constitutes the latter part of the *Brahmanda Purana*.' But there are no earlier and later parts in the *Brahmanda Purana* as it is published. The late Raghuvar Mitthu Lal Shastri of Allahabad University regards Ramanandacharya as the author of the *Adhyatma Ramayana* in an article published in the *Journal of the Ganga Nath Jha Research Institute*. His view is based on the story of Rama Sharma of Kashi found in the *Bhavishya Purana*, in which he mentions Ramanandacharya as the author of the *Adhyatma Ramayana*. The above story as described in *Bhavishya Purana* itself declares that the author of the *Adhyatma Ramayana* was different from Ramananda, the founder of Ramavat Sect.

But the age of the *Bhavishya Purana* is uncertain and it is found in four versions. Its evidence about the authorship of *Adhyatma Ramayana* also is unreliable. This Purana contains interpolations in which even the name of Queen Victoria is mentioned. The story referred to above regards Ramanandacharya as the native of Kashi, while the famous founder of Ramavat Sect is believed in the tradition to belong to Allahabad. The latter belonged to the Vishishtadvaita Sect. If he were the author of the *Adhyatma Ramayana* he would not begin the work with oblation to Dakshina-murti Shiva, as the *Adhyatma Ramayana* begins. Scholars regard it to have been influenced by the Advaita view of Shankaracharya.

The question arises, if Ramanandacharya was not the author of the *Adhyatma Ramayana*, who else was the author of this work and to what part of the country did he belong ?

Here the editor of the present edition of the *Adhyatma Ramayana*

is of the opinion that some South Indian poet was most probably the author of it. He advances several reasons in support of his view. The first reason is that in the sixteenth century Malayalam poet Eshu-tuchchan transcribed the *Adhyatma Ramayana* in Malayalam script and also rendered it in Verse in the Malayalam language. It is honoured in Kerala society also. The abundance of Taddhita usage found in the work also confirms the South Indian authorship of the work. The South Indians are known to be fond of Taddhita usage. The dominance of Bhakti in the *Adhyatma Ramayana* also reveals it to be a South Indian work. Bhakti is known to have originated in the South (in Dravida region). The *Padma Purana* declares the Dravidian origin of Bhakti. The fourth reason is to be found in the oblation to Shiva as Dakshina-murti who is worshipped generally in the South.

All these reasons lend support to the view that some South Indian poet was the author of the *Adhyatma Ramayana*. Dr. J. N. Farquhar also confirms that Ramanandacharya, the founder of the Ramavat Sect, brought the *Adhyatma Ramayana* with him from South India to North India.

### Age of the *Adhyatma Ramayana*

The question arises, as to what is the time of the composition of the *Adhyatma Ramayana*. No such decision about it has been possible as could be generally acceptable. Some scholars surmise it to be a work of the fourteenth or the fifteenth century.

There is a *Ramayana* in Tamil language written by poet Kamban, which is known as *Kamban Ramayana*. Scholars regard it to be a work of the twelfth century. A verse in the benedictory introduction of this work makes a mention of three Ramayanas written by great poets. Kamban says—'Of these, I compose this Ramayana according to the work of Valmiki.' In the verse referred to above poet Kamban makes a mention of three *Ramayanas*.

Of these, one is obviously the *Ramayana* of Valmiki. About the other two *Ramayanas* scholars regard *Yoga Vashishthà Ramayana* as one, and the *Adhyatma Ramayana* as the other. Others regard *Janakiharanam* of Kumar Das as the second. Other scholars are of the opinion that *Janakiharanam* is not a *Ramayana* (in style) but a classical epic of abundant beauty and sentiment based on the story of Rama. Therefore, the *Adhyatma Ramayana* should be regarded as the third Ramayana intended by poet Kamban. Some masters of *Kamban Ramayana* affirm that there are numerous descriptions in Kamban's *Ramayana* which are similar to the *Adhyatma Ramayana*. Scholars of *Kamban Ramayana* regard it to be a work of the twelfth century. Thus the time of the *Adhyatma Ramayana* can be the eleventh century, as communication of knowledge was slow due to the absence of press in those times. Scholars think that at least a century or two were required for a work to become popular in those times, Raja Vishvanath Singh, the author of the present commentary, also believes, on the basis of external evidence, that the *Adhyatma Ramayana* was written before Madhvacharya. Authorities of the history of Indian thought like Dr. S. N. Das Gupta, Dr. Umesh Mishra etc. hold that 1199 A. D. is the time of the birth of Madhvacharya. On this evidence the age of the *Adhyatma Ramayana* is proved to be the eleventh century of the Christian era.

But there are four regions in South India—Andhra, Kerala, Karnataka and Tamil Nadu. To which of these regions did the author of the *Adhyatma Ramayana* belong ? It is generally held by scholars that the chief motive of the *Adhyatma Ramayana* is to establish the Devotion to Rama in the light of the Advaita Vedanta of Shankaracharya. Bhakti cult originated in Dravid land but it developed in Karnataka. Hence it is most likely that the author of the *Adhyatma Ramayana* was a resident of Karnataka. Jainism also flourished more widely in Karnataka than in other regions of South India. There are numerous Jain temples in Karnataka.

स्वाज्ञानमप्यात्मनि शुद्धबुद्धे, स्वारोपयन्तीह निरस्तमाये।
संसारमेवानुसरन्ति ते वै, पुत्रादिसक्ताः पुरुकर्मयुक्ताः ॥१९

स्वेति—इह संसारे जीवाः आत्मनि स्वान्तर्यामिनि शुद्धबुद्धे, मायादोषरहितत्वेन शुद्धत्वं स्वतो बुद्धत्वम्। निरस्तमाये स्वभक्तानां निरस्ता माया येन तादृशे 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति गीतोक्तेः। ईदृशे श्रीरामे स्वस्याज्ञानं सुतरामारोपयन्ति स्वयमज्ञत्वात् श्रीराममप्यज्ञं जानन्तीत्याशयः। तेषां दुष्टफलमाह—संसारमिति। ते पुत्रादिसक्ताः पुरुकर्मभिरैहिकामुष्मिकैश्च कर्मभिर्युक्ताः संसारमेवानुसरन्ति ।१९

जानन्ति नैवं हृदये स्थितं वै, चामीकरं कण्ठगतं यथाज्ञाः।
यथाऽप्रकाशो न तु विद्यते रवौ, ज्योतिःस्वभावे परमेश्वरे तथा।
विशुद्धविज्ञानघने रघूत्तमेऽविद्या कथं स्यात्परतः परात्मनि ॥२०

यतस्ते यथाऽज्ञाः कण्ठगतं चामीकरं स्वर्णालङ्कारं न जानन्ति एवं हृदये स्थितं श्रीरामं ते न जानन्ति। हृदये स्थितमित्यनेन सौलभ्यगुणः सूचितः। किञ्च श्रीरामेऽज्ञानासंभव इति स दृष्टान्तमाह यथेति—अप्रकाशस्तमो यथा ज्योतिःस्वभावे तेजोरूपे रवौ न विद्यते तथा विज्ञानघने परतः परात्मनि परमेश्वरे रघूत्तमेऽविद्या कथं स्यात् ।२०

यथा हि चाक्ष्णा भ्रमता गृहादिकं, विनष्टदृष्टेर्भ्रमतीव दृश्यते।
तथैव देहेन्द्रियकर्तुरात्मनः, कृते परेऽध्यस्य जनो विमुह्यति ॥२१

ननु स्वाज्ञानेन राममज्ञं जानाति जन इत्युक्तमसंगतमन्यगताज्ञानस्यान्यत्रारोपासंभवादित्याशङ्क्य सदृष्टान्तं तत्समर्थयते यथेति—यथा विनष्टदृष्टेर्दोषदृष्टेः पुरुषस्य भ्रमताऽक्ष्णा गृहादिकं भ्रमतीव दृश्यते तेनैव पुरुषेणेत्यर्थः। तथैव देहेन्द्रियकर्तुः आत्मनः स्वस्य कृतं कर्म परे निर्लेपेऽध्यस्य जीवो विमुह्यति, यथाहं सहारी[1] तथा रामोऽपीति मोहं प्राप्नोति। एवं च यथाक्षिगतभ्रमणस्य गृहादावारोपः तथा स्वाज्ञानस्य परात्मनि श्रीरामे आरोप इत्याशयः ।२१

नाहो न रात्रिः सवितुर्यथा भवेत् प्रकाशरूपाव्यभिचारतः क्वचित्।
ज्ञानं तथाऽज्ञानमिदं द्वयं हरौ, रामे कथं स्थास्यति शुद्धचिद्घने ॥२२

परमात्मनि श्रीरामे स्वत[2] एव ज्ञानासंभव इति—पुनर्दोषाय[3] सयुक्तिकमाह—**नाहो इति**—क्वचित्-क्वचिदपि यथा सवितुः सूर्यस्य प्रकाशरूपाव्यभिचारतः नाहः दिनं

---

१. संसारी—इत्युचितः।

२. एवाज्ञानासम्भव इति समीचीनः।

३. पुनर्बोधाय इति प्रसङ्गानुकूलः।

भवेन्न रात्रिः तथा ज्ञानं वशिष्ठाद्युपदेशजन्यम् अज्ञानं जीवैरारोपितमिदं द्वयं हरौ श्रीरामे कथं स्थास्यति। स्वाभाविकशुद्धं चिद्घनत्वात् 'स्वाभाविकी ज्ञानबलक्रिया चे' ति श्रुत्या श्रीरामे आरोपितज्ञानाज्ञानयोरनवकाश एवेत्यर्थः।२२

तस्मात्परानन्दमये रघूत्तमे, विज्ञानरूपे हि न विद्यते तमः।
अज्ञानसाक्षिण्यरविन्दलोचने, मायाश्रयत्वान्न हि मोहकारणम्।।२३

वदन्ति केचिदिति पार्वतीप्रश्नस्योत्तरमुपसंहरति तस्मादिति—ज्ञानरूपे रघूत्तमे न तमोऽज्ञानं विद्यते हि निश्चितम् अज्ञानसाक्षिणि अज्ञानस्य द्रष्टरि 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतेः मायाऽश्रयत्वात् मायायाः स्वकीयजडशरीररूपाया आश्रयत्वात् मोहकारणं नहि नैव।२३

अत्र ते कथयिष्यामि रहस्यमपि दुर्लभम्।
सीतारामममरुत्सूनुसंवादं मोक्षसाधनम्।।२४

एतावता ग्रन्थेनाविवेकिजनकृतश्रीरामनिष्ठाज्ञानविषयकप्रश्नोत्तरं दत्त्वा प्रश्नद्वयस्योत्तरमाह अत्रेत्यादिना। अत्र प्रश्नद्वयविषये।२४

पुरा रामायणे रामो रावणं देवकण्टकम्।
हत्वा रणे रणश्लाघी सपुत्रबलवाहनम्।।२५
सीतया सह सुग्रीवलक्ष्मणाभ्यां समन्वितः।
अयोध्यामगमद्रामो हनुमत्प्रमुखैर्वृतः।।२६
अभिषिक्तः परिवृतो वसिष्ठाद्यैर्महात्मभिः।
सिंहासने समासीनः कोटिसूर्यसमप्रभः।।२७

संवादं कथयितुं कथामुपक्षिपति पुरेत्यादि षड्भिः।२५-२७।

दृष्ट्वा तदा हनूमन्तं प्राञ्जलिं पुरतः स्थितम्।
कृतकार्यं निराकाङ्क्षं ज्ञानापेक्षं महामतिम्।।२८

पुरतः अग्रे स्थितम्।एतेन गुरुभक्तिर्दर्शिता।निराकाङ्क्षं ज्ञानातिरिक्तधनेच्छारहितम्।२८

रामः सीतामुवाचेदं ब्रूहि तत्त्वं हनूमते।
निःकल्मषोऽयं ज्ञानस्य पात्रं नौ नित्यभक्तिमान्।।२९

तत्त्वं मत्स्वरूपम्। नौ आवयोः।२९

तथेति जानकी प्राह तत्त्वं रामस्य निश्चितम्।
हनूमते प्रपन्नाय सीता लोकविमोहिनी ।।३०

**तथेति**--लोकविमोहिनी विगतो मोहोऽस्यास्तीति तं करोतीति तथा, लोकस्य मोहनाशिनी। रामनाम्नि आकारवाच्यस्य जीवस्य वाच्यं श्रीरामं शरणत्वेनोपदिशतीति श्रीरामानुजस्वामिभिः स्वकृतमन्त्रार्थे स्पष्टमुक्तम्।३०

**श्रीसीतोवाच--**

रामं विद्धि परं ब्रह्म सच्चिदानन्दमद्वयम्।
सर्वोपाधिविनिर्मुक्तं सत्तामात्रमगोचरम् ।।३१

प्रश्नद्वये तत्त्वप्रश्नस्योत्तरमाह--**राममिति**--रामं परं ब्रह्म विद्धि, रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि । इति रामपदेनासौ परब्रह्माभिधीयते। इति रामतापनीये पाद्मे चोक्तेः। 'रामः सत्यं परं ब्रह्म रामात्किञ्चिन्न विद्यते' इति स्मृतेश्च सत् बाधहीनं चित् ज्ञानस्वरूपम आनन्दं तद्रूपम् अद्वयम् चिदचिद्विग्रहत्वेन यद्वा स्वसमाधिकरहितं तथापि सर्वोपाधिविनिर्मुक्तं स्थूलसूक्ष्मकारणादिसकलशरीरोपाधिरहितं सत्तामात्रम् सदिति व्यवहारनियामकमित्यर्थः । एतत्सम्बन्धादेव सदिति व्यवहार इति भावः। अगोचरम् मनोवचनाविषयमित्यर्थः। 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति' श्रुतेः।३१

आनन्दं निर्मलं शान्तं निर्विकारं निरञ्जनम्।
सर्वव्यापिनमात्मानं स्वप्रकाशमकल्मषम् ।।३२

**आनन्दमिति**--आनन्दं सर्वानन्दस्वरूपम्, 'एतस्यैवानन्दस्यानन्यानि भूतानि मात्रामुपजीवन्तीति' श्रुतेः। निर्मलं सत्त्वादिमलरहितम्। निरञ्जनं मायारहितम् शान्तं प्रपञ्चोपकार्यत्वात् 'शिवं शान्तमिति' श्रुतेः। निर्विकारं जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीति षड्विकाररहितम् सर्वव्यापिनं प्रकाशद्वारेत्यर्थः । आत्मानम् अन्तर्यामिनं 'सर्वव्यापी सर्वभूतान्तरात्मेति' श्रुतेः। स्वप्रकाशम् प्रकाशकान्तररहितम् सकलप्रकाशकत्वात् । 'अत्रायं पुरुषः स्वयं ज्योतिरिति' 'यस्य भासा सर्वमिदं विभाती' ति च श्रुतेः अकल्मषम् 'अयमात्मापहृतपाप्मे'ति श्रुतेः ।३२

मां विद्धि मूलप्रकृतिं सर्गस्थित्यन्तकारिणीम्।
तस्य सन्निधिमात्रेण सृजामीदमतन्द्रिता ।।३३

**मामिति**--सर्गस्थित्यन्तकारिणीं मूलप्रकृतिं मदंशत्वात् मां विद्धि तस्य श्रीरामस्य सन्निधिमात्रेण इदं चराचरं विश्वं तद्द्वारा सृजामि, अहं तु अतन्द्रिता नित्यशुद्धबुद्धस्वरूपैव। एतेन स्वस्य श्रीरामभिन्नत्वं सूचयति।३३

तत्सान्निध्यान्मया सृष्टं तस्मिन्नारोप्यतेऽबुधैः।
अयोध्यानगरे जन्म रघुवंशेऽतिनिर्मले ॥३४

**तदिति**—तस्य श्रीरामस्य सान्निध्यात् मया प्रकृतिद्वारा सृष्टमबुधैः तस्मिन् आरोप्यते। आरोप्यत इत्यारोपः। बाहुलकात् कर्मणि घञ् आरोपः कथ्यते। आरोप्यतेरण्यन्तात्कर्मणि लट् आरोप्यमाणमुच्यत इत्यर्थः। तिष्ठत्वेतत् श्रीरामेण साक्षात्कृतं श्रीरामे आरोपितं कथयन्तीत्याह अयोध्यानगर इत्यादिना।३४

विश्वामित्रसहायत्वं मखसंरक्षणं ततः।
अहल्याशापशमनं चापभङ्गो महेशितुः ॥३५
मत्पाणिग्रहणं पश्चाद्भार्गवस्य मदक्षयः।
अयोध्यानगरे वासो मया द्वादशवार्षिकः ॥३६
दण्डकारण्यगमनं विराधवध एव च।
मायामारीचमरणं मायासीताहृतिस्तथा ॥३७
जटायुषो मोक्षलाभः कबन्धस्य तथैव च।
शबर्याः पूजनं पश्चात्सुग्रीवेण समागमः ॥३८
वालिनश्च वधः पश्चात्सीतान्वेषणमेव च।
सेतुबन्धश्च जलधौ लङ्कायाश्च निरोधनम् ॥३९
रावणस्य वधो युद्धे सपुत्रस्य दुरात्मनः।
विभीषणे राज्यदानं पुष्पकेण मया सह ॥४०
अयोध्यागमनं पश्चाद्राज्ये रामाभिषेचनम्।
एवमादीनि कर्माणि मयैवाचरितान्यपि।
आरोपयन्ति रामेऽस्मिन् निर्विकारेऽखिलात्मनि ॥४१

**एवमादीनीति**—अयोध्यादौ प्रादुर्भावप्रभृतीनि मयैव तच्चरितसाक्षिण्या सह श्रीरामेणाचरितान्यपि अखिलात्मनि चेतनाचेतनाखिलविग्रहान्तर्यामिनि तथापि निर्विकारेऽस्मिन् रामे [1]श्रुतौ रजतवदारोपयन्ति, आरोप्यत [2]इत्यारोप्यस्तं वदन्ति 'तत्करोति तदाचष्टे' इति णिच्। अयं भावः 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।

---

१. शुक्तौ इति समीचीनः।
२. आरोप इति युक्तः।

त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन !।' इति गीतोक्तेः निर्विकारस्य चरितान्यपि निर्विकाराण्येव तेषामारोपितत्वोक्तिर्न युक्ता।३५-४१।

रामो न गच्छति न तिष्ठति नानुशोच-
त्याकाङ्क्षते त्यजति नो न करोति किञ्चित्।
आनन्दमूर्तिरचलः परिणामहीनो,
मायागुणाननुगतो हि तथा विभाति ।।४२

**राम इति**—निष्कलं निष्क्रियं शान्तमिति श्रुतेर्वाङ्मनसगोचरातीतनित्यविहार-स्थलायोध्याऽन्यत्र गमनादिरहित आनन्दमूर्तिरचलः परिमाणहीनः एवंभूतोऽपि रामः हि यतः मायागुणाननुगतः माया कृपा 'माया दम्भे कृपायां चे'ति विश्वः। तस्या गुणान् दीनोद्धरणादीन् अनुगतः अतः तथा-गच्छंस्तिष्ठन्नेवमादिरूपो विभाति। ननु विभातीत्यस्य प्रतीयत इत्यर्थकत्वे 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः' इति स्मृतिविरोधापत्तिः वास्तविकगमनादिकर्तृत्वेन प्रकाशते इत्यर्थे तु 'रामो दाशरथिः श्रीमान् सच्चिदानन्दविग्रहः। अयोध्यां क्वापि सन्त्यज्य पादमेकं न गच्छतीति।' वशिष्ठसंहितोक्तवचनविरोध इति चेत् न निरन्तरमयोध्यायां विद्यमानत्वेऽपि आदिनारायणावतारे आवेशेन सर्वं करोतीत्यस्या-ङ्गीकृतत्वात्। अतो न भवदुक्तवचनविरोधः नापि वशिष्टसंहितोक्तवचनविरोध इति दिव्यनिष्क्रियत्वादिविशिष्टमनोवचनागोचरपूर्णकामश्रीरामस्य असाधारणगुणकृपयैव जीवोद्धारार्थं प्रादुर्भावादिकारणमिति बोध्यम्। ये श्रीरामस्य प्रादुर्भावादीन्यारोपितानि कथयन्ति तेषां देवानां प्रियत्वमेव फलितम्।४२

**श्रीमहादेव उवाच**—

ततो रामः स्वयं प्राह हनूमन्तमुपस्थितम्।
शृणु तत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनाम्।।४३

एवं श्रीरामतत्त्वकथनपूर्वकमज्ञजनसंशयं निराकृत्य पार्वत्या पृष्टं तत् ज्ञानसाधनं वक्तुं श्रीमहादेवः उवाच **तत इति**—कथयन्त्यामपि जानक्यां स्वयं कथनेन तस्य वात्सल्या-तिशय एव बीजमिति भावः। यद्वा भगवतो रामभद्रस्य धीरोदात्तत्वात्स्वमहिमानं स्वयं वर्णयितुं सङ्कुचन् श्रीजानकीमुखेन निजस्वरूपं हनूमन्तमुपदिश्य स्वप्राप्तिसाधनमुपदिशतीति भावः। आत्मानात्मपरात्मनाम् आत्मानः जीवाः अनात्मानः मायाकालकर्मस्वभावा-ख्यजडतत्त्वानि परात्मा ईश्वरः तेषां तत्त्वम्। यद्वा एवं संक्षेपेण प्राप्यस्वरूपमात्रमुपदिश्य विरतायां जानक्यां प्राप्यस्वरूपप्राप्त्युपायज्ञानाभावेन [1]'परितुष्टं मरुत्सूनुमवगम्य

---

१. अपरितुष्टम् इत्युचितः।

साक्षात् श्रीरामचन्द्र एव तस्मै तत्त्वत्रयज्ञानरूपमुपाय इति फलं चोपदिश्यति[1] ततो राम इति । आत्मानात्मपरात्मनां चिदचिदीश्वराणाम् ।४३

आकाशस्य यथाभेदस्त्रिविधो दृश्यते महान् ।
जलाशये महाकाशस्तदवच्छिन्न एव हि ।
प्रतिविम्वाख्यमपरं दृश्यते त्रिविधं नभः ।।४४

प्रतिज्ञातक्रमेण प्रथमं चित्तत्वं सदृष्टान्तं त्रेधा निरूपयति आकाशस्येत्यादिना—त्रिविधः त्रिप्रकारः भेदः औपाधिकत्रैविध्यमेव दर्शयति महान् इत्यादिना उपाधिं दर्शयति जलाशय इति, महाकाशः शुद्धाकाशः जलाधारवस्त्ववच्छिन्नाकाशः जलाशयप्रतिविम्वताकाश इत्येकमेव नभः उपाधिभेदात्त्रिविधमित्यर्थः ।४४

बुद्धयवच्छिन्नचैतन्यमेकं पूर्णमथापरम् ।
आभासस्त्वपरं विम्वभूतमेवं त्रिधा चितिः ।।४५

एवं दृष्टान्ते त्रैविध्यमुपपाद्य दार्ष्टान्तिके द्योतयति बुद्धीति—बुद्धयवच्छिन्नं लिङ्गशरीरावच्छिन्नं 'पञ्चप्राणमनोबुद्धिःदशेन्द्रियसमन्वितं। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं लिङ्गचसंज्ञकम्।' इति स्मृतेः। चैतन्यं चेतन एव चैतन्यं स्वार्थे ष्यञ् जीव इत्यर्थः। गणयति एकमिति आभासः आभास्यते देवोऽहं मनुष्योऽहं स्थूलोऽहं कृशोऽहम् इत्यादि देहधर्माध्यासेन प्रगीयत इत्याभासः स्थूलशरीरावच्छिन्नमित्यर्थः। तदपरं द्वितीयमित्यर्थः। विम्वभूतं शुद्धचैतन्यम् अपरं तृतीयम् इत्यर्थः। जीवस्य स्थूलसूक्ष्मकारणमहाकारणशरीरसम्बन्धेन पूर्णत्वमिति बोध्यम्। यथाकाश एक एव उपाधिभेदात्त्रिविधः। एवं जीवोऽपि जीवत्वेन एक एव समीरितोपाधिभेदात्त्रिविध इति भावः ।४५

साभासबुद्धेः कर्तृत्वमविच्छिन्नेऽविकारिणि ।
साक्षिण्यारोप्यते भ्रान्त्या जीवत्वं च तथाऽबुधैः ।।४६

एवम् आत्मतत्त्वं निरूप्यानात्मतत्त्वं निरूपयति साभासबुद्धेरिति—आभासो देहतादात्म्येनाभिमन्यमानो जीवः तत्सहिता बुद्धिर्देहः तदवच्छिन्नत्वात्तच्छब्दव्यपदेशः। अनेनायोदहनयोरिव देहात्मनोः परस्परधर्माध्यासे परस्परसम्बन्ध एव मूलमिति सूचितम्। तस्य कर्तृत्वं जननमरणहननादिकर्तृत्वं 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहंकारविमूढात्मा कर्ताहमिति मन्यते।।' इति स्मृतेः। अविच्छिन्ने छेदनाद्यनर्हे अविकारिणि जननमरणादिविकारशून्ये 'न जायते म्रियते वा विपश्चित्,' ततः 'हन्ता

---

१. उपदिशति इति साधीयान् पाठः।

चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्, उभौ तौ न विजानीतो नायं हन्ति न हन्यते' इति श्रुतेः। 'न जायते म्रियते वा कदाचित्', 'य एनं वेत्ति हन्तारमित्यादि' स्मृतेश्च। साक्षिणि साक्षाच्चक्षुरादिसहकार्यनापेक्ष्यात्मानं पश्यतीति 'साक्षाद् द्रष्टरि संज्ञायामिति णिनिः 'अव्ययानां भमात्रे' इति टिलोपः। अनेन आत्मनः स्वेतरानुभव एवान्तःकरणादि [1]कर्णापेक्षा, स्वात्मानन्तु सर्वावस्थासु स्वयमेवाहमित्यनुभवतीत्युक्तं भवति। एतादृशे प्रत्यगात्मनि अबुधैः अज्ञानिभिः भ्रान्त्या आत्मानात्माविवेकेनारोप्यते अध्यस्यते। एवं जीवे देहधर्माध्यासमुक्त्वा देहे तद्धर्माध्यासमाह जीवत्वं चेति अस्य बुद्धाविति शेषः।४६

आभासस्तु मृषा बुद्धिरविद्याकार्यमुच्यते।
अविच्छिन्नं तु तद्ब्रह्म विच्छेदस्तु विकल्पितः।।४७

अचित्तत्वं निरूप्य अध्यासलक्षणं निरूपयति **आभासस्त्विति**—आभासः आत्मानात्मनोः परस्पराध्यासः मृषाबुद्धिः मृषाज्ञानं तत्र हेतुमाह अविद्याकार्यमिति। अथ परमात्मतत्त्वं निरूपयति अविच्छिन्नमित्यादिना तद् ब्रह्म अविच्छिन्नं चिदचिद्विग्रहत्वेन पूर्णमित्यर्थः। विच्छेदस्तु भेदस्तु विकल्पितः भगवतः चिदचिद्विग्रहत्वाज्ञानकृतः।४७

अवच्छिन्नस्य पूर्णेन एकत्वं प्रतिपाद्यते।
तत्त्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा।।४८

**अवच्छिन्नस्येति**—अणुत्वावच्छिन्नस्य जीवस्येत्यर्थः। पूर्णेन चिदचिद्विग्रहत्वेन। पूर्णेन ब्रह्मणा एकत्वं चित्त्वेन एकत्वं प्रतिपाद्यते। कैरित्यत आह—**तत्त्वमस्यादिवाक्यैरिति**। तथा साभासस्य जगदाभासविशिष्टस्य अहमोऽहङ्कारस्य एकत्वं भगवज्जडशरीरत्वेन ऐक्यं प्रतिपाद्यते। [2]'यस्य पृथिवी शरीरं यस्यापः शरीरं यस्याहंकारः शरीरं 'भूमिरापोऽनलो वायुः खं मनोबुद्धिरेव च'त्यादि श्रुतिस्मृतिभिरिति शेषः। अयमत्र निष्कर्षः अवच्छिन्नमित्यनेन चिदचिद्विग्रहत्वेन एकतत्त्वं प्रतिपादितं। जीवस्य ब्रह्मणा चित्त्वेनैक्यप्रतिपादनेन जगतः भगवज्जडशरीरेणैक्यप्रतिपादनेन चिदचित्तत्त्वेन तत्त्वद्वयम्। उभयोर्विसजातीयस्वभावगुणवैभवात् 'भेदो निरूपितो ह्येष ह्यभेदस्तच्छरीरतः' इति बृहद्ब्रह्मसंहितोक्तं चिदचितोः ब्रह्मशरीरत्वेन ब्रह्मणा सह विशिष्टवेषेण ऐक्येऽपि स्वरूपेणाभेदात् तत्त्वत्रयमिति।४८

---

१. करण इत्युचितः।
२. अस्य पृथिवीशरीरं पश्यामः शरीरं पश्यामः शरीरम्—इतिमदीयपुस्तके।

ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः।
तदाऽविद्या स्वकार्यैश्च नश्यत्येव न संशयः ॥४९

ऐक्यज्ञानमिति—यदा यस्मिन् काले महावाक्येन तत्त्वमस्यादिना आत्मनोः चकारात् भगवज्जडशरीरतात्पर्यभूतजगतोश्च चित्त्वेन जडत्वेन च ऐक्यज्ञानमुत्पन्नम् तदा अविद्या अज्ञानं स्वकार्यैः शोकमोहादिभिः सह नश्यत्येव संशयो नास्ति।४९

एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते।
मद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यताम्।
न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि ॥५०

एतदिति—एतत् उक्तप्रकारेणैक्यं विज्ञाय मद्भावाय मयि भावं परां भक्तिं लब्धुमुपपद्यते योग्यो भवति। 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्। भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।' इति गीतायाम्। अस्यार्थः सर्वेषु भूतेषु समः सर्वाणि भूतानि भगवत्चिदचिच्छरीराणि इति ज्ञात्वा तेषु समतां गत इत्यर्थः। परां मद्भक्तिं प्रेमाख्यां लभते 'सा परानुरक्तिरीश्वरे' इति शाण्डिल्यसूत्रात्। तया भक्त्या अहं यावान् यश्चास्मि तं मां तत्त्वतः 'राम एव परब्रह्म राम एव परं तपः, राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकमिति' श्रुतेः। श्रीरामरूपम् अभिजानाति। ततो मां ज्ञात्वा तदनन्तरं विशेत् लोकमिति शेषः। स्वभक्तिहीनस्यानिष्टफलमाह-मद्भक्तेति। शास्त्रगर्तेषु शास्त्राणां ब्रह्माहमस्मि तत्त्वमसीत्यादिवाक्यानां ये गर्ताः तात्पर्याज्ञानरूपास्तेषु मुह्यतां न ज्ञानं न च मोक्षः स्यात्। यद्वा मीमांसान्यायादिरूपगर्तेषु।५०

इदं रहस्यं हृदयं ममात्मनो, मयैव साक्षात्कथितं तवानघ।
मद्भक्तिहीनाय शठाय न त्वया, दातव्यमैन्द्रादपि राज्यतोऽधिकम् ।५१

इदमिति—ऐन्द्रादपि राज्यतोऽधिकमित्यनेनास्य रामरूपत्वं व्यज्यते। एतद्दानादैन्द्रमपि राज्यं लभते तथाप्यनधिकारिणे न दातव्यमिति भावः।५१

श्रीमहादेव उवाच—

एतत्तेऽभिहितं देवि! श्रीरामहृदयं मया।
अतिगुह्यतमं हृद्यं पवित्रं पापशोधनम् ॥५२
साक्षाद्रामेण कथितं सर्ववेदान्तसंग्रहम्।
यः पठेत् सततं भक्त्या स मुक्तो नात्रसंशयः ॥५३

ब्रह्महत्यादिपापानि बहुजन्मार्जितान्यपि ।
नश्यन्त्येव न सन्देहो रामस्य वचनं यथा ।।५४

**एतदिति**—सर्ववेदान्तसंग्रहमिति सर्वमतप्रतिपादकाः ये वेदान्ताः तदर्थानां संक्षेपेण प्रतिपादकमित्यर्थः। तथाहि पूर्वं चिदचितोर्भगवच्छरीरेणैक्यमुक्तं तेन सविशेषाऽवलम्बिनां शुद्धाद्वैतं सिद्धम्। अन्तर्यामिना सह चिदचिच्छरीरयोस्तादात्म्ये नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टस्य कारणब्रह्मणः नामरूपविभागार्हस्थूलचिदचिद्विशिष्टस्य कार्यब्रह्मण ऐक्येन विशिष्टाद्वैतं सिद्धम्। चिदचिच्छरीरयोस्तदायत्तवृत्तिकत्वेनाऽभेदः स्वरूपेण भेदः। एवं भेदवादिमतं सिद्धम्। चिदचिच्छरीरयोस्तदधीनत्वेन तत्परतन्त्रत्वात् अन्तर्यामिनः स्वतन्त्रत्वात् केवलभेदवादिमतं सिद्धम्। चिदचिच्छरीरे ब्रह्मण एव, तयोर्ब्रह्मत्वमेवातो ब्रह्मभिन्नं वस्तु नास्त्येवेति केवलाऽद्वैतमतं सिद्धम्। जीवात्मपरमात्मनोश्चित्त्वेनाभेदात् मायाकालकर्मादीनां जडत्वेनाभेदात् चिदचित्तत्त्वद्वयोक्त्या चेत्यचितोर्न तृतीयमिति मिथोऽपेक्षणादुभयं तत्त्वद्वयं तिष्ठति 'चेत्यमेकम् चित्तावमन्यं न विदाम किञ्चित्' इति श्रुतिसूत्राभ्यां सर्वेषां मतानामत्रैवान्तर्भावात् सर्वसिद्धान्तसम्मतं द्वैतमतं सिद्धमिति सर्वं समञ्जसम्।५२-५४।

जातिभ्रष्टोऽतिपापी परधनपरदारेषु नित्योद्यतो वा,
स्तेयी ब्रह्मघ्नमातापितृवधनिरतो योगिवृन्दापकारी।
यः सम्पूज्याभिरामं पठति च हृदयं रामचन्द्रस्य भक्त्या,
योगीन्द्रैरप्यलभ्यं पदमिह लभते सर्वदेवैः सुपूज्यम्।।५५

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे बालकाण्डे [1]उमामहेश्वरसंवादे श्रीरामहृदयं नाम प्रथमोऽध्यायः ।।१

अस्य पाठफलमाह **जातिभ्रष्ट इति**—ईदृशोऽपि यः स सर्वदेवैः सुपूज्यं पदं साकेतलोकं लभते।५५

[2]इति श्रीसिद्धिश्रीमहाराजाधिराज श्रीमहाराज श्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्-ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां बालकाण्डे
प्रथमोऽध्यायः।१

⊙

---

१. उमामहेश्वरसंवादे इत्यंशः रामवनपुस्तकालयस्थप्रतौ वर्तते।

२. 'इति श्रीमदध्यात्मरामायणे ध्वनिप्रकाशिकायां प्रथमोऽध्यायः।' रामवनपुस्तकालयस्थप्रतिपुष्पिका।

## अथ द्वितीयोऽध्यायः

**श्रीपार्वत्युवाच--**

धन्यास्म्यनुगृहीतास्मि कृतार्थास्मि जगत्प्रभो!
विच्छिन्नो मेऽतिसन्देहग्रन्थिर्भवदनुग्रहात् ।।१

अथ पार्वती शिवोक्तमभिनन्दति **धन्यास्मीति**—अतिसन्देहग्रन्थिः महान् सन्देहरूपो ग्रन्थिः विच्छिन्नो निवृत्तः।१

त्वन्मुखाद्गदितं रामतत्त्वामृतरसायनम् ।
पिबन्त्या मे मनो देव! न तृप्यति भवापहम् ।।२

**त्वन्मुखादिति**—भवापहम् भवः संसारस्तमपहन्ति विनाशयति रामतत्त्वामृतरसायनं रामतत्त्वममृतं मोक्षजनकं रसायनं पिबन्त्या मे मनो न तृप्यति।२

श्रीरामस्य कथा त्वत्तः श्रुता संक्षेपतो मया।
इदानीं श्रोतुमिच्छामि विस्तरेण स्फुटाक्षरम् ।।३

अथ परमकृपावती पार्वती सकलजनानां श्रीशिवोक्तम् आत्मानात्मपरात्मतत्त्वं तत्साधनं च ज्ञातुमशक्यं मत्वा तदुद्धाराय श्रवणादिभिरेकैकाक्षरेण महापातकनाशनीं श्रवणमात्रेणाज्ञानकपाटोद्घाटिनीं श्रीरामकथां विस्तरेण पृच्छति **श्रीरामस्येति**—स्फुटाक्षरम् स्फुटानि अक्षराणि यस्मिन् कर्मणि तद्यथा तथा।३

**श्रीमहादेव उवाच--**

शृणु देवि! प्रवक्ष्यामि गुह्याद्गुह्यतरं महत् ।
अध्यात्मरामचरितं रामेणोक्तं पुरा मम।।४
तदद्य कथयिष्यामि शृणु तापत्रयापहम् ।
यच्छ्रुत्वा मुच्यते जन्तुरज्ञानोत्थमहाभयात् ।
प्राप्नोति परमामृद्धिं दीर्घायुः पुत्रसन्ततिम् ।।५

शृणु इति—गुह्याद् गुह्यतरं श्रीरामस्य मनोवचनागोचरत्वेन तच्चरितस्यापि तादृशत्वादिति भावः। ननु तर्हि त्वया कथं ज्ञातमिति चेत्तत्राह श्रीरामेणोक्तमिति। यस्य चरितं स एवोक्तवानिति भावः।४-५

भूमिर्भारेण मग्ना दशवदनमुखाशेषरक्षोगणानां,
धृत्वा गोरूपमादौ दिविजमुनिजनैः साकमब्जासनस्य।
गत्वा लोकं रुदन्ती व्यसनमुपगतं ब्रह्मणे प्राह सर्वं,
ब्रह्मा ध्यात्वा मुहूर्तं सकलमपि हृदावेदशेषात्मकत्वात्॥६

कथां प्रस्तौति भूमिरिति—दशवदनमुखाशेषरक्षोगणानां भारेण मग्ना पापीयसं भारमसहमानेति भावः। उपगतं प्राप्तम्। ब्रह्मा मुहूर्त्तं ध्यात्वा राममिति शेषः। अशेषात्मकत्वात् चेतनाचेतनसमष्टिरूपत्वात् हृदा मनसा सकलमपि दुःखकारणं तन्निवृत्तिकारणं चावेत् अजानात्। श्रीरामं ध्यात्वेयत्नेन 'ब्रह्मन्नारायणं गत्वा प्रार्थय तद्द्वारैवावतीर्य भवतां सकलं कार्यं साधयिष्यामीति' ध्यानगोचरः श्रीरामः आज्ञप्तवानिति व्यज्यते। रावणवधरूपस्य पृथ्वीभारापनोदस्य श्रीरामादन्येन कर्तुमशक्यत्वात् परात्परमानवनित्यविहारिश्रीरामकरात् वधस्य न्याय्यत्वाच्च श्रीराममेव ध्यातवानिति बोध्यम्।६

तस्मात्क्षीरसमुद्रतीरमगमद्ब्रह्माऽथ देवैर्वृतो,
देव्या चाखिललोकहृत्स्थमजरं सर्वज्ञमीशं हरिम्।
अस्तौषीच्छ्रुतिसिद्धनिर्मलपदैः स्तोत्रैः पुराणोद्भवै-
र्भक्त्या गद्गदया गिरातिविमलैरानन्दवाष्पैर्वृतः॥७

तस्मादिति—देवेन्द्रादिभिः देव्या भूम्या च वृतो ब्रह्मा तस्मात् सत्यलोकात् अथ समुद्रतीरगमनानन्तरम् अखिललोकहृत्स्थं सर्वान्तर्यामिणमित्यर्थः 'स वा एष आत्मा हृदीति' श्रुतेः। अजरम् 'एष महानजर' इति श्रुतेः। सर्वज्ञं 'यः सर्वज्ञः सर्वविदि'ति श्रुतेः। ईशम् 'एष सर्वेश्वर' इति श्रुतेः। हरिं हरिद्वर्णं नवदूर्वादलश्याममिति यावत्। 'तस्यापि भगवानेष साक्षाद्ब्रह्ममयो हरिरिति' भागवते। 'हराम्यघं हि स्मर्तॄणाम हविर्भागं क्रतौ तथा। वर्णश्च मे हरिद्यस्मात्तस्माद्धरिरहं स्मृतः। रामं दूर्वादलश्याममिति' स्मृतेश्च। श्रुतिसिद्धानि वेदप्रसिद्धानि निर्मलानि पापनाशकानि पदानि येषु तैः पुराणोद्भवैः स्तोत्रैः भक्तिप्रयुक्तत्वेन गिरो गद्गदत्वम् तत एव वाष्पाणां च विमलत्वम्।७

ततः स्फुरत्सहस्रांशुसहस्रसदृशप्रभः।
आविरासीद्धरिः प्राच्यां दिशां व्यपनयंस्तमः॥८

तत इति—ततः स्तुतिश्रवणानन्तरं दिशां तमो व्यपनयन् दूरीकुर्वन् हरिः श्रीरामः प्राच्यां दिशि आविरासीत् स्वरूपस्यावाङ्मनसगोचरत्वात् नारायणे आविश्य तद्द्वारा आविर्बभूवेत्यर्थः। गरुडोपरिसंस्थितमिति विशेषणेन नारायणः ब्रह्मा मत्समीपमागमिष्यतीति विज्ञाय प्रमोदवनं गत्वा श्रीरामावेशं गृहीत्वा पुनरागत इति व्यज्यते। [1](तेन च 'परोक्षप्रिया इव हि देवा' इत्यादि श्रुतेः परोक्षं च मम प्रियमित्यादि भगवद्वचनाच्च व्यञ्जनारूपपरोक्षार्थकाध्यात्मरामायणेन तथैवाभिधानमित्युत्तरोत्तरव्यञ्जनादिभिः स्फुटीभविष्यतीति 'पुरं गते राजनि रामचन्द्रे' इत्यादि वचनैरुत्तरकाण्डे नित्यसाकेतविहारिद्विभुजश्रीरामचन्द्रचतुर्भुजपरनारायणयोः पृथगेव स्वं स्वं लोके प्रवेशस्य स्फुटमेव वर्णयिष्यमाणत्वाच्च)।८

कथञ्चिद् दृष्टवान् ब्रह्मा दुर्दर्शमकृतात्मनाम्।
इन्द्रनीलप्रतीकाशं स्मितास्यं पद्मलोचनम्॥९
किरीटहारकेयूरकुण्डलैः कटकादिभिः।
विभ्राजमानं श्रीवत्सकौस्तुभप्रभयान्वितम्॥१०
स्तुवद्भिः सनकाद्यैश्च पार्षदैः परिवेष्टितम्।
शङ्खचक्रगदापद्मवनमालाविराजितम्॥११
स्वर्णयज्ञोपवीतेन स्वर्णवर्णाम्बरेण च।
श्रिया भूम्या च सहितं गरुडोपरि संस्थितम्॥१२
हर्षगद्गदया वाचा स्तोतुं समुपचक्रमे॥१३

कथञ्चिदित्यादि पञ्च श्लोकाः स्पष्टार्थाः।९-१३।

नतोऽस्मि ते पदं देव प्राणबुद्धीन्द्रियादिभिः।
यच्चिन्त्यते कर्मपाशाद्धृदि नित्यं मुमुक्षुभिः॥१४

स्तुतिमाह—**नतोऽस्मीति**—हे देव! द्योतमान ते तव पदं प्राणाः क्रियाशक्तिप्रधानोंऽशः तेन कर्मेन्द्रियसंग्रहः, बुद्धिरिन्द्रियाणि श्रोत्रादीनि आत्मा मनः तैः साकं नतोऽस्मि, कर्मपाशान्मुमुक्षुभिर्यत्पदं हृदि विचिन्त्यते तत्साक्षान्नतोऽस्मीत्यहोभाग्यमिति भावः। एतेनात्मसमर्पणं ध्वनितम्।१४

---

१. ( . ) एतत्कोष्ठान्तर्गतांशः सतनाजनपदस्थितरामवनपुस्तकालयस्थहस्तलिखितप्रतौ नास्ति।

मायया गुणमय्या त्वं सृजस्यवसि लुम्पसि।
जगत्तेन न ते लेपः स्वानन्दानुभवात्मनः ॥१५

तथा शुद्धिर्न दुष्टानां दानाध्ययनकर्मभिः।
शुद्धात्मता ते यशसि सदा भक्तिमतां यथा ॥१६

**माययेति**—गुणमय्या सत्त्वादिगुणयुक्तया तेन स्रष्टृत्वादिना लेपोऽहं स्रष्टेत्याद्यभिमानेन तत्र हेतुगर्भं विशेषणं स्वस्य आत्मनः श्रीरामस्य आनन्दः श्रीरामविषयकानन्दः तदनुभवे आत्मा मनो यस्य स तस्य।१५-१६।

अतस्तवाङ्घ्रिर्मेदृष्टश्चित्तदोषापनुत्तये ।
सद्योऽन्तर्हृदये नित्यं मुनिभिः सात्वतैर्वृतः ॥१७

**अत इति**—सात्वतैर्भक्तैः मुनिभिर्मननशीलैर्वृतः अन्तर्हृदये सद्यो दृष्टः तवाङ्घ्रिर्मे चित्तदोषापनुत्तयेऽस्त्विति शेषः।१७

ब्रह्माद्यैः स्वार्थसिद्ध्यर्थमस्माभिः पूर्वसेवितः।
अपरोक्षानुभूत्यर्थं ज्ञानिभिर्हृदि भावितः ॥१८

**ब्रह्मेति**—अस्माभिर्ब्रह्माद्यैः स्वार्थसिद्ध्यर्थं स्वप्रयोजनसिद्ध्यर्थम्। एतेन तेषां सकामत्वं ध्वनितम्। ज्ञानिभिः अपरोक्षानुभूत्यर्थम् प्रत्यक्षमनुभवितुम्। एतेन तेषां निष्कामत्वं ध्वनितम्।१८

तवाङ्घ्रिपूजानिर्माल्यतुलसीमालया विभोः।
स्पर्धते वक्षसि पदं लब्ध्वाऽपि श्रीः सपत्निवत् ॥१९

सपत्निवत् ह्रस्व आर्षः।१९

अतस्त्वत्पादभक्तेषु तव भक्तिः श्रियोऽधिका।
भक्तिमेवाभिवाञ्छन्ति त्वद्भक्ताः सारवेदिनः ॥२०

अतस्त्वत्पादकमले भक्तिरेव सदास्तु मे।
संसारामयतप्तानां भेषजं भक्तिरेव ते ॥२१

**अत इति**—यतस्ते भक्तिः संसारामयतप्तानां भेषजमतः इत्यन्वयः।२०-२१

इति ब्रुवन्तं ब्रह्माणं बभाषे भगवान् हरिः।
किं करोमीति तं वेधाः प्रत्युवाचातिहर्षितः ॥२२

**इतीति**—अन्तर्यामितया ब्रह्मणोऽभिप्रायं ज्ञात्वाऽपि हरिः वरं याचस्वेति वचो विहाय किं करोमीत्युक्त्या त्वयैव रावणस्य सर्वावध्यत्वं दत्तम् अहं किं करोमि इति भगवतोऽभिप्रायो व्यज्यते। अथ वेधाः प्रत्युवाच तद्वधोपायभूतं प्रत्युत्तरमाह।२२

भगवन्! रावणो नाम पौलस्त्यतनयो महान्।
राक्षसानामधिपतिर्मद्दत्तवरदर्पितः ॥२३

त्रिलोकीं लोकपालांश्च बाधते विश्वबाधकः।
मानुषेण मृतिस्तस्य मया कल्याण! कल्पिता।
अतस्त्वं मानुषो भूत्वा जहि देवरिपुं, प्रभो! ॥२४

**मानुषेणेति**—मानुषेण तस्य मृतिः कल्पिता तस्य सर्वावध्यत्वेऽपीति भावः। यतः सामान्यमनुष्यतस्तस्य मृत्युर्नास्ति अतः मानुषो भूत्वा 'परमात्मा नराकृतिः', 'आत्मानं मानुषं मन्ये रामं दशरथात्मजम्', 'मानवाकृतिरीश्वर' इत्यादि स्मृतिप्रतिपाद्यो नित्य-साकेतविहारी यः श्रीरामः तदाविष्टो भूत्वेत्यर्थः। अत्रेदं बोध्यम् 'विष्णुचक्रनिपातैश्च शतशो देवसंयुगे' इत्याद्युक्तेः नित्यसाकेतविहारिद्विभुजश्रीरामचन्द्रावेशमन्तरा केवलेन श्रीविष्णुना त्वया रावणवधो न शक्यः। अयोध्यां तु परित्यज्य स क्वचिन्नैव गच्छतीत्यादि प्रमाणेन वाङ्मनसगोचरस्य तस्यान्यत्र गमनासम्भवात्। तदावेशं त्वमेव गृहीत्वा रावणं जहीति अस्मदादिभिस्तद्वधस्याशक्यत्वाच्च। विदितमानुषाविष्टेनैव तद्वधस्य निश्चितत्वा-न्मानुषेण मृतिरित्युक्तम्। देवरिपुं जहि कल्याणेत्यनेन पालनकर्मणा जगत्कल्याणरूपस्त्वं श्रीरामावेशेन तं हत्वा तस्यापि कल्याणं विधेहीति व्यज्यते।२४

**श्रीभगवानुवाच**—

कश्यपस्य वरो दत्तस्तपसा तोषितेन मे।
याचितः पुत्रभावाय तथेत्यङ्गीकृतं मया ॥२५

**कश्यपस्येति**—कश्यपस्य तपसा तोषितेन मया तस्मै वरो दत्तः यत्त्वं याचिष्यसे तत्तुभ्यं दास्यामीत्येवंरूपः तदा तेनाहं पुत्रभावं याचितः मया च तथेत्यङ्गीकृतम्।२५

स इदानीं दशरथो भूत्वा तिष्ठति भूतले।
तस्याहं पुत्रतामेत्य कौसल्यायां शुभे दिने ॥२६

**स इति**—सः कश्यपः दशरथो भूत्वा, नित्यविहारिश्रीरामः आवेशेनावतरिष्यतीति श्रीरामावेशप्रादुर्भावे प्रादुर्भवन्तीति वशिष्ठसंहितादिरामायणादिषु स्पष्टमुक्तं, तदत्रानुसन्धेयम्। अहं तस्य पुत्रतामेत्य शुभे दिने कौशल्यायाम्।२६

चतुर्धात्मानमेवाहं सृजामीतरयोः पृथक्।
योगमायापि सीतेति जनकस्य गृहे तदा।
उत्पत्स्यते तया सार्धं सर्वं सम्पादयाम्यहम्॥२७

**चतुर्धेति**—इतरयोः सुमित्राकैकेय्योः अहं परनारायणः आत्मानं परनारायण-रमावैकुण्ठनारायणक्षीराब्धीशनारायणभूमनारायणरूपं मदीयस्वरूपं रामभरतलक्ष्मण-शत्रुघ्नावेशेन चतुर्धा सृजामि आविर्भावयिष्यामि। अनेन त्वदभिप्रायं ज्ञात्वा त्वद्विज्ञापना-त्पूर्वमेव रामं प्रार्थ्य दशरथकौशल्यादिसकलपरिकरमवतार्य स्वयमपि रामावेशेन यातीति। योगमाया अतएव सीतावेशेन सीतेति प्रसिद्धा सापि तदा मदाविर्भावोत्तरकाले जनकस्य गृहे उत्पत्स्यते आविर्भविष्यति तया सार्धमहं सर्वं सम्पादयिष्यामि सैव मम सकलकार्यसाधनभूतेति भावः।२७

इत्युक्त्वान्तर्दधे विष्णुर्ब्रह्मा देवानथाब्रवीत्।
विष्णुर्मानुषरूपेण भविष्यति रघोः कुले॥२८
यूयं सृजध्वं सर्वेऽपि वानरेष्वंशसंभवान्।
विष्णोः सहायं कुरुत यावत्स्थास्यति भूतले॥२९

**यूयमिति**—स्वांशसम्भवान् सुग्रीवाद्यंशसम्भवान् सूर्यादीन् सर्वान् स्वांशैः वानरेषु स्वस्यावतारेषु श्रीरामावेशावतारं ज्ञात्वा पूर्वमेवावतीर्णेषु श्रीरामनित्यपरिकरस्थितेषु सुग्रीवादिषु सृजध्वं संसृजध्वं श्रीरामं सेवितुं तेषु लीनान् कुरुध्वमित्यर्थः। यथाश्रुतार्थे रामावतारापेक्षयाऽनेकवर्षसहस्रपूर्वकाले उत्पन्नानां सुग्रीवादीनां रामावतारसमये देवान् प्रति यूयं सृजध्वमिति ब्रह्मणा सृष्टेराज्ञापनं न संगच्छते इति बोध्यम्।२९

देवाश्च सर्वे हरिरूपधारिणः स्थिताः सहायार्थमितस्ततो हरेः।
महाबलाः पर्वतवृक्षयोधिनः प्रतीक्षमाणा भगवन्तमीश्वरम्॥३०

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
बालकाण्डे द्वितीयोऽध्यायः।२

**देवाश्चेति**—इतस्ततः पर्वतोपवनेषु

[1]इति श्रीसिद्धिश्रीमहाराजाधिराज श्रीमहाराज श्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां बालकाण्डे
द्वितीयोऽध्यायः।२

⊙

१. इति श्रीअध्यात्मरामायणे ध्वनिप्रकाशिकायां द्वितीयोऽध्यायः।
२. पुष्पिकेयं रामवनपुस्तकस्था।

## अथ तृतीयोऽध्यायः

**श्रीमहादेव उवाच—**

अथ राजा दशरथः श्रीमान्सत्यपराक्रमः ।
अयोध्याधिपतिर्वीरः सर्वलोकेषु विश्रुतः ॥१

अथ श्रीरामादिप्रादुर्भावं प्रस्तौति अथेति—

सोऽनपत्यत्वदुःखेन पीडितो गुरुमेकदा ।
वसिष्ठं स्वकुलाचार्यमाहूयेदमभाषत ॥२
स्वामिन् ! पुत्राः कथं मे स्युः सर्वलक्षणलक्षिताः ।
पुत्रहीनस्य मे राज्यं सर्वं दुःखाय कल्पते ॥३
ततोऽब्रवीद्वसिष्ठस्तं भविष्यन्ति सुतास्तव ।
चत्वारः सत्त्वसम्पन्ना लोकपाला इवापराः ॥४

**तत इति**—अपराः न परः उत्कृष्टो येभ्यस्ते तादृशास्तव चत्वारः सुताः लोकपाला इव भविष्यन्ति । अयं भावः यथा लोकपाला देवदृश्याः तथा मनोवचनागोचरा अपि ते सुताः सर्वदृश्याः सन्तः लोकान् पालयिष्यन्तीति ।४

शान्ताभर्तारमानीय ऋष्यशृङ्गं तपोधनम् ।
अस्माभिः सहितः पुत्रकामेष्टिं शीघ्रमाचर ॥५

**शान्तेति**—शान्ताभर्तारमानीय रामायणप्रवाहानादित्वेन पूर्वरामायणेषु ऋषिशृङ्ग-द्वारैव श्रीरामप्रादुर्भावस्य विश्रुतत्वेन सर्वज्ञेन वसिष्ठेन तथाज्ञप्तमिति बोध्यम् ।५

तथेति मुनिमानीय मन्त्रिभिः सहितः शुचिः ।
यज्ञकर्म समारेभे मुनिभिर्वीतकल्मषैः ।६
श्रद्धया हूयमानेऽग्नौ तप्तजाम्बूनदप्रभः ।
पायसं स्वर्णपात्रस्थं गृहीत्वोवाच हव्यवाट् ॥७

गृहाण पायसं दिव्यं पुत्रीयं देवनिर्मितम्।
लप्स्यसे परमात्मानं पुत्रत्वेन न संशयः॥८
इत्युक्त्वा पायसं दत्त्वा राज्ञे सोऽन्तर्दधेऽनलः।
ववन्दे मुनिशार्दूलौ राजा लब्धमनोरथः॥९

**इत्युक्त्वेति**—मुनिशार्दूलौ वसिष्ठऋष्यशृङ्गौ।९

वसिष्ठऋष्यशृङ्गाभ्यामनुज्ञातो ददौ हविः।
कौसल्यायै सकैकेय्यै अर्धमर्धं प्रयत्नतः॥१०
ततः सुमित्रा सम्प्राप्ता जगृध्नुः पौत्रिकं चरुम्।
कौसल्या तु स्वभागार्धं ददौ तस्यै मुदान्विता॥११

**तत इति**—पौत्रिकं, पुत्रः प्रयोजनमस्येति विग्रहः। स्वभागार्धम् स्वस्य स्वकीयस्य चरोर्भागात् अर्धं चतुर्थांशमित्यर्थः जगृध्नुः। भृशं तदिच्छावती गृधु अभिकाङ्क्षायामित्यतो यङ्लुङन्तागमशास्त्रानित्यत्वेन रुगभावे 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नौ रूपम्।११

कैकेयी च स्वभागार्धं ददौ प्रीतिसमन्विता।
उपयुज्य चरुं सर्वाः स्त्रियो गर्भसमन्विताः॥१२

**कैकेयीति**—ननु परमात्मनो गर्भवासासम्भव इत्यत आह—उपयुज्य चरुमिति-गर्भसमन्विताः तासां चरुरेव गर्भरूपेणावतस्थे। परमात्मनः आविर्भावस्तु स्वेच्छयैवाभूदिति भावः।१२

देवता इव रेजुस्ताः स्वभासा राजमन्दिरे।
दशमे मासि कौसल्या सुषुवे पुत्रमद्भुतम्॥१३

**देवतेति**—सुषुवे प्रादुरभावयत्।१३

मधुमासे सिते पक्षे नवम्यां कर्कटे शुभे।
पुनर्वस्वृक्षसहिते उच्चस्थे ग्रहपञ्चके॥१४

कदा प्रादुरासीदित्याकाङ्क्षायामाह, **मध्विति**—मधुमासे चैत्रे सिते शुक्ले कर्कटे शुभे लग्ने पुनर्वस्वृक्षसहिते पुनर्वसुनक्षत्रसहिते इति कर्कटे लग्ने विशेषणं ग्रहपञ्चके रविभौमगुरुशुक्रशनिरूपे तदुच्चस्थानानि च क्रमेण मेषमकरकर्कमीनतुलाख्यानि।१४

मेषं पूषणि सम्प्राप्ते पुष्पवृष्टिसमाकुले।
आविरासीज्जगन्नाथः परमात्मा सनातनः॥१५

**मेषमिति**—जगन्नाथः जगतामनेककोटिब्रह्माण्डानां नाथः आदिनारायणः सनातनः परमात्मा 'परमात्मा नराकृति' रिति श्रुत्युक्तवाङ्मनसगोचरनित्यसाकेतविहारिद्विभुज-श्रीरामावेशयुतः सन् आविरासीत् आविर्बभूव। ननु प्रतीयमानमर्थं विहाय श्रीरामो नारायण आविश्य प्रादुरासेत्यादिक्लिष्टकल्पना किमर्थं क्रियत इति चेच्छृणु 'ज्ञात्वा स्वपार्षदौ जातौ राक्षसप्रवरौ प्रिये। तदा नारायणः साक्षाद्रामरूपेण जायते॥ प्रतापी राघवसखा भ्रात्रा वै सह रावणः। राघवेण तदा साक्षात् साकेतादवतीर्यत।' इति सदाशिव-संहितोक्त्या यद्यपि नारायणोऽपि स्वपार्षदयो रावणकुम्भकर्णत्वप्राप्तिकाले रामरूपेणा-वतरति रामोऽपि प्रतापीनाम्नो निजसखस्य रावणत्वप्राप्तिकाले नारायणे आविश्य अवतरति तथापि प्रकृते पार्वतीप्रश्नस्य श्रीरामविषयत्वात् नामकरणात् प्रागेव रघूत्तमेति रामेति सम्बोधनाच्च स एव तस्मिन् आवेशेनाविर्भूत इत्यवधेयम्। एवं चास्मिन्कल्पे स एव प्रतापी रावणो जात इति बोध्यम्। अनेन स्वाभाविकस्वनामरूपधामलीलादीनाम् अवाङ्मनसगोचरतया स्वाविष्टनारायणनामरूपलीलादिभिस्तेषामभिव्यक्तिर्भवत्विति भगवतो रामचन्द्रस्याशयः ध्वनितः।१५

नीलोत्पलदलश्यामः पीतवासाश्चतुर्भुजः।
जलजारुणनेत्रान्तः स्फुरत्कुण्डलमण्डितः॥१६

कौशल्यायाः अनन्यद्विभुजोपासनं लोके स्वस्य गर्भसम्बन्धानर्हत्वं दर्शयितुं प्रथमं चतुर्भुजरूपेण प्रादुर्भूत इत्याह—**नीलोत्पलेत्यादि**—।१६

सहस्रार्कप्रतीकाशः किरीटी कुञ्चितालकः।
शङ्खचक्रगदापद्मवनमालाविराजितः॥१७
अनुग्रहाख्यहृत्स्थेन्दुसूचकस्मितचन्द्रिकः।
करुणारससम्पूर्णविशालोत्पललोचनः।
श्रीवत्सहारकेयूरनूपुरादिविभूषणः॥१८
दृष्ट्वा तं परमात्मानं कौसल्या विस्मयाकुला।
हर्षाश्रुपूर्णनयना नत्वा प्राञ्जलिरब्रवीत्॥१९

**कौशल्योवाच—**

देवदेव! नमस्तेऽस्तु शङ्खचक्रगदाधर!।
परमात्माऽच्युतोऽनन्तः पूर्णस्त्वं पुरुषोत्तमः॥२०

**देवदेवेति**—हे शङ्खचक्रगदाधर! सम्प्रति चतुर्भुजत्वेन प्रतीयमान हे देवदेव! ते तुभ्यं नमोऽस्तु परमात्मा 'अक्षरं ब्रह्म परममिति' गीतोक्तेः। परमं स्वप्रकाशभूतं ब्रह्म तस्याप्यात्मा 'यस्य भासा सर्वमिदं विभातीति' श्रुतेः। अनन्तः अनन्तदिव्यकल्याणगुणः यद्वा आदिमध्यान्तरहितः 'अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघवेति' वाल्मीकीयोक्तेः। पूर्णः स्वप्रकाशभूतब्रह्मद्वारेत्यर्थः 'यदद्वैतं ब्रह्म यस्य तनुमेति' श्रुतेः। ईदृशः पुरुषोत्तमः द्विभुजः श्रीराम एव त्वम्।२०

वदन्त्यगोचरं वाचां बुद्ध्यादीनामतीन्द्रियम्।
त्वां वेदवादिनः सत्तामात्रं ज्ञानैकविग्रहम्॥२१

**वदन्तीति**—वेदवादिनः त्वां वाचां बुद्ध्यादीनां चाऽगोचरं वदन्ति। तत्र हेतुगर्भ-विशेषणानि अतीन्द्रियं सत्तामात्रं सर्वत्र सम्बन्धात्सदितिव्यवहारोपपादकं 'सर्वाः प्रजाः सदायतनाः' इति श्रुतेः। ज्ञानैकविग्रहं 'सत्यं ज्ञानमनन्तं ब्रह्मेति' श्रुतेः।२१

त्वमेव मायया विश्वं सृजस्यवसि हंसि च।
सत्त्वादिगुणसंयुक्तस्तुर्य एवामलः सदा॥२२

**त्वमिति**—सत्त्वादिगुणसंयुक्तः तत्तद्गुणयुक्तब्रह्मविष्णुरुद्ररूपः मायया विश्वं सृजसि अवसि हंसि च तथापि त्वं सदा अमलः मायागुणास्पृष्टः तुर्य एव ब्रह्मादीनां त्रयाणाम-प्यन्तर्यामितया चतुर्थः।२२

करोषीव न कर्ता त्वं गच्छसीव न गच्छसि।
शृणोषि न शृणोषीव पश्यसीव न पश्यसि॥२३

अमलत्वेन सूचितन्निर्लेपत्वं स्फुटयति **करोषीति**—'अपाणिपादो जवनोग्रहीतेत्यादि' श्रुतेः। सगुणनिर्गुणोभयधर्माणां त्वयि दृश्यत्वात् तयोरंगीति फलितम्।२३

अप्राणो ह्यमनाः शुद्ध इत्यादिश्रुतिरब्रवीत्॥२४

निर्विकारित्वे श्रुत्युक्तं हेतुमाह—**अप्राण इति**—जीववत्प्राणाद्युपाधिसहितो न भवसि आनन्दरूपत्वादिति भावः। 'आनन्दरूपममृतं यद्विभाति' 'तदप्रणखादानन्दमेवे'ति श्रुतेः।२४

समः सर्वेषु भूतेषु तिष्ठन्नपि न लक्ष्यसे।
अज्ञानध्वान्तचित्तानां व्यक्त एव सुमेधसाम्।
जठरे तव दृश्यन्ते ब्रह्माण्डाः परमाणवः॥२५

**सम इति**—सर्वेषु भूतेषु समस्तिष्ठन् अपि अज्ञानध्वान्तचित्तानाम् अज्ञानमेव ध्वान्तं तच्चित्ते येषां तेषां शेषे षष्ठी, तैर्न लक्ष्यसे। सुमेधसां तत्त्वज्ञानां व्यक्त एव 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति' श्रुतेः। यस्य तव जठरे ब्रह्माण्डाः परमाणव इव दृश्यन्ते।२५

त्वं ममोदरसम्भूत इति लोकान्विडम्बसे।
भक्तेषु पारवश्यं ते दृष्टं मेऽद्य रघूत्तम! ॥२६

**त्वमिति**—एकैकविश्वादिसहितानन्तकोटिब्रह्माण्डाधारो हरः त्वं ममोदरसम्भूत इति चतुर्भुजरूपं दर्शयित्वा विडम्बसे लोकान्वंचयसे। यद्वा चतुर्भुजादिनारायणे आवेशेन सनातनवाङ्मनसगोचरातीतश्रीरामस्येयं सनातननीतिः मम माहात्म्यं ख्यापयसि तेन ते गर्भसम्बन्ध इति व्यक्तं प्रत्यक्षत्वं हरेर्जन्मनो विकारः कथञ्चन विचार एव 'जननं पञ्चभूतेषु दृश्यत' इति पाद्मे। एतत् मया ज्ञानमित्याह भक्तिरिति। हे रघूत्तम! श्रीराम! ते तव भक्तेः पारवश्यं मया दृष्टं 'तमीश्वराणां परमं महेश्वरमि'त्यादि श्रुति-प्रतिपाद्यः श्रीरामः त्वं मम पुत्रत्वं प्राप्नोषीति मम अहोभाग्यमिति भावः।२६

संसारसागरे मग्ना पतिपुत्रधनादिषु।
भ्रमामि मायया तेऽद्य पादमूलमुपागता ॥२७

**संसारेति**—पतिपुत्रधनादिषु मग्नाहं संसारसागरे तव मायया भ्रमामि। अद्य तव पादमूलमुपागतेति शब्दशक्त्या तव मायया यथाऽन्ये भ्रमन्ति तथाहं न भ्रमामीति तेनाहं कर्मसम्बन्धरहिता सनातनी तव जननीति बोध्यवैशिष्ट्ये न व्यज्यते।२७

देव! तद्रूपमेतन्मे सदा तिष्ठतु मानसे।
आवृणोतु न मां माया तव विश्वविमोहिनी ॥२८

एतदेव सहेतुकं स्पष्टमाह **देवेति**—एतत् मम बुद्धिसन्निहितं वक्ष्यमाणं त्वद्रूपं द्विभुजं धनुर्बाणधरं सदा मे मानसे तिष्ठतु तिष्ठति, अत विश्वमोहिनी तव माया मां न आवृणोतु न आवृणोति। उभयत्र 'व्यत्ययो बहुलम्' इत्यनुशासनात् लङर्थे लोट्।२८

उपसंहर विश्वात्मन्नदोरूपमलौकिकम्।
दर्शयस्व महानन्दबालभावं सुकोमलम् ॥२९

**उपेति**—अदः मद्भक्तिपरीक्षार्थं प्रकटितम् अलौकिकं लोकलक्षणं चतुर्भुजमित्यर्थः। उपसंहर तिरोभावय। एतेन य एव रूपान्तरमाविर्भावयति स एव तिरोभावयतीति व्यज्यते। तेन नारायणाविष्टनिजोपास्यद्विभुजश्रीरामप्रार्थनेति व्यज्यते। दर्शयस्वेति

महानन्दस्य आनन्दघनस्य निजद्विभुजरूपस्य न तु चतुर्भुजस्य आनन्दरूपममृतं यद्विभाति", 'तदप्रणखादानन्दमेवेति' श्रुतेः सुकोमलं बालभावं दर्शय।२९

ललितालिङ्गनालापैस्तरिष्याम्युत्कटं तमः।

**श्रीभगवानुवाच--**

यद्यदिष्टं तवास्त्यम्ब! तत्तद्भवतु नान्यथा॥३०

**ललितेति**—ललितैर्मनोहरैरालिङ्गनालापैः एतेन स्वस्य वात्सल्यरसाधिकारिता सूचिता। तरिष्यामीत्यनेन ज्ञानवैराग्यादिनैरपेक्ष्यं सूच्यते। यद्यदिष्टमिति। एतेन यथाहं सत्यसंकल्पस्तथा मद्भक्ता अपीति व्यज्यते।३०

अहं तु ब्रह्मणा पूर्वं भूमेर्भारापनुत्तये।
प्रार्थितो रावणं हन्तुं मानुषत्वमुपागतः॥३१

यत्त्वया प्रार्थितं तन्मयैव पूर्वमेव सम्पादितमित्याह **अहं त्विति**—मानुषत्वं श्रीराम-भावमुपागतः श्रीरामावेशं गृहीतवानित्यर्थः।३१

त्वया दशरथेनाहं तपसाराधितः पुरा।
मत्पुत्रत्वाभिकाङ्क्षिण्या तथा कृतमनिन्दिते॥३२

**त्वयेति**—कौशल्यादशरथलीनादिति कश्यपाभिप्रायेणोक्तम्। अहं पुत्रो यस्यास्तद्-भावो मत्पुत्रत्वम्।३२

रूपमेतत्त्वया दृष्टं प्राक्तनं तपसः फलम्।
मद्दर्शनं विमोक्षाय कल्पते ह्यन्यदुर्लभम्॥३३

**रूपमिति**—प्राक्तनं तपसः फलभूतम् एतद्रूपं त्वया दृष्टम् तेन तपसः फलं चतुर्भुजरूप-दर्शनं त्वया लब्धम्। सम्प्रति त्वत्प्रेमपरतन्त्रोऽहं मनोवचनागोचरमपि द्विभूजरूपं दर्शयिष्यामीति व्यज्यते। अन्येषां भक्तिहीनानां दुर्लभम्। 'भक्तिरेवैनं नयति' 'भक्तिवशः पुरुष' इति श्रुतेः।३३

संवादमावयोर्यस्तु पठेद्वा शृणुयादपि।
स याति मम सारूप्यं मरणे मत्स्मृतिं लभेत्॥३४
इत्युक्त्वा मातरं रामो बालो भूत्वा रुरोद ह।
बालत्वेऽपीन्द्रनीलाभो विशालाक्षोऽतिसुन्दरः॥३५

**इत्युक्त्वेति**—इत्युक्त्वा मातरं रामो बालो भूत्वा रुरोद। अत्र नामकरणात्पूर्वमेव रामो बालो भूत्वेति कथनात् राम एव आवेशेन चतुर्भुजरूपेण दर्शनं दत्तवानित्यवधेयम्।३५

बालारुणप्रतीकाशो लालिताखिललोकपः।
अथ राजा दशरथः श्रुत्वा पुत्रोद्भवोत्सवम्।
आनन्दार्णवमग्नोऽसावाययौ गुरुणा सह।।३६

**बालारुणप्रतीकाश इति**—अतएव लालिताखिललोकपः यथा रवेरुदयमात्रेण त्रिभुवनं प्रकाशितं भवति तथा श्रीरामाविर्भावं ज्ञात्वा रावणो हतप्राय इति निर्भया बभूवुरिति व्यज्यते। चतुर्भुजरूपदर्शने, ईदृशप्रकाशानुक्तेर्द्विभुजरूपस्यातिशयो व्यक्तः। अथेति। राजा दशरथः पुत्रोद्भवोत्सवं श्रुत्वा अत्र पुत्रोद्भवमिति वक्तव्ये उत्सवकथनेन यमुदन्तानयनाय प्रेषितवान् स श्रीरामरूपदर्शनजनितानन्दमग्नत्वात् तत्रैव विलम्बे। अतो देववादितदुन्दुभिध्वानाप्सरसो नर्तनैर्गन्धर्वगानैः शृंगादिध्वनिभिः पुष्पवर्षणैः पुत्रजन्मावगतवानिति व्यज्यते।३६

रामं राजीवपत्राक्षं दृष्ट्वा हर्षाश्रुसंप्लुतः।
गुरुणा जातकर्माणि कर्तव्यानि चकार सः।।३७

**राममिति**—गुरुणा चकार कारयामास। अनेन तस्यानन्दमग्नतया शरीरविस्मृतिरभूदिति व्यज्यते।३७

कैकेयी चाथ भरतमसूत कमलेक्षणम्।
सुमित्रायां यमौ जातौ पूर्णेन्दुसदृशाननौ।।३८

**कैकेयीति**—चैत्रशुक्ले नवम्यां श्रीरामः दशम्यां भरतः एकादश्यां लक्ष्मणशत्रुघ्ना[1]भूदिति बोध्यम्। एतच्च रामायणे भूषणे स्पष्टम्।३८

तदा ग्रामसहस्राणि ब्राह्मणेभ्यो मुदा ददौ।
सुवर्णानि च रत्नानि वासांसि सुरभीः शुभाः।।३९
यस्मिन् रमन्ते मुनयो विद्ययाऽज्ञानविप्लवे।
तं गुरुः प्राह रामेति रमणाद्राम इत्यपि।।४०

**यस्मिन्निति**—मुनयः मननशीलाः विद्यया ज्ञानेन अज्ञानविप्लवे नाशे सति यस्मिन् रमन्ते अहं जीवः श्रीरामस्यैव दास इति मत्वा यत्र प्रेम विदधतीत्यर्थः। 'स्याज्जीवनेच्छा

---

१. बभूवन्निति समीचीनः।

यदि ते, स्वसत्तायां स्पृहा यदि, आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मरेति' ।। स्मृतेः। तं गुरुर्वसिष्ठः राम इति प्राह। योगान्तरमाह रमणात् मुक्तानां स्वभक्तानां रासमण्डल-गतानां रमणात् राम इत्यपि योग इति शेषः। रमणं रामः भावे घञ् तत् करोति रामयति तत्करोतीति णिच् रामयतीति रामः णिजन्तादच् तथा च रासमण्डले रमते रासमण्डलगतान् भक्तान् रमयतीति फलितोऽर्थः। अनेन रामोपासकः रासमण्डलं प्राप्य तेन सह रमते इति व्यज्यते। 'तेन शुको मुक्तो वामदेव' इति श्रुतेर्मुक्तस्य शुकस्य 'तमुवाच प्रियारूपं लब्धवन्तं शुकं हरिः। त्वं मे प्रियतमा भद्रे ! सदा तिष्ठ ममान्तिके ।।' इति स्मृतेः रासमण्डलप्राप्त्य-वगमात्, आत्यन्तिकमुक्तिं गतानां रासमण्डलमेव प्राप्यमिति सिद्धान्तः सूचितः। तस्य रामेति नाम चकारेति वक्तव्ये रामेति तं प्राहेत्यनेन रामनाम्नोऽनादिसिद्धत्वं सूचितम्। ४०

भरणाद्भरतो नाम लक्ष्मणं लक्षणान्वितम्।
शत्रुघ्नं शत्रुहन्तारमेवं गुरुरभाषत ।।४१

**भरणादिति**—भरणाद्धारणात्पोषणाच्च गृहीतभरतावेशः रमावैकुण्ठनिवासि-नोऽयमवतीर्णः इति सूचितम्। 'वैकुण्ठेशस्तु भरतः क्षीराब्धीशश्च लक्ष्मणः। शत्रुघ्नश्च स्वयं भूमा रामसेवार्थमागता।' इति पञ्चरात्रोक्तेः। लक्ष्मणमिति लक्षणैः शंखचक्रा-दिभिरन्वितम्। एतेन शंखचक्रादियुक्तः गृहीतलक्ष्मणावेशः शेषशायिनारायणः संकर्षण-श्चावतीर्ण इति सूचितम्। शत्रुघ्नमिति शत्रुहन्तारं शत्रुविनाशपूर्वकसकलजगत्पालकत्वेन गृहीतशत्रुघ्नावेशो भूमनारायणोपमोऽयमाविर्भूत इति सूचितम्।४१

लक्ष्मणो रामचन्द्रेण शत्रुघ्नो भरतेन च।
द्वन्द्वीभूय चरन्तौ तौ पायसांशानुसारतः ।।४२

**लक्ष्मण इति**— पायसांशानुसारतः पायसे योंऽशः भगवदंशः तदनुसारतः तारतम्यात् कौशल्यादत्तपायसभगवदंशानुसारतः लक्ष्मणः श्रीरामानुचरः एवं कैकेयीदत्तपायसगत-भगवदंशानुसारतः शत्रुघ्नो भरतानुचरः।४२

रामस्तु लक्ष्मणेनाथ विचरन्बाललीलया।
रमयामास पितरौ चेष्टितैर्मुग्धभाषितैः ।।४३
भाले स्वर्णमयाश्वत्थपर्णमुक्ताफलप्रभम्।
कण्ठे रत्नमणिव्रातमध्यद्वीपिनखाञ्चितम् ।।४४

**भाल इति**—स्वर्णमयाश्वत्थपर्णस्य प्रान्ते संयुक्तानि यानि मुक्ताफलानि तैः प्रभासो यस्य तम् इत्यादि सकलभूषणभूषितमित्यर्थः।४४

कर्णयोः　　स्वर्णसम्पन्नरत्नार्जुनसटालुकम् ।
शिञ्जानमणिमञ्जीरं　　कटिसूत्राङ्गदैर्वृतम् ।।४५
स्मितवक्त्राल्पदशनमिन्द्रनीलमणिप्रभम्　　।
अङ्गणे रिङ्गमाणं तं तर्णकाननु सर्वतः ।।४६

**स्मितेति**—तर्णकान् गोवत्सान् अनु पश्चात् तत्पुच्छप्रान्तधारणपूर्वकमंगणे [1]सर्वतो रिङ्गने सर्वतो रिङ्गमाणं परितो बालगत्या खेलन्तम्। एतेन दर्शनार्थं स्थितगोवत्सानां धर्मरूपत्वात् धर्मस्तस्यातिप्रेष्ठ इति व्यज्यते।४६

दृष्ट्वा दशरथो राजा कौसल्या मुमुदे तदा।
भोक्ष्यमाणो दशरथो राममेहीति चासकृत् ।।४७

**दृष्ट्वेति**—ईदृशं श्रीरामं दृष्ट्वा दशरथः कौशल्या च मुमुदे। एतेन मत्पुत्रो बाल्यादेवातिनिर्भय इति व्यज्यते।४७

आह्वयत्यतिहर्षेण　प्रेम्णा नायाति लीलया।
आनयेति च कौसल्यामाह सा सस्मिता सुतम् ।।४८

**आह्वयतीति**—प्रेम्णाऽऽहूतेऽपीति शेषः। लीलया खेलासक्त्या नायाति। एतेन भोजनतः खेलनमधिकं मन्यते इति व्यज्यते।४८

धावत्यपि न शक्नोति स्प्रष्टुं योगिमनोऽगतिम्।
प्रहसन् स्वयमायाति कर्दमाङ्कितपाणिना ।।४९

**धावतीति**—योगिनो मनोऽगतिं योगिमनसामविषयम् ईदृशं जानत्यपि धावतीत्यनेन वत्सलतया तदैश्वर्यं विस्मृतवतीति व्यज्यते। तेन च ज्ञानयोगाभ्यां भक्तेराधिक्यमिति व्यज्यते। स्वयमायातीत्यनेन तस्य भक्तिपरतन्त्रत्वं सूचितम्। कर्दमाङ्कितपाणिना एतेन राजमन्दिरस्य मणिमयतया कर्दमासम्भवात् श्रीरामचरणस्पर्शेन पृथिव्या द्रवीभावो व्यज्यते। तेन चायोध्यायाः रसरूपत्वं व्यज्यते।४९

किञ्चिद् गृहीत्वा कवलं पुनरेव पलायते।
कौशल्या जननी तस्य मासि मासि प्रकुर्वती ।।५०

**किञ्चिदिति**—किञ्चित्केवलं गृहीत्वेत्यनेन बालकृताह्वानं व्यज्यते। तेन च तस्य बालकेषु प्रीत्यतिशयः।५०

---

१. सर्वतो रिङ्गने इत्यनावश्यकः।

वायनानि विचित्राणि समलङ्कृत्य राघवम्।
अपूपान्मोदकान्कृत्वा कर्णशष्कुलिकास्तथा।
कर्णपूरांश्च विविधान् वर्षवृद्धौ च वायनम्।।५१
गृहकृत्यं तया त्यक्तं तस्य चापल्यकारणात्।
एकदा रघुनाथोऽसौ गतो मातरमन्तिके।।५२

गृहकृत्यं तया त्यक्तमेतेन तस्याः वात्सल्यातिशयः।५२

भोजनं देहि मे मातर्न श्रुतं कार्यसक्तया।
ततः क्रोधेन भाण्डानि लगुडेनाहनत्तदा।।५३
शिक्यस्थं पातयामास गव्यं च नवनीतकम्।
लक्ष्मणाय ददौ रामो भरताय यथाक्रमम्।।५४
शत्रुघ्नाय ददौ पश्चाद्दधि दुग्धं तथैव च।
सूदेन कथिते मात्रे हास्यं कृत्वा प्रधावति।।५५
आगतां तां विलोक्याथ ततः सर्वैः पलायितम्।
कौसल्या धावमानाऽपि प्रस्खलन्ती पदे पदे।।५६
रघुनाथं करे धृत्वा किञ्चिन्नोवाच भामिनी।
बालभावं समाश्रित्य मन्दं मन्दं रुरोद ह।।५७

**रघुनाथमिति**—भामिनी कोपवती सत्यपि किञ्चिन्नोवाचेत्यनेन श्रीरामकृतोऽपकारोऽपि तस्या आनन्दजनक एवाभूदिति व्यज्यते। तेन च अन्यत्परमवात्सल्याधिकारिणीभ्यः कौशल्याया वात्सल्यातिशयः।५७

ते सर्वे लालिता मात्रा गाढमालिङ्ग्य यत्नतः।
एवमानन्दसन्दोहजगदानन्दकारकः ।।५८
मायाबालवपुर्धृत्वा रमयामास दम्पती।
अथ कालेन ते सर्वे कौमारं प्रतिपेदिरे।।५९
उपनीता वसिष्ठेन सर्वविद्याविशारदाः।
धनुर्वेदे च निरताः सर्वशास्त्रार्थवेदिनः।।६०

**माययेति**—मायया कृपया बालवपुर्धृत्वा कौमारमन्तिमकौमारम्। उपनीता इत्यनेन उपनयनपूर्वकसर्वविद्यादानं सूचितम्।५९-६०

बभूवुर्जगतां नाथा लीलया नररूपिणः।
लक्ष्मणस्तु सदा राममनुगच्छति सादरम् ॥६१
सेव्यसेवकभावेन शत्रुघ्नो भरतं तथा।
रामश्चापधरो नित्यं तूणीबाणान्वितः प्रभुः ॥६२

**बभूवुरिति**—नररूपिणः श्रीरामादयः लीलया जगतां नाथाः बभूवुः। रामादीनां मध्ये कश्चिन्नारायणोऽहं कश्चिद्ब्रह्माहं कश्चिन्महेश्वरोऽहं कश्चिदिन्द्रोऽहं कश्चिद्राजाहम् इति जगदुत्पत्त्यादिकं तेषां लीलैवेति भावः।६१-६२।

अश्वारूढो वनं याति मृगयायै सलक्ष्मणः।
हत्वा दुष्टमृगान्सर्वान् पित्रे सर्वं न्यवेदयत् ॥६३

**अश्वारूढ इति**—मृगयायै वनं यातीत्यनेन पौगण्डावस्था दर्शिता। दुष्टमृगान् व्याघ्रादीन् हत्वा एतेन स्वकीयवाहनेन दुष्टोद्धारबद्धपरिकरोऽभूदिति व्यज्यते। 'ये ये हताश्चक्रधरेण राजन् त्रैलोक्यनाथेन जनार्दनेन। ते ते गतास्तन्निलयं नरेन्द्र! क्रोधोऽपि देवस्य वरेण तुल्यः ॥' इति वाल्मीकीयोक्तेः। पित्रे सर्वं न्यवेदयन् एतेन पितुराज्ञां विना किमपि न करोतीति व्यज्यते। तेन च पितृभक्तिः।६३

प्रातरुत्थाय सुस्नातः पितरावभिवाद्य च।
पौरकार्याणि सर्वाणि करोति विनयान्वितः ॥६४

संक्षेपेण तस्याह्निकमाह **प्रातरिति**—अत्र पूजनादेरनुक्तेस्तस्य स्वयमीशत्वं सूचितम्।६४

बन्धुभिः सहितो नित्यं भुक्त्वा मुनिभिरन्वहम्।
धर्मशास्त्ररहस्यानि शृणोति व्याकरोति च ॥६५
एवं परात्मा मनुजावतारो मनुष्यलोकाननुसृत्य सर्वम्।
चक्रेऽविकारी परिणामहीनो विचार्यमाणे न करोति किञ्चित् ॥६६

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
बालकाण्डे तृतीयोऽध्यायः। ३

⊙

एतदेव स्पष्टयति **एवमिति**—परमात्मा परेषामीश्वराणामप्यात्मा मनुजावतारः मनुजस्य नराकारस्य श्रीरामस्य आवेशावतारः अवस्थान्तरोक्त्या परिणामं वारयन्नाह अविकारीति। अस्यैव व्याख्यानं परिणामहीन इति। मनुष्यलोकाननुसृत्य सर्वं चक्रे। विचार्यमाणे 'रामस्य गुणरूपं च लीलाधाम परात्परम्। एतच्चतुष्टयं विद्धि सच्चिदानन्द-

लक्षणम् ।।' इति वसिष्ठसंहितोक्तेः श्रीरामगुणादीनां नित्यत्वेन तद्रूपत्वेन विचार्यमाणे सति किञ्चिन्न करोति। यस्यां लीलायां बालपौगण्डादिलीला भवन्ति तस्यानित्यत्वेन स्वाभिन्नत्वेन च स्वभिन्नं किञ्चिन्न करोतीति भावः ।६६

[1]इति श्रीसिद्धि　श्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारि विश्वनाथसिंहजूदेव विरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां बालकाण्डे
तृतीयोऽध्यायः ।३



१. इति ध्वनिप्रकाशिकायां तृतीयोऽध्यायः रामवनपुस्तके।

## अथ चतुर्थोऽध्यायः

**श्रीमहादेव उवाच--**

कदाचित्कौशिकोऽभ्यागादयोध्यां ज्वलनप्रभः।
द्रष्टुं रामं परात्मानं जातं ज्ञात्वा स्वमायया॥१

अथ किशोरचरितं वक्तुं विश्वामित्रागमनमाह कदाचिदिति—स्वमायया स्वेषु भक्तेषु मायया कृपया जातमाविर्भूतं रामं ज्ञात्वा तं द्रष्टुमयोध्यामभ्यगात्। ज्वलनप्रभः एतेन राक्षसान् शापेन नाशने नाशयितुं समर्थोऽपि श्रीरामदर्शनार्थमेवागतवानिति व्यज्यते। तेन च ताडकादीनां वधार्थं श्रीरामप्रार्थनं व्याजमात्रमिति व्यज्यते।१

दृष्ट्वा दशरथो राजा प्रत्युत्थायाचिरेण तु।
वसिष्ठेन समागम्य पूजयित्वा यथाविधि॥२
अभिवाद्य मुनिं राजा प्राञ्जलिर्भक्तिनम्रधीः।
कृतार्थोऽस्मि मुनीन्द्राहं त्वदागमनकारणात्॥३
त्वद्विधा यद्गृहं यान्ति तत्रैवायान्ति सम्पदः।
यदर्थमागतोऽसि त्वं ब्रूहि सत्यं करोमि तत्॥४

सत्यं करोमि तत्। एतेन तस्य दानवीरत्त्वं व्यज्यते।४

विश्वामित्रोऽपि तं प्रीतः प्रत्युवाच महीपतिः।
अहं पर्वणि सम्प्राप्ते दृष्ट्वा यष्टुं सुरान्पितृन्॥५
यदारभे तदा दैत्या विघ्नं कुर्वन्ति नित्यशः।
मारीचश्च सुबाहुश्चापरे चानुचरास्तयोः॥६
अतस्तयोर्वधार्थाय ज्येष्ठं रामं प्रयच्छ मे।
लक्ष्मणेन सह भ्रात्रा तव श्रेयो भविष्यति॥७

अत इति—ज्येष्ठमित्यनेन तस्यानादिपुरुषत्वं सूचितम्। 'आत्मैवेदमग्र आसीत्पुरुषविध' इति श्रुतेः। तव श्रेयो भविष्यतीति, एतेनैतस्य विवाहमपि कारयिष्यामीति व्यज्यते।७

वसिष्ठेन सहामन्त्र्य दीयतां यदि रोचते।
पप्रच्छ गुरुमेकान्ते राजा चिन्तापरायणः॥८

**वसिष्ठेनेति**—एतेन वात्सल्यपरतन्त्रो दशरथो न दास्यति वसिष्ठस्तु त्रिकालज्ञः तं बोधयित्वा दापयिष्यत्येवेति व्यज्यते।८

किं करोमि गुरो! रामं त्यक्तुं नोत्सहते मनः।
बहुवर्षसहस्रान्ते कष्टेनोत्पादिताः सुताः॥९
चत्वारोऽमरतुल्यास्ते तेषां रामोऽतिवल्लभः।
रामस्त्वितो गच्छति चेन्न जीवामि कथञ्चन॥१०
प्रत्याख्यातो यदि मुनिः शापं दास्यत्यसंशयः।
कथं श्रेयो भवेन्मह्यमसत्यं चापि न स्पृशेत्॥११

राजोक्तावप्रतिद्वन्द्वि वात्सल्यरससत्यवक्तृत्वे व्यक्ते।११

**वसिष्ठ उवाच—**

शृणु राजन्! देवगुह्यं गोपनीयं प्रयत्नतः।
रामो न मानुषो जातः परमात्मा सनातनः॥१२
भूमेर्भारावताराय ब्रह्मणा प्रार्थितः पुरा।
स एव जातो भवने कौसल्यायां तवानघ!॥१३

**भूमेरिति**—यत्र तव वात्सल्यरसः सः सनातनः मानुषो रामः नित्यायोध्याविहारित्वात् न जातः किन्तु भूमेर्भारावताराय पुरा ब्रह्मणा प्रार्थितो नारायणः रामावेशेन तव भवने जात इत्यन्वयः। तेन तस्य नित्यविहारित्वात् तद्विरहजन्यं दुःखं न विधेयम् इति व्यज्यते। अनघेत्यनेन त्वमपि अस्य प्रादुर्भावाय तत्र स्थितोऽपि त्वं कश्यपे दशरथावेशमात्रेण प्रादुर्भूतः प्राकृतमनुष्यो न भवसि इति सूचितम्।१३

त्वन्तु प्रजापतिः पूर्वं कश्यपो ब्रह्मणः सुतः।
कौशल्या चादितिर्देवमाता पूर्वं यशस्विनी।
भवन्तौ तप उग्रं वै तेपाथे बहु वत्सरम्॥१४

एतदेव विवृणोति, त्वं त्विति सार्धत्रयेण। ब्रह्मणः मरीचेः 'सप्तब्रह्माण एवैते' इति पुराणात्।१४

अग्राम्यविषयौ विष्णुपूजाध्यानैकतत्परौ।
तदा प्रसन्नो भगवान् वरदो भक्तवत्सलः॥१५

अग्राम्यविषयौ ग्राम्यविषयानासक्तौ ।१५

इति त्वया याचितोऽसौ भगवान्भूतभावनः ।
तथेत्युक्त्वाद्य पुत्रस्ते जातो रामः स एव हि ॥१६

**इतीति**—नित्यसाकेतविहारिदशरथावेशयुक्तस्य कश्यपावतारस्य ते स एव नारायणः रामावेशेन जातः।१६

शेषस्तु लक्ष्मणो राजन्! राममेवान्वपद्यत ॥१७

**शेष इति**—शेषस्तु सङ्कर्षणावतारशेषः, तु शब्देन क्षीरशायिनारायणश्च लक्ष्मणावेशयुक्तत्वाल्लक्ष्मणः सङ्कर्षणस्य शेषरूपत्वे 'सङ्कर्षणो महाविष्णुः विद्याबलसमन्वितः। कालस्य सर्वभूतानां रूपस्य च यमस्य च॥ अन्तर्यामित्वमास्थाय जगत् संहरते प्रभुः। स्वयं तु साक्षाद्देवस्य शय्याभूतोऽहिरूपधृक्'।१७

जातौ भरतशत्रुघ्नौ शङ्खचक्रे गदाभृतः ।
योगमायापि सीतेति जाता जनकनन्दिनी ॥१८

**जाताविति**—भरतशत्रुघ्नौ जातौ रमावैकुण्ठनारायणभूमनारायणयोरावेशेनाविर्भूतौ। शङ्खचक्रगदाभृतः आदिनारायणस्य शक्तिभिः सह योगमायामूलप्रकृतिप्रेमारूपा लक्ष्मीरपि सीतावेशयुक्तत्वात् सीता सा एव जनकनन्दिनी जाता। **योगमायेति**—यो नित्यविहारी रामः नारायणे आवेशेनाविर्भूतः तद्वाचकरामशब्दार्थस्तु मत्कृतमंत्रार्थग्रन्थे बोध्यः। यस्या आवेशः प्रेमादिषु तद्वाचकसीताशब्दार्थस्त्वेवं, 'सा च लक्ष्मीः प्रकीर्तिता।' 'अकारो वासुदेवः स्यादाकारश्च पितामहः। ऐकारः स्यान्महेश्वर' इत्येकाक्षरकोशात्। सा च अश्च आश्च ऐश्च एतेषां समाहारः सि लक्ष्मीवासुदेवपितामहमहेश्वरं तत् इता अन्तर्यामितया प्राप्ता सीता लक्ष्म्यादीनामन्तर्यामिनीत्यर्थः।१८

विश्वामित्रोऽपि रामाय तां योजयितुमागतः ।
एतद्गुह्यतमं राजन्न वक्तव्यं कदाचन ॥१९

[1]**विश्वामित्र इति**—तामावेशरूपामावेशरूपाय[2] रामाय योजयितुं विवाहोत्सवे दर्शयितुमित्यर्थः। एतदावेशाविर्भावादिकं कदाचन न वक्तव्यम्। प्राकृतानां राज्ञां गोप्याचरणं तदनुजीविनो [3]न प्रकाशन्ति किमुत परात्परेश्वरेश्वराधिराजस्येति काव्यार्थापत्तिरलङ्कारो व्यज्यते।१९

---

१. तः २. पर्यन्तांशः रा० व० पुस्तकस्थः। ३. न प्रकाशयन्ति इत्युचितः।

अतः प्रीतेन मनसा पूजयित्वाथ कौशिकम्।
प्रेषयस्व रमानाथं राघवं सह लक्ष्मणम्॥२०

अत इति—रमानाथं रामावेशयुतं लक्ष्मीनाथं। तत्र नित्यविहारिणो रामस्य तव वियोगो नास्तीति। जनकगृहे सीतावेशेन लक्ष्मीरवतीर्णा। तत्र विवाहोत्सवेन परमानन्दं प्राप्स्यसीति प्रहर्षणालङ्कारो व्यक्तः।२०

वसिष्ठेनैवमुक्तस्तु राजा दशरथस्तदा।
कृतकृत्यमिवात्मानं मेने प्रमुदितान्तरः॥२१

**वसिष्ठेनेति**—कृतकृत्यमेव। इव शब्द एवार्थे। एतेन तस्य गुरुवचसि विश्वासातिशयो व्यक्तः।२१

आहूय रामरामेति लक्ष्मणेति च सादरम्।
आलिङ्ग्य मूर्ध्न्यवघ्राय कौशिकाय समर्पयत्॥२२

**आहूयेति**—आलिङ्ग्येत्यनेन एतद्रूपं मम हृदये तिष्ठत्विति तदभिप्रायो व्यक्तः।२२

ततोऽतिहृष्टो भगवान् विश्वामित्रः प्रतापवान्।
आशीर्भिरभिनन्द्याथ आगतौ रामलक्ष्मणौ॥२३
गृहीत्वा चापतूणीरबाणखङ्गधरौ ययौ।
किञ्चिद् देशमतिक्रम्य राममाहूय भक्तितः॥२४

**गृहीत्वेति**—रामलक्ष्मणौ गृहीत्वा ययावेतेन दानसमकालमेव चलित इति। तेन च वात्सल्याकुलो दशरथः कदाचिन्न दद्यादिति व्यज्यते।२४

ददौ बलां चातिबलां विद्ये द्वे देवनिर्मिते।
ययोर्ग्रहणमात्रेण क्षुत्क्षामादि न जायते॥२५

**ददाविति**—बलाऽतिबले विद्ये। यथा—बलं धेहि तनुषु नो बलमिन्द्रानडुत्सु नो बलं तोकाय तनयाय जीवसे त्वं हि बलदा असि। इन्द्रोऽतिभिर्बहुलाभिर्नो अधयाच्छ्रेष्ठाभिर्मघवञ्छूरजिन्वयो नो द्वेष्ट्यधरः सस्यदीष्ट यमु द्विष्मस्तमु प्राणो जहातु। [1]अनयोर्मन्त्रयोरर्थः—हे इन्द्र! अनडुत्स्विवति जीविकामात्रोपलक्षणम्। तत्र बलं धेहि। तोकायेति स्त्र्यादेरप्युपलक्षणं तोकाय स्त्रीपुरुषसाधारणाय तनयाय पुत्राय जीवसे जीवितं शेषः स्पष्टः। सर्वेषां दार्ढ्यं हि स्वस्थचित्तो बाह्याभ्यन्तरांश्चारीन् जेतुं क्षमते इति भावः। इन्द्रातिभिर्विभूतिभिर्बहुलाभिर्नोऽस्मान् अघजित्तर्पयायाच्छ्रेष्ठाभिः यान्सु गच्छन्सु

१. तः अग्रिमपृष्ठस्थ १ पर्यन्तभागो नास्ति रा० व० पुस्तके।

ब्रह्मादिषु मध्ये श्रेष्ठाभिः प्रशस्यतमाभिः। हे मघवन् ! हे शूर ! ता एव विभूतीराह नो ऽस्मान् यो द्वेष्टि सः अधरः नीचो भूत्वा यदीष्ट यजतु यम् यं च द्विष्मो वयं तमु तमपि प्राणो जहातु[1]। बला विद्या शरीरसामर्थ्यसम्पादनद्वारेष्टसाधिका, अतिबला तु संकल्पमात्रादिष्टसाधिकेत्याहुः। केचिद्[2] बलातिबलाविद्ययोः स्मृतिद्वयमप्याहुर्यथा 'आपदामपहर्तारं दातारं सर्वसम्पदाम्। लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्। आर्तानामार्तिहर्तारं भीतानां भीतिनाशनम्। भीतोऽहं कालदण्डस्य रामचन्द्रं नमाम्यहम्।' इति। तत्र मन्त्रयोरिन्द्रपदेन इदि परमैश्वर्ये इति धातुस्मरणात् श्रीरामचन्द्र एव बोद्धव्यः[3]।२५

तत उत्तीर्य गङ्गां ते ताडकावनमागमन्।
विश्वामित्रस्तदा प्राह रामं सत्यपराक्रमम्॥२६
अत्रास्ति ताडका नाम राक्षसी कामरूपिणी।
बाधते लोकमखिलं जहि तामविचारयन्॥२७

अविचारयन् स्त्री अवध्येति विचारमकुर्वन्नित्यर्थः।२७

तथेति धनुरादाय सगुणं रघुनन्दनः।
टङ्कारमकरोत्तेन शब्देनापूरयद्वनम्॥२८
तच्छ्रुत्वाऽसहमाना सा ताडका घोररूपिणी।
क्रोधसंमूर्च्छिता राममभिदुद्राव मेघवत्॥२९

असहमानेतिच्छेदः। २९

तामेकेन शरेणाशु ताडयामास वक्षसि।
पपात विपिने घोरा वमन्ती रुधिरं बहु॥३०
ततोऽतिसुन्दरी यक्षी सर्वाभरणभूषिता।
शापात्पिशाचतां प्राप्ता मुक्ता रामप्रसादतः॥३१
नत्वा रामं परिक्रम्य गता रामाज्ञया दिवम्॥३२

**नत्वेति**—दिवं द्योतमानं प्रकाशकब्रह्म 'सिद्धा ब्रह्मसुखे मग्ना दैत्याश्च हरिणा हता' इत्युक्तेः।३२

---

२. तः ३. पर्यन्तभागो न दृश्यते रा० व० पुस्तके।

ततोऽतिहृष्टः परिरभ्य रामं,
मूर्धन्यवघ्राय विचिन्त्य किञ्चित्।
सर्वास्त्रजालं सरहस्यमन्त्रं,
प्रीत्याभिरामाय ददौ मुनीन्द्रः ॥३३

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
बालकाण्डे चतुर्थोऽध्यायः ।४



**तत इति**—किञ्चिद्विचिन्त्य अस्यैवास्त्रादिकमस्मै दातुमुचितमिति विचार्येति भावः ।३३

[1]इति श्रीसिद्धि श्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारि विश्वनाथसिंहजू देवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां बालकाण्डे
चतुर्थोऽध्यायः ।४



---

१. इति ध्वनिप्रकाशिकायां चतुर्थोऽध्यायः। रा० व० पु०।

## अथ पञ्चमोऽध्यायः

**श्रीमहादेव उवाच—**

तत्र कामाश्रमे रम्ये कानने मुनिसङ्कुले।
उषित्वा रजनीमेकां प्रभाते प्रस्थिताः शनैः॥१

**तत्रेति**—तत्र ताडकावधस्थाने कामाश्रमसंज्ञे कामस्य रुद्रेणानङ्गतासम्पादके शनैः प्रस्थिताः। एतेन विश्वामित्रः श्रीरामं पूर्वकथां श्रावयन् तदीयरूपमाधुरीं पश्यन् जगामेति व्यज्यते।१

सिद्धाश्रमं गताः सर्वे सिद्धचारणसेवितम्।
विश्वामित्रेण सन्दिष्टाः मुनयस्तन्निवासिनः॥२
पूजां च महतीं चक्रू रामलक्ष्मणयोर्द्रुतम्।
श्रीरामः कौशिकं प्राह मुने! दीक्षां प्रविश्यताम्॥३
दर्शयस्व महाभाग! कुतस्तौ राक्षसाधमौ।
तथेत्युक्त्वा मुनिर्यष्टुमारेभे मुनिभिः सह॥४

**दर्शयस्वेति**—कुत आगच्छतः कस्मिन् काले इति शेषः। एतेन युद्धोत्साहो व्यक्तः तेन वीररसः।४

मध्याह्ने ददृशाते तौ राक्षसौ कामरूपिणौ।
मारीचश्च सुबाहुश्च वर्षन्तौ रुधिरास्थिनी॥५
रामोऽपि धनुरादाय द्वौ बाणौ सन्दधे सुधीः।
आकर्णान्तं समाकृष्य विससर्ज तयोः पृथक्॥६
तयोरेकस्तु मारीचं भ्रामयञ्छतयोजनम्।
पातयामास जलधौ तदद्भुतमिवाभवत्॥७

**तयोरिति**—तयोः विसृष्टयोः शरयोरेकः मारीचं शतयोजनं भ्रामयन् जलधौ पातयामास। तदद्भुतमिवाभवत्। एतेन जीवन्मारीचद्वारा राक्षसवधकर्तव्यत्वं व्यज्यते। तेन च श्रीरामशराणां श्रीरामेच्छानुकूलत्वं तेन च तेषां चेतनत्वम्।७

द्वितीयोऽग्निमयो बाणः सुबाहुमजयत् क्षणात्।
अपरे लक्ष्मणेनाशु हतास्तदनुयायिनः॥८

अजयत् क्षयमगमयत्।८

पुष्पौघैराकिरन्देवा राघवं सह लक्ष्मणम्।
देवदुन्दुभयो नेदुस्तुष्टुवुः सिद्धचारणाः॥९
विश्वामित्रस्तु सम्पूज्य पूजार्हं रघुनन्दनम्।
अङ्के निवेश्य चालिङ्ग्य भक्त्या बाष्पाकुलेक्षणः॥१०

**विश्वामित्र इति**—पूजार्हं लोकदृष्ट्या शिष्यत्वेन प्रतीयमानमपि स्वेष्टदेवमिति भावः।१०

भोजयित्वा सह भ्रात्रा रामं पक्वफलादिभिः।
पुराणवाक्यैर्मधुरैर्निनाय दिवसत्रयम्॥११
चतुर्थेऽहनि संप्राप्ते कौशिको राममब्रवीत्।
राम राम महायज्ञं द्रष्टुं गच्छामहे वयम्॥१२
विदेहराजनगरे जनकस्य महात्मनः।
तत्र माहेश्वरं चापमास्ते न्यस्तं पिनाकिना॥१३

**विदेहराजेति**—एतेन तस्मै दर्शनं देयमिति व्यज्यते। तत्र नगरे पिनाकिना न्यस्तं न्यासत्वेन स्थापितम्।१३

द्रक्ष्यसि त्वं महासत्त्वं पूज्यसे जनकेन च।
इत्युक्त्वा मुनिभिस्ताभ्यां ययौ गङ्गासमीपगम्॥१४

**द्रक्ष्यसीति**—महासत्त्वं अतिदृढम्। एतेन सकलराजकदुरानमत्वं तस्य व्यज्यते। तेन च त्वमेव तत् भङ्क्ष्यसीति। पूज्यसे जनकेन चेत्यनेन तत्र तव विवाहो भविष्यतीति कथनेऽस्य लज्जा मा भूदिति कौशिकाभिप्रायः। गङ्गासमीपगमित्यत्र भागीरथ्या इतरां गङ्गां। गौतमाविर्भाविता क्षीरोदकीति प्रसिद्धायोध्या[1]।१४

गौतमस्याश्रमं पुण्यं यत्राहल्या स्थिता तपः।
दिव्यपुष्पफलोपेतपादपैः परिवेष्टितम्॥१५
मृगपक्षिगणैर्हीनं नानाजन्तुविवर्जितम्।
दृष्ट्वोवाच मुनिं श्रीमान् रामो राजीवलोचनः॥१६

---

१. बोध्या इत्युचितः।

कस्यैतदाश्रमपदं भाति भास्वच्छुभं महत्।
पत्रपुष्पफलैर्युक्तं जन्तुभिः परिवर्जितम् ॥१७

**कस्येति**—जन्तुभिः नानाप्रकारैः क्षुद्रप्राणिभिरपि हीनं गौतमशापादिति भावः।१७

आह्लादयति मे चेतो भगवन्! ब्रूहि तत्त्वतः ॥१८

**विश्वामित्र उवाच—**

शृणु राम! पुरावृत्तं गौतमो लोकविश्रुतः।
सर्वधर्मभृतां श्रेष्ठस्तपसाराधयन् हरिम् ॥१९

तपसा हरिमाराधयन् स्थित इति शेषः।१९

तस्मै ब्रह्मा ददौ कन्यामहल्यां लोकसुन्दरीम्।
ब्रह्मचर्येण सन्तुष्टः शुश्रूषणपरायणाम् ॥२०
तया सार्धमिहावात्सीद्गौतमस्तपतां वरः।
शक्रस्तु तां धर्षयितुमन्तरं प्रेप्सुरन्वहम् ॥२१

**तयेति**—तां धर्षयितुमुपभोक्तुम् अन्तरं गौतमासान्निध्यरूपं प्रेप्सुरासीदिति शेषः।२१

कदाचिन्मुनिवेषेण गौतमे निर्गते गृहात्।
धर्षयित्वाथ निरगात्त्वरितं मुनिरभ्यगात् ॥२२

**कदाचित् इति**—गौतमे गृहान्निर्गते सति मुनिवेषेण तद्गृहं प्रविश्य तामहल्यां धर्षयित्वोपभुज्य निरगात्। मुनिरपि स्वगृहमगात्।२२

दृष्ट्वा यान्तं स्वरूपेण मुनिः परमकोपनः।
पप्रच्छ कस्त्वं दुष्टात्मन्! मम रूपधरोऽधमः ॥२३

**दृष्ट्वेति**—स्वरूपेण स्वस्य आत्मनो गौतमस्य रूपेण।२३

सत्यं ब्रूहि न चेद् भस्म करिष्यामि न संशयः।
सोऽब्रवीद्देवराजोऽहं पाहि मां कामकिङ्करम् ॥२४
कृतं जुगुप्सितं कर्म मया कुत्सितचेतसा।
गौतमः क्रोधताम्राक्षः शशाप दिविजाधिपम् ॥२५
योनिलम्पट! दुष्टात्मन्! सहस्रभगवान् भव।
शप्त्वा तं देवराजानं प्रविश्य स्वाश्रमं द्रुतम् ॥२६
दृष्ट्वाहल्यां वेपमानां प्राञ्जलिं गौतमोऽब्रवीत्।
दुष्टे! त्वं तिष्ठ दुर्वृत्ते! शिलायामाश्रमे मम ॥२७

निराहारा दिवारात्रं तपः परममास्थिता।
आतपानिलवर्षादिसहिष्णुः परमेश्वरम्॥२८

ध्यायन्ती राममेकाग्रमनसा हृदि संस्थितम्।
नानाजन्तुविहीनोऽयमाश्रमो मे भविष्यति॥२९

एवं वर्षसहस्रेषु ह्यनेकेषु गतेषु च।
रामो दाशरथिः श्रीमानागमिष्यति सानुजः॥३०

यदा त्वदाश्रयशिलां पादाभ्यामाक्रमिष्यति।
तदैव धूतपापा त्वं रामं सम्पूज्य भक्तितः॥३१

परिक्रम्य नमस्कृत्य स्तुत्वा शापाद्विमोक्ष्यसे।
पूर्ववन्मम शुश्रूषां करिष्यसि यथासुखम्॥३२

यथासुखमित्यन्तेन प्रकरणेन गौतमस्य कृपालुतातिशयो व्यक्तः। तेन च श्रीरामभक्तानां कोपोऽपीतरवराधिकः इति।३२

इत्युक्त्वा गौतमः प्रागाद्धिमवन्तं नगोत्तमम्।
तदाद्यहल्या भूतानामदृश्या स्वाश्रमे शुभे॥३३

**इत्युक्त्वेति**—तदादि तत्प्रभृति शुभे स्वाश्रमे अदृश्या आस्ते इति शेषः।३३

तव पादरजः स्पर्शं काङ्क्षते पवनाशना।
आस्तेऽद्यापि रघुश्रेष्ठ! तपो दुष्करमास्थिता॥३४

**तवेति**—तव पादरजःस्पर्शं काङ्क्षते। एतेन श्रीरामचरणरजो विना अन्यैस्तप आदिभिर्गतिर्न भवतीति व्यज्यते।३४

पावयस्व मुनेर्भार्यामहल्यां ब्रह्मणःसुताम्।
इत्युक्त्वा राघवं हस्ते गृहीत्वा मुनिपुङ्गवः॥३५

**पावयस्वेति**—राघवं हस्ते गृहीत्वेत्यनेन ब्रह्मण्यदेवो रामः ब्राह्मणीम् अधिष्ठितशिलां पादेन स्प्रष्टुं न इयेषेति व्यज्यते। तेन च श्रीरामभक्ताः यदिच्छन्ति तत् बलात्कारादपि श्रीरामेण कारयन्ति। तेन श्रीरामस्य भक्तवश्यत्वं तद्भक्तानां श्रीरामादपि परमदयालुत्वं व्यक्तम्।३५

दर्शयामास चाहल्यामुग्रेण तपसा स्थिताम्।
रामः शिलां पदा स्पृष्ट्वा तां चापश्यत्तपोधनाम्॥३६

**दर्शयामासेति**—रामः शिलां पदा स्पृष्ट्वा तां तपोधनामपश्यदित्यनेन श्रीरामचरणस्पर्शं विना जडा जीवा ज्ञानं न लभन्त इति व्यज्यते।३६

ननाम राघवोऽहल्यां रामोऽहमिति चाब्रवीत्।
ततो दृष्ट्वा रघुश्रेष्ठं पीतकौशेयवाससम्॥३७
चतुर्भुजं शङ्खचक्रगदापङ्कजधारिणम्।
धनुर्बाणधरं रामं लक्ष्मणेन समन्वितम्॥३८
स्मितवक्त्रं पद्मनेत्रं श्रीवत्साङ्कितवक्षसम्।
नीलमाणिक्यसङ्काशं द्योतयन्तं दिशो दश॥३९

**चतुर्भुजमिति**—चतुर्भुजं धनुर्बाणधरं द्विभुजं च दृष्ट्वेत्यनेन चरणस्पर्शादिहैव षष्ठशरीरं प्राप्य वाङ्मनोगोचरातीतश्रीरामस्य द्विभुजमपि चतुर्भुजाविष्टं दृष्टवतीति व्यज्यते। 'अत्र ब्रह्म समश्नुते' इति श्रुतेः। 'केचित् स्वर्गं महर्लोकं गच्छन्ति क्षीरसागरं। केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचनेति' स्मृतेश्च।३८-३९।

दृष्ट्वा रामं रमानाथं हर्षविस्फारितेक्षणा।
गौतमस्य वचः स्मृत्वा ज्ञात्वा नारायणं परम्॥४०
सम्पूज्य विधिवद्राममर्घ्यादिभिरनिन्दिता।
हर्षाश्रुजलनेत्रान्ता दण्डवत्प्रणिपत्य सा॥४१

**दृष्ट्वेति**—गौतमस्य वचः स्मृत्वा नारायणं ज्ञात्वा परं रामं च ज्ञात्वा अर्घ्यादिभिरुभौ सम्पूज्य अनिन्दिता षष्ठशरीरत्वादिति। सम्पूज्येति। अत्र हर्षाश्रुजलेत्यादिविशेषणैः भुक्तिमुक्तिप्रदां तद्भक्तिं दर्शनमात्रेणैव लब्धवतीति व्यज्यते।४०-४१।

उत्थाय च पुनर्दृष्ट्वा रामं राजीवलोचनम्।
पुलकाङ्कितसर्वाङ्गा गिरा गद्गदयैडत॥४२

**अहल्योवाच**—

अहो!! कृतार्थास्मि जगन्निवास! ते, पादाब्जसंलग्नरजः कणादहम्।
स्पृशामि यत्पद्मजशङ्करादिभिर्विमृग्यते रन्धितमानसैः सदा॥४३

**अहो इति**—हे जगन्निवास! जगदाधार! जगद्व्यापकेति वा, एतेन तस्य सौलभ्यगुणो व्यक्तः। ते तव वाङ्मनोगोचरातीतस्य पादाब्जसंलग्नरजः कणात् त्वत्सम्बन्धादहं कृतार्थाऽस्मि। अहो इत्याश्चर्यं, तेनाद्भुतरसो व्यक्तः। स्वस्य कृतार्थत्वेऽपरं हेतुमाह यत्ते पादपद्मजशङ्करादिभिः ब्रह्मशिवविष्ण्वादिभिः तदलाभात्

रन्धितमानसैः सदा स्प्रष्टुं विमृग्यते। एतेन तस्येश्वरेश्वरत्वं व्यज्यते। तदहं सकलसाधनहीना योषिदपि साक्षात्पश्यामीति च कृतार्थाऽस्मि एतेन तस्य निर्हेतुकभक्तवात्सल्यत्वं व्यक्तम् ।४३

अहो ! ! विचित्रं तव राम ! चेष्टितं,
मनुष्यभावेन विमोहितं जगत् ।
चलस्यजस्रं चरणादिवर्जितः,
सम्पूर्ण आनन्दमयोऽतिमायिकः ।।४४

**अहो विचित्रमिति**—हे राम ! तव चेष्टितं विचित्रं परमाश्चर्यभूतमित्यर्थः। यद्वा विचित्रं नानाविधं तव विचेष्टितं व्यापारः अहो आश्चर्यं, तदेवाह मनुष्यभावेनेति मनुष्ये नराकारे यो भावः भक्तिस्तेन जगद्विमोहयन् विगतमोहं कुर्वन् चरणादिवर्जितः 'अपाणिपादो जवनो ग्रहीतेति' श्रुतिः, प्राकृतचरणादिरहितः चलसि। ननु किमहं परिच्छिन्नो नेत्याह सम्पूर्ण इति, 'य एव विग्रहो व्यापी परिच्छन्नः स एव हि। एकस्यैवैकदा चास्य द्विरूपत्वं विराजते ।।' इति स्मृतेः। तत्रापि आनन्दमयः आनन्दरूपः स्वार्थे मयट् 'आनन्दरूपममृतं यद्विभाति' 'तदास्वानन्दमेवेति' श्रुतेः। तथाप्यतिमायिकः निर्हेतुकातिकृपावान्। एतेन यमेवैष वृणुते तेन लभ्य' इति श्रुतेः निजकृपयैव षष्ठशरीरं दत्त्वा निजपदं दर्शयसीति व्यज्यते। तेन यदि तवेदृशी कृपा न स्यात् तदा 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति' श्रुत्या मनोवचनागोचरस्य तव ज्ञानं कस्यापि न स्यादिति व्यज्यते। तेन चानिर्मोक्षप्रसङ्ग इति ।४४

यत्पादपङ्कजपरागपवित्रगात्रा,
भागीरथी भवविरिञ्चिमुखान्पुनाति ।
साक्षात् स एव मम दृग्विषयो यदास्ते,
किं वर्ण्यते मम पुराकृतभागधेयम् ।।४५

**यदिति**—यस्य सर्वावतारिनारायणरूपस्य तव विष्णोः, एतेन विष्णुरपि तवैव मूर्तिरिति व्यज्यते। यद्यतः मम दृग्विषये साक्षादास्तेऽतो मम पुराकृतभागधेयं पूर्वजन्मसञ्चितभाग्यं किं वर्ण्यते ? एतेन तस्य कारुण्यातिशयो व्यक्तः ।४५

मर्त्यावतारे मनुजाकृतिं हरिं,
रामाभिधेयं रमणीयदेहिनम् ।
धनुर्धरं पद्मविशाललोचनं,
भजामि नित्यं न परान् भजिष्ये ।।४६

**मर्त्येति**—मर्त्यावतारे मनुष्यजन्मनि अहं रामाभिधेयं मनुजाकृतिं हरिं भक्तार्तिहारिणं भवन्तमेव भजामि अपरान्न भजिष्ये। एतेन तं सर्वतः परं ज्ञातवतीति व्यज्यते।४६

यत्पादपङ्कजरजः श्रुतिभिर्विमृग्यं,
यन्नाभिपङ्कजभवः कमलासनश्च।
यन्नामसाररसिको भगवान्पुरारि-
स्तं रामचन्द्रमनिशं हृदि भावयामि॥४७

**यत्पादपङ्कजेति**—सर्वतः परमत्वमेवोपपादयति यस्य पादपङ्कजरजः श्रुतिभिर्विमृग्यम्। एतेन तस्य वाङ्मनसाविषयत्वं व्यज्यते। यस्य नाम्नां मध्ये सारं रामेति नाम, 'सहस्रनामभिस्तुल्यं रामनाम वरानने' इति पाद्मे, तस्य रसिकः तं रामचन्द्रं सर्वाह्लादकत्वाच्च।४७

यस्यावतारचरितानि विरिञ्चिलोके,
गायन्ति नारदमुखा भवपद्मजाद्याः।
आनन्दजाश्रुपरिषिक्तकुचाग्रसीमा,
वागीश्वरी च तमहं शरणं प्रपद्ये॥४८

**यस्येति**—विरिञ्चिलोके ब्रह्मलोके नारदप्रमुखा ऋषयः भवपद्मजाद्या देवाश्च यस्यावतारचरितानि रामायणानि तच्चरितस्मरणजानन्दाश्रुभिः परिषिक्ते कुचाग्रे सीमनी कुचप्रान्तभागौ च यस्याः सा वागीश्वरी सरस्वती गायतीति विपरिणामेनान्वयः। एतत्पद्येन सर्वेषां रामोपासकत्वं सूचितम्।४८

सोऽयं परात्मा पुरुषः पुराणः,
एषः स्वयं ज्योतिरनन्त आद्यः।
मायातनुं लोकविमोहिनीं यो,
धत्ते परानुग्रह एष रामः॥४९

श्लोकद्वयेन चतुर्भुजं प्रत्युक्त्वा अग्रिमेण रामं स्तौति। **सोऽयमिति**—'आत्मैवेदमग्र-आसीत् पुरुषविधः' इति श्रुतेः सोऽयं रामः परात्मा परेषामखिलेश्वराणामयमात्मा पुरुषः नराकारः पुराणः सर्वदा विद्यमानः एष स्वयंज्योतिः प्रकाशकान्तररहितः अनन्तोऽविनतोऽविनाशी आद्यः सर्वकारणं यः परानुग्रहे परेषामनुग्रहे कर्त्तव्यतया बुद्धिस्थे सति लोकविमोहिनीं लोकान् विगतमोहान् करोति सा तां मायातनुं मायया कृपया तनुं भौतिकीं स्वप्रकाशमात्मनि तिरोधाय नारायणे आवेशेनाविर्भवतीत्यर्थः।४९

अयं हि विश्वोद्भवसंयमाना-
मेकः स्वमायागुणबिम्बितो यः।
विरिञ्चिविष्ण्वीश्वरनामभेदान्,
धत्ते स्वतन्त्रः परिपूर्ण आत्मा ॥५०

**अयं हीति**—विश्वस्य जगतः उद्भव उत्पत्तिः संयमो नाशः ताभ्यां पालनमप्युपलक्ष्यते तेषां स्वतन्त्रः कर्त्तेत्यर्थः। 'स्वतन्त्रः कर्तेति' पाणिनिसूत्रात्। एकः स्वसमाधिकरहितः। परिपूर्णः स्वप्रकाशभूतब्रह्मद्वारेत्यर्थः, अतएव आत्मा व्यापकः स्वमायागुणेषु रजः सत्त्वतमः-सु बिम्बितः स्वप्रकाशब्रह्मद्वाराप्रतिबिम्बितः सन् विरिञ्चीत्यादिनामभेदान् धत्ते। 'ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवता तथा। आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन।' इति सनत्कुमारसंहितोक्तेः। एतेन सर्वोपास्यदेवतारूपत्वात्सर्वदेवतोपासनं त्वय्येव पर्य-वस्यतीति व्यज्यते।५०

नमोऽस्तु हे राम! तवाङ्घ्रिपङ्कजं,
श्रिया धृतं वक्षसि लालितं प्रियात्।
आक्रान्तमेकेन जगत्त्रयं पुरा,
ध्येयं मुनीन्द्रैरभिमानवर्जितैः ॥५१

**नमोऽस्तु इति**— हे राम! तवाङ्घ्रिपङ्कजं प्रियात् प्रियत्वात् 'श्रियः श्रीश्च भवेदग्र्येति' वाल्मीकीयोक्तेः 'श्रीश्च ते लक्ष्मीश्च पत्न्याविति' श्रुतेः। श्रिया नित्यरासेश्वर्या श्रीजानक्या वक्षसि धृतं लालितं च येनैकेन नारायणस्य चरणेन पुरा त्रिविक्रमावतारे 'इदं विष्णुः प्रचक्रमे त्रेधा निदधे पदमिति' श्रुतेः जगत्त्रयमपक्रान्तम्। एतेन सर्वेऽवतारास्तवैव रूपाणीति सूचितम्। यच्च अभिमानवर्जितैः मुनीन्द्रैः सदा ध्येयम्। एतेन ये मुनयो यां देवतां ध्यायन्ति ते तत्तद्देवताध्यानेन क्रमात् त्वामेव प्राप्नुवन्ति, 'अनेकजन्मसंसिद्धि-स्ततो याति परां गतिम्' इति स्मृतेः 'गाणेशा वैष्णवाः शैवाः गौराश्च शक्तिपूजकाः। मामेव प्राप्नुवन्तीह वर्षापः सागरं यथा।' इति, तस्मै ते चरणपङ्कजाय नमोऽस्त्वित्यर्थः।५१

जगतामादिभूतस्त्वं जगत्त्वं जगदाश्रयः।
सर्वभूतेष्वसंसक्त एको भाति भवान् परः॥५२

**जगतामिति**—जगताम् आदिभूतः आदिनारायणस्य त्वद्रूपत्वात् जगत्त्वं चिदचिच्छरीरस्य जगतस्त्वमेव चेष्टां करोषीत्यर्थः। जगदाश्रयः जगत्त्रयाधिष्ठानत्वादिति भावः। एतेनागतं विकारित्वं वारयति सर्वभूतेष्वसंसक्त इति। अत एव परः उत्कृष्टो भगवानेको चिदचिच्छरीरकत्वेन भाति। एतेन सर्वोपास्यः त्वमेवेति सूचितं 'सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीतेति' श्रुतेः।५२

ओंकारवाच्यस्त्वं राम ! वाचामविषयः पुमान् ।
वाच्यवाचकभेदेन भवानेव जगन्मयः ।।५३

**ओंकारवाच्य इति**—वाचामविषयः पुमान् नराकृतिर्भवान् 'ओमित्येकाक्षरं ब्रह्मेति' गीतोक्तेः ओंकारस्य ब्रह्मरूपतया त्वद्रूपत्वात्तेन वाच्यः स्वेनैव स्वस्य कथने वाचामविषयत्वं न हीयत इति भावः। अतएव पातञ्जलसूत्रं 'तस्य वाचकः प्रणवः' इति। ननु 'सर्वाणि नामानि यमाविशंतीति' श्रुत्या सर्वैरपि शब्दैरहमेव वाच्यः कथमोंकारमात्रवाच्यत्वमुच्यते तत्राह—वाच्यवाचकभेदेनेति वाच्यानां चिदचिदर्थानां च सरित्समुद्रादिशब्दानां भेदेन जगन्मयश्चिदचिद्रूपो भगवानेव प्रणवस्य श्रीरामस्यैव वाचकत्वं रामतापिनीयोपनिषदि अकाराक्षरसंभूतः सौमित्रिर्विश्वभावनः। उकाराक्षरसंभूतः शत्रुघ्नस्तैजसात्मकः। प्राज्ञात्मकस्तु भरतो मकाराक्षरसंभवः॥ अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः। श्रीरामसान्निध्यवशाज्जगदानन्ददायिनी॥ उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम्। सीता भगवती ज्ञेया मूलप्रकृतिसंज्ञिता॥ प्रणवत्वात्प्रकृतिरिति ब्रह्मवादिन इति। अत्रेदं तात्पर्यं सीतारामाभरतलक्ष्मणशत्रुघ्नानाम् आवेशाधिष्ठानभूतमूलप्रकृतिलक्ष्मीनारायणादीनां सीतारामादिनामभिस्तेषां नामादयः सूच्यन्ते। अतः प्रणववाच्यत्वमपि आवेशाधिष्ठानभूतानामेव न तेषामिति।५३

कार्यकारणकर्तृत्वफलसाधनभेदतः ।
एको विभासि राम ! त्वं मायया बहुरूपया ।।५४

उक्तं जगन्मयत्वं दर्शयति—**कार्येति**—हे राम ! चिदचिद्विग्रहत्वेनैकस्त्वं बहुरूपया मायया जीवज्ञानावरणशक्त्या कार्यमहत्तत्त्वादिकारणमायाकर्तृत्वं जीवगतं फलं स्वर्गनरकादिसाधनम् इष्टानिष्टबोधकं शास्त्रं तदुक्तं विहितं निषिद्धं कृत्यं च एतदेकः विभासि। चेतनाचेतनयोस्तव चिदचिद्विग्रहत्वेन विचारे कृते त्वमेवैक इति भावः।५४

त्वन्मायामोहितधियस्त्वां न जानन्ति तत्त्वतः।
मानुषं त्वाभिमन्यन्ते मायिनं परमेश्वरम् ।।५५

नन्वीदृशो यद्यहं तर्हि लोको मां तथा किमिति न जानातीत्यत्राह—**त्वन्मायेति**—त्वन्मायामोहितधियः त्वां तत्त्वतः याथार्थ्यतः मानुषं मनुष्यस्य नित्यनराकृतेः रामस्येदं चिदचिदन्तर्यामिनारायणाख्यं साकारमेकं रूपं न जानन्ति। अवशिष्टं द्वितीयं निराकारं शुद्धं ब्रह्म मायिनं मायाशबलितं मन्यन्ते।५५

आकाशवत्त्वं सर्वत्र बहिरन्तर्गतोऽमलः ।
असङ्गो ह्यचलो नित्यः शुद्धो बुद्धः सदव्ययः ।।५६

कीदृशं मे निराकारं साकारं रूपमिति चेत्तत्राह आकाशवदिति—आकाशवत्सर्वत्र बहिरन्तरान्तः 'आकाशवत्सर्वगतश्च नित्य' इति श्रुतेः आकाशवद्व्यापकश्चेत्यर्थः। तथाभूतोऽप्यमलः न मायाशवलितः यस्येदं रूपद्वयं तत्स्वरूपमाह—अचलः नित्यायोध्याविहारी 'अयोध्यां क्वापि सन्त्यज्य पादमेकं न गच्छती'ति स्मृतेः। बुद्धो ज्ञानरूपः शुद्धः मायया न स्पृष्टः सत् सत्यभूतः नित्यः सनातनः अव्ययः नामरूपलीलाधामभिः सह अविनाशी असङ्गः सङ्गरहितः असङ्गो ह्ययंपुरुषः इति श्रुतेः। पुरुषशब्देन अन्तर्यामि साकारः सूर्यो यथा सर्वलोकस्य चक्षुर्नलिप्यते चाक्षुषैर्बाह्यदोषैः एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः। 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। सर्वाध्यक्षः सर्वलोकाधिवासः साक्षी चेता केवलो निर्गुणश्चेति'॥ श्रुतेः। एतेन साकारान्तर्यामिनि राकारस्य 'व्यापकं च नित्यनराकारस्य अयोध्याविहारि तवैव रूपं व्यज्यते।५६

योषिन्मूढाहमज्ञा ते तत्त्वं जाने कथं विभो!।
तस्मात्ते शतशो राम! नमस्कुर्यामनन्यधीः॥५७

**योषिदिति**—योषिन्मूढा तमःप्रधाना अत एवाहं साकारनिराकारयोरङ्गिणः तव तत्त्वं याथार्थ्यं कथमङ्गी कथमङ्गमित्येवं कथं जाने ? तस्मात्तत्त्वज्ञानाभावात् अनन्यधीः सती ते तव शतशः नमस्कुर्यान्तिेन यावन्मयोक्तं तावत्त्वद्दत्तषष्ठशरीरेणेति व्यज्यते। तेन च यावन्मयोक्तं तावदेव न किन्त्वधिकमप्यैश्वर्यमस्तीति व्यज्यते। तेन चैश्वर्यस्य निरवधिकत्वम्।५७

देव! मे यत्र कुत्रापि स्थितताया अपि सर्वदा।
त्वत्पादकमले सक्ता भक्तिरेव सदास्तु मे॥५८

**हे देव इति**—यत्र कुत्रापि सदा स्थितताया अपि मे मम सदा त्वत्पादकमले सक्ता निरन्तरा भक्तिरेव सदास्तु। एतेन ज्ञानादेः फलं भक्तिरेवेति सूचितं।५८

नमस्ते पुरुषाध्यक्ष! नमस्ते भक्तवत्सल!।
नमस्तेऽस्तु हृषीकेश! नारायण! नमोऽस्तु ते॥५९

**नमस्ते इति**—पुरुषाणामध्यक्षः स्वामी 'पौरुषे चाप्रतिद्वन्द्वे इति वाल्मीक्युक्तेः।' हृषीकाणामिन्द्रियाणामीशः नियामकः। नारं जीवसमूहः तदयनं स्थानं यस्य अन्तर्यामितया स्थितत्वात् स नारायणः।५९

भवभयहरमेकं भानुकोटिप्रकाशं,
करधृतशरचापं कालमेघावभासम्।
कनकरुचिरवस्त्रं रत्नवत्कुण्डलाढ्यं,
कमलविशदनेत्रं सानुजं राममीडे॥६०

---

१. व्यापकस्य इत्युचितः।

अतिरोहितब्रह्मप्रकाशं श्रीरामं पश्यन्ती नमस्करोति भवभयहरमिति—भवभयस्य संसारभयनाशको द्वितीयो नास्तीति व्यज्यते। भानुकोटिप्रकाशम् अनन्तकोटिब्रह्माण्ड-व्यापकप्रकाशवन्तमित्यर्थः 'यदद्वैतं, ब्रह्म यस्य तनुमेति' श्रुतेः। करधृतशरचापमित्यनेन स्वभक्तरक्षणोद्यतत्वं व्यज्यते। कालमेघो नीलमेघस्तद्वदवभासत इति। एतेन भक्तानन्द-जनकत्वं व्यज्यते। कमलविशदनेत्रमित्यनेन प्रसन्नतातिशयः सूचितः। सानुजमिति एतेन यथा श्रीरामं तथैव लक्ष्मणमपि ज्ञातवतीति व्यज्यते।६०

स्तुत्वैवं पुरुषं साक्षाद्राघवं पुरतः स्थितम्।
परिक्रम्य प्रणम्याशु सानुज्ञाता ययौ पतिम्॥६१

स्तुत्वेति—पतिं गौतमम्।६१

अहल्यया कृतं स्तोत्रं य पठेद्भक्तिसंयुतः।
स मुच्यतेऽखिलैः पापैः परं ब्रह्माधिगच्छति॥६२

अहल्ययेति—परं ब्रह्म अयोध्याम्। 'अयोध्या च परं ब्रह्म सरयूः सगुणः पुमान्। तन्निवासी जगन्नाथः सत्यं सत्यं वदाम्यहम्॥' इति स्मृतेः।६२

पुत्राद्यर्थे पठेद्भक्त्या रामं हृदि निधाय च।
संवत्सरेण लभते वन्ध्या अपि सुपुत्रकम्॥६३
सर्वान् कामानवाप्नोति रामचन्द्रप्रसादतः॥६४
ब्रह्मघ्नो गुरुतल्पगोऽपि पुरुषः स्तेयी सुरापोऽपि वा,
मातृभ्रातृविहिंसकोऽपि सततं भोगैकबद्धातुरः।
नित्यं स्तोत्रमिदं जपन् रघुपतिं भक्त्या हृदिस्थं स्मरन्,
ध्यायन्मुक्तिमुपैति किं पुनरसौ स्वाचारयुक्तो नरः॥६५

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
बालकाण्डे पञ्चमोऽध्यायः।५

⊙

**ब्रह्मघ्न इति**—भोगैकबद्धः आतुर इति च्छेदः, सन्धिरार्षः।६५

इति[1] श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेव विरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
[1]व्यङ्ग्यप्रकाशिकायां बालकाण्डे
पञ्चमोऽध्यायः।५

⊙

---

१. 'इति ध्वनिप्रकाशिकायां पञ्चमोऽध्यायः।' रामवनपुस्तके इत्यस्ति।

## अथ षष्ठोऽध्यायः

**सूत उवाच—**

विश्वामित्रोऽथ तं प्राह राघवं सह लक्ष्मणम्।
गच्छामो वत्स ! मिथिलां जनकेनाभिपालिताम्।।१

**विश्वामित्र इति—**अथाहल्यागमनानन्तरं विश्वामित्र इत्यनेन विश्वस्य मित्रतयाऽहल्यामुद्धार्य जनकोद्धाराय मिथिलागमनाय श्रीराममाज्ञप्तवानिति स्वनामान्वर्थं कृतवानिति व्यज्यते।१

दृष्ट्वा क्रतुवरं पश्चादयोध्यां गन्तुमर्हसि।
इत्युक्त्वा प्रययौ गङ्गामुत्तर्तुं सह राघवः।।२

**दृष्ट्वेति—**गङ्गां क्षीरोदकीतिप्रसिद्धाम्।२

तस्मिन् काले नाविकेन निषिद्धो रघुनन्दनः।

**नाविक उवाच—**

क्षालयामि तव पादपङ्कजं नाथ ! दारुदृषदोः किमन्तरम्।
मानुषीकरणचूर्णमस्ति ते पादयोरिति कथा प्रथीयसी।।३

**क्षालयामीति—**दारुदृषदोः काष्ठपाषाणयोः किमन्तरं, न किमपीत्यर्थः। तव पादयोः मानुषीकरणचूर्णमस्ति। शिलारूपाहल्यायाः पादस्पर्शमात्रेण मानुषदेहसम्पादनादिति भावः। इति कथा प्रथीयसी अतिप्रसिद्धा।३

पादाम्बुजं ते विमलं हि कृत्वा,
पश्चात्परं तीरमहं नयामि।
नो चेत्तरी सद्युवती मलेन,
स्याच्चेद् विभो ! विद्धि कुटुम्बहानिः[1]।।४

---

१. श्लोकोऽयं मदीयपुस्तके नास्ति। टीका वर्तते। तदाधारेण प्रचलितमुद्रितपुस्तकादुद्धृतोऽयम्।

**पादाम्बुजमिति**—अत एव ते पादाम्बुजं विमलं कृत्वा पश्चादहं परं तीरं त्वां नयामि प्रापयामि। नो चेत् यदि तरी मलेन पादलग्नेन सद्युवती स्यात् चेत्तदा हे विभो! मम कुटुम्बहानिः इति विद्धि विजानीहि। एतेन एतयैव कुटुम्बं बिभर्मीति तेन पादलग्नेन सद्युवती स्यात् चेद् तदा हे विभो! मम कुटुम्बं म्रियेत एतामपि किं भोजयिष्यामीति व्यज्यते। अत्र सख्यरसो व्यक्तः। अत्र व्याजस्तुत्यलङ्कारेण तस्य त्रिभुवनतारकश्रीराम-चरणोदकग्रहणेच्छा तया च अयं तारकोऽहमपि तारकोऽत एष यदा मां सकुटुम्बं तारयिष्यति तदाहमेनं तारयिष्यामीति सख्यभिमानः तेन च प्रेमातिशयो ध्वनितस्तेन च भगवद्भक्तौ सर्वेषामधिकारोऽस्तीति ध्वनितम्।४

इत्युक्त्वा क्षालितौ पादौ परं तीरं ततो गताः।
कौशिको रघुनाथेन सहितो मिथिलां ययौ॥५

**इत्युक्त्वेति**—मिथलां नगरीम्।५

विदेहस्य पुरं प्रातर्ऋषिवाटं समाविशत्।
प्राप्तं कौशिकमाकर्ण्य जनकोऽतिमुदान्वितः॥६

**विदेहस्येति**—प्रातर्विदेहस्य पुरं गत्वेति शेषः। ऋषिवाटम् ऋषिवासस्थानं मार्गम्।६

पूजाद्रव्याणि संगृह्य सोपाध्यायः समाययौ।
दण्डवत्प्रणिपत्याथ पूजयामास कौशिकम्॥७

**पूजाद्रव्याणीति**—सोपाध्यायः शतानन्दसहितः पूजयामासेत्यनेन भागवतसेवयैव भगवान् प्राप्यत इति व्यज्यते।७

पप्रच्छ राघवौ दृष्ट्वा सर्वलक्षणसंयुतौ।
द्योतयन्तौ दिशः सर्वाश्चन्द्रसूर्याविवापरौ॥८
कस्यैतौ नरशार्दूलौ पुत्रौ देवसुतोपमौ।
मनः प्रीतिकरौ मेऽद्य नरनारायणाविव॥९

**पप्रच्छेति**—सर्वैर्लक्षणैः परमैश्वर्यलक्षकैः संयुतौ राघवौ दृष्ट्वा पप्रच्छ भगवन्! अपरौ चन्द्रसूर्याविव सर्वाः दिशो द्योतयन्तौ चन्द्रः कलङ्कसहितः सूर्यस्तु सन्तापकारीत्य-रुचेराह—देवसुतोपमौ देवो विष्णुः तस्य सुतः कामः स उपमा ययोस्तौ कामस्तु विषयिणां सुखदो न मादृशानामित्यरुचेराह—नरनारायणाविवेति। तयोरपि तपस्वित्वादरुचेराह—एतौ नरशार्दूलौ मे मम मनःप्रीतिकरौ कस्य पुत्राविति। एतेन तयोः सौन्दर्यातिशयो ध्वनितः। मम मनःप्रीतिकरावित्यनेन रूपवन्तौ मम विज्ञानानन्दाविवेत्युपमा व्यज्यते च।८-९।

प्रत्युवाच मुनिः प्रीतो हर्षयन् जनकं तदा।
पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ ॥१०

**प्रत्युवाचेति**--जनकं हर्षयन्नेतेन जनकमनोगतं धनुर्भङ्गपूर्वकसीतापरिणयविषयक-शङ्कानिराकरणं सूचितम्।१०

मखसंरक्षणार्थाय मया नीतौ पितुः पुरात्।
आगच्छन् राघवो मार्गे ताटकां विश्वघातिनीम् ॥११

दशरथपुत्रत्वेन सूचितं प्राकृतत्वं वारयंस्तयोः सामर्थ्यातिशयं द्योतयन्नाह—**मखेति**—।११

शरेणैकेन हतवान्नोदितो मेऽतिविक्रमः।
ततो ममाश्रमं गत्वा मम यज्ञविहिंसकान् ॥१२

**शरेणेति**--नोदितो मया प्रेरितः।१२

सुबाहुप्रमुखान् हत्वा मारीचं सागरेऽक्षिपत्।
ततो गङ्गातटे पुण्ये गौतमस्याश्रमं शुभम् ॥१३
गत्वा तत्र शिलारूपा गौतमस्य वधूः स्थिता।
पादपङ्कजसंस्पर्शात् कृता मानुषरूपिणी ॥१४

**गत्वेति**--पादपङ्कजसंस्पर्शान्मानुषरूपिणी कृतेत्यनेन अन्यस्य चरणे जडानां चेतनकरणसामर्थ्यं न अस्तीति। तेन चायं सर्वेश्वरः श्रीराम एव नारायणे आवेशेनाविर्भूत इति, तेन च तस्य नित्यानपायिनी शक्तिः सीतापि उर्मिलादिस्वशक्तियुता मूलप्रकृति लक्ष्म्याद्यावेशेन तव गृहे आविर्भूतेति ध्वनितम्।१४

दृष्ट्वाहल्यां नमस्कृत्य तया सम्यक्प्रपूजितः।
इदानीं द्रष्टुकामस्ते गृहे माहेश्वरं धनुः ॥१५

**दृष्ट्वेति**--स इदानीं तव गृहे वर्तमानं सुपूजितं माहेश्वरं धनुर्द्रष्टुकामः। तया सम्यक् प्रपूजित इत्यनेन यथाऽहल्यामुद्धार्य प्रपूजितः तथा, धनुर्भङ्क्त्वा त्वत्तोऽपि पूजां प्राप्स्यतीति।१५

पूजितं राजभिः सर्वैर्दृष्टमित्यनुशुश्रुवे ॥१६

**पूजितमिति**--सर्वैः राजभिर्दृष्टं नत्वधिज्यं कृतमित्यनुशुश्रुवे अनेन श्रुतमित्यर्थः।

एतेन यथान्यैः राजभिः पूजितं तथायं न पूजां करिष्यति किन्तु धनुर्भङ्क्त्वा तव सुतां परिणेष्यतीति ध्वनितम्। तेनास्य सर्वेभ्यो बलाधिक्यं सूचितम्।१६

अतो दर्शय राजेन्द्र! शैवं चापमनुत्तमम्।
दृष्ट्वायोध्यां जिगमिषुः पितरं द्रष्टुमिच्छति।।१७

धनुर्दर्शने विलम्बमसहमान आह अत इति—दृष्ट्वायोध्यां जिगमिषुः एतेन दर्शनसमकाल एव धनुर्भङ्क्ष्यतीति ध्वनितम्। शैवमित्यनेन यस्य धनुः सोऽप्यस्यैवोपासक इति। नचास्य सौकुमार्यमवलोक्य धनुर्भङ्गशङ्का कार्या, धनुः स्वतो भङ्क्ष्यतीति सूचितम्।१७

इत्युक्तो मुनिना राजा पूजार्हाविति पूजया।
पूजयामास धर्मज्ञो विधिदृष्टेन कर्मणा।
ततः सम्प्रेषयामास मन्त्रिणं बुद्धिमत्तरम्।।१८

**जनक उवाच—**

शीघ्रमानय विश्वेश! चापं रामाय दर्शय।
ततो गते मन्त्रिवरे राजा कौशिकमब्रवीत्।
यदि रामो धनुर्भङ्क्त्वा कोट्यामारोपयेद्गुणम्।।१९
तदा मयात्मजा सीता दीयते राघवाय हि।
तथेति कौशिकोऽप्याह रामं संवीक्ष्य सस्मितम्।।२०

**तदेति**—आत्मनः आत्मज्ञानाज्जायते इति आत्मजा यद्वा सनातनी मत्पुत्री।२०

शीघ्रं दर्शय चापाग्र्यं रामायामिततेजसे।
एवं ब्रुवति मौनीश आगताश्चापवाहकाः।।२१

**शीघ्रमिति**—'यस्य प्रभाप्रभवतो जगदण्डकोटिकोटिश्चशेषवसुधाधिपभूतभिन्नम् तद्ब्रह्मनिष्कलमनन्तमगाधबोधं गोविन्दमादिपुरुषं तमहं भजामि।।' इति ब्रह्मसंहितोक्तेः 'यस्य भासा सर्वमिदं विभातीति' श्रुतेश्च, अमितं ब्रह्माख्यं तेजो यस्य तस्मै, एतेन यद्ब्रह्म भवानुपास्ते तदस्यैव तेज इति। एतत्कर्तृकधनुर्भङ्गे तव संशयो मा भूदिति ध्वनितम्। तद्भञ्जकत्वेन तस्येश्वरेश्वरत्वं व्यज्यते। मौनीशे ऋषिश्रेष्ठे।२१

चापं गृहीत्वा बलिनः पञ्चसाहस्रसंख्यकाः।
घण्टाशतसमायुक्तं मणिवज्राादिभूषितम्।।२२

दर्शयामास रामाय मन्त्री मन्त्रयतां वरः।
दृष्ट्वा रामः प्रहृष्टात्मा बद्ध्वा परिकरं दृढम्॥२३

**दर्शयामासेति**—मन्त्री सुदामाख्यः।२३

गृहीत्वा वामहस्तेन लीलया तोलयन् धनुः।
आरोपयामास गुणं पश्यत्स्वखिलराजसु॥२४

**गृहीत्वेति**—लीलया वामहस्तेन धनुर्गृहीत्वा तोलयन्नेतेन अहो मयेदं गुरुतरं ज्ञात्वा परिकरो बद्ध इति। तेन धनुरेव लघुतरमभवदिति। तेन च शिवस्य सर्वाण्यप्यायुधानि चेतनानीति सूचितम्।२४

ईषदाकर्षयामास पाणिना दक्षिणेन सः।
बभञ्जाखिलहृत्सारो दिशः शब्देन पूरयन्॥२५

**ईषदिति**—अखिलानां सेश्वराणां प्राणिनां हृत्सारो बलं यस्य अत ईषदाकर्षमाणो बभञ्ज च। दिगादि शब्देन पूरयन्नेतेन तस्य दृढतमत्वं सूचितम्।२५

दिशश्च विदिशश्चैव स्वर्गं मर्त्यं रसातलम्।
तदद्भुतमभूत्तत्र देवानां दिवि पश्यताम्॥२६
आच्छादयन्तः कुसुमैर्देवाः स्तुतिभिरीडिरे।
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः॥२७
द्विधा भग्नं धनुर्दृष्ट्वा राजालिङ्ग्य रघूद्वहम्।
विस्मयं लेभिरे सीतामातरोऽन्तःपुराजिरे॥२८
सीता स्वर्णमयीं मालां गृहीत्वा दक्षिणे करे।
स्मितवक्त्रा स्वर्णवर्णा सर्वाभरणभूषिता।
मुक्ताहारैः कर्णपत्रैः क्वणच्चरणनूपुरा॥२९
दुकूलपरिसंवीता वस्त्रान्तर्व्यञ्जितस्तनी।
रामस्योपरि निक्षिप्य स्मयमाना मुदं ययौ॥३०

**दुकूलेति**—स्मयमाना मुदं ययावेतेन आवयोर्नित्यसंयोगेऽपि विवाहो भवतीति महत्कौतुकमिति व्यज्यते। यद्वा स्मयमानेत्यनेनास्योरसि मालानिधानमात्रेण परमानन्दस्य जातत्वे सत्यपि विवाहादौ ततोऽप्यधिकपरमानन्दस्य जनिष्यमाणत्वात् 'परमानन्दः सुखावधिरिति' वृथैव कवयो वर्णयन्तीति स्मये हेतुर्व्यज्यते। वाल्मीकीये स्वयमेवानुसूयां

प्रति विवाहकाले स्वस्य षाड्वार्षिकत्वम् उक्तवत्याः सीतायाः व्यञ्जितस्तनवाधात् लक्षणया रामदर्शनानन्देन बालस्वरूपं विस्मृत्य नित्यकैशोररूपं प्रकटितवतीति व्यज्यते।३०

ततो मुमुदिरे सर्वे राजदाराः स्वलङ्कृतम्।
गवाक्षजालरन्ध्रेभ्यो दृष्ट्वा लोकविमोहनम्।।३१

**तत इति**—सीताविवाहयोग्यः श्रीराम एवेति मुमुदिरे। एतेन श्रीरामस्य सौकुमार्यमवलोक्य तेषां पूर्वं विषादो व्यज्यते।३१

ततोऽब्रवीन्मुनिं राजा सर्वशास्त्रविशारदः।
भो कौशिक! मुनिश्रेष्ठ! पत्रं प्रेषय सत्वरम्।।३२
राजा दशरथः शीघ्रमागच्छतु सपुत्रकः
विवाहार्थं कुमाराणां सदारः सह मन्त्रिभिः।।३३
तथेति प्रेषयामास दूतांस्त्वरितविक्रमान्।
ते गत्वा राजशार्दूलं रामश्रेयो न्यवेदयन्।
श्रुत्वा रामकृतं राजा हर्षेण महताप्लुतः।।३४

**ते गत्वेति**—राजशार्दूलं दशरथं रामस्य श्रेयो रामकृतधनुर्भङ्गपूर्वकविवाहरूपम्।४३

मिथिलागमनार्थाय त्वरयामास मन्त्रिणः।
गच्छन्तु मिथिलां सर्वे गजाश्वरथपत्तयः।।३५

त्वरयामासेत्यनेन विश्वामित्रसमागमसमये वसिष्ठसूचितश्रीरामविवाहोपयुक्तसामग्रीसज्जीकरणं पूर्वमेवासीदिति ध्वनितम्।३५

रथमानय मे शीघ्रं गच्छाम्यद्यैव मा चिरम्।
वसिष्ठस्त्वग्रतो यातु सदारः सहितोऽग्निभिः।।३६
राममातॄः समादाय मुनिर्मे भगवान् गुरुः।
एवं प्रस्थाप्य सकलं राजर्षिर्विपुलं रथम्।।३७

**रामेति**—राममातॄः समादायेत्युपलक्षणम्। एतेन विवाहे स्त्रीणां गमनानर्हत्वात् सर्वासामयोध्यावासिनारीणां श्रीरामविरहातुरात्वं सूचितम्।३७

महत्या सेनया सार्धमारुह्य त्वरितो ययौ।
आगतं राघवं श्रुत्वा राजा हर्षसमाकुलः।।३८

प्रत्युज्जगाम जनकः शतानन्दपुरोधसा।
यथोक्तपूजया पूज्यं पूजयामास सत्कृतम् ॥३९
रामस्तु लक्ष्मणेनाशु ववन्दे चरणौ पितुः।
ततो हृष्टो दशरथो रामं वचनमब्रवीत् ॥४०

रामस्त्विति—श्रीरामलक्ष्मणयोर्जनकेन सहागमनेन पितृदर्शनोत्कण्ठातिशयो ध्वनितः।४०

दिष्ट्या पश्यामि ते राम ! मुखं फुल्लाम्बुजोपमम्।
मुनेरनुग्रहात्सर्वं सम्पन्नं मम शोभनम् ॥४१

दिष्ट्येति। मुनेरनुग्रहादेतेन परमसुकुमारकरचरणाद्यवयवस्त्वं यद् ताडकादिवधं कृतवान् तन्मुनेरेवानुग्रह इति। तेन च दशरथस्य[१] वात्सल्याकुलत्वं ध्वनितम्।४१

इत्युक्त्वाघ्राय मूर्धानमालिङ्ग्य च पुनः पुनः।
हर्षेण महताविष्टो ब्रह्मानन्दं गतो यथा ॥४२
ततो जनकराजेन मन्दिरे सन्निवेशितः।
शोभने सर्वभोगाढ्ये सदारः ससुतः सुखी ॥४३
ततः शुभे दिने लग्ने सुमुहूर्त्ते रघूत्तमम्।
आनयामास धर्मज्ञो रामं सभ्रातृकं तथा ॥४४
रत्नस्तम्भे सुविस्तारे सुविताने सुतोरणे।
मण्डपे सर्वशोभाढ्ये मुक्तापुष्पफलान्विते ॥४५
वेदविद्भिः सुसम्बाधे ब्राह्मणैःस्वर्णभूषितैः।
सुवासिनीभिः परितो निष्ककण्ठीभिरावृते ॥४६

वेदविद्भिरिति—सुसम्बाधे संकीर्णे। 'पनकोरुचको रुक्यो निष्कं वक्षोविभूषणम्' इति कोशान्निष्कं वक्षोविभूषणं कण्ठे यासां ताभिः।४६

भेरीदुन्दुभिनिर्घोषैर्गीतनृत्यैः समाकुले।
दिव्यरत्नाञ्चिते स्वर्णपीठे रामं न्यवेशयत् ॥४७

**भेरीति**—रत्नाञ्चिते रत्नघटिते।४७

---

१. व्याकुवात्सल्याकुलत्वम्—मदीयपुस्तके।

वशिष्ठं कौशिकं चैव शतानन्दः पुरोहितः।
यथाक्रमं पूजयित्वा रामस्योभयपार्श्वयोः॥४८

स्थापयित्वा स तत्राग्नि ज्वालयित्वा यथाविधि।
सीतामानीय शोभाढ्यां नानारत्नविभूषिताम्॥४९

सभार्यो जनकः प्रायाद्रामं राजीवलोचनम्।
पादौ प्रक्षाल्य विधिवत्तदपो मूर्ध्न्यधारयत्॥५०

**स्थापयित्वेति**—सीतामानीय पुरतः कृत्वा सभार्यो जनको रामं प्रति प्रायादिति योजना। राजीवलोचनमेतेन दर्शनमात्रेणानन्दजनकत्वं सूचितम्। तदपो मूर्ध्न्यधारयदित्यनेन अभिनवगङ्गालाभो जात इति ममाहोभाग्यमिति ध्वनितम्।४९-५०।

या धृता मूर्ध्नि शर्वेण ब्रह्मणा मुनिभिः सदा
ततः सीतां करे धृत्वा साक्षतोदकपूर्वकम्॥५१

रामाय प्रददौ प्रीत्या पाणिग्रहविधानतः।
सीता कमलपत्राक्षी स्वर्णमुक्तादिभूषिता॥५२

दीयते मे सुता तुभ्यं प्रीतो भव रघूत्तम!।
इति प्रीतेन मनसा सीतां रामकरेऽर्पयत्॥५३

**दीयत इति**—प्रीतो भव रघूत्तम इत्यनेन जानकीसहित एव भक्तिं ददातीति सूचितम्।५३

मुमोद जनको लक्ष्मीं क्षीराब्धिरिव विष्णवे।
ऊर्मिलां चौरसीं कन्यां लक्ष्मणाय ददौ मुदा॥५४

**मुमोदेति**—लक्ष्मीं विष्णवे दत्त्वा क्षीराब्धिरिव मुमोदेत्यनेन तल्लक्ष्मीतः सीताविष्टलक्ष्म्याभिन्नत्वं सूचितं। तेन क्षीरसागरवासिलक्ष्म्याम्-ऊर्मिलाविष्टा रमा वैकुण्ठवासिनारायणलक्ष्म्यां माण्डव्याविष्टा भूमनारायणलक्ष्म्यां श्रुतिकीर्तिराविष्टेति सूचितम्।५४

तथैव श्रुतिकीर्तिं च माण्डवीं भ्रातृकन्यके।
भरताय ददावेकां शत्रुघ्नायापरां ददौ॥५५

**तथैवेति**—भ्रातुः कुशध्वजस्य कन्यके।५५

चत्वारो दारसम्पन्ना भ्रातरः शुभलक्षणाः।
विरेजुः प्रभया सर्वे लोकपाला इवापरे॥५६

ततोऽब्रवीद्वशिष्ठाय विश्वामित्राय मैथिलः।
जनकः स्वसुतोदन्तं नारदेनाभिभाषितम् ॥५७
यज्ञभूमिविशुद्ध्यर्थं कर्षतो लाङ्गलेन मे।
सीतामुखात्समुत्पन्ना कन्यका शुभलक्षणा ॥५८
तामद्राक्षमहं प्रीत्या पुत्रिकाभावभाविताम्।
अर्पिता प्रियभार्यायै शरच्चन्द्रनिभानना ॥५९
एकदा नारदोऽभ्यागाद्विविक्ते मयि संस्थिते।
रणयन्महतीं वीणां गायन्नारायणं विभुम् ॥६०
पूजितः सुखमासीनो मामुवाच सुखान्वितः।
शृणुष्व वचनं गुह्यं तवाभ्युदयकारणम् ॥६१
परमात्मा हृषीकेशो भक्तानुग्रहकाम्यया।
देवकार्यार्थसिद्ध्यर्थं रावणस्य वधाय च ॥६२

**परमात्मेति**—हृषीकाणामिन्द्रियाणामीशो नियन्ता इन्द्रियगतदोषप्रसक्तिवारणायाह परमात्मेति।६२

जातो राम इति ख्यातो मायामानुषवेषधृक्।
आस्ते दाशरथिर्भूत्वा चतुर्धा परमेश्वरः ॥६३

**जात इति**—राम इति ख्यातः श्रुतिस्मृत्यादिषु साकेतविहारी राम इति प्रसिद्धः। तथाहि—'अष्टावक्रा नवद्वारा देवानां पूरयोध्या तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषावृतः, यो वै तां ब्रह्मणो वेद अमृतेनावृतां पुरीं तस्मै ब्रह्म च ब्रह्मा च आपः कीर्तिं प्रजां ददौ विभ्राजमानां हरिणीं यशसा संपरिवृतां पुरीं हिरण्मयं ब्रह्मा विवेश अपराजितेति' यजुर्वेदीयश्रुतिः। अपराजितावर्णनं छान्दोग्ये कौषीतकीब्राह्मणे च प्रसिद्धम्। स्मृतिश्च 'साकेते नित्यमाधुर्ये धाम्नि संराजते सदे'त्यादि। मायया कृपया नारायणे आवेशेन मानुषवेषधृक् जात आविर्भूतः कुत्र जात इति चेत्तत्राह—आस्त इति, स परमेश्वरः दाशरथिः रामलक्ष्मणभरतशत्रुघ्नरूपः परनारायणक्षीरसागरवासिरमावैकुण्ठवासिभूम-नारायणादिषु आवेशेन चतुर्धा भूत्वा आस्ते। रामादीनां तत्त्वैक्यात् दाशरथिरित्येकवचनं नानुपपन्नम्।६३

योगमायापि सीतेति जाता वै तव वेश्मनि।
अतस्त्वं राघवायैव देहि सीतां प्रयत्नतः ॥६४

नान्येभ्यः पूर्वभार्यैषा रामस्य परमात्मनः।
इत्युक्त्वा प्रययौ देवगतिं देवमुनिस्तदा ॥६५

**योगमायेति**—योगशब्देन मूलप्रकृतिः मायाशब्देन प्रेमा लक्ष्मीः सीतावेशेन सीता इति प्रसिद्धा तव वेश्मनि जाता आविर्भूता। नेति अन्यादाने हेतुः पूर्वभार्यैषा।६४-६५।

तदारभ्य मया सीता विष्णोर्लक्ष्मीर्विभाव्यते।
कथं मया राघवाय दीयते जानकी शुभा ॥६६

**तदेति**—तदारभ्य नारदवचनश्रवणदिनात् मया सीता विष्णोः श्रीरामादेशयुतस्य लक्ष्मीः सीतावेशद्विभुजा विभाव्यते। एतेन श्रीरामस्येयं श्रीरामाय दत्तेति व्यज्यते।६६

इति चिन्तासमाविष्टःकार्यमेकमचिन्तयम्।
मत्पितामहगेहे तु न्यासभूतमिदं धनुः ॥६७
ईश्वरेण पुरा क्षिप्तं पुरदाहादनन्तरम्।
धनुरेतत्पणं कार्यमिति चिन्त्य कृतं तथा ॥६८

**ईश्वरेणेति**—धनुरेतत्पणमिति। एतेनास्य धनुष ऐश्वरत्वेन शिवोपास्यत्वात् राम एवारोपयितुं समर्थो भविष्यतीति जनकाभिप्रायो ध्वनितः।६८

सीतापाणिग्रहार्थाय सर्वेषां माननाशनम्।
त्वत्प्रसादान्मुनिश्रेष्ठ! रामो राजीवलोचनः ॥६९

**सीतेति**—सर्वेषां माननाशनमेतेन रावणादयः देवदैत्यराजानः सर्वेऽप्युत्थापयितुमशक्ताः स्वस्वगृहं गताः इति सूचितम्।६९

आगतोऽत्र धनुर्द्रष्टुं फलितो मे मनोरथः।
अद्य मे सफलं जन्म राम! त्वां सह सीतया ॥७०
एकासनस्थं पश्यामि भ्राजमानं रविं यथा।
त्वत्पादाम्बुधरो ब्रह्मा सृष्टिचक्रप्रवर्तकः ॥७१
बलिस्त्वत्पादसलिलं धृत्वाऽभूद्दिविजाधिपः।
त्वत्पादपांसुसंस्पर्शादहल्या भर्तृशापतः ॥७२
सद्य एव विनिर्मुक्ता कोऽन्यस्त्वत्तोऽधिरक्षिता ॥७३

**आगत इति**—सीतया सह एकासनस्थं त्वां पश्यामीत्यनेन जनकस्य सीतारामयुग-

लोपासना व्यक्ता। त्वदिति। बलिस्त्वत्पादसलिलमित्यनेन सर्वेऽवतारिणश्च तवैव रूपाणीति सूचितम्। अधिरक्षिता अधिको रक्षकः।७०-७३।

यत्पादपङ्कजपरागसुरागयोगि-
वृन्दैर्जितं भवभयं जितकालचक्रैः।
यन्नामकीर्तनपरा जितदुःखशोका,
देवास्तमेव शरणं सततं प्रपद्ये।।७४

**यदिति**—जितकालचक्रैः यस्य श्रीरामस्य पादपङ्कजपरागेषु सुतरां रागो येषां तैर्योगिवृन्दैर्भवभयं जितं यन्नामकीर्तनपरा देवा इन्द्रादयोऽपि जितदुःखशोका जाता इति शेषः। अत्र ब्रह्मादीनां देवानां मनुष्याणां च श्रीरामचरणकमलपरागस्पर्शनामकीर्तन-करणकदुःखशोकभवभयजयकथनेन सर्वेषां रामोपासकत्वं तेन च श्रीरामोपासनस्य सर्वतः परत्वं सूचितम्।७४

इति स्तुत्वा नृपः प्रादाद्राघवाय महात्मने।
दीनाराणां कोटिशतं रथानामयुतं तदा।।७५

**इतीति**—दीनाराणाम्। कार्षापणैश्चतुर्भिस्तु विज्ञेयः धान्यको बुधैः। ते द्वादश सुवर्णं तु दीनारस्तत्त्रिकः स्मृतः।' इति कात्यायनोक्तानाम्। अयुतं दशसहस्रम्।७५

अश्वानां नियुतं प्रादाद् गजानां षट्शतं तथा।
पत्तीनां लक्षमेकं तु दासीनां त्रिशतं ददौ।।७६

**अश्वानामिति**—नियुतं दशलक्षम्।७६

दिव्याम्बराणि हारांश्च मुक्तारत्नमयोज्ज्वलान्।
सीतायै जनकः प्रादात्प्रीत्या दुहितृवत्सलः।।७७
वसिष्ठादीन् सुसम्पूज्य भरतं लक्ष्मणं तथा।
पूजयित्वा यथान्यायं तथा दशरथं नृपम्।।७८
प्रस्थापयामास नृपो राजानं रघुसत्तमम्।
सीतामालिङ्ग्य रुदतीं मातरः साश्रुलोचनाः।।७९
श्वश्रूशुश्रूषणपरा नित्यं राममनुव्रता।
पातिव्रत्यमुपालम्ब्य तिष्ठ वत्से! यथासुखम्।।८०

**श्वश्रू इति**—हे वत्से! त्वं तिष्ठेत्यनेन कौशल्यादिशुश्रूषणपरा श्रीरामसहितात्रैव तिष्ठेति व्यज्यते तेन च तासां प्रेमातिशयः।८०

प्रयाणकाले रघुनन्दनस्य भेरीमृदङ्गानकतूर्यघोषः।
स्ववासिभेरीघनतूर्यशब्दैः सम्मूर्च्छितो भूतभयङ्करोऽभूत् ॥८१

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे
बालकाण्डे [1]षष्ठोऽध्यायः ६

⊙

**प्रयाणकाल इति**—भूतभयङ्कर इत्यनेन जानकीविरहेण तत्रत्यचेतनाचेतनसकलभूतानि व्यथितान्यभूवन्निति ध्वनितम् [2]तेन तेषां स्वविरहजन्यदुःखजत्वाद् यदि श्रीरामो गच्छेत्तर्हि तस्य करुणाकरत्वहानिः स्यादिति व्यक्तम्[3]। तेन च दशरथादिभिः सह श्रीरामश्चतुरो वर्षान् तत्र स्थित्वा ययाविति सूचितम्। चचार चतुरो वर्षान् जनकस्य निवेशने इति हरिवंशोक्तेः।८२

[4]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां बालकाण्डे
षष्ठोऽध्यायः।६



---

१. षष्ठः सर्ग इति रा० व० पु०।
२. तः ३. पर्यन्तभागः केवलं रा० व० पुस्तके।
४. इति ध्वनिप्रकाशिकायां टीकायां षष्ठोऽध्यायः।६ इति रा० व० पु०।

## अथ सप्तमोऽध्यायः

**सूत उवाच--**

अथ गच्छति श्रीरामे मैथिलाद्योजनत्रयम्।
निमित्तान्यतिघोराणि ददर्श नृपसत्तमः।।१

एतावता ग्रन्थेन श्रीसङ्गः सूचितः। श्रीरामोत्कर्षं परशुरामजयेन प्रकटयिष्यन्कथा-मुपक्षिपति **अथेति**—मैथिलात् मैथिलजनकनगरात्।१

नत्वा वसिष्ठं पप्रच्छ किमिदं मुनिपुङ्गव!।
निमित्तानीह दृश्यन्ते विषमाणि समन्ततः।।२
वसिष्ठस्तमथ प्राह भयमागामि सूच्यते।
पुनरप्यभयं तेऽद्य शीघ्रमेव भविष्यति।।३
मृगाःप्रदक्षिणं यान्ति पश्य त्वां शुभसूचकाः।
इत्येवं वदतस्तस्य ववौ घोरतरोऽनिलः।।४
मुष्णंश्चक्षूंषि सर्वेषां पांसुवृष्टिभिरर्दयन्।
ततो व्रजन् ददर्शाग्रे तेजोराशिमुपस्थितम्।।५
कोटिसूर्यप्रतीकाशं विद्युत्पुञ्जसमप्रभम्।
तेजोराशिं ददर्शाथ जामदग्न्यं प्रतापवान्।।६

**कोटिसूर्येति**--प्रतापवान् दशरथः कोटिसूर्यप्रतीकाशं विद्युत्पुञ्जसमप्रभम् तेजोराशिं ददर्शेत्यनेन दशरथेन्द्रियाणां दिव्यत्वं प्रतीयते। कोटिसूर्यप्रतीकाशमित्यनेन नारायणावेशेन तस्य परमेश्वरत्वं व्यज्यते।६

नीलमेघनिभं प्रांशुं जटामण्डलमण्डितम्।
धनुः परशुपाणिं च साक्षात्कालमिवान्तकम्।।७

**नीलेति**--अन्तकं प्रलयकर्तारम्। कालमिवेत्यनेन तस्य संहारकर्तृत्वे गृहीतरुद्रशक्तित्वं सूचितम्।७

कार्तवीर्यान्तकं रामं दृप्तक्षत्रियमर्दनम्।
प्राप्तं दशरथस्याग्रे कालमृत्युमिवापरम्।।८

तं दृष्ट्वा भयसन्त्रस्तो राजा दशरथस्तदा।
अर्घ्यादिपूजां विस्मृत्य त्राहि त्राहीति चाब्रवीत्॥९
दण्डवत्प्रणिपत्याह पुत्रप्राणान्प्रयच्छ मे।
इति ब्रुवन्तं राजानमनादृत्य रघूत्तमम्॥१०

**दण्डवदिति**—पुत्रप्राणान् प्रयच्छ मे इत्यनेन पुत्रार्थमेव भयमिति प्रतीयते। तेन च वात्सल्यातिशयः।१०

उवाच निष्ठुरं वाक्यं क्रोधात्प्रचलितेन्द्रियः।
त्वं राम इति नाम्ना मे चरसि क्षत्रियाधम!॥११

**त्वमिति**—क्षतात् त्रायते इति क्षत्रं तस्यापत्यानि क्षत्रियाः ते अधमाः यस्मात् स तत्सम्बोधने परमरक्षकेत्यर्थः। मे नाम्ना राम इति प्रसिद्धः सन् पृथिव्यां चरसि क्षत्रियत्राणायेति भावः।११

द्वन्द्वयुद्धं प्रयच्छाशु यदि त्वं क्षत्रियोऽसि वै।
पुराणं जर्जरं चापं भङ्क्त्वा त्वं कत्थसे मुधा॥१२

**द्वन्द्वेति**—त्वं यदि क्षत्रियोऽसि तदा मे द्वन्द्वयुद्धमाशु प्रयच्छ। एतेन मया सह द्वन्द्वयुद्धे आत्मत्राणं कुर्याश्चेत्तदा सर्वं त्वत्कृतं क्षत्रियाणामपि सेत्स्यतीति व्यज्यते।१२

अस्मिंस्तु वैष्णवे चाप आरोपयसि चेद्गुणम्।
तदा युद्धं त्वया सार्धं करोमि रघुवंशज॥१३

जीवास्तु मया सह युद्धं कर्तुमशक्ता इत्याह **अस्मिन्निति**—तदा त्वया सार्धं युद्धं करोमि। एतेन वैष्णवे चापे त्वया गुणे आरोपिते त्वां नारायणं ज्ञात्वाऽहमपि नारायणत्वेन समानतया युद्धं करिष्यामीति फलितम्। एतेन तस्य नारायणीयसकलशक्तिमत्त्वं व्यज्यते।१३

नो चेत् सर्वान् हनिष्यामि क्षत्रियान्तकरो ह्यहम्।
इति ब्रुवति वै तस्मिंश्चचाल वसुधा भृशम्॥१४
अन्धकारो बभूवाथ सर्वेषामपि चक्षुषाम्।
रामो दाशरथिर्वीरो वीक्ष्य तं भार्गवं रुषा॥१५
धनुराच्छिद्य तद्धस्तादारोप्य गुणमञ्जसा।
तूणीराद् बाणमादाय सन्धायाकृष्य वीर्यवान्॥१६

उवाच भार्गवं रामं शृणु ब्रह्मन्! वचो मम।
लक्ष्यं दर्शय बाणस्य ह्यमोघो मम सायकः॥१७

**उवाचेति**—ब्रह्मन्निति सम्बोधनम्। ब्रह्म मत्वा त्वां न हन्मीति व्यज्यते।१७

लोकान्पादयुगं वापि वद शीघ्रं ममाज्ञया।
अयं लोकः परो वाथ त्वया गन्तुं न शक्यते।
एवं त्वां हि प्रकर्तव्यं, वद शीघ्रं ममाज्ञया॥१८

**लोकान् इति**—एवं यथा त्वां प्रति कर्तव्यं मम वर्तते तच्छीघ्रं वदेत्यर्थः। ममाज्ञयेत्यनेन यदि न वदिष्यसि तदात्र हनिष्याम्येवेति व्यञ्जितम्। तेन च तस्येश्वराणामपि शास्तृत्वमिति। श्रुतिश्च 'तमीश्वराणां परमं महेश्वरमि'ति। 'सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुरिति' वाल्मीकीयोक्तेः। (अस्यार्थस्तु मत्कृतवाल्मीकीयसन्दर्भेऽनुसन्धेयः)। शीघ्रं वदेत्यनेन स्वकीयानां भयं नश्यत्विति व्यज्यते।१८

एवं वदति श्रीरामे भार्गवो विकृताननः॥१९

**एवमिति**—विकृताननः प्राप्तपराभवत्वादिति भावः।१९

संस्मरन् पूर्ववृत्तान्तमिदं वचनमब्रवीत्।
राम! राम! महाबाहो! जाने त्वां परमेश्वरम्॥२०

**संस्मरन्निति**—रामरामेति भये[1] वीप्सा। एतेन यदि हन्यादेव तदा मरणात्पूर्वमेव रामस्मरणं श्रेय इति व्यज्यते। त्वां परमेश्वरं जाने एतेन धनुरारोपणेनैव त्वां नारायणं ज्ञातवानिदानीमाज्ञाप्रदानेनेश्वरमपीति व्यज्यते।२०

पुराणपुरुषं विष्णुं जगत्सर्गलयोद्भवम्।
बाल्येऽहं तपसा विष्णुमाराधयितुमञ्जसा॥२१

परमेश्वरत्वमेवाविष्करोति **पुराणपुरुषमिति**—पुराणं पुरुषम् अनादित्वात् तद्विष्णुं[2] स्वतेजसा जगद्व्यापकत्वात् अत एव जगतसर्गलयोद्भवं जगतः सृष्टिसंहारस्थितयो यस्मात्।२१

---

१. भवो मदीयपुस्तके। २. यद्विष्णुम् मदीयपुस्तके।

चक्रतीर्थं शुभं गत्वा तपसा विष्णुमन्वहम् ।
अतोषयं महात्मानं नारायणमनन्यधीः ॥२२

ततः प्रसन्नो देवेशः शङ्खचक्रगदाधरः ।
उवाच मां रघुश्रेष्ठ ! प्रसन्नमुखपङ्कजः ॥२३

**श्रीभगवानुवाच—**

उत्तिष्ठ तपसो ब्रह्मन् ! फलितं ते तपो महत् ।
मच्चिदंशेन युक्तस्त्वं जहि हैहयपुङ्गवम् ॥२४

कार्तवीर्यं पितृहणं तदर्थं तपसः श्रमः ।
ततस्त्रिः सप्तकृत्वस्त्वं हत्वा क्षत्रियमण्डलम् ॥२५

**उत्तिष्ठेति**—त्वं मच्चिदंशेन युक्तः हैहयगोत्रापत्यं कार्तवीर्यं जहि, तस्यापि मच्चक्रावतारत्वादिति भावः ।२४-२५ ।

कृत्स्नां भूमिं कश्यपाय दत्त्वा शान्तिमुपावह ।
त्रेतायुगे दाशरथिर्भूत्वा रामोऽहमव्ययः ॥२६

उत्पत्स्ये परया शक्त्या तदा द्रक्ष्यसि मां ततः ।
मत्तेजः पुनरादास्ये त्वयि दत्तं मया पुरा ॥२७

**कृत्स्नामिति**—'परस्याःशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति' श्रुतेः । श्रीरामावेशं गृहीत्वा दाशरथी रामो भूत्वा उत्पत्स्ये । ततः दर्शनानन्तरम् ।२६-२७ ।

तदा तपश्चरंल्लोके तिष्ठ त्वं ब्रह्मणो दिनम् ।
इत्युक्त्वान्तर्दधे देवस्तथा सर्वं कृतं मया ॥२८

**तदेति**—ब्रह्मणो दिनं चतुर्युगसहस्राख्यम् ।२८

स एव विष्णुस्त्वं राम ! जातोऽसि ब्रह्मणार्थितः ।
मयि स्थितं तु त्वत्तेजस्त्वयैव पुनराहृतम् ॥२९

**स एवेति**—स एव पुरा मम वरद एव विष्णुर्ब्रह्मणा प्रार्थितस्त्वं च तदाविष्टः जातोऽसि ।२९

अद्य मे सफलं जन्म प्रतीतोऽसि मम प्रभो ।
ब्रह्मादिभिरलभ्यस्त्वं प्रकृतेः पारगो मतः ॥३०

**अद्य इति**—मम प्रतीतोऽसि मया प्रत्यभिज्ञातोऽसीत्यर्थः। ननु मत्प्रत्यभिज्ञायाः किमेवं सौलभ्यं येनैवं संभ्रमस्तत्राह ब्रह्मादिभिरलभ्यः तदलभ्यत्वे हेतुः प्रकृतेः पारग इति मनोवचनागोचरत्वात्।३०

त्वयि जन्मादिषड्भावा: न सन्त्यज्ञानसंभवाः।
निर्विकारोऽसि पूर्णस्त्वं गमनादिविवर्जितः॥३१

**त्वयीति**—गमनादिविवर्जितः। 'अयोध्यां तु परित्यज्य स क्वचिन्नैव गच्छती'त्युक्तेः सदायोध्याविहारीत्यर्थः।३१

यथा जले फेनजालं धूमो वह्नौ तथा त्वयि।
त्वदाधारा त्वद्विषया माया कार्यं सृजत्यहो॥३२

**यथेति**—यथा जले फेनजालं सद्वह्नौ यथा धूमो सन्नेवं वाय्वादि वा व्यक्तीभवति तत्र तत्र तत्कारणतया विद्यमानत्वात्, तथा त्वयि क्रिया नित्येत्यर्थः। यथा सूर्ये आतपः शशिनि प्रसन्नता प्रसाद इव वायौ स्पन्दो गतिरिव हिमे शैत्यमिव इवेति यथेत्यर्थे, एषा त्वद्विषया माया जीवानां त्वद्विषयज्ञानाव[1]रकशक्तिः त्वयि त्वत्प्रकाशभूतप्रकाशब्रह्मणि त्वयि सूक्ष्मतया स्थितं कार्यं जडचेतनसङ्घातं समष्टिरूपं व्यष्टिरूपं सृजति[2] प्रकटयति।३२

यावन्मायावृता लोकास्तावत्त्वां न विजानते।
अविचारितसिद्धैषाऽविद्या विद्याविरोधिनी॥३३

**यावदिति**—लोकाः यावन्मायया त्वद्विषयकस्वाज्ञानेनावृतास्तावत्त्वामुक्तलक्षणं परमेश्वरं न जानते। तथा हेतुः एषा विद्याविरोधिनी अविद्या अविचारितेन श्रीरामो मम सेव्यः अहं तस्य सेवक इत्यविचारिणा सिद्धा।३३

अविद्याकृतदेहादिसङ्घाते प्रतिबिम्बिता।
चिच्छक्तिर्जीवलोकेऽस्मिन् जीव इत्यभिधीयते॥३४

कार्यं सृजत्यहो (श्लोकः ३२) इत्युक्तम् तत्कार्यं दर्शयति **अविद्येति**—अविद्यया उक्तलक्षणया कृते देहादिसंघाते यदा त्वच्चिच्छक्तिः त्वच्चिच्छरीरं समष्टिरूपेण प्रतिबिम्बिता नामरूपविभागार्हतया प्रतिबिम्बवत् प्रकटिता तदाऽस्मिंल्लोके [3]जीव इत्यभिधीयते। नचैतानि सूक्ष्मभूतानि अपञ्चीकृतानि[4] शरीरज्ञानस्य प्रतिबन्धकानि भवन्ति कारणस्य नित्यत्वात्।३४

---

१. तः २. पर्यन्तांशः रा० व० पुस्तकस्थः।
३. तः ४. पर्यन्तांश : उभयपुस्तके ऽदृष्टः सम्पादकेन पूरितः।

यावद्देहमनःप्राणबुद्ध्यादिष्वभिमानवान् ।
तावत्कर्तृत्वभोक्तृत्वसुखदुःखादिभाग्भवेत् ॥३५

ननु चिच्छक्तेरक्रियत्वेनाकर्तृत्वात् तत्कार्यं प्रतिबिम्बिभूते जीवे कथमत आह—**यावदिति**—देहमनः प्राणबुद्ध्यादिषु यावदभिमानवान् अहमिति बुद्धिमान् भवति। तथा भगवच्छरीरमूर्तचिदचितोरन्योन्याऽध्यासो भवति तावत्कर्तृत्वादिभाग्भवेत्।३५

आत्मनः संसृतिर्नास्ति बुद्धेर्ज्ञानं न जात्विति।
अविवेकाद् द्वयं युक्त्वा संसारीति प्रवर्तते ॥३६

एतदेव विवृणोति **आत्मन इति**—वस्तुतः आत्मनो जीवस्य संसृतिः कर्तृत्वभोक्तृत्वाद्यभिमानकृतः संसारो नास्ति अपरिणामित्वादिति भावः। एवं बुद्धेर्ज्ञानं न जडत्वादिति भावः। अविवेकात् अहं चेतनो भगवच्छरीरं बुद्ध्यादयो जडाः भगवदचिच्छरीरकार्याणि इति विवेकाभावाद् द्वयं युक्त्वा अहमिति बुद्ध्या गृहीत्वा संसारी जीव इति–अहं कर्ता भोक्तेत्यादिरूपेण प्रवर्तते व्यवहरति। अयं भावः यावत् मायादिकार्यं देहादौ अविवेकादहं बुद्धिं कुरुते तावत्संसारी भवति। विवेकोत्तरं भगवत्कृपालब्धचिदानन्दमयषष्ठशरीरस्थितः भगवत्पार्षदादिर्भवतीति व्यञ्जितम्।३६

जडस्य चित्समायोगाच्चित्त्वं भूयाच्चितेस्तथा।
जडसङ्गाज्जडत्वं हि जलाग्न्योर्मेलनं यथा ॥३७

नन्विह शरीरे बुद्धेः चिती संज्ञाने इति धातुनिष्पन्नचित्तव्यवहारानुपपत्तिरत आह—**जडस्येति**—चित्समायोगात् जडस्य चित्त्वं भूयात् भवेत्। नन्वेवमहमज्ञ इति व्यवहारानुपपत्तिरत आह तथा चितेर्जडसंयोगाज्जडत्वं। विरुद्धधर्मयोः संमेलने मिथोऽन्योऽन्यधर्मतिरोभावे दृष्टान्तमाह–मेघे जलाग्न्योर्मेलनं यथेत्यर्थः। विद्युतः प्रकाशं जातमपि जलम् आवृणोति जलस्वरूपं जडमपि अग्निसंयोगाद्बिन्दुरूपेण प्रकाशरूपतां प्राप्नोतीत्यर्थः।३७

यावत्त्वत्पादभक्तानां सङ्गसौख्यं न विन्दति।
तावत्संसारदुःखौघान्न निवर्तेन्नरः सदा ॥३८

नन्वेवं यदि तर्हि संसृतेः कथं मुक्तिरत आह **यावदिति**—सङ्गाज्जायमानं सुखं न विन्दति प्राप्नोति तावदित्यर्थः।३८

सत्सङ्गलब्धया भक्त्या यदा त्वां समुपासते।
तदा माया शनैर्याति तानवं प्रतिपद्यते ॥३९

**सत्सङ्गेति**—सतां सङ्गेन लब्धया भक्त्या सगुणया त्वां यदा जनाः उपासते तदा तेभ्यो माया शनैर्मन्दैर्याति अपसरति अत एव सा तानवं तनुत्वं सूक्ष्मत्वं प्रतिपद्यते।३९

ततस्त्वज्ज्ञानसम्पन्नः सद्गुरुस्तेन लभ्यते।
वाक्यज्ञानं गुरोर्लब्ध्वा त्वत्प्रसादाद्विमुच्यते[1]।।४०

**तत इति**—ततः तव ज्ञानेन सम्पन्नः सद्गुरुः ततस्त्वद्भक्तियोगात् तेन लभ्यते। तदनन्तरं तादृशगुरोःसकाशाद्वाक्यज्ञानं तत्त्वमसीति वाक्यस्य तद् ब्रह्म त्वमसि शरीरिशरीरयोरैक्यप्रतीत्या तदीयचिच्छरीरत्वेन च त्वं तदेवासीरित्यर्थः, इत्यर्थज्ञानं लब्ध्वा ब्रह्मभावं गतः त्वत्प्रसादात् षष्ठशरीरप्राप्तिरूपं 'त्वत्प्रसादं प्राप्य ल्यब्लोपे पञ्चमी विमुच्यते संसारमतिक्रम्य वर्तत इत्यर्थः। षष्ठशरीरलाभे 'यमेवैष वृणुते तेन लभ्यः तस्यैष विवृणुते तनुं स्वाम्।' इति श्रुतिः प्रमाणम्।४०

तस्मात्त्वद्भक्तिहीनानां कल्पकोटिशतैरपि।
न मुक्तिशङ्का विज्ञानशङ्का नैव सुखं तथा।।४१

**तस्मादिति**—मुक्तिशङ्का मुक्तिप्राप्तिसंभावनापि न सुखं तथा नैवेत्यर्थः।४१

अतस्त्वत्पादयुगले भक्तिर्मे जन्मजन्मनि।
स्यात्त्वद्भक्तिमतां सङ्गोऽविद्या याभ्यां विनश्यति।।४२

**अत इति**—यस्मान्मुक्तेरनन्तरमपि त्वद्भक्तेरेव प्राप्यत्वं तस्मादित्यर्थः। भक्तिकारणं भक्तिमत्सङ्गः याभ्यां भक्तिमत्सङ्गतज्जन्यभक्तिभ्यामविद्या विनश्यति। परशुरामस्य श्रीरामचरणकमले भक्तिप्रार्थनया श्रीरामस्य सकलेश्वरैः सर्वावतारैश्च सेव्यत्वं ध्वनितम्।४२

लोके त्वद्भक्तिनिरतास्त्वद्धर्मामृतवर्षिणः।
पुनन्ति लोकमखिलं किं पुनःस्वकुलोद्भवान्।।४३

**लोक इति**—त्वद्धर्मः भागवतधर्मः तद्रूपामृतवर्षणशीलाः सदुपदेष्टार आचार्या इत्यर्थः।४३

नमोऽस्तु जगतां नाथ! नमस्ते भक्तिभावन!।
नमः कारुणिकानन्त! रामचन्द्र! नमोऽस्तु ते।।४४

**नम इति**—कारुणिकेति सम्बोधनं प्रकृतोपयोगाय।४४

---

१. त्वत्प्रसादाल्लब्ध्वा, मदीयपुस्तके।

देव! यद्यत्कृतं पुण्यं मया लोकजिगीषया।
तत्सर्वं तव बाणाय भूयाद्राम! नमोस्तु ते।।४५

**देव इति**—तव बाणाय भूयात्। त्वद्बाणनाश्यं भूयादित्यर्थः। एतेन पापं तु त्वद्दर्शनादेव नष्टं सुकृतमपि बाणेन नाशयित्वा मुक्तिं देहीति व्यङ्ग्यम्। यदि तु परशुरामस्य भगवदवतारत्वात् स्वयं मुक्तत्वेन पुण्यपापस्पर्श एव नास्ति तदा पुण्योपार्जितलोकजिगमिषा नास्ति। ममायमेव लोकः प्रियः यत्र त्वद्दर्शनं त्वद्भक्तिश्च भवतीति ध्वनितम्। तेन च सुकृतोपार्जितलोकानां तुच्छत्वमिति।४५

ततः प्रसन्नो भगवान् श्रीरामः करुणामयः।
प्रसन्नोऽस्मि तव ब्रह्मन्! यत्ते मनसि वर्तते।।४६

**तत इति**—ततः प्रसन्न इत्यनेनाशुतोषित्वं ध्वनितम्।४६

दास्ये तदखिलं कामं मा कुरुष्वात्र संशयम्।
ततः प्रीतेन मनसा भार्गवो राममब्रवीत्।।४७

**दास्य इति**—दास्ये तदखिलं काममित्यनेन उदारतातिशयो ध्वनितः। अत्र त्वत्कामदाने रुष्टोऽयं न दास्यत्येवं रूपं संशयं मा कुरुष्व। एतेन श्रीरामो भक्तापराधस्मरणं न करोतीति ध्वनितम्। उक्तं चैतद् वाल्मीकीये 'न स्मरत्यपकाराणां शतमप्यात्मवत्तया। कथञ्चिदुपकारेण कृतेनैकेन तुष्यतीति'। तेन भक्तदोषादर्शित्वगुणो व्यक्तः।४७

यदि मेऽनुग्रहो राम! तवास्ति मधुसूदन!।
त्वद्भक्तसङ्गस्त्वत्पादे दृढा भक्तिः सदाऽस्तु मे।।४८

**यदीति**—यदि मेऽनुग्रह इत्यनेन भक्तेरनन्यलभ्यत्वं ध्वनितम्।४८

स्तोत्रमेतत्पठेद्यस्तु भक्तिहीनोऽपि सर्वदा।
त्वद्भक्तिस्तस्य विज्ञानं भूयादन्ते स्मृतिस्तव।।४९

**स्तोत्रमिति**—स्तोत्रपाठकानां भक्त्यादिभावप्रार्थनया परशुरामस्य कृपालुतातिशयो ध्वनितः।४९

तथेति राघवेणोक्तः परिक्रम्य प्रणम्य तम्।
पूजितस्तदनुज्ञातो महेन्द्राचलमन्वगात्।।५०
राजा दशरथो हृष्टो रामं मृतमिवागतम्।
आलिङ्ग्यालिङ्ग्य हर्षेण नेत्राभ्यां जलमुत्सृजत्।।५१

ततः प्रीतेन मनसा स्वस्थचित्तः पुरं ययौ।
रामलक्ष्मणशत्रुघ्नभरता देवसम्मिताः।
स्वां स्वां भार्यामुपादाय रेमिरे स्वस्वमन्दिरे॥५२

तत इति—स्वस्वमन्दिरे नवेषु स्वस्वमन्दिरेषु यथर्तुविहारं चक्रुः। वसन्ते कुसुमयुद्धादिक्रीडा ग्रीष्मे जलविहारादिक्रीडा वर्षासु दोलादिक्रीडा शरदि रासादिक्रीडा हेमन्ते अयनसंभोगादि अयोध्यातीर्थपर्यटनादिलीला सखिभिः सह हास्यादिलीला शिशिरे होलाखेलनादिलीला। [1]ते षडुक्तविहारा अस्मत्कृतभाषाप्रबन्धगीतावलीरामायणादिषु विस्तरेण द्रष्टव्याः।५२

मातापितृभ्यां संहृष्टो रामः सीतासमन्वितः।
रेमे वैकुण्ठभवने श्रिया सह यथा हरिः॥५३
युधाजिन्नाम कैकेयीभ्राता भरतमातुलः।
भरतं नेतुमागच्छत्स्वराज्यं प्रीतिसंयुतः॥५४
प्रेषयामास भरतं राजा स्नेहसमन्वितः।
शत्रुघ्नं चापि सम्पूज्य युधाजितमरिन्दमः॥५५
कौशल्या शुशुभे देवी रामेण सह सीतया।
देवमातेव पौलोम्या शच्या शक्रेण शोभना॥५६
साकेते लोकनाथप्रथितगुणगणोऽलोकसंगीतकीर्तिः,
श्रीरामः सीतयाऽस्तेऽखिलजननिकरानन्दसन्दोहमूर्तिः।
नित्यश्रीर्निर्विकारो निरवधिविभवो नित्यमायानिरासो,
मायाकार्यानुसारी मनुज इव सदा भाति देवोऽखिलेशः॥५७

[2]इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
बालकाण्डे सप्तमोऽध्यायः।७

अग्रिमकाण्डेऽयोध्यां विहाय वनगमनादिलीला श्रीरामावेशयुक्तनारायणेन करिष्यमाणा वक्तव्येति श्रीमहादेवः यदावेशं गृहीत्वा नारायणोऽवतीर्णः तस्य वाङ्मनसगोचरातीत[3] नित्यायोध्याविहारिणः श्रीरामस्यायोध्यायां[4] नित्यस्थितिं [5]द्रष्टयितुमाह

---

१. तेषां षडर्तुविहारो मत्कृत। रा० व० पु०।
२. इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे बालकाण्डे सप्तमः सर्गः।७, रा० व० पु०।
३. तः ४. पर्यन्तः पाठः रा०व० पुस्तकस्थः।
५. दर्शयितुमाह इत्युचितः।

**साकेत इति**—'नखेन्दुकिरणश्रेणीपूर्णब्रह्मैककारणम्' इति स्मृतेः लोकप्रकाशब्रह्म तस्य नाथे श्रीकृष्णे प्रथिताः प्रसिद्धाः गुणगणाः यस्य सः वाङ्मनसागोचरस्य श्रीरामस्य गुणनामादिकं तदभिन्नत्वात् नित्यवृन्दावनविहारित्वात् स एव जानाति तत्कथनमन्तरा अन्यः परमेश्वरोऽपि न जानातीति भावः। अतश्च अलोकैः लोकविलक्षणैः सम्यक् गीता कीर्तिर्यस्य सः। नन्वस्मिन् लोके सा कीर्तिः कथं प्रसिद्धेति चेन्न रामेण कथितं पुरेत्यादिशिवोक्तैः श्लोकैः सम्यग्गीता कीर्तिर्यस्य सः अखिलजनानां सर्वप्राणिनां निकरस्य समूहस्य आनन्द-[1]समूहरूपा मूर्तिर्यस्य सः। नित्या अनपायिनी श्रीः शोभा यस्य सः। निर्विकारः निरवधि-विभवः निरवधिकरासैश्वर्यवान् मायाशबलितो भूत्वा जगदुत्पत्त्यादिकं न करोतीत्यर्थः। एतेन तत्प्रकाशब्रह्मणैव जगत्सृष्ट्यादयो भवन्तीति व्यक्तम्। नित्यं मायाया निरासो यस्मात्, यज्ज्ञानेन जीवस्य माया दूरीभवतीति भावः। देवः क्रीडाशीलः अखिलेश्वरः ईदृशोऽपि मायया कृपया नारायणे आवेशरूपेण यत्कार्यं रामायणीयलीलारूपं कर्तव्यं तदनुसरतीति सः। अत एव मनुज इव यथा जीवाः लीलाश्रवणादिना मुच्येरन्निति कृपया स्वकीयब्रह्मप्रकाशं तिरोधाय नारायणावेशेन मनुज इव लीलां करोतीति फलितोऽर्थः। साकेते अयोध्यायां सदा भाति तां विहाय क्वापि न गच्छतीत्यर्थः। एतेन अयोध्याधिक-रणकरासविहारस्यातिप्रियत्वं ध्वनितम्।५७

⊙

[2]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेव विरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां बालकाण्डे
सप्तमोऽध्यायः।७

**समाप्तमिदं बालकाण्डम्**



---

१. सन्दोह इत्युचितः।

२. इति श्रीमदध्यात्मरामायणव्याख्याध्वनिप्रकाशिकायां सप्तमोऽध्यायः।७, इति रा० व० पु०।

## अयोध्याकाण्डम्

### अथ प्रथमोऽध्यायः

**श्रीमहादेव उवाच--**

एकदा सुखमासीनं रामं स्वान्तःपुराजिरे।
सर्वाभरणसम्पन्नं रत्नसिंहासने स्थितम्।।१
नीलोत्पलदलश्यामं कौस्तुभाऽऽमुक्तकन्धरम्।
सीतया रत्नदण्डेन चामरेणाथ वीजितम्।।२

**एकदेति**--कौस्तुभेनाऽऽमुक्ता युक्ता कन्धरा ग्रीवा यस्य तम् ।१-२।

विनोदयन्तं ताम्बूलचर्वणादिभिरादरात्।
नारदोऽवातरद् द्रष्टुमम्बराद्यत्र राघवः।।३

**विनोदयन्तमिति**—ताम्बूलचर्वणादिभिर्विनोदयन्तं सीतामिति शेषः। मिथस्ताम्बूलवीटिकाप्रदानेनेति भावः। द्रष्टुमर्थाद्राघवम् यत्र राघवस्तत्र देशेऽम्बरात् आकाशात् अवातरत्। अत्र नारदस्य विहारभवनगमनेन सखीभावः सूचितः।३

शुद्धस्फटिकसङ्काशः शरच्चन्द्र इवामलः।
अतर्कितमुपायातो नारदो दिव्यदर्शनः।।४
तं दृष्ट्वा सहसोत्थाय रामः प्रीत्या कृताञ्जलिः।
ननाम शिरसा भूमौ सीतया सह भक्तिमान्।।५
उवाच नारदं रामः प्रीत्या परमया युतः।
संसारिणां मुनिश्रेष्ठ! दुर्लभं तव दर्शनम्।।६
अस्माकं विषयासक्तचेतसां नितरां मुने!।
अथवाप्तं पूर्वजन्मकृतपुण्यमहोदयैः।।७

**उवाचेति**—संसारिणामेव दुर्लभम् तत्राऽपि विषयासक्तचेतसां नितरामित्यर्थः। तथाभूतमपि तव दर्शनं पूर्वजन्मकृतानि पुण्यानि पुण्यकर्माणि तज्जन्यमहोदयैः समादृष्टैरवाप्तमित्यर्थः।६-७।

संसारिणाऽपि हि मुने! लभ्यते सत्समागमः।
अतस्त्वद्दर्शनादेव कृतार्थोऽस्मि मुनीश्वर!।
किं कार्यं ते मया कार्यं ब्रूहि तत्करवाणि भोः! ॥८

ननु संसारिणां दुर्लभं वस्तु कथं त्वया लब्धं तत्राह **संसारिणेति**—काकतालीय-न्यायेनेति भावः। श्रीरामस्येयमुक्तिः गृहागतोऽतिथिर्गृहस्थेनैवं सूनृतगिरा सत्कर्तव्य इति लोकशिक्षणपरा।८

अथ तं नारदोऽप्याह राघवं भक्तवत्सलम्।
किं मोहयसि मां राम! वाक्यैर्लोकानुसारिभिः॥९

**अथेति**—अथ श्रीरामवचनश्रवणानन्तरम्।९

संसार्यहमिति प्रोक्तं सत्यमेतत्त्वया विभो!।
जगतामादिभूता या सा माया गृहिणी तव॥१०

**संसारीति**—गृहस्थत्वमेवोपपादयति जगतामित्यादिना। सा माया तवान्तर्यामिनः गृहिणी गृहम् अन्तर्यामिनिवासभूतं त्रैलोक्यं तद्विधत्ते आश्रयत्वेनास्या इतिः।१०

त्वत्सन्निकर्षाज्जायन्ते तस्यां ब्रह्मादयः प्रजाः।
त्वदाश्रया सदा भाति माया या त्रिगुणात्मिका॥११

**त्वदिति**—त्वत्सन्निकर्षात् चिद्रूपभवदीयप्रकाशब्रह्मसन्निकर्षात् अत एव त्वदाश्र-येत्यर्थः। त्रिगुणात्मिका सुखरागमोहस्वभावसत्त्वरजस्तमोरूपगुणत्रयात्मिका।११

सूतेऽजस्रं शुक्लकृष्णलोहिताः सर्वदा प्रजाः।
लोकत्रयमहागेहे गृहस्थस्त्वमुदाहृतः॥१२

**सूते**—अत एव स्वगुणानुरूपाः प्रजाः सदा सूते। तादृश्या गृहिण्या युतो लोकत्रय-रूपमहागेहे गृहस्थस्त्वमुदाहृतः।१२

त्वं विष्णुर्जानकी लक्ष्मीः शिवस्त्वं जानकी शिवा।
ब्रह्मा त्वं जानकी वाणी सूर्यस्त्वं जानकी प्रभा॥१३

[1]प्रकाशब्रह्माणं श्रीरामविभूतिं मूलप्रकृतिं सीताविभूतिं चोपवर्ण्याथान्यास्तयो-र्विभूतीराह त्वं विष्णुरित्यादि।१३

---

१. प्रकाशब्रह्माणम्–इति रा० व० पु० नास्ति।

भवान् शशाङ्कः सीता तु रोहिणी शुभलक्षणा।
शक्रस्त्वमेव पौलोमी सीता स्वाहाऽनलो भवान्॥१४
यमस्त्वं कालरूपश्च सीता संयमिनी प्रभो!।
निर्ऋतिस्त्वं जगन्नाथ! तामसी जानकी शुभा॥१५
राम! त्वमेव वरुणो भार्गवी जानकी शुभा।
वायुस्त्वं राम! सीता तु सदागतिरितीरिता॥१६
कुबेरस्त्वं राम! सीता सर्वसम्पत्प्रकीर्तिता।
रुद्राणी जानकी प्रोक्ता रुद्रस्त्वं लोकनाशकृत्॥१७
लोके स्त्रीवाचकं यावत्तत्सर्वं जानकी शुभा।
पुन्नामवाचकं यावत्तत्सर्वं त्वं हि राघव!॥१८
तस्माल्लोकत्रये देव! युवाभ्यां नास्ति किञ्चन॥१९

विशिष्य किञ्चिदुक्त्वा सामान्यत उपसंहरति **लोक इति**—युवाभ्यां सीतारामाभ्यामन्यदिति शेषः। चेतनाचेतनस्य तव शरीरत्वादिति भावः।१८-१९।

त्वदाभासोदिताज्ञानमव्याकृतमितीर्यते।
तस्मान्महांस्ततः सूत्रं लिङ्गं सर्वात्मकं ततः॥२०

एतदेवोपपादयति **त्वदिति**—त्वदाभासेन तव चित्प्रकाशेन ब्रह्मणा नोदितं [1]सृष्टान्मुखत्वं गतमज्ञानं प्रकाशब्रह्मलीनजीवसमूहगतत्वत्स्वरूपाज्ञानमायैवाव्याकृतपदेनोच्यते। तस्मात्त्वत्प्रकाशलब्धचैतन्यादव्याकृतात् महद्बुद्धितत्त्वं जीवसमूहस्योत्पन्नं ततो महतः सूत्रमहङ्कारः ततोऽहङ्कारात् सर्वात्मकं लिङ्गं लिङ्गदेहः।२०

अहङकारश्च बुद्धिश्च पञ्चप्राणेन्द्रियाणि च।
लिङ्गमित्युच्यते प्राज्ञैर्जन्ममृत्युसुखादिमत्॥२१

सर्वात्मकत्वमाह—**अहङ्कारश्च बुद्धिश्चेत्यादि**—पञ्चेत्यस्य सूक्ष्मभूतानीति शेषः। प्राणेन्द्रियाणि पञ्चप्राणाः पञ्चज्ञानेन्द्रियाणि मनस्त्वहङ्कारेणैव संगृहीतम्। अहङ्कारोऽहमित्याकारवृत्तिविशेषः। बुद्धिरध्यवसायात्मकं महत्तत्त्वं कर्मेन्द्रियाणि सूक्ष्मभूतेष्वन्तर्भूतानि तल्लिङ्गशरीरमेव प्राज्ञैर्जन्ममृत्युसुखादिमदुच्यते।२१

---

१. सृष्ट्युन्मुखत्वम् इति साधीयान् पाठः।

स एव जीवसंज्ञश्च लोके भाति जगन्मयः।
अवाच्याऽनाद्यविद्यैव कारणोपाधिरुच्यते ॥२२

**स एवेति**—स एव देवः लिङ्गदेहाभिमानी भगवदंश एव जीवसंज्ञः जगन्मयः संसारी भवति। अवाच्या सत्त्वासत्त्वाभ्यामनिर्वचनीया अनादिरुत्पत्तिरहिता संसार[1]तारण-रूपोपाधिः लिङ्गदेहाभिमानिनो जीवस्येति शेषः।२२

स्थूलं सूक्ष्मं कारणाख्यमुपाधित्रितयं चितेः।
एतैर्विशिष्टो जीवः स्याद्विमुक्तः परमेश्वरः ॥२३

**स्थूलमिति**—स्थूलं स्थूलदेहः सूक्ष्मं (लिङ्गदेहः) कारणं शरीरम् एतदुपाधित्रितयं चितेः जीवस्य, एतैर्विशिष्टो जीवः, उपाधित्रयं जीवस्यैवेत्यर्थः। परमेश्वरः अन्तर्यामी तु एतैर्विमुक्त एव, न कदापि तैः संयुतः साक्षित्वादिति भावः।२३

जाग्रत्स्वप्नसुषुप्त्याख्या संसृतिर्या प्रवर्तते।
तस्या विलक्षणः साक्षी चिन्मात्रस्त्वं रघूत्तम! ॥२४

**जाग्रदिति**—जाग्रदादिसंज्ञिता सूक्ष्मवासनया पूर्वोत्पत्तिः, बीजात् स्थूलधारणो-त्तरनानाशरीरकारणकर्मसञ्चयो महाजाग्रत्। स्थूलशरीरेण भुज्यमानभोगानां स्वीय-त्वेनाभिमानः स्वप्नः, जाग्रत्स्वप्नः। जाग्रत्स्वप्नः नानामनोराज्यं स्वप्ने दृष्टं जाग्रति सत्यमिति जाग्रत्स्वप्न इतीत्येवं त्रिविधः स्वप्नः सुषुप्तिरेकैवेत्येवं सप्तविधा या संसृतिः तस्याः संसृतेः त्वं विलक्षणश्चिन्मात्रोऽजीवः साक्षी अन्तर्यामी च हे रघूत्तम! त्वं त्वदंश-त्वात्ममेवेत्यर्थः। तत्र जीवो भिन्नांशः अन्तर्यामी अभिन्नांश इति विवेकः।२४

त्वत्त एव जगज्जातं त्वयि सर्वं प्रतिष्ठितम्।
त्वय्येव लीयते कृत्स्नं तस्मात्त्वं सर्वकारणम् ॥२५

एवं संसृतिविलक्षणचिन्मात्रजीवान्तर्यामिनोः कारणत्वे तस्य परम्परया सुतरां जगज्जन्मादिकारणं तमाह **त्वत्त इति**।२५

रज्जावहिमिवात्मानं जीवं ज्ञात्वा भयं भवेत्।
परात्माऽहमिति ज्ञात्वा भयदुःखैर्विमुच्यते ॥२६

अस्य जीवस्य संसारं वदन्मुक्तिप्रकारमाह **रज्जाविति**—रज्जावहिं सर्पमिव आत्मानं श्रीरामचिच्छरीरं जीवं ज्ञात्वा भयं संसाररूपं भवेत् तस्या एव रज्जोः रज्जुत्वेन

---

१. कारण इत्युचितः।

ज्ञानात् यथा सर्पभयनिवृत्तिस्तथा परस्य परमेश्वरस्य आत्मा चिद्विग्रहोऽहमिति ज्ञात्वा भयःदुखैर्विमुच्यते।२६

चिन्मात्रज्योतिषा सर्वाः सर्वदेहेषु बुद्धयः।
त्वया यस्मात्प्रकाश्यन्ते सर्वस्यात्मा ततो भवान्॥२७

**चिन्मात्रेति**—सर्वदेहेषु वर्तमानाः सर्वा बुद्धयः कारणानि यस्मिन् तत् तथा कर्त्रा चिन्मात्रज्योतिषा स्वकीयचैतन्यप्रकाशेन कारणेन प्रकाश्यन्ते [1]तत्तद्वृत्तिमन्ति [2]सम्पाद्यतेऽतो [3]भगवान् सर्वस्य चेतनाचेतनस्य प्रकाशब्रह्मणश्च आत्मा अन्तर्यामीत्यर्थः।२७

अज्ञानान्न्यस्यते सर्वं त्वयि रज्जौ भुजङ्गवत्।
त्वज्ज्ञानाल्लीयते सर्वं तस्माज्ज्ञानं सदाऽभ्यसेत्॥२८

**अज्ञानादिति**—अज्ञानाच्चेतनाचेतनयोस्त्वद्विग्रहत्वेन ज्ञानाभावात् त्वयि चेतनाचेतनविग्रहे त्वत्प्रकाशब्रह्मणि सर्वं बुद्ध्यादि रज्जौ भुजङ्गवन्न्यस्यते आरोप्यते अज्ञानिभिरिति शेषः। त्वज्ज्ञानाच्चेतनाचेतनशरीरत्वेन ज्ञानात् सर्वं लीयते सर्वस्य चेतनस्य भगवच्छरीरत्वेन ज्ञाते जाते प्रपञ्चो नाभासत इति भावः।२८

त्वत्पादभक्तियुक्तानां विज्ञानं भवति क्रमात्।
यस्मात्त्वद्भक्तियुक्ता ये मुक्तिभाजस्त एव हि॥२९

**त्वदिति**—त्वत्पादयोः सात्त्विकभक्तियुक्तानां क्रमात् ज्ञानभूमिकासाधनक्रमात् विज्ञानं तव विशेषज्ञानं सप्तमी तुर्यगाख्यभूमिकारूपं तस्माद्विज्ञानात् अष्टमीभूमिकां गताः शुद्धाः पूर्वक्तत्वत्पादभक्तिप्रभावात् 'मुक्तस्य विग्रहलाभ' इति कठश्रुत्या षष्ठशरीरं लब्ध्वा त्वद्भक्तियुक्ताः, सप्तज्ञानभूमिका यथा—शुचिकर्मचिकीर्षा शुभेच्छा १ सवैराग्यशुभकर्मधारणपूर्वकभगवत्कथाश्रवणं सदसद्विचारश्च सुविचारणा २ साधनचतुष्टयनिदिध्यासनेन विषयत्यागपूर्वकसविकल्पसमाधिना मनसः सूक्ष्मता तनुमानसा ३ बाह्यविषयनिवृत्त्या ज्ञानवैराग्येणात्मप्रकाशस्थिरतया शुद्धसत्त्वमयसविकल्पसमाधिः सत्त्वापत्तिः ४ बहिरन्तरवहनभावनया जातानन्देन जगदनासक्तिः असंसक्तिका ५

---

१. तद्वृत्तिमन्ति रा० व० पुस्तके।
२. सम्पाद्यन्ते इति समीचीनः।
३. भवान् इत्युचितः।

एतत्पञ्चभूमिकाः प्राप्य जगद्विस्मृत्या स्वानन्दावाप्तिः पदार्थाभावनी ६, षड्भूमिकाभ्यासेन भेदनाशात् स्वस्वरूपप्रकाशप्राप्त्या मनोवासनानाशो स्वाभाविकाऽहंब्रह्मास्मीत्येकत्वभावनया ब्रह्मानन्दानुभूतिः तुर्यगाख्या ७ आनन्दभानराहित्येन चिन्मात्रावस्थाने तुर्यगातीता त्वदीयभक्तिमन्तः ये त एव मुक्तिभाजः हनुमदादिव अन्येभ्योऽपि सारूप्यादिमुक्तिं विभज्य ददामीति ध्वनिः।२९

अहं त्वद्भक्तभक्तानां तद्भक्तानाञ्च किङ्करः।
अतो मामनुगृह्णीष्व मोहयस्व न मां प्रभो ! ।।३०

**अहमिति**—अहंसंसारीति कथनेनेति शेषः। एतेन भगवद्भक्तेभ्यो भागवतभक्ता अधिका इति सूचितम्।३०

त्वन्नाभिकमलोत्पन्नो ब्रह्मा मे जनकः प्रभो ! ।
अतस्तवाहं पौत्रोऽस्मि भक्तं मां पाहि राघव।।३१

**त्वन्नाभीति**—तवाहं पौत्रोऽस्मीत्यनेन त्वं नारायणे आविष्ट इत्यहं जानामीति सूचितम्।३१

इत्युक्त्वा बहुशो नत्वा स्वानन्दाश्रुपरिप्लुतः।
उवाच वचनं राम ! ब्रह्मणा नोदितोऽस्म्यहम्।।३२

**इतीति**—आनन्दाश्रुपरिप्लुतत्वेन तद्वचनस्य सगद्गदत्वं सूचितम्। तेन ब्रह्मणः सकलपुत्रेभ्यो मयि महती कृपा जातेति सूचितम्। नोदितोऽस्मि भवत्सविधे सन्देशं वक्तुं प्रेरितोऽस्मि।३२

रावणस्य वधार्थाय जातोऽसि रघुसत्तम ! ।
इदानीं राज्यरक्षार्थं पिता त्वामभिषेक्ष्यति।।३३

**रावणस्येति**—जातोऽसि नारायणे आवेशेनाविर्भूतोऽसि।३३

यदि राज्याभिसंसक्तो रावणं न हनिष्यसि।
प्रतिज्ञा ते कृता राम ! भूभारहरणाय वै।।३४

**यदीति**—रावणं न हनिष्यसीति त्वदावेशयुतनारायणस्य गमनाभावादिति भावः। प्रतिज्ञा ते कृता नारायणरूपेणेति।३४

तत् सत्यं कुरु राजेन्द्र ! सत्यसन्धस्त्वमेव हि।
श्रुत्वैतद् गदितं रामो नारदं प्राह सस्मितम्।।३५

**तदिति**—यतस्त्वमेव सत्यसन्धः सत्यप्रतिज्ञः अतस्तत्प्रतिज्ञातं कुरु। सस्मितमिति-एतेन ममैश्वर्यं जानन्नपि ब्रह्मा मामुपदिशतीति व्यज्यते। तेन चाहो मम मायायाः प्राबल्यमिति। राजेन्द्रेत्यनेन 'राजाधिराजः सर्वेषामिति' श्रुत्या स्वतः सिद्धसर्वेश्वरराजेन्द्रस्य तव न राज्याभिषेकाऽकाङ्क्षा किन्तु विष्णुचक्रानभिक्षतरावणवधार्थमेव नारायणे आवेश इति सूचितम्।३५

शृणु नारद ! मे किञ्चिद्विद्यतेऽविदितं क्वचित् ? ।
प्रतिज्ञातं च यत्पूर्वं करिष्ये तन्न संशयः।।३६

**शृण्विति**—किञ्चित् क्वचिदविदितं विद्यत इत्यत्र काकुः अपि तु नेत्यर्थः, सर्वं विदितमेवास्ते इत्यर्थः। यद् भूभारहरणं पूर्वं नारायणरूपे प्रतिज्ञातं तत्।३६

किन्तु कालानुरोधेन तत्तत्प्रारब्धसंक्षयात्।
हरिष्ये सर्वभूभारं क्रमेणासुरमण्डलम्।।३७

**किन्त्विति**—तेषां तेषाम् असुराणां प्रारब्धसंक्षयात्।३७

रावणस्य विनाशार्थं श्वो गन्ता दण्डकाननम्।
चतुर्दश समास्तत्र ह्युषित्वा मुनिवेषधृक्।।३८
सीतामिषेण तं दुष्टं सकुलं नाशयाम्यहम्।
एवं रामे प्रतिज्ञाते नारदः प्रमुमोद ह।।३९

**रावणस्येति**—श्वो गन्ता गमिष्यामीति रावणे[1] आवेशेन तत्र गमिष्यामीति मदावेशयुतनारायण इत्यर्थः। एतेनाहमत्र रास एव विहरिष्ये इति ध्वनितम्। नारदः प्रमुमोदेत्यनेन अस्य नित्यसाकेतविहारो देवकार्यं चोभयमपि सिद्धं जातमिति व्यज्यते।३८-३९।

प्रदक्षिणत्रयं कृत्वा दण्डवत्प्रणिपत्य तम्।
अनुज्ञातश्च रामेण ययौ देवगतिं मुनिः।।४०

---

१. नारायणे—इत्युचितः।

**प्रदक्षिणेति**—'चतस्रः केशवे दद्यादिति' आप्तोक्तेः चतसृणां प्रदक्षिणानामेका प्रदक्षिणा एवं प्रदक्षिणत्रयं द्वादशप्रदक्षिणा इत्यर्थः। देवगतिं देवलोकमार्गम्।४०

संवादं पठति शृणोति संस्मरेद्वा,
यो नित्यं मुनिवररामयोः सभक्त्या।
सम्प्राप्नोत्यमरसुदुर्लभं विमोक्षं,
कैवल्यं विरतिपुरःसरं क्रमेण ॥४१

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकाण्डे प्रथमोऽध्यायः । १

⊙

इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामयोध्याकाण्डे
प्रथमोऽध्यायः। १



## अथ द्वितीयोऽध्यायः

**श्रीमहादेव उवाच--**

अथ राजा दशरथः कदाचिद्रहसि स्थितः।
वसिष्ठं स्वकुलाचार्यमाहूयेदमभाषत ॥१

**अथेति**—अथ नारदप्रयाणानन्तरं रहसि एकान्ते।१

भगवन्! राममखिलाः प्रशंसन्ति मुहुर्मुहुः।
पौराश्च नैगमा वृद्धा मन्त्रिणश्च विशेषतः॥२

**भगवन्निति**—निगमे वणिक्पथे भवाः।२

ततः सर्वगुणोपेतं रामं राजीवलोचनम्।
ज्येष्ठं राज्येऽभिषेक्ष्यामि वृद्धोऽहं मुनिपुङ्गव! ॥३

**तत इति**—ततः सर्वप्रजानुरागात्।३

भरतो मातुलं द्रष्टुं गतः शत्रुघ्नसंयुतः।
अभिषेक्ष्ये श्व एवाशु भवांस्तच्चानुमोदताम्॥४

**भरत इति**—भरतो मातुलं द्रष्टुं गत इत्यनेन रामाभिषेकमहोत्सवदर्शनार्थं भरतस्या[1]नपेक्षायां सत्यामपि सः पश्चादागत्य राज्यमहोत्सवमनुभविष्यतीति मनसि निधाय त्वरातिशयेन तं विनैव श्रीराममभिषेक्ष्यतीति व्यज्यते। तेन च तस्मिन् वात्सल्यातिशयो व्यक्तः।४

सम्भाराः सम्भ्रियन्तां च गच्छ मन्त्रय राघवम्।
उच्छ्रीयन्तां पताकाश्च नानावर्णाः समन्ततः॥५

**सम्भारा इति**—सम्भारोऽभिषेकसामग्री। मन्त्रय अधिवासनार्थमिति शेषः। उच्छ्रीयन्तामुत्थाप्यन्तामित्यर्थः।५

तोरणानि विचित्राणि स्वर्णमुक्तामयानि वै।
आहूय मन्त्रिणं राजा सुमन्त्रं मन्त्रिसत्तमम्॥६

**तोरणानीति**—तोरणानि उच्छ्रीयन्तामित्यनुकर्षः।६

---

१. प्यपेक्षायाम् इत्युचितः।

आज्ञापयति यद्यत्त्वां मुनिस्तत्तत्समानय।
यौवराज्येऽभिषेक्ष्यामि श्वोभूते रघुनन्दनम्॥७
तथेति हर्षात् स मुनिं किं करोमीत्यभाषत।
तमुवाच महातेजा वसिष्ठो ज्ञानिनां वरः॥८
श्वः प्रभाते मध्यकक्षे कन्यकाः स्वर्णभूषिताः।
तिष्ठन्तु षोडश गजः स्वर्णरत्नादिभूषितः॥९
चतुर्दन्तः समायातु ऐरावतकुलोद्भवः।
नानातीर्थोदकैः पूर्णाः स्वर्णकुम्भाः सहस्रशः॥१०

**तथेति**—ज्ञानिनां वर इत्यनेनाभिषेकाभावेऽपि वनगमने मङ्गलार्थमेतद्भविष्यतीति तस्याशयो व्यज्यते।८-१०।

स्थाप्यन्तां नव वैयाघ्रचर्माणि त्रीणि वानघ!।
श्वेतच्छत्रं रत्नदण्डं मुक्तामणिविराजितम्॥११

**स्थाप्यन्तामिति**—वैयाघ्रचर्माणि नव वा त्रीणि।११

दिव्यमाल्यानि वस्त्राणि दिव्यान्याभरणानि च।
मुनयः सत्कृतास्तत्र तिष्ठन्तु कुशपाणयः॥१२
नर्तक्यो वारमुख्याश्च गायका वेणुकास्तथा।
नानावादित्रकुशला वादयन्तु नृपाङ्गणे॥१३
हस्त्यश्वरथपादाता बहिस्तिष्ठन्तु सायुधाः।
नगरे यानि तिष्ठन्ति देवतायतनानि च॥१४
तेषु प्रवर्ततां पूजा नानाबलिभिरावृता।
राजानः शीघ्रमायान्तु नानोपायनपाणयः॥१५
इत्यादिश्य मुनिः श्रीमान् सुमन्त्रं नृपमन्त्रिणम्।
स्वयं जगाम भवनं राघवस्यातिशोभनम्॥१६
रथमारुह्य भगवान्वसिष्ठो मुनिसत्तमः।
त्रीणि कक्ष्याण्यतिक्रम्य रथात्क्षितिमवातरत्॥१७
अन्तः प्रविश्य भवनं स्वाचार्यत्वादवारितः।
गुरुमागतमाज्ञाय रामस्तूर्णं कृताञ्जलिः॥१८

प्रत्युद्गम्य नमस्कृत्य दण्डवद्भक्तिसंयुतः।
स्वर्णपात्रेण पानीयमानिनायाशु जानकी ॥१९

रत्नासने समावेश्य पादौ प्रक्षाल्य भक्तितः।
तदपः शिरसा धृत्वा सीतया सह राघवः ॥२०

धन्योऽस्मीत्यब्रवीद् रामस्तव पादाम्बुधारणात्।
श्रीरामेणैवमुक्तस्तु प्रहसन्मुनिरब्रवीत् ॥२१

त्वत्पादसलिलं धृत्वा धन्योऽभूद् गिरिजापतिः।
ब्रह्मापि मत्पिता ते हि पादतीर्थहताशुभः ॥२२

इदानीं भाषसे यत्त्वं लोकानामुपदेशकृत्।
जानामि त्वां परात्मानं लक्ष्म्या संजातमीश्वरम् ॥२३

देवकार्यार्थसिद्ध्यर्थं भक्तानां भक्तिसिद्धये।
रावणस्य वधार्थाय जातं जानामि राघव! ॥२४

**त्वदिति**—त्वत्पादसलिलमिति पद्येन[1] शिवब्रह्मणोः श्रीरामोपासकता व्यञ्जिता तथा च वशिष्ठस्यापि श्रीरामोपासकत्वं सूचितम्। सीतावेशलक्ष्म्या सह नारायणे आवेशेन जातमाविर्भूतं परेषामीश्वराणामप्यात्मानमन्तर्यामिनमीश्वरं नित्यसाकेत-विहारिणं जानामि। भक्तानां भक्तिसिद्धये इत्यनेन सर्वेतरस्वरूपापेक्षया श्रीरामस्वरूप एव भक्तिः सर्वेष्टसाधनमिति ध्वनितम्। रावणस्य वधार्थायेत्यनेन लीलां विधाय सकलजनोद्धाराय सेतुं कर्तुं सूचितम्।२२-२४।

तथापि देवकार्यार्थं गुह्यं नोद्घाटयाम्यहम्।
यथा त्वं मायया सर्वं करोषि रघुनन्दन! ॥२५

**तथापीति**—नारायणे आवेशेन त्वं मायया लोकोद्धारार्थमिति भावः।२५

तथैवानुविधास्येऽहं शिष्यस्त्वं गुरुरप्यहम्।
गुरुर्गुरूणां त्वं देव! पितॄणां त्वं पितामहः ॥२६

अन्तर्यामी जगद्यन्त्रवाहकस्त्वमगोचरः।
शुद्धसत्त्वमयं देहं धृत्वा स्वाधीनसम्भवम् ॥२७

---

१. शिवब्रह्मणा रा० व० पु०।

**अन्तर्यामीति**—स्वाधीनः न तु कर्माधीनः संभवो यस्य तं शुद्धसत्त्वमयं नारायणीयं देहं धृत्वा नारायणे आवेशयुक्तत्वादित्याह–शुद्धेति। त्वमन्तर्यामी यतः जगद्यन्त्रप्रवाहकः अन्तर्यामी अगोचरः मनोवचनागोचरः।२७

मनुष्य इव लोकेऽस्मिन् भासि त्वं योगमायया।
पौरोहित्यमहं जाने विगर्ह्यं दूष्यजीवनम्।।२८

**मनुष्य इवेति**—नन्वेवम्भूतस्य कथं संभवस्तत्राह–योगमायया सह अस्मिंल्लोके मनुष्य इव भासि द्विभुजो नित्यसाकेतविहारिन् त्वमेव रावणवधार्थं नारायणे आवेशेनाविर्भूत इत्यर्थः। दूष्यजीवनं दुष्टजीविकारूपम्।२८

ननु दुष्टं पौरोहित्यं चेति किमर्थमङ्गीक्रियत इति चेत्तत्राह इक्ष्वाकूणामिति द्वाभ्याम्।

इक्ष्वाकूणां कुले रामः परमात्मा जनिष्यते।
इति ज्ञातं मया पूर्वं ब्रह्मणा कथितं पुरा।।२९
ततोऽहमाशया राम! तव सम्बन्धकाङ्क्षया।
अकार्षं गर्हितमपि तवाचार्यत्वसिद्धये।।३०

**तत इति**—तव सम्बन्धाकाङ्क्षाऽऽशासम्बन्धमाह–आचार्यत्वसिद्धये इत्यर्थः।३०

ततो मनोरथो मेऽद्य फलितो रघुनन्दन!।
त्वदधीना महामाया सर्वलोकैकमोहिनी।।३१
मां यथा मोहयेन्नैव तथा कुरु रघूद्वह!।
गुरुनिष्कृतिकामस्त्वं यदि देह्येतदेव मे।।३२

**मामिति**—यदि त्वं गुरुनिष्कृतिकामः गुरौ प्रत्युपचिकीर्षुः तदैतत् मे देहीत्यनेन तस्य सस्मितत्वं व्यज्यते।३२

प्रसङ्गात् सर्वमप्युक्तं न वाच्यं कुत्रचिन्मया।
राज्ञा दशरथेनाहं प्रेषितोऽस्मि रघूद्वह!।।३३
त्वामामन्त्रयितुं राज्ये श्वोऽभिषेक्ष्यति राघवः।
अद्य त्वं सीतया सार्धमुपवासं यथाविधि।।३४
कृत्वा शुचिर्भूमिशायी भव राम! जितेन्द्रियः।
गच्छामि राजसान्निध्यं त्वं तु प्रातर्गमिष्यसि।।३५

**कृत्वेति**—प्रातर्गमिष्यसि राजसान्निध्यं वनञ्चेति भावः।३५

इत्युक्त्वा रथमारुह्य ययौ राजगुरुर्द्रुतम्।
रामोऽपि लक्ष्मणं दृष्ट्वा प्रहसन्निदमब्रवीत्॥३६

**इत्युक्त्वेति**—इदं वक्ष्यमाणं। प्रहसन्नित्यनेन मया वनगमनेन रावणवधादिरूप-देवकार्यार्थं नारायणे आविष्टम्, महाराजेन तु मदीयराज्याभिषेक आरब्धः इत्येतदाश्चर्यमिति ध्वनितम्।३६

सौमित्रे! यौवराज्ये मे। श्वोऽभिषेको भविष्यति।
निमित्तमात्रमेवाहं कर्त्ता भोक्ता त्वमेव हि॥३७

मम त्वं हि वहिः प्राणो नात्र कार्या विचारणा।
ततो वसिष्ठेन यथा भाषितं तत्तथाऽकरोत्॥३८

**ममेति**—नात्र कार्या विचारणा। नारायणे संकर्षणे चाविष्टस्त्वमसि एतदेव कुर्वित्यर्थः। तेन चाहं त्वया साकमत्रैव विहरिष्यामीति भावः।३८

वसिष्ठोऽपि नृपं गत्वा कृतं सर्वं न्यवेदयत्।
वसिष्ठस्य पुरो राज्ञा ह्युक्तं रामाभिषेचनम्॥३९

यदा तत्रैव नगरे श्रुत्वा कश्चित्पुमाञ्जगौ।
कौसल्यायै राममात्रे सुमित्रायै तथैव च॥४०

**यदेति**—नगरे विद्यमान इति शेषः।४०

श्रुत्वा ते हर्षसम्पूर्णे ददतुर्हारमुत्तमम्।
तस्मै ततः प्रीतमनाः कौसल्या पुत्रवत्सला॥४१

**श्रुत्वेति**—तस्मै तद्वार्ताहराय।४१

लक्ष्मीं पर्यचरद्देवीं रामस्यार्थप्रसिद्धये।
सत्यवादी दशरथः करोत्येव प्रतिश्रुतम्॥४२

कैकेयीवशगः किन्तु कामुकः किं करिष्यति।
इति व्याकुलचित्ता सा दुर्गां देवीमपूजयत्॥४३

**कैकेयीति**—दुर्गां देवीमेतेन सकलदुःखहरणक्षमत्वं तेन च स्वरक्षार्थं वैष्णवोऽन्यदेवतां न भजेदिति व्यज्यते।४३

एतस्मिन्नन्तरे देवा देवीं वाणीमचोदयन्।
गच्छ देवि! भुवो लोकमयोध्यायां प्रयत्नतः ॥४४
रामाभिषेकविघ्नार्थं यतस्व ब्रह्मवाक्यतः।
मन्थरां प्रविशस्वादौ कैकेयीं च ततःपरम् ॥४५

**रामाभिषेकेति**—आदौ मन्थरां प्रविशस्व कैकेयीप्रेरणार्थं, ततःपरं राजप्रेरणार्थं कैकेयीं प्रविशस्व। अत्र मन्थराकैकेयीकर्मकसरस्वतीप्रवेशकथनेन मन्थरादीनां नीचानां कैकेय्यादीनामुत्तमानां च धर्मत्यागाभावस्तेन च तेषां श्रीरामे प्रेमातिशयो ध्वनितः। ननु सत्योपाख्यानोक्तरीत्या पूर्वजन्मनि बलेर्भगिनी मन्थरा नारायणप्रेरितेन्द्रहता तत्कृतप्रेरणारूपवैरमनुस्मृत्य मृताऽतस्तस्याः प्रसिद्धमेव वैरं कथं रामे वात्सल्यमिति चेन्न अयोध्याप्रभावेण वैरविस्मरणात् ।४५

ततो विघ्ने समुत्पन्ने पुनरेहि दिवं शुभे!।
तथेत्युक्त्वा तथा चक्रे प्रविवेशाथ मन्थराम् ॥४६

**तत इति**—प्रविवेशाथ मन्थरामिति। ननु राज्येऽभिषिक्तोऽपि रामो दिग्विजयकर्मणा रावणादीन्निहत्य देवकार्यं कुर्यादेव किमिति देवैराज्ञप्ता परमवैष्णवी वाणी मन्थराप्रवेशेन श्रीरामराज्याभिषेकमहोत्सवं विघ्नितवतीति चेत्सत्यं पादचारेण गच्छन् तृणगुल्मलताकीटपतङ्गादीनप्युद्धरिष्यति दण्डकवासिनो मुनीनपि तत्र गमनेन सुखयिष्यतीति मनसि निधाय तथा कृतवतीति तेनानन्दरूपं श्रीरामं जानन्त्यास्तस्याश्चराचरविषयककारुण्यातिशयो ध्वनितः ।४६

सापि कुब्जा त्रिवक्रा तु प्रासादाग्रमथारुहत्।
नगरं परितो दृष्ट्वा सर्वतः समलङ्कृतम् ॥४७

**सापीति**—सा सरस्वतीगृहीता त्रिवक्रा त्रिषु कटावुरसि कण्ठे वक्रा ।४७

नानातोरणसम्बाधं पताकाभिरलङ्कृतम्।
सर्वोत्सवसमायुक्तं विस्मिता पुनरागमत् ॥४८
धात्रीं पप्रच्छ मातः किं नगरं समलङ्कृतम्।
नानोत्सवसमायुक्ता कौसल्या चातिहर्षिता ॥४९
ददाति विप्रमुख्येभ्यो वस्त्राणि विविधानि च।
तामुवाच तदा धात्री रामचन्द्राभिषेचनम् ॥५०

**धात्रीमिति**—किं केन हेतुना नगरमलङ्कृतं केन हेतुना कौशल्या उत्सवयुक्ता ददाति ।४९-५० ।

श्वो भविष्यति तेनाद्य सर्वतोऽलङ्कृतं पुरम् ।
तच्छ्रुत्वा त्वरितं गत्वा कैकेयीं वाक्यमब्रवीत् ॥५१
पर्यङ्कस्थां विशालाक्षीमेकान्ते पर्यवस्थिताम् ।
किं शेषे दुर्भगे ! मूढे ! महद्भयमुपस्थितम् ॥५२

**पर्यङ्कस्थामिति**—पुत्रराज्याप्राप्त्या दुर्भगे ! तच्चिन्ताराहित्येन मूढे ! ।५२

न जानीषेऽतिसौन्दर्यमानिनी मत्तगामिनी ॥५३
रामस्यानुग्रहाद्राज्ञः श्वोऽभिषेको भविष्यति ।
तच्छ्रुत्वा सहसोत्थाय कैकेयी प्रियवादिनी ॥५४

**रामस्येति**—प्रियवादिनीत्यनेन दशरथे श्रीरामे च कदाचिदप्रियं न कथितवतीति व्यज्यते ।५४

तस्यै दिव्यं ददौ स्वर्णनूपुरं रत्नभूषितम् ।
हर्षस्थाने किमिति मे कथ्यते भयमागतम् ॥५५
भरतादधिको रामः प्रियकृन्मे प्रियंवदः ।
कौसल्यां मां समं पश्यन् सदा शुश्रूषते हि माम् ॥५६
रामाद्भयं किमापन्नं तव मूढे ! वदस्व मे ।
तच्छ्रुत्वा विषसादाथ कुब्जा कारणवैरणी ॥५७

**रामादिति**—कारणेति । कारणेन वाणीप्रवेशरूपेण न स्वत इति भावः ।५७

शृणु मद्वचनं देवि ! यथार्थं ते महद्भयम् ।
त्वां तोषयन् सदा राजा प्रियवाक्यानि भाषते ॥५८
कामुकोऽतथ्यवादी च त्वां वाचा परितोषयन् ।
कार्यं करोति तस्या वै राममातुः सुपुष्कलम् ॥५९
मनस्येतन्निधायैव प्रेषयामास ते सुतम् ।
भरतं मातुलकुले प्रेषयामास सानुजम् ॥६०
सुमित्रायाः समीचीनं भविष्यति न संशयः ।
लक्ष्मणो राममन्वेति राज्यं सोऽनुभविष्यति ॥६१

भरतो राघवस्याग्रे किङ्करो वा भविष्यति।
विवास्यते वा नगरात्प्राणैर्वा हाप्यतेऽचिरात् ॥६२
त्वं तु दासीव कौशल्यां नित्यं परिचरिष्यसि।
ततोऽपि मरणं श्रेयो यत्सपत्न्याः पराभवः ॥६३

**त्वमिति**—सपत्न्याः सकाशात् पराभवः तत्सेवादिरूपं ततो मरणं श्रेयः इत्यर्थः।६३

अतः शीघ्रं यतस्वाद्य भरतस्याभिषेचने।
रामस्य वनवासार्थं वर्षाणि नव पञ्च च ॥६४

**अत इति**—अतः भरतस्य अभिषेचने, विषयसप्तमी। नव पञ्च चतुर्दश वर्षाणीत्यर्थः। एतेन चतुर्दशवर्षैश्चतुर्दशभुवनेषु भरतेन वशीकृतेषु राम आगत्यापि किं करिष्यतीति सूचितम्। तेन च भरतस्य पराक्रमादेरतिशय इति। यद्वा एकादश[1] द्वे चेति वाल्मीकीयप्रक्रियया वर्षैकेण चित्रकूटे दशभिर्मुन्याश्रमे द्वाभ्यां गोदावर्यां च वर्षैकेण रावणवधरूपा इति अनादिश्रीमद्रामायणीयलीलामनुस्मृत्य मन्थराविष्टसरस्वत्या चतुर्दशैवमुक्तमिति व्यज्यते।६४

ततो रूढोऽभये पुत्रस्तव राज्ञि! भविष्यति।
उपायं ते प्रवक्ष्यामि पूर्वमेव सुनिश्चितम् ॥६५

**तत इति**—अभये भयरहिते राज्ये रूढः।६५

पुरा देवासुरे युद्धे राजा दशरथः स्वयम्।
इन्द्रेण याचितो धन्वी सहायार्थं महारथः ॥६६

ननु वयसा सर्वगुणैश्च ज्येष्ठे विद्यमाने कथं कनीयसो मे पुत्रस्य राज्यमत आह—**पुरेति**। इन्द्रेण स्वयं याचित इति योज्यम्। ६६

जगाम सेनया सार्धं त्वया सह शुभानने!।
युद्धं प्रकुर्वतस्तस्य राक्षसैः सह धन्विनः ॥६७
तदाक्षकीलो न्यपतच्छिन्नस्तस्य न वेद सः।
त्वं तु हस्तं समावेश्य कीलरन्ध्रेऽतिधैर्यतः ॥६८
स्थितवत्यसितापाङ्गि! पतिप्राणपरीप्सया।
ततो हत्वाऽसुरान् सर्वान् ददर्श त्वामरिन्दमः ॥६९

---

१. एकं दश द्वे चेति रा० व० पु०।

आश्चर्यं परमं लेभे त्वामालिङ्ग्य मुदान्वितः।
वृणीष्व यत्ते मनसि वाञ्छितं वरदोऽस्म्यहम् ॥७०
वरद्वयं वृणीष्व त्वमेवं राजाऽवदत्स्वयम्।
त्वयोक्तो वरदो राजन्यदि दत्तं वरद्वयम् ॥७१
त्वय्येव तिष्ठतु चिरं न्यासभूतं ममानघ!।
यदा मेऽवसरो भूयात्तदा देहि वरद्वयम् ॥७२

**तदेति**—कीलरन्ध्रे हस्तप्रवेशेन प्रत्युपकाराय एकं वरम्, अतिधैर्येण तदविज्ञापन-रूपकर्मणः प्रत्युपकाराय द्वितीयमिति भावः।६८-७२।

तथेत्युक्त्वा स्वयं राजा मन्दिरं व्रज सुव्रते!।
त्वत्तः श्रुतं मया पूर्वमिदानीं स्मृतिमागतम् ॥७३
अतः शीघ्रं प्रविश्याद्य क्रोधागारं रुषान्विता।
विमुच्य सर्वाभरणं सर्वतो विनिकीर्य च।
भूमावेव शयाना त्वं तूष्णीमातिष्ठ भामिनि! ॥७४

**तथेति**—क्रोधागारं शीघ्रं व्रजेत्यनेन कीलरन्ध्रे हस्तनिवेशेनातिसाहसिकतया स्व-शरीररक्षणानपेक्षावत्यास्तव रामनिष्कासने कियदेतत्साहसमिति व्यज्यते। हे सुव्रते! मन्दिरं व्रज।७३-७४।

यावत्सत्यं प्रतिज्ञाय राजाभीष्टं करोति ते।
श्रुत्वा त्रिवक्रयोक्तं तत्तदा कैकेयनन्दिनी ॥७५

**यावदिति**—सत्यं तत्पूर्वकं शपथपूर्वकमिति यावत्।७५

तथ्यमेवाखिलं मेने दुःसङ्गाहितविभ्रमा।
तामाह कैकेयी दुष्टा कुतस्ते बुद्धिरीदृशी ॥७६

**तथ्यमिति**—दुःसङ्गेन वाण्याविष्टमन्थरासङ्गेन जातविभ्रमा। विभ्रमोऽत्र उद्वेगजनितः। एतेन तामपि वाणी प्रविष्टेति व्यक्तम्।७६

एवं त्वां बुद्धिसम्पन्नां न जाने वक्रसुन्दरि!
भरतो यदि राजा मे भविष्यति सुतः प्रियः ॥७७
ग्रामान् शतं प्रदास्यामि मम त्वं प्राणवल्लभा।
इत्युक्त्वा कोपभवनं प्रविश्य सहसा रुषा ॥७८
विमुच्य सर्वाभरणं परिकीर्य समन्ततः।
भूमौ शयाना मलिना मलिनाम्बरधारिणी ॥७९

प्रोवाच शृणु मे कुब्जे ! यावद्रामो वनं व्रजेत्।
प्राणांस्त्यक्ष्येऽथवा वक्ष्ये शयिष्ये तावदेव हि॥८०
निश्चयं कुरु कल्याणि ! कल्याणं ते भविष्यति।
इत्युक्त्वा प्रययौ कुब्जा गृहं सापि तथाऽकरोत्॥८१
धीरोऽत्यन्तदयान्वितोऽपि सगुणाचारान्वितो वाऽथवा,
नीतिज्ञो विधिवाददेशिकपरो विद्याविवेकोऽथवा।
दुष्टानामतिपापभावितधियां सङ्गं सदा चेद्भजे-
त्तद्बुद्ध्या परिभावितो व्रजति तत्साम्यं क्रमेण स्फुटम्॥८२

**धीर इति**। विधिं वदति तादृशो देशिको गुरुः तत्परः तत्सेवापरः गुरुसेवया सकलविधिनिषेधार्थज्ञ इत्यर्थः। विद्यया ज्ञानेन विवेकः कर्तव्याकर्तव्यविवेको यस्य सः।८२

अतः सङ्गः परित्याज्यो दुष्टानां सर्वदैव हि
दुःसङ्गी च्यवते स्वार्थाद्यथेयं राजकन्यका॥८३

[1]इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डे द्वितीयोऽध्यायः।२

⊙

**अत इति**—राज्याभिषिक्तोऽपि श्रीरामोऽचिन्त्यशक्तित्वात् करुणाकरत्वाच्च देवकार्यं सकलजगदुद्धारं च करिष्यत्येवेति जानन्त्यपि यन्मन्थराकैकेय्योः प्रेरणां कृतवतीति तदेव सरस्वत्याः दुष्टत्वं तत्सङ्गाद्यथेयं राजकन्यका स्वार्थाच्च्युता तथाऽन्योऽपि जनो दुष्टसङ्गात्स्वार्थाच्च्यवते इत्यर्थः। एतेन सरस्वत्यपि श्रीरामेच्छया गतेति ज्ञातवतो[2]ऽपि शिवस्य [3]तद्वर्णनाभ्यस्तत्वेन पूर्ववृत्तं विस्मृतमिति वक्तव्यम्।८३

[4]इति सिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताऽध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामयोध्याकाण्डे
द्वितीयोऽध्यायः।२

⊙

---

१. इति श्री म० द्वि० यो० २। रा० व० पु०।

२. ज्ञानवतोऽपि रा० व० पु०।

३. तद्वर्णनाद् भावारूढत्वेन रा० व० पु०।

४. इति सिद्धिश्रीमहाराजाधिराजश्रीविश्वनाथसिंहजूदेवकृतध्वनिप्रकाशिकायां द्वितीयोऽध्यायः।२ रा० व० पु०।

## अथ तृतीयोऽध्यायः

**श्रीमहादेव उवाच—**

ततो राजा दशरथो रामाभ्युदयकारणात्।
आदिश्य मन्त्रिप्रकृतीः सानन्दो गृहमाविशत्॥१
तत्रादृष्ट्वा प्रियां राजा किमेतदिति विह्वलः।
या पुरा मन्दिरं तस्याः प्रविष्टे मयि शोभना।२
हसन्ती मामुपायाति सा किं नैवाद्य दृश्यते।
इत्यात्मन्येव संचिन्त्य मनसाऽतिविदूयता॥३
पप्रच्छ दासीनिकरं कुतो वः स्वामिनी शुभा।
नायाति मां यथापूर्वं मत्प्रिया प्रियदर्शना॥४
ता ऊचुः क्रोधभवनं प्रविष्टा नैव विद्महे।
कारणं तत्र देव! त्वं गत्वा निश्चेतुमर्हसि॥५
इत्युक्तो भयसन्त्रस्तो राजा तस्याः समीपगः।
उपविश्य शनैर्देहं स्पृशन्वै पाणिनाऽब्रवीत्॥६
किं शेषे वसुधापृष्ठे पर्यङ्कादीन् विहाय च।
मां त्वं खेदयसे भीरु! यतो मां नावभाषसे॥७
अलङ्कारं परित्यज्य भूमौ मलिनवाससा।
किमर्थं ब्रूहि सकलं विधास्ये तव वाञ्छितम्॥८
को वा तवाहितं कर्ता नारी वा पुरुषोऽपि वा।
स मे दण्ड्यश्च वध्यश्च भविष्यति न संशयः॥९
ब्रूहि देवि! यथा प्रीतिस्तदवश्यं ममाग्रतः।
तदिदानीं साधयिष्ये सुदुर्लभमपि क्षणात्॥१०
जानासि त्वं मम स्वान्तं प्रियं मां स्ववशे स्थितम्।
तथापि मां खेदयसे वृथा तव परिश्रमः॥११

ब्रूहि कं धनिनं कुर्यां दरिद्रं ते प्रियङ्करम्।
धनिनं क्षणमात्रेण निर्धनं च तवाहितम्॥१२

**ब्रूहीति**——ते प्रियङ्करं दरिद्रं धनिनं कुबेरसदृशधनवन्तं कुर्याम्, तवाहितं त्वदप्रियं धनिनं कुबेरमपि क्षणमात्रेण निर्धनं कुर्याम्।१२

ब्रूहि कं वा वधिष्यामि वधार्हो वा विमोक्ष्यते।
किमत्र बहुनोक्तेन प्राणान्दास्यामि ते प्रिये!॥१३

**ब्रूहीति**——कं वा ब्रह्माणमिव ब्रह्मायुषमपीत्यर्थः। वधिष्यामि वधार्हश्चोरादिरपि त्वत्प्रियो मोक्ष्यते मयेति शेषः। एतेन यथाकर्मफलदातुरीश्वरादधिकैश्वर्यं तस्य ध्वनितम्।१३

मम प्राणात्प्रियतरो रामो राजीवलोचनः।
तस्योपरि शपे ब्रूहि त्वद्धितं तत्करोम्यहम्॥१४

**ममेति**——रामशपथं विना प्रतिश्रुतमपि तद्वात्सल्यादन्यथा करिष्यतीत्यतः शपथमपि रामे कारितवतीति बोध्यम्।१४

इति ब्रुवाणं राजानं शपन्तं राघवोपरि।
शनैर्विमृज्य नेत्रे सा राजानं प्रत्यभाषत॥१५

**इतीति**——राघवोपरि शपन्तं राजानं प्रत्यभाषतेत्यनेन पूर्वं कदाचित्——निजप्रतिश्रुतं त्यजेदपि सम्प्रति कृतश्रीरामशपथतया तन्न त्यक्ष्यतीति ध्वनितम्। तेन श्रीरामे तस्य वात्सल्यातिशयः सूचितः।१५

यदि सत्यप्रतिज्ञोऽसि शपथं कुरुषे यदि।
याच्ञां मे सफलां कर्तुं शीघ्रमेव त्वमर्हसि॥१६
पूर्वं देवासुरे युद्धे मया त्वं परिरक्षितः।
तदा वरद्वयं दत्तं त्वया मे तुष्टचेतसा॥१७
तद्द्वयं न्यासभूतं मे स्थापितं त्वयि सुव्रत!।
तत्रैकेन वरेणाशु भरतं मे प्रियं सुतम्॥१८
एभिः सम्भृतसम्भारैर्यौवराज्येऽभिषेचय।
अपरेण वरेणाशु रामो गच्छतु दण्डकान्॥१९
मुनिवेषधरः श्रीमान् जटावल्कलभूषणः।
चतुर्दश समास्तत्र कन्दमूलफलाशनः॥२०

पुनरायातु तस्यान्ते वने वा तिष्ठतु स्वयम्।
प्रभाते गच्छतु वनं रामो राजीवलोचनः ॥२१
यदि किञ्चिद्विलम्बेत प्राणांस्त्यक्ष्ये तवाग्रतः।
भव सत्यप्रतिज्ञस्त्वमेतदेव मम प्रियम् ॥२२

**यदीति**—किञ्चिद्विलम्बेत प्रातःकालोत्तरं क्षणमपि विलम्बेत तदा मया प्राणत्यागः कर्त्तव्यः।२२

श्रुत्वैतद् दारुणं वाक्यं कैकेय्या रोमहर्षणम्।
निपपात महीपालो वज्राहत इवाचलः ॥२३

**श्रुत्वेति**—रोमहर्षणं शृण्वतां रोमाञ्चोत्पादकमतिक्रूरत्वात्।२३

शनैरुन्मील्य नयने विमृज्य परया भिया।
दुःस्वप्नो वा मया दृष्टो ह्यथवा चित्तविभ्रमः ॥२४

**शनैरिति**—परया उत्कृष्टया कैकेयीभिया नेत्रे विमृज्य अश्रुरहिते कृत्वा साश्रुनेत्रं दृष्ट्वातिक्रोधेन रामवधं प्रार्थयेदित्यधिका प्रीतिः। स्वभार्यायाः क्रौर्यासम्भवं पर्यालोच्य दुःस्वप्न इति तर्कः। जाग्रतः स्वप्नासंभवादाह—अथ ममैव चित्तस्य विभ्रमः अन्यार्थस्यान्यार्थकत्वग्रहः।२४

इत्यालोक्य पुरःपत्नीं व्याघ्रीमिव पुरःस्थिताम्।
किमिदं भाषसे भद्रे ! मम प्राणहरं वचः ॥२५

**इतीति**—इति विचार्येति शेषः। कैकेयीं आलोक्य दृष्ट्वा मम प्राणहरमेतेन निजवैधव्यविधायकतया स्वस्यैवानिष्टं भाषसे इति ध्वनितम्।२५

रामः कमपराधं ते कृतवान् कमलेक्षणः।
ममाग्रे राघवगुणान् वर्णयस्यनिशं शुभान् ॥२६

ननु रामकृतातिदुःसहापराधवशात् स्वानिष्टेऽपि मत्प्रवृत्तिस्तत्राह—**राम इति**-अपराधकारणं प्रागुक्तत्वद्वाक्येनैव निर्णीतमित्याह ममेति।२६

कौशल्यां मां समं पश्यन् शुश्रूषां कुरुते सदा।
इति ब्रुवन्ती त्वं पूर्वमिदानीं भाषसेऽन्यथा ॥२७

**कौशल्यामिति**—इदानीमन्यथा भाषसे। एतेन पूर्वापरविरोधादिदं त्वद्वचनमविश्वसनीयमिति व्यज्यते।२७

राज्यं गृहाण पुत्राय रामस्तिष्ठतु मन्दिरे।
अनुगृह्णीष्व मां वामे! रामान्नास्ति भयं तव।२८

यदि राज्यलोभस्ते तत्राह-राज्यमिति। वामे! मद्विरुद्धाचरणशीले।२८

इत्युक्त्वाश्रुपरीताक्षः पादयोर्निपपात ह।
कैकेयी प्रत्युवाचेदं सापि रक्तान्तलोचना॥२९

राजेन्द्र! किं त्वं भ्रान्तोऽसि उक्तं तद्भाषसेऽन्यथा।
मिथ्या करोषि चेत्स्वीयं भाषितं नरको भवेत्॥३०

वनं न गच्छेद्यदि रामचन्द्रः,
प्रभातकालेऽजिनचीरयुक्तः।
उद्बन्धनं वा विषभक्षणं वा,
कृत्वा मरिष्ये पुरतस्तवाहम्।३१

सत्यप्रतिज्ञोऽहमितीह लोके,
विडम्बसे सर्वसभान्तरेषु।
रामोपरि त्वं शपथञ्च कृत्वा,
मिथ्याप्रतिज्ञो नरकं प्रयाहि॥३२

भूतिनीगृहीता सती लोके कापि स्ववशे न भाषते, वाण्याविष्टायास्तस्या ईदृशकथने को दोष इति भावः।३०

इत्युक्तः प्रियया दीनो मग्नो दुःखार्णवे नृपः।
मूर्च्छितः पतितो भूमौ विसंज्ञो मृतको यथा॥३३

एवं रात्रिर्गता तस्य दुःखात्संवत्सरोपमा।
अरुणोदयकाले तु वन्दिनो गायका जगुः॥३४

निवारयित्वा तान् सर्वान् कैकेयी रोषमास्थिता।
ततः प्रभातसमये मध्यकक्षमुपस्थिताः॥३५

ब्राह्मणाः क्षत्रिया वैश्या ऋषयः कन्यकास्तथा।
छत्रञ्च चामरं दिव्यं गजो वाजी तथैव च॥३६

अन्याश्च वारमुख्या याः पौरजानपदास्तथा।
वसिष्ठेन यथाज्ञप्तं तत्सर्वं तत्र संस्थितम्॥३७

स्त्रियो बालाश्च वृद्धाश्च रात्रौ निद्रां न लेभिरे।
कदा द्रक्ष्यामहे रामं पीतकौशेयवाससम्॥३८
सर्वाभरणसम्पन्नं किरीटकटकोज्ज्वलम्।
कौस्तुभाभरणं श्यामं कन्दर्पशतसुन्दरम्॥३९
अभिषिक्तं समायातं गजारूढं स्मिताननम्।
श्वेतच्छत्रधरं तत्र लक्ष्मणं लक्षणान्वितम्॥४०
रामं कदा वा द्रक्ष्यामः प्रभातं वा कदा भवेत्।
इत्युत्सुकधियः सर्वे बभूवुः पुरवासिनः॥४१

**राममिति**—इत्युत्सुकेति। एतेन श्रीरामे सर्वेषां प्रेमातिशयो ध्वनितः।४१

नेदानीमुत्थितो राजा किमर्थं चेति चिन्तयन्।
सुमन्त्रः शनकैः प्रायाद्यत्र राजावतिष्ठते॥४२
वर्धयन् जयशब्देन प्रणमन् शिरसा नृपम्।
अतिखिन्नं नृपं दृष्ट्वा कैकेयीं समपृच्छत॥४३
देवि! कैकेयि! वर्धस्व किं राजा दृश्यतेऽन्यथा।
तमाह कैकेयी राजा रात्रौ निद्रां न लब्धवान्॥४४
राम रामेति रामेति राममेवानुचिन्तयन्।
प्रजागरेण वै राजा ह्यस्वस्थ इव लक्ष्यते।
राममानय शीघ्रं त्वं राजा द्रष्टुमिवेच्छति॥४५
अश्रुत्वा राजवचनं कथं गच्छामि भामिनी।
तच्छ्रुत्वा मन्त्रिणो वाक्यं राजा मन्त्रिणमब्रवीत्॥४६

**रामेति**—राम राम रामेत्येतावन्मात्रं[1] राजाऽनुचिन्तनकथनेन अधिकवृत्तान्तकथनेऽयमपि राजसदृशः स्यात्[2] तदा राममानेतुं समर्थो न भवेदिति तदभिप्रायो व्यज्यते।[3] अश्रुत्वा राजवचनमेतेन तस्य केवलराजाज्ञाधीनत्वं सूचितम्। भामिनीत्यनेन कोपावेशादुक्तत्वात् त्वदुक्तमिदानीं मयाऽनुष्ठातुं शक्यमिति भावः।४५-४६।

सुमन्त्र! रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम्।
इत्युक्तस्त्वरितं गत्वा सुमन्त्रो राममन्दिरम्॥४७

---

१. राजानुचिन्तनकथने अयमपि राजसदृशः स्यात्। मदीयपुस्तके।
२. तः ३. पर्यन्तम् रा० व० पु० नास्ति।

**सुमन्त्रेति**—रामं शीघ्रमानयेत्यनेन एषा इदानीं राममिहानेतुं कथयति क्षणान्तरे तत एव कदाचिद्वनं निष्कासयेदिति ध्वनितम्। सुन्दरमेतेन तत्सौकुमार्यमोहिता कदाचिद्वनगमनं निषेधयेदिति ध्वनितम्।४७

अवारितः प्रविष्टोऽयं त्वरितं राममब्रवीत्।
शीघ्रमागच्छ भद्रं ते राम! राजीवलोचन! ॥४८
पितुर्गेहे मया सार्धं राजा त्वां द्रष्टुमिच्छति।
इत्युक्तो रथमारुह्य सम्भ्रमात्त्वरितो ययौ ॥४९
रामः सारथिना सार्धं लक्ष्मणेन समन्वितः।
मध्यकक्षे वसिष्ठादीन् पश्यन्नेव त्वरान्वितः ॥५०

**राम इति**—पश्यन्नेवेति—एवेति इवार्थे। कृतवसिष्ठप्रणामोऽपि त्वरया पश्यन्नेव ययावित्यर्थः।५०

पितुः समीपं सङ्गम्य ननाम चरणौ पितुः।
राममालिङ्गितुं राजा समुत्थाय ससम्भ्रमः ॥५१

**पितुरिति**—ससंभ्रमः सादरः।५१

बाहू प्रसार्य रामेति दुःखान्मध्ये पपात ह।
हाहेति रामस्तं शीघ्रमालिङ्ग्याङ्के न्यवेशयत् ॥५२

**बाहू इति**—दुःखात् भाविरामविरहदुःखात्।५२

राजानं मूर्च्छितं दृष्ट्वा चुक्रुशुः सर्वयोषितः।
किमर्थं रोदनमिति वसिष्ठोऽपि समाविशत् ॥५३
रामः पप्रच्छ किमिदं राज्ञो दुःखस्य कारणम्।
एवं पृच्छति रामे सा कैकेयी राममब्रवीत् ॥५४
त्वमेव कारणं ह्यत्र राज्ञो दुःखोपशान्तये।
किञ्चित्कार्यं त्वया राम! कर्तव्यं नृपतेर्हितम् ॥५५
कुरु सत्यप्रतिज्ञस्त्वं राजानं सत्यवादिनम्।
राज्ञा वरद्वयं दत्तं मम सन्तुष्टचेतसा ॥५६
त्वदधीनं तु तत्सर्वं वक्तुं त्वां लज्जते नृपः।
सत्यपाशेन सम्बद्धं पितरं त्रातुमर्हसि ॥५७

**त्वदधीनमिति**—पितरं त्रातुमर्हसीत्यनेन सत्यपाशसम्बद्धोऽपि तव वात्सल्यपरतन्त्रतया कदाचित्सत्यमपि त्यज्यते तत्तदानिष्टं स्यात्। अतस्त्वमेव सत्यपालनेन तं रक्षेति सूचितं। तेन च तदाज्ञां विनैव त्वं वनं गच्छेति।५७

पुत्रशब्देन चैतद्धि नरकात्त्रायते पिता।
रामस्तयोदितं श्रुत्वा शूलेनाभिहतो यथा॥५८

एतदेव द्रढयितुं पुत्रशब्दार्थमाह—**पुत्रेति।** पुत्रशब्देनैतदुच्यते तदेव दर्शयति पुन्नाम्नो नरकात्पिता त्रायते येन स पुत्र इति भावः।५८

व्यथितः कैकेयीं प्राह किं मामेवं प्रभाषसे।
पित्रर्थे जीवितं दास्ये पिबेयं विषमुल्बणम्॥५९
सीतां त्यक्ष्येऽथ कौसल्यां राज्यञ्चापि त्यजाम्यहम्।
अनाज्ञप्तोऽपि कुरुते पितुः कार्यं स उत्तमः॥६०
उक्तः करोति यः पुत्रः स मध्यम उदाहृतः।
उक्तोऽपि कुरुते नैव स पुत्रो मल उच्यते॥६१
अतः करोमि तत्सर्वं यन्मामाह पिता मम।
सत्यं सत्यं करोम्येव रामो द्विर्नाभिभाषते॥६२
इति रामप्रतिज्ञां सा श्रुत्वा वक्तुं प्रचक्रमे।
राम! त्वदभिषेकार्थं संभाराः सम्भृताश्च ये॥६३
तैरेव भरतोऽवश्यमभिषेच्यः प्रियो मम।
अपरेण वरेणाशु चीरवासा जटाधरः॥६४
वनं प्रयाहि शीघ्रं त्वमद्यैव पितुराज्ञया।
चतुर्दश समास्तत्र वस मुन्यन्नभोजनः॥६५
एतदेव पितुस्तेऽद्य कार्यं त्वं कर्तुमर्हसि॥६६

**व्यथित इति**—पित्रर्थेत्यादिना श्रीरामस्य पितरि भक्त्यतिशयो ध्वनितः।५९-६६।

**श्रीराम उवाच**—

भरतस्यैव राज्यं स्यादहं गच्छामि दण्डकान्।
किन्तु राजा न वक्तीह मां न जानेऽत्र कारणम्॥६७

**भरतस्यैवेति**—मम सुखजनकेऽपि कर्तव्ये न काञ्चित्क्षतिं पश्यामि, महाराजः कुतो नाऽऽज्ञापयतीति भावः।६७

श्रुत्वैतद्रामवचनं दृष्ट्वा रामं पुरः स्थितम्।
प्राह राजा दशरथो दुःखितो दुखितं वचः॥६८
स्त्रीजितं भ्रान्तहृदयमुन्मार्गपरिवर्तिनम्।
निगृह्य मां गृहाणेदं राज्यं पापं न तद् भवेत्॥६९

**स्त्रीजितमिति**––पापं न तद् भवेदिति। 'गुरोरप्यवलिप्तस्य कार्याऽकार्यमजानतः। उत्पथं प्रतिपन्नस्य परित्यागो विधीयते॥' इति नीत्युक्तेः। एतेन यदाज्ञैव कर्तव्या तदेतामेवाज्ञां कुर्विति ध्वनितम्। किं च पापं न भवेदित्यनेन प्रत्युत प्राणरक्षणजन्यं सर्वाधिकं पुण्यमेव भवेदिति ध्वनितम्। तेन च वनगमनाय पूर्वमेवाज्ञा दत्तेति च।६९

एवं चेदनृतं नैव मां स्पृशेद्रघुनन्दन!।
इत्युक्त्वा दुःखसन्तप्तो विललाप नृपस्तदा॥७०

त्वया बलात्कारेण ग्रहणान्ममोपर्येतदनादरादनृतदोषो नेत्याह––**एवं चेदिति**।७०

हा राम! हा जगन्नाथ! हा मम प्राणवल्लभ!।
मां विसृज्य कथं घोरं विपिनं गन्तुमर्हसि॥७१
इति रामं समालिङ्ग्य मुक्तकण्ठो रुरोद ह।
विमृज्य नयने रामः पितुः सजलपाणिना॥७२
आश्वासयामास नृपं शनैः स नयकोविदः।
किमत्र दुःखेन विभो! राज्यं शासतु मेऽनुजः॥७३

**हा रामेति**––यद्यपि सर्वत्र पूर्णस्य तव जगन्नाथत्वाद्राज्यविपिनयोः समतया वियोगाभावस्तथापि मम प्राणास्त्वद्वल्लभत्वात्त्वया सह गमिष्यन्तीति चेत्याह––मम प्राणवल्लभेति। एतेन प्रेमाकुलतया वात्सल्यरसः शान्तरसं जितवानिति ध्वनितम्। प्रेमोदयेति। कदाचित्पुत्रादिज्ञानं कदाचिदीश्वरज्ञानमेवमेकरसः प्रेमा न भवतीति लक्षणम्। महाराजस्तु ऐश्वर्यज्ञाने सत्यपि वात्सल्याकुलत्वात् प्रेम्णः परां काष्ठां गत इति।७१-७३।

अहं प्रतिज्ञां निस्तीर्य पुनर्यास्यामि ते पुरम्।
राज्यात्कोटिगुणं सौख्यं मम राजन्! वने सतः॥७४

**अहमिति**––सत्यं सत्यं करोम्येव रामो द्विर्नाभिभाषते इति स्वोक्तप्रतिज्ञां निस्तीर्य ते पुरं पुनः यास्यामीति। एतेन मम प्रतिज्ञासिद्धिः भवद्वरप्रदानसिद्धिरित्युभयं सेत्स्यति। तेन च भो राम! त्वमत्रैव तिष्ठेति आज्ञां मे देहीति प्रार्थना व्यक्ता राज्यात्कोटिगुणं सौख्यं 'भक्तिवशः पुरुष' इति श्रुतेर्मम वनप्रयाणं भक्तवात्सल्यादिति भावः।७४

त्वत्सत्यपालनं देवकार्यञ्चापि भविष्यति।
कैकेय्याश्च प्रियो राजन्! वनवासो महागुणः॥७५

**त्वदिति**—देवकार्यं राक्षसविनाशरूपम् अतः वनवासो महागुणः बहुगुण इत्यर्थः।७५

इदानीं गन्तुमिच्छामि व्येतु मातुश्च हृज्ज्वरः।
सम्भाराश्चोपह्रियन्तामभिषेकार्थमाहृताः ॥७६

**इदानीमिति**—मध्यमाम्बानुक्त्या मातुरिति कथनेन मम वनप्रयाणं वाण्येव कथयति नास्या दोषः अतो रावणवधरूपदेवकार्यस्य दिग्विजयादिनापि सिद्धेः श्रीरामस्य पादचारेण वनगमनमन्तरा तृणगुल्मलतापतङ्गकिरातादीनां दण्डकवासिमुनीनां[१]ञ्चोद्धारः कथं स्यादित्येव मातुः जगन्मातुः सरस्वत्याः हृज्ज्वरः व्येतु अपगच्छतु एतेन जगदुद्धारकं तदीय-चरितं वर्णयन्त्या मे साफल्यं भविष्यतीति तस्याः आशयो व्यज्यते। उपह्रियन्तां गृहे स्थाप्यन्ताम्।७६

मातरञ्च समाश्वास्य अनुनीय च जानकीम्।
आगत्य पादौ वन्दित्वा तव यास्ये सुखं वनम्॥७७

**मातरमिति**—सुखमित्यनेन मम वनगमनेऽपि तव दुःखलेशो नास्तीति ध्वनितम्। दशरथस्य प्रत्युत्तरादानेन शरीरस्मृतिरेव नाभूदिति व्यक्तम्।७७

इत्युक्त्वा तु परिक्रम्य मातरं द्रष्टुमाययौ।
कौशल्यापि हरेः पूजां कुरुते रामकारणात्॥७८

**इत्युक्त्वेति**—रामस्य कारणात् अयोध्याधिकरणकरामावस्थितिकारणात् कौशल्या हरेः पूजां कुरुते। तथा च हे हरे! देवकार्यार्थं त्वमेव वनं गच्छ, मम रामस्त्वत्रैव तिष्ठ-त्विति फलितोऽर्थः। एतेन कौशल्यायाः विज्ञानमिश्रा भक्तिर्व्यक्ता। तेन च कौशल्यायाः अनादिरामायणीयलीलाज्ञानमस्तीति व्यक्तम्। ये तु रामकारणादित्यस्य रामाभिषेक-विधिनिमित्तमित्यर्थमाहुस्तेषां भक्तानां सत्यसंकल्पतया नारायणपूजाया अमोघत्तया च सा कुतो न फलितेति शङ्का दुर्वारैव।७८

होमं च कारयामास ब्राह्मणेभ्यो ददौ धनम्।
ध्यायते विष्णुमेकाग्रमनसा मौनमास्थिता॥७९

---

१. भविष्यज्जनानाञ्चोद्धारः मदीयपुस्तके।

अन्तःस्थमेकं घनचित्प्रकाशं,
निरस्तसर्वातिशयस्वरूपम् ।
विष्णुं सदानन्दमयं हृदब्जे,
सा भावयन्ती न ददर्श रामम् ॥८०

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे अयोध्याकाण्डे तृतीयोऽध्यायः ।३

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां व्यङ्ग्यप्रकाशिकायामयोध्याकाण्डे तृतीयोऽध्यायः ।३



१. इति तृतीयः सर्गः । रा० व० पु० ।

## अथ चतुर्थोऽध्यायः

श्रीमहादेव उवाच--

ततः सुमित्रा दृष्ट्वैनं रामं राज्ञी ससम्भ्रमा।
कौशल्यां बोधयामास रामोऽयं समुपस्थितः॥१
श्रुत्वैव रामनामैषा बहिर्दृष्टिप्रवाहिता।
रामं दृष्ट्वा विशालाक्षमालिङ्ग्याङ्के न्यवेशयत्॥२
मूर्ध्न्यवघ्राय पस्पर्श गात्रं नीलोत्पलच्छवि।
भुङ्क्ष्व पुत्रेति च प्राह मिष्टमन्नं क्षुधार्दितः॥३
रामः प्राह न मे मातर्भोजनावसरः कुतः।
दण्डकागमने शीघ्रं मम कालोऽद्य निश्चितः॥४
कैकेयीवरदानेन सत्यसन्धः पिता मम।
भरताय ददौ राज्यं ममाप्यारण्यमुत्तमम्॥५
चतुर्दश समास्तत्र ह्युषित्वा मुनिवेषधृक्।
आगमिष्ये पुनः शीघ्रं न चिन्तां कर्तुमर्हसि॥६
तच्छ्रुत्वा सहसोद्विग्ना मूर्च्छिता पुनरुत्थिता।
आह रामं सुदुःखार्ता दुःखसागरसम्प्लुता॥७
यदि राम! वनं सत्यं यासि चेन्नय मामपि।
त्वद्विहीना क्षणार्धं वा जीवितं धारये कथम्॥८
यथा गौर्बालकं वत्सं त्यक्त्वा तिष्ठेन्न कुत्रचित्।
तथैव त्वां न शक्नोमि त्यक्तुं प्राणात्प्रियं सुतम्॥९
भरताय प्रसन्नश्चेद्राज्यं राजा प्रयच्छतु।
किमर्थं वनवासाय त्वामाज्ञापयति प्रियम्॥१०

कैकेय्या वरदो राजा सर्वस्वं वा प्रयच्छतु ।
त्वया किमपराद्धं हि कैकेय्या वा नृपस्य वा ।११

**कैकेय्येति**—त्वया किमपराद्धं यत्त्वां वनाय प्रस्थापयतीति शेषः ।११

पिता गुरुर्यथा राम ! तवाहमधिका ततः ।
पित्राज्ञप्तो वनं गन्तुं वारयेयमहं सुतम् ॥१२
यदि गच्छसि मद्वाक्यमुल्लङ्घ्य नृपवाक्यतः ।
तदा प्राणान्परित्यज्य गच्छामि यमसादनम् ॥१३

**यदीति**—यथा पिता गुरुस्तथाहमपि तव गुरुः । यद्वा ततोऽधिका 'पितुर्दशगुणा माता गौरवेणातिरिच्यते' इति स्मृतेः । एवं च ममाज्ञया वनगमनमेवोचितमिति भावः ।१२

लक्ष्मणोऽपि ततः श्रुत्वा कौशल्यावचनं रुषा ।
उवाच राघवं वीक्ष्य दहन्निव जगत्त्रयम् ॥१४

**लक्ष्मण इति**—रुषा दहन्निवेत्यर्थः । लक्ष्मणवाक्यैः लक्ष्मणस्य पराक्रमातिशयः श्रीरामेऽपि प्रीत्यतिशयश्च सूचितः ।१४

उन्मत्तं भ्रान्तमनसं कैकेयीवशवर्तिनम् ।
बद्ध्वा निहन्मि भरतं तद्बन्धून् मातुलानपि ॥१५
अद्य पश्यन्तु मे शौर्यं लोकान्प्रदहतः पुरा ।
राम ! त्वमभिषेकाय कुरु यत्नमरिन्दम ! ॥१६
धनुष्पाणिरहं तत्र निहन्यां विघ्नकारिणः ।
इति ब्रुवन्तं सौमित्रिमालिङ्ग्य रघुनन्दनः ॥१७
शूरोऽसि रघुशार्दूल ! ममात्यन्तहिते रतः ।
जानामि सर्वं ते सत्यं किन्तु तत्समयो नहि ॥१८

**शूर इति**—ते सर्वमित्यनेन कालाग्निरुद्रातिशयितपराक्रमं जानामीति व्यज्यते । तेन च क्षीरसागरवासिनारायणसंकर्षणशेषेषु तव विद्यमानत्वं तेन च सम्प्रति न तव पराक्रमस्य समयः किन्तु लङ्काभिगमनस्यैवेति व्यज्यते ।१८

यदिदं दृश्यते सर्वं राज्यदेहादिकं च यत् ।
यदि सत्यं भवेत्तत्र आयासः सफलश्च ते ॥१९

**यदिति**—यदिदं सर्वं जगत् राज्यं देहादिकं च तत्तत्स्वरूपेण सत्यं भवेत्तदा तव प्रयासः सफलो भवेत् । तदिदं तथा नास्ति । किन्तु यदि चित् चिद्रूपेण सत्यं तत्र तव प्रयासो विफल एवेति भावः ।१९

भोगा मेघवितानस्थविद्युल्लेखेव चञ्चलाः।
आयुरप्यग्निसन्तप्तलोहस्थजलबिन्दुवत् ॥२०
यथा व्यालगलस्थोऽपि भेको दंशानपेक्षते।
तथा कालाहिना ग्रस्तो लोको भोगानशाश्वतान् ॥२१

**भोगा इति**—मेघवितानं मेघसमूहः। एवं च भोग्यभोक्त्रोरुभयोरप्यस्थिरत्वात्सर्वं व्यर्थमित्यर्थः।२०-२१

करोति दुःखेन हि कर्मतन्त्रं शरीरभोगार्थमहर्निशं नरः।
देहस्तु भिन्नः पुरुषात्समीक्ष्यते को वाऽत्र भोगः पुरुषेण भुज्यते ॥२२

**करोतीति**—कर्मतन्त्रं धनार्जनादिव्यापारं काम्यं वैदिकं कर्म च। नन्वत्र कस्य भोगः शरीरस्य उतात्मनः? नाद्य इत्याह देहस्त्विति पुरुषाद्भिन्नः तस्यात्यन्तजडत्वात्सुखादिसाक्षात्कारूपभोगस्य तत्रासम्भव इति भावः। नान्त्य इत्याह को वात्रेति। तस्य शुद्धस्वभावत्वेनापरिणामित्वाद् भोगासम्भव इति भावः। अत्र देहशब्देन चित्तमप्युपलक्ष्यते। यद्यपि तयोः परस्परविवेकग्रहाभावात् चित्तभोगस्तथापि सम्भ्रान्तमूलक इति हेय एवेति तात्पर्यम्। अयं भावः एवं प्राकृतभोगस्याऽपारमार्थिकत्वेन मदीयभोगस्य पारमार्थिकत्वेन नित्यत्वात् मया सह तव वियोगाभावाच्च न रोषो युक्त इति।२२

पितृमातृसुतभ्रातृदारबन्ध्वादिसंगमः।
प्रपायामिव जन्तूनां नद्यां काष्ठौघवच्चलः ॥२३

एवं भोगस्यापारमार्थिकत्वमुक्त्वेदानीं वैराग्याय पुत्रादिसंगस्यास्थिरत्वमाह **पित्रिति**-काष्ठौघयोरिव काष्ठौघवत्।२३

छायेव लक्ष्मीश्चपला प्रतीता तारुण्यमम्बूर्मिवदध्रुवं च।
स्वप्नोपमं स्त्रीसुखमायुरल्पं तथापि जन्तोरभिमान एषः ॥२४

**छायेति**—प्रतीता निश्चिता। एष अभिमानः मम धनादि अनेन च मम चिरं भोगादिरत्यादिः।२४

संसृतिः स्वप्नसदृशी सदा रोगादिसङ्कुला।
गन्धर्वनगरप्रख्या मूढस्तामनुवर्तते ॥२५

**संसृतिरिति**—अनुवर्तते तामुपादेयते[1] नानुतिष्ठति इत्यर्थः।२५

---

१. तामुपादत्ते इति समीचीनः पाठः।

आयुष्यं क्षीयते यस्मादादित्यस्य गतागतैः।
दृष्ट्वाऽन्येषां जरामृत्यू कथञ्चिन्नैव बुध्यते ॥२६

**आयुष्यमिति**—कथञ्चित्कथमपीत्यर्थः नैव बुध्यते। ममापि जरामृत्यू भवत इति कथमपि न बुध्यत इत्यर्थः।२६

स एव दिवसः सैव रात्रिरित्येव मूढधीः।
भोगाननुपतत्येव कालवेगं न पश्यति ॥२७

**स एवेति**—पूर्वपूर्वंभुक्तदिनरात्र्यपेक्षयोत्तरोत्तरस्य विशेषमपश्यन् अतो मूढमतिः कालवेगं पूर्वंपूर्वावस्थापहारकं न पश्यति अतो भोगाननुपतति तेष्वासज्जते।२७

प्रतिक्षणं क्षरत्येतदायुरामघटाम्बुवत्।
सपत्ना इव रोगौघाः शरीरं प्रहरन्त्यहो! ॥२८

**प्रतिक्षणमिति**—आमघटोऽपक्वघटः।२८

जरा व्याघ्रीव पुरतस्तर्जयन्त्यवतिष्ठते।
मृत्युः सहैव यात्येष समयं सम्प्रतीक्षते ॥२९

**जरेति**—प्रतीति। आगतप्रायाहं किं मूढोऽसीति तर्जयन्ती, मरणासन्ने वार्धके किमपि न सेत्स्यतीति व्यज्यते। मृत्युर्देहेन सहैव तिष्ठन्नपि प्रहर्तुं समयं संप्रतीक्षते।२९

देहेऽहंभावमापन्नो राजाहं लोकविश्रुतः।
इत्यस्मिन् मनुते जन्तुः कृमिविड्भस्मसंज्ञिते ॥३०

**देह इति**—देहे उपचयादिविशिष्टे कृमिविड्भस्मसंज्ञिते ईदृशे देहेऽहंभावमापन्नोऽहं राजेति अस्मिन् लोके मनुते।३०

त्वगस्थिमांसविण्मूत्ररेतोरक्तादिसंयुतः।
विकारी परिणामी च देह आत्मा कथं वद ॥३१

अथ देहस्यात्मत्वं खण्डयति—**त्वगिति**—त्वगादिसंयुतत्वाद् विकारी रसादिविकारवान् परिणामी बाल्याद्यवस्थापरिणामवान्। आत्मा त्वविकारी अपरिणामी चेति विपरीतः श्रुत्यादिभिरुक्तः।३१

यमास्थाय भवाँल्लोकं दग्धुमिच्छति लक्ष्मण!।
देहाभिमानिनः सर्वे दोषाः प्रादुर्भवन्ति हि ॥३२

**यमिति**—यं रागादिदोषसमूहं ते दोषाः देहाभिमानिनः प्रादुर्भवन्ति। एतेन प्राकृतदेहरहितो दिव्यदेहवान् अतस्तव क्रोधो न युक्त इति व्यज्यते।३२

देहोऽहमिति या बुद्धिरविद्या सा प्रकीर्तिता।
नाहं देहश्चिदात्मेति बुद्धिर्विद्येति भण्यते॥३३

देहाभिमानस्य रागादिदोषप्रादुर्भावकत्वं तत्करणाऽविद्यारूपत्वात्तस्येत्याह **देहइति**—देह इत्युपलक्षणमन्तः करणादेरपि तदाह-चिदात्मेति-नाहमुक्तलक्षणो देहः किन्तु चिदात्मेति भगवतश्चिच्छरीरमिति।३३

अविद्या संसृतेर्हेतुर्विद्या तस्या निवर्तिका।
तस्माद्यत्नः सदा कार्यो विद्याभ्यासे मुमुक्षुभिः।
कामक्रोधादयस्तत्र शत्रवः शत्रुसूदन ! ॥३४

**अविद्येति**—संसृतिः संसारमूलस्य रागादिदोषस्य शत्रवस्ते स्वजनकाविद्योच्छेदकत्वाद्विद्याभ्यासे कामादयः शत्रुतां कुर्वन्तीत्यर्थः।३४

तत्रापि क्रोध एवालं मोक्षविघ्नाय सर्वदा।
येनाविष्टः पुमान् हन्ति पितृभ्रातृसुहृत्सखीन्॥३५

प्रकृतोपयोगित्वेन क्रोधस्यैव मुक्तिविघ्नातिप्राधान्यमाह—**तत्रापीति**-पित्रादिवधेन पातित्यं प्राप्तो न श्रवणाधिकारीति भावः।३५

क्रोधमूलो मनस्तापः क्रोधः संसारबन्धनम्।
धर्मक्षयकरः क्रोधस्तस्मात्क्रोधं परित्यज॥३६

**क्रोधेति**—मनस्तापस्तु जनकहननाद्युपायान्वेषणमित्यर्थः।३६

क्रोध एष महान्शत्रुस्तृष्णा वैतरणी नदी।
सन्तोषो नन्दनवनं शान्तिरेव हि कामधुक्॥३७

**क्रोध इति**—महान् शत्रुः परिणामे स्वप्राणापहारकत्वात् क्रोध एव यमः। तृष्णा वैतरणी नदी दुस्तरत्वा[1]द्विषयलोभे कथमप्यनपगमादिति भावः। [2]नन्दनमानन्दजनकत्वादिति भावः।३७

---

१. विपल्लाभे मदीयपुस्तके।

२. नन्दनवनमित्युचितः।

तस्माच्छान्तिं भजस्वाद्य शत्रुरेवं भवेन्न ते।
देहेन्द्रियमनःप्राणबुद्ध्यादिभ्यो विलक्षणः॥३८

**तस्मादिति**—शान्ति भजस्वेत्यनेन[१] शान्तो भूत्वा मया सह दण्डकान्व्रजेति व्यज्यते।३८

आत्मा शुद्धः स्वयं ज्योतिरविकारी निराकृतिः।
यावद्देहेन्द्रियप्राणैर्भिन्नत्वं नात्मनो विदुः॥३९

तेभ्यो वैलक्षण्यमाह **आत्मेति**—निराकृतिः निर्गता आ समन्तात् कृतिः प्रयत्नो यस्मात् सः निर्व्यापार इत्यर्थः। यद्वा स्थूलादिशरीरचतुष्टयशून्यः चिन्मात्रकैवल्य इत्यर्थः।३९

तावत्संसारदुःखौघैः पीड्यन्ते मृत्युसंयुताः।
तस्मात्त्वं सर्वदा भिन्नमात्मानं हृदि भावय॥४०

**तावदिति**—अहं ममेत्यभिमानस्य सत्त्वादिति भावः। यतः संसारिदुःखैरज्ञानिजीवाः पीड्यन्ते। यदात्र देहादिभ्यो भिन्नं जानन्ति तदा न प्रपीड्यन्त इत्यर्थः। त्वं तु तस्माज्जीव-समूहात् सर्वदा भिन्नम् आत्मानं हृदि मनसि भावय। एतेन त्वं न जीवः किन्तु नारायण आविष्ट इति ध्वनितम्।४०

बुद्ध्यादिभ्यो बहिः सर्वमनुवर्तस्व मा खिदः।
भुञ्जन्प्रारब्धमखिलं सुखं वा दुःखमेव वा॥४१
प्रवाहपतितः कार्यं कुर्वन्नपि न लिप्यसे।
बाह्ये सर्वत्र कर्तृत्वमावहन्नपि राघव!॥४२

**बुद्ध्यादिभ्य इति**—जीवेभ्योऽतिरिक्तस्तदा बुद्ध्यादिभ्यः बहिः भिन्नः सर्वम् अनुवर्तस्व लीलया सर्वं कुरु। मा खिदः जीववत् खेदं मा कुरु। प्रारब्धं संकल्पेनारब्धम् भूभाराप-नोदरूपं भुञ्जन् प्रवाहपतितः लीलाप्रवाहप्राप्तं सुखं दुःखं वा कार्यं सुखदुःखात्मिकां लीलां कुर्वन्नपि भवानिति शेषः। न लिप्यसे ईश्वरत्वात् ताभ्यां लिप्तो न भविष्यसीत्यर्थः। बाह्ये सर्वत्र [२]इन्द्रजिदादिवधरूपं कुर्वन्नपि।४१-४२।

---

१. सज्जो भूत्वा मदीयपुस्तके।

२. हर्दितिदादि मदीयपुस्तके।

अन्तः शुद्धस्वभावस्त्वं लिप्यसे न च कर्मभिः।
एतन्मयोदितं कृत्स्नं हृदि भावय सर्वदा ॥४३

**अन्तरिति**—त्वं तु अन्तः शुद्धस्वभावः नारायणत्वेन शुद्धसत्त्वमयः कर्मभिः चकारात् पुण्यपापाभ्यां न लिप्यसे। एतन्मयोदितं हृदि सर्वदा भावय। एतेनात्मनो नारायणत्वाज्ञानादेव तव रोषो जात इति सूचितम्। तेन वनं गत्वा रावणप्रभृतिवधार्थं तवावतार इति।४३

संसारदुःखैरखिलैर्बाध्यसे न कदाचन।
त्वमप्यम्ब! मयादिष्टं हृदि भावय नित्यदा ॥४४

**संसारेति**—हे अम्ब! त्वमपि मयादिष्टं लक्ष्मणाय [१]सर्वात्मनारायणे आवेशरूपम् अपि शब्दान्नित्यायोध्यायां मदुत्संगे क्रीडति अहमप्यदित्यामाविष्टेति च नित्यदा सर्वदा हृदि भावयन्ती संसारदुःखैर्मद्वियोगजनितैर्न लिप्यसे।४४

समागमं प्रतीक्षस्व न दुःखैः पीड्यसे चिरम्।
न सदैकत्र संवासः कर्ममार्गानुवर्तिनाम् ॥४५
यथा प्रवाहपतितप्लवानां सरितां तथा।
चतुर्दशसमा संख्या क्षणार्द्धमिव जायते ॥४६
अनुमन्यस्व मामम्ब! दुःखं सन्त्यज्य दूरतः।
एवं चेत्सुखसंवासो भविष्यति वने मम ॥४७

**समागमेत्यादि**—यद्यपि नित्यायोध्यायां तव मदुत्संगवर्तित्वाद्वियोगः कथं शक्य इत्यत आह कर्ममार्गानुवर्तिनां लीलामार्गानुवर्तिनामस्माकम् एकत्र वासो न। अतोऽत्र वियोगजन्यः दुःखाभासो भवत्यतः पूर्वोक्तनिजरूपं भावयन्ती सती समागमं पुनरागमं प्रतीक्षस्व एवं च अचिरमपि दुःखैर्वियोगाभासैरपि न पीड्यसे। दुःखं मद्वियोगजं दुःखं न त्यक्ष्यसि तदा वनेऽपि मम दुःखं भविष्यतीति तेन च स्ववियोगजदुःखेन मम दुःखमवगत्यैषा दुःखं त्यक्ष्यतीति तेन च कौशल्यायास्तत्सुखसुखित्वं व्यज्यते। दुःखाभासैरपि निपीड्यसे इत्युक्तेऽपि वात्सल्यातिशयादस्या दुःखाभासो न निवर्तिष्यत इति मत्वाह अनुमन्यस्वेति।४५-४७।

---

१. पूर्वोक्त रा० व० पु०।

इत्युक्त्वा दण्डवन्मातुः पादयोरपतच्चिरम् ।
उत्थाप्याङ्के समावेश्य आशीर्भिरभ्यनन्दयत् ॥४८
सर्वे देवाः सगन्धर्वा ब्रह्मविष्णुशिवादयः ।
रक्षन्तु त्वां सदा यान्तं तिष्ठन्तं निद्रया युतम् ॥४९
इति प्रस्थापयामास समालिङ्ग्य पुनः पुनः ।
लक्ष्मणोऽपि तदा रामं नत्वा हर्षाश्रुगद्गदः ॥५०

कौशल्या दुःखं त्यक्तवतीति स्पष्टम् **इत्युक्त्वेति** त्रिभिः ।४८-५० ।

आह राम ! ममान्तःस्थः संशयोऽयं त्वया हृतः ।
यास्यामि पृष्ठतो राम ! सेवां कर्तुं तदादिश ॥५१
अनुगृह्णीष्व मां राम ! नो चेत्प्राणांस्त्यजाम्यहम् ।
तथेति राघवोऽप्याह लक्ष्मणं याहि मा चिरम् ॥५२

**अनुगृह्णीष्वेति**—नो चेत्प्राणांस्त्यक्ष्यामि नारायणे आवेशं त्यक्त्वा[1] नित्यलक्ष्मणः त्वत्समीपे स्थास्यामीत्यर्थः। तेन ज्ञानात् प्रेम्णो बलीयस्त्वं व्यज्यते ।५२

प्रतस्थे तां समाधातुं गतः सीतां पतिर्विभुः ।
आगतं पतिमालोक्य सीता सुस्मितभाषिणी ॥५३
स्वर्णपात्रस्थसलिलैः पादौ प्रक्षाल्य भक्तितः ।
पप्रच्छ पतिमालोक्य देव ! किं सेनया विना ॥५४
आगतोऽसि गतः कुत्र श्वेतच्छत्रं च ते कुतः ।
वादित्राणि न वाद्यन्ते किरीटादिविवर्जितः ॥५५

**प्रतस्थ इति**—'ममान्तःस्थः प्रेमावेशेनायं मां विहाय वनं गमिष्यतीत्येवंरूपस्त्वया हृतः लक्ष्मणस्य मम त्वया सह वियोगाभावात्', एवं लक्ष्मणमुक्त्वा प्रतस्थे मातृगृहादिति शेषः। ततः तां मूलप्रकृतिसहितप्रेमालक्ष्म्यामाविष्टां सीतां समाधातुं विभुर्गतः स्वगृह-मिति शेषः ।५३-५५ ।

सामन्तराजसहितः सम्भ्रमान्नागतोऽसि किम् ।
इति स्म सीतया पृष्टो रामः सस्मितमब्रवीत् ॥५६

---

१. लक्ष्मणरूपेण त्वत्समीपे रा० व० पु० ।

**सामन्तेति**——अत्र तादृशश्रीसीतोक्त्या पूर्वं सुमन्तेन सह सैन्यैः गतवानिति व्यज्यते। सस्मितमेतेन एषा ज्ञात्वापि मनुष्यनाट्यं प्रकटयन्ती पृच्छतीति ध्वनितम्।५६

राज्ञा मे दण्डकारण्ये राज्यं दत्तं शुभेऽखिलम्।
अतस्तत्पालनार्थाय शीघ्रं यास्यामि भामिनि!॥५७

**राज्ञेति**——तत्पालनार्थायेत्यनेन राक्षसविनाशकारणं ध्वनितम्।५७

अद्यैव यास्यामि वनं त्वं तु श्वश्रूसमीपगा।
शुश्रूषां कुरु मे मातुर्न मिथ्यावादिनो वयम्॥५८

**अद्यैवेति**——न मिथ्यावादिनो वयमिति परिहासं मा मंस्थाः। परिहासेऽपि वयं मिथ्यावादिनो न भवाम इति भावः।५८

इति ब्रुवन्तं श्रीरामं सीता भीताऽब्रवीद्वचः।
किमर्थं वनराज्यं ते पित्रा दत्तं महात्मना॥५९

**इतीति**——सीता भीतेति। अभीतेतिच्छेदः।५९

तामाह रामः कैकेय्यै राजा प्रीतो वरं ददौ।
भरताय ददौ राज्यं वनवासं ममानघे!॥६०

चतुर्दशसमास्तत्र वासो मे किल याचितः।
तया देव्या ददौ राजा सत्यवादी दयापरः॥६१

अतः शीघ्रं गमिष्यामि मा विघ्नं कुरु भामिनि!।
श्रुत्वा तद्रामवचनं जानकी प्रीतिसंयुता॥६२

**अत इति**——मा विघ्नं कुरु भामिनीत्यनेन सीतायाः कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यं व्यज्यते। तेन सरस्वतीतोऽप्याधिक्यम्। प्रीतिसंयुतेत्यनेनात्र बह्व्यः सख्यः परिचरन्ति तत्राहमेकाकिनी परिचरिष्यामीति व्यज्यते। तेन तच्चरणसेवनोत्कण्ठातिशयस्तस्याः।६२

अहमग्रे गमिष्यामि वनं पश्चात्त्वमेष्यसि।
इत्याह मां विना गन्तुं तव राघव! नोचितम्॥६३

**अहमिति**——नोचितमित्यनेन मां विना गत्वापि किं करिष्यसीति व्यज्यते।६३

तामाह राघवः प्रीतः स्वप्रियां प्रियवादिनीम् ।
कथं वनं त्वां नेष्येऽहं बहुव्याघ्रमृगाकुलम् ॥६४
राक्षसा घोररूपाश्च सन्ति मानुषभोजिनः ।
सिंहव्याघ्रवराहाश्च संचरन्ति समन्ततः ॥६५
कट्वम्लफलमूलानि भोजनार्थं सुमध्यमे ! ।
अपूपानि व्यञ्जनानि विद्यन्ते न कदाचन ॥६६
काले काले फलं वापि विद्यते कुत्र सुन्दरि ! ।
मार्गो न दृश्यते क्वापि शर्कराकण्टकान्वितः ॥६७
गुहागह्वरसम्बाधं झिल्लीदंशादिभिर्युतम् ।
एवं बहुविधं दोषं वनं दण्डकसंज्ञितम् ॥६८
पादचारेण गन्तव्यं शीतवातातपादिमत् ।
राक्षसादीन्वने दृष्ट्वा जीवितं हास्यसेऽचिरात् ॥६९
तस्माद्भद्रे ! गृहे तिष्ठ शीघ्रं द्रक्ष्यसि मां पुनः ।
रामस्य वचनं श्रुत्वा सीता दुःखसमन्विता ॥७०

तामाहेत्यादिश्लोकसप्तकेन प्रणयकोपयुक्तजानकीवदनदर्शनाभिलाषो व्यक्तः । तेन श्रीजानक्याः पूर्वदृष्टप्रणयकोपात्स्वकोपत्वं व्यक्तम् ।६४-७० ।

प्रत्युवाच स्फुरद्वक्त्रा किञ्चित्कोपसमन्विता ।
कथं मामिच्छसे त्यक्तुं धर्मपत्नीं पतिव्रताम् ॥७१

**प्रत्युवाचेति**—कथं मां त्यक्तुमिच्छसीत्यनेन यदि मां त्यक्त्वा गमिष्यसि तदा लोकः भवन्तं हीनपराक्रमं मंस्यत इति व्यज्यते ।७१

त्वदनन्यामदोषां मां धर्मज्ञोऽसि दयापरः ।
त्वत्समीपे स्थितां राम ! को वा मां धर्षयेद्वने ॥७२
फलमूलादिकं यद्यत्तव भुक्तावशेषितम् ।
तदेवामृततुल्यं मे तेन तुष्टा रमाम्यहम् ॥७३
त्वया सह चरन्त्या मे कुशाः काशाश्च कण्टकाः ।
पुष्पास्तरणतुल्या मे भविष्यन्ति न संशयः ॥७४

अहं त्वा क्लेशये नैव भवेयं कार्यसाधिनी।
बाल्ये मां वीक्ष्य कश्चिद्वै ज्योतिःशास्त्रविशारदः।।७५

**अहमिति**––कार्यसाधिनी भवेयमेतेन अहमेव रावणघातादि कर्म कारयिष्यामीति ध्वनितम्।७५

प्राह ते विपिने वासः पत्या सह भविष्यति।
सत्यवादी द्विजो भूयाद् गमिष्यामि त्वया सह।।७६

**प्राहेति**––सत्यवादी द्विजो भूयादित्यनेन यदि ब्राह्मणवचनं सत्यं न करिष्यसि तदा ते ब्रह्मण्यताहानिरिति व्यज्यते। ब्रह्मण्यदेवेति[1] त्वन्नाम्नः अनर्थता भविष्यति।७६

नान्यत्किञ्चित् प्रवक्ष्यामि श्रुत्वा मां नय काननम्।
रामायणानि बहुशः श्रुतानि बहुभिर्द्विजैः।।७७

**नान्यदिति**––रामायणेत्युक्त्या रामायणानामनादित्वं ध्वनितम्।७७

सीतां विना वनं रामो गतः किं कुत्रचिद्वद।
अतस्त्वया गमिष्यामि सर्वथा त्वत्सहायिनी।।७८

**सीतामिति**––त्वत्सहायिनी, त्वं सर्वं मत्सहायेनैव करिष्यसीत्यर्थः।७८

यदि गच्छसि मां त्यक्त्वा प्राणांस्त्यक्ष्यामि तेऽग्रतः।
इति तं निश्चयं ज्ञात्वा सीताया रघुनन्दनः।।७९

**यदीति**––प्राणांस्त्यक्ष्यामीत्यनेनाहमपि तदर्थमेवाविष्टेति। एवं भूतां मां यदि नयसि तदाहं मूलप्रकृतिसहितप्रेमालक्ष्मीतो निःसृताहं नित्यविहारे गमिष्यामीति व्यज्यते।७९

अब्रवीद् देवि! गच्छ त्वं वनं शीघ्रं मया सह।
अरुन्धत्यै प्रयच्छाशु हारानाभरणानि च।।८०
ब्राह्मणेभ्यो धनं सर्वं दत्त्वा गच्छामहे वनम्।
इत्युक्त्वा लक्ष्मणेनाशु द्विजानाहूय भक्तितः।।८१

---

१. तव नाम्नः अनन्वर्थता भविष्यति इति रा० व० पु०।

ददौ गवां वृन्दशतं धनानि,
वस्त्राणि दिव्यानि विभूषणानि।
कुटुम्बवद्भ्यः श्रुतशीलवद्भ्यो,
मुदा द्विजेभ्यो रघुवंशकेतुः ॥८२
अरुन्धत्यै ददौ सीता मुख्यान्याभरणानि च।
रामो मातुः सेवकेभ्यो ददौ धनमनेकधा ॥८३
स्वकान्तःपुरवासिभ्यः सेवकेभ्यस्तथैव च।
पौरजानपदेभ्यश्च ब्राह्मणेभ्यः सहस्रशः ॥८४
लक्ष्मणोऽपि सुमित्रां तु कौसल्यायै समर्पयत्।
धनुष्पाणिः समागत्य रामस्याग्रे व्यवस्थितः ॥८५
रामः सीता लक्ष्मणश्च जग्मुः सर्वे नृपालयम् ॥८६
श्रीरामः सहसीतया नृपपथे गच्छन् शनैः सानुजः,
पौरान् जानपदान्कुतूहलदृशः सानन्दमुद्वीक्षयन्।
श्यामः कामसहस्रसुन्दरवपुः कान्त्या दिशो भासयन्,
पादन्यासपवित्रिताखिलजगत् प्रापालयं तत्पितुः ॥८७

⊙

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डे चतुर्थोऽध्यायः ।४

⊙

**श्रीराम इति**—कुतूहलेन पश्यन्ति तान् पौरादीन् सानन्दमुद्वीक्षयन् दर्शयन् तेन तेषां दुःखनिरासं कृतवानिति व्यक्तम्। पादन्यासेनेत्यादिपदेन यः सर्वावताराणामवतारी नारायणस्त्रिविक्रमरूपेण लोकानाक्रान्तवान् स एव वनं जगाम। सगुण-निर्गुणयोरङ्गी श्रीरामस्तु नित्यमयोध्यायामेव विहारं करोतीति सूचितम्। [1]'सुराणां-सगुणाङ्गित्वे प्रमाणं 'शिरो नारायणः पक्ष उत्तरः सव्य एव च। प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः॥ [2](नारायणोऽथ सन्दोहो वासुदेवः) शिरोऽपि च। पुच्छः संकर्षणः प्रोक्त एक एव तु पञ्चधा॥ अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः।' इति स्मृतिः। निर्गुणाङ्गित्वे प्रमाणं

---

१. सुराणामिति रा० व० पु० नास्ति।

२. कोष्ठान्तर्गतः पाठः रा० व० पुस्तकस्थः।

'यदद्वैतं ब्रह्म यस्य तनुभा' इति, 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'।। इति श्रुतिः। यामिच्छसि महाराज ! तां तनुं प्रविश स्वकां। वैष्णवीं वा महाबाहो ! यद्वाकाशं सनातनमिति वाल्मीकीये,[१] ब्रह्मोक्तिरुभयत्र प्रमाणम्।८२-८७।

इति[२] श्री सिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामयोध्याकाण्डे
चतुर्थोऽध्यायः।४



१. ब्रह्मोक्तरुभयत्र, मदीयपुस्तके।

२. इति सिद्धि श्रीमदध्यात्मध्वनिप्रकाशिकायां चतुर्थोऽध्यायः।४ रा० व० पु०।

## अथ पञ्चमोऽध्यायः

**श्रीमहादेव उवाच--**

आयान्तं नगराद् दृष्ट्वा मार्गे रामं च जानकीम्।
लक्ष्मणेन समं वीक्ष्य ऊचुः सर्वे परस्परम्॥१
कैकेय्या वरदानादि श्रुत्वा दुःखसमावृताः।
बत राजा दशरथः सत्यसन्धं प्रियं सुतम्॥२
स्त्रीहेतोरत्यजत्कामी तस्य सत्यं ततः कुतः।
कैकेयी वा कथं दुष्टा रामं सत्यं प्रियङ्करम्॥३
विवासयामास कथं क्रूरकर्मातिमूढधीः।
हे जना! नात्र वस्तव्यं गच्छामोऽद्यैव काननम्॥४
यत्र रामः सभार्यश्च सानुजो गन्तुमिच्छति।
पश्यन्तु जानकीं सर्वे पादचारेण गच्छतीम्॥५
पुम्भिः कदाचिददृष्टा जानकी लोकसुन्दरी।
सापि पादेन गच्छन्ती जनसंघेष्वनावृता॥६
रामोऽपि पादचारेण गजाश्वादिविवर्जितः।
गच्छति द्रक्ष्यथ विभुं सर्वलोकैकसुन्दरम्॥७
राक्षसी कैकेयीनाम्नी जाता सर्वविनाशिनी।
रामस्यापि भवेद् दुखं सीतायाः पादयानतः॥८
बलवान्विधिरेवात्र पुंप्रयत्नो हि दुर्बलः।
इति दुःखाकुले वृन्दे साधूनां मुनिपुङ्गवः॥९
अब्रवीद्वामदेवोऽथ साधूनां सङ्घमध्यगः।
मानुशोचथ रामं वा सीतां वा वच्मि तत्त्वतः॥१०

**बलवानिति**--इत्युक्तप्रकारेण दुःखाकुले। एतेन यदि वामदेवस्तान्न बोधयेत् ततस्तेषामपि सरस्वतीवृत्तान्तश्रीरामावेशादेरनभिज्ञत्वाद्दशरथदशैव भवेदिति। तेन च तेषां श्रीरामे प्रेमातिशयो ध्वनितः।९-१०

एष रामः परो विष्णुरादिनारायणः स्मृतः।
एषा सा जानकी लक्ष्मीर्योगमायेति विश्रुता॥११

**एष इति**—य एषः वनं प्रस्थितः परः व्यूहविभवान्तर्यामिभ्यः परः चतुर्भुजः साकारः विष्णुर्व्यापकः निराकारः एतदुभयाङ्गी रामः आदिनारायणः आदिनारायणे आवेशेन प्रविष्टः स्मृतः श्रुतिस्मृतिभ्यां बोधितः। एतेन युष्मत्स्वामी श्रीरामस्तत्रैव, एतां पुरं विहाय कुत्रापि न गच्छतीति ध्वनितम्। एवं योगमाया मूलप्रकृतिः प्रेमारूपा च विश्रुता सा एषा जानकी[1] जानक्यावेशयुक्तत्वात् तच्छब्दवाच्या। एतेन श्रीरामस्य नित्यानुयायिनी सीता तत्त्वत्रैव तेन[2] सह विहरतीति ध्वनितम्।११

असौ शेषस्तमन्वेति लक्ष्मणाख्यश्च साम्प्रतम्।
एष मायागुणैर्युक्तस्तत्तदाकारवानिव॥१२

**असाविति**—योऽयं लक्ष्मणावेशयुक्तत्वात् लक्ष्मणाख्यः सोऽसौ शेषः संकर्षणः च शब्दात् क्षीरसागरस्वामिनारायणः तं रामावेशयुतं नारायणमन्वेति अनुगच्छति। न तु श्रीरामनित्यसेवानिरतो लक्ष्मण इत्यर्थः। यः श्रीरामो निर्गुणे आदिनारायणे स्वावेशेन प्रविश्य रावणवधार्थं वनं याति स एव, इवशब्दो एवार्थे भिन्नक्रमः, स रामः मायागुणैः कृपागुणैर्युक्तस्तत्तदाकारवान् आवेशेन वक्ष्यमाणसगुणब्रह्माद्याकारेऽपि तत्तत्कार्यकारीत्यर्थः।१२

एष एव रजोयुक्तो ब्रह्माभूद्विश्वभावनः।
सत्त्वाविष्टस्तथा विष्णुस्त्रिजगत्प्रतिपालकः॥१३

एतदेव प्रपञ्चयति–**एष एवेत्यादिना**।१३

एष रुद्रस्तामसोऽन्ते जगत्प्रलयकारणम्।
एष मत्स्यः पुरा भूत्वा भक्तं वैवस्वतं मनुम्॥१४
नाव्यारोप्य लयस्यान्ते पालयामास राघवः।
समुद्रमथने पूर्वं मन्दरे सुतलं गते॥१५

ब्रह्मादित्रये श्रीरामावेशेन तत्तत्कार्यकर्तृत्वमुक्त्वा मत्स्याद्यवतारेष्वपि तदावेशेनैव तत्तत्कार्यकर्तृत्वमाह–**एष मत्स्यइत्यादि** सार्धपंचकेन। तेन सर्वेषामीश्वरानीश्वराणां कर्तृत्वं श्रीरामदत्तसामर्थ्यादेव। 'कर्तृत्वं कारणत्वञ्च स्वभावश्चेतना धृतिः।

---

१. जानक्यवतारयुक्तत्वात् मदीयपुस्तके।
२. 'सह' अयं शब्दो न दृश्यते मदीयपुस्तके।

यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया ॥' इति स्मृतेः लयस्य दैनन्दिनप्रलयस्य अन्तं समाप्तिपर्यन्तम् ।१४-१५।

अधारयत्स्वपृष्ठेऽद्रिं कूर्मरूपी रघूत्तमः।
मही रसातलं याता प्रलये सूकरोऽभवत् ॥१६

**अधारयदिति**—एष रघूत्तमः अद्रिं मन्दरम् ।१६

तोलयामास दंष्ट्राग्रे तां क्षोणीं रघुन्दनः।
नारसिंहं वपुः कृत्वा प्रह्लादवरदः पुरा ॥१७
त्रैलोक्यकण्टकं रक्षः पाटयामास तन्नखैः।
पुत्रराज्यं हृतं दृष्ट्वा ह्यदित्या याचितः पुरा ॥१८

**त्रैलोक्येति**—तत्प्रह्लादपीडकं रक्षः। पुत्रस्य शक्रस्य राज्यं हृतं बलिना ।१८

वामनत्वमुपागम्य याच्ञया चाहरत्पुनः।
दुष्टक्षत्रियभूभारनिवृत्त्यै भार्गवोऽभवत् ॥१९

**वामनत्वमिति**—याच्ञया बलेःसकाशादिदं छलेनाहरत् ।१९

स एव जगतां नाथ इदानीं रामतां गतः।
रावणादीनि रक्षांसि कोटिशो निहनिष्यति ॥२०

**स एवेति**—स एव नित्यायोध्याविहारी राम एवेदानीम् आदिनारायणे आवेशेन प्रविश्य दशरथपुत्रत्वेन रामतां गतः। श्रीरामे रामता स्वतः सिद्धैव किमर्थं नारायणे आविश्य रामतां गत इत्यत आह—रावणादीनीति। नित्यविहारिणस्तत्र गमनासम्भवात् ।२०

मानुषेणैव मरणं तस्य दृष्टं दुरात्मनः।
राज्ञा दशरथेनापि तपसाराधितो हरिः ॥२१
पुत्रत्वाकाङ्क्षया विष्णोस्तदा पुत्रोऽभवद्धरिः।
स एव विष्णुः श्रीरामो रावणादिवधाय हि ॥२२

ननु चतुर्भुजरूपेण किं नैतं हतवानित्यत आह **मानुषेणैवेति**—एतदवतारे कारणान्तरमाह-राज्ञा दशरथेनेति। कश्यपादित्यभिप्रायेणोक्तिः। रावणादिवधाय स एव विष्णुः रामावेशयुक्तत्वाद्रामशब्दवाच्यः ।२१-२२।

गन्ताद्यैव वनं रामो लक्ष्मणेन सहायवान्।
एषा सीता हरेर्माया सृष्टिस्थित्यन्तकारिणी॥२३

**गन्तेति**––या सृष्टिस्थित्यन्तकारिमूलप्रकृतिः हरेर्माया प्रेमा लक्ष्मीः सा एषा सीता सीतावेशयुक्तत्वात् सीताशब्दवाच्येत्यर्थः।२३

राजा वा कैकेयी वापि नात्र कारणमण्वपि।
पूर्वेद्युर्नारदः प्राह भूभारहरणाय च॥२४
रामोऽप्याह स्वयं साक्षाच्छ्वो गमिष्याम्यहं वनम्।
अतो रामं समुद्दिश्य चिन्तां त्यजत बालिशाः॥२५

**राजेति**––नारदः प्राहभूभारहरणोद्देश्यकं ब्रह्मणः सन्देशवचनमित्यर्थः, अहं-नारायणे आवेशेन वनं गमिष्यामीत्यर्थः।२४-२५।

राम रामेति ये नित्यं जपन्ति मनुजा भुवि।
तेषां मृत्युभयादीनि न भवन्ति कदाचन॥२६
का पुनस्तस्य रामस्य दुःखशङ्का महात्मनः।
रामनाम्नैव मुक्तिः स्यात्कलौ नान्येन केनचित्॥२७

रामो दुःखितो भविष्यतीत्यपि वृथैव शङ्केत्याह **रामरामेति**––तेषां मृत्युभया-दीनि न भवन्ति इतरभयं न भवति कैमुत्येन यन्नामजापकानामेव दुःखाभावस्तस्य कुतो दुःखाशङ्केति भावस्तदेवाह का पुनरिति। त्रेतायुगोद्भवानामयोध्यावासिनां शुद्धानां युष्माकं तन्नामस्मरणाज्जीवन्मुक्ततया सर्वदा रघुनन्दनदर्शनसम्भवाद्वियोगाभावो ध्वनितः।२६-२७।

मायामानुषरूपेण विडम्बयति लोककृत्।
भक्तानां भजनार्थाय रावणस्य वधाय च॥२८

ननु वनं गच्छतो रामस्य कथं सदा दर्शनमित्यत आह **मायेति**––अवाङ्मनसगो-चरस्य रामस्य नामरूपादीनां[1] प्राकट्यस्यासंभवं मत्वा लोककृन्नारायणः भक्तानां भज-नार्थाय मदीयेन रामेति नाम्ना तन्नामजपाय मद्गृहीतरामरूपेण[2] तद्रूपध्यानाय मत्कृत-रावणवधादिलीलया तल्लीलास्मरणाय च मायया कृपया तदीयमानुषरूपेण विडम्बयति

---

१. प्रकल्पस्यासम्भवम्, रा० व० पु०।
२. तद्रूपध्यानाय मत्कृतरावण, इत्यंशः अधिकः मदीयपुस्तके।

तदीयद्विभुजमनुकरोतीत्यर्थः। तदावेशेन कृतत्वात् नारायणस्येदं सर्वं लीलादिकं तस्यैवेति तात्पर्यार्थः। तेन तस्य वाङ्मनसगोचरातीतत्वं व्यक्तम्।२८

राज्ञश्चाभीष्टसिद्ध्यर्थं मानुषं वपुराश्रितः।
इत्युक्त्वा विररामाथ वामदेवो महामुनिः॥२९

एतदेव विशदयति **राज्ञश्चेति**—राज्ञः आवेशेन दशरथस्याभीष्टं विवाहोत्सवादि-सिद्ध्यर्थं चकारात्कश्यपाभीष्टसिद्ध्यर्थं वाङ्मनसगोचरातीतरामस्य मानुषं वपुः द्विभुज-रूपम् आश्रितः तदावेशं गृहीतवानित्यर्थः।२९

श्रुत्वा तेऽपि द्विजाः! सर्वे रामं ज्ञात्वा हरिं विभुम्।
जहुर्हृत्संशयग्रन्थिं राममेवान्वचिन्तयन्॥३०

**श्रुत्वेति**—रामं, हरति भक्तानां क्लेशमिति व्युत्पत्त्या भक्तक्लेशापहारिणं रामावेश-युक्तं विभुं व्यापकं नारायणं ज्ञात्वा भक्तक्लेशापहारिरामावेशं गृहीत्वा व्यापकस्य नारायणस्य वनगमनेऽपि आवेशिनः श्रीरामस्य कुत्रापि गमनाभावात् नारायणस्यापि व्यापकत्वेनात्रावस्थानसद्भावाच्च वियोगो नास्तीति ज्ञात्वेत्यर्थः। संशयग्रन्थिं रामो वनं गच्छति उत्तमां निरीक्ष्य कैकेयी तमत्रैव स्थापयेदित्येतद्रूपं जहुः। रामं नित्यसाकेत-रासविहारिणम् अन्वचिन्तयन्नेवेति भावः। 'रासमण्डलगं रामं गीतनर्तनतत्परम्। यो वै विकल्पयेद्विष्णुं जीवन्मुक्तः स उच्यते॥' इति स्कान्दे कोशलखण्डे। श्रुत्वा त इति सूतोक्तिः। हे द्विजा इति शौनकादीन् प्रति सम्बोधनम्।३०

य इदं चिन्तयेन्नित्यं रहस्यं रामसीतयोः।
तस्य रामे दृढा भक्तिर्भवेद्विज्ञानपूर्विका॥३१
रहस्यं गोपनीयं वो यूयं वै राघवप्रियाः।
इत्युक्त्वा प्रययौ विप्रस्तेऽपि रामं परं विदुः॥३२

**रहस्यमिति**—रहस्यं पूर्वोक्तं रामावेशादिकं, विप्रो वामदेवः तेऽपि अयोध्यावासिनो-ऽपि रामं परमावेशिनं विदुः। गोपनीयं श्रीरामभक्तेरिदमिति शेषः।३२

ततो रामः समाविश्य पितृगेहमवारितः।
सानुजः सीतया गत्वा कैकेयीमिदमब्रवीत्॥३३
आगताः स्मो वयं मातस्त्रयस्ते सम्मतं वनम्।
गन्तुं कृतधियः शीघ्रमाज्ञापयतु नः पिता॥३४

इत्युक्ता सहसोत्थाय चीराणि प्रददौ स्वयम्।
रामाय लक्ष्मणायाथ सीतायै च पृथक् पृथक्।।३५

**इत्युक्तेति**—चीराणि वन्यपरिधेयानि वल्कलादीनि जीर्णवस्त्राणि वा।३५

रामस्तु वस्त्राण्युत्सृज्य वन्यचीराणि पर्यधात्।
लक्ष्मणोऽपि तथा चक्रे सीता तन्न विजानती।।३६

**राम इति**—तच्चीरपरिधानप्रकारस्वरूपम्।३६

हस्ते गृहीत्वा रामस्य लज्जया मुखमैक्षत।
रामो गृहीत्वा तच्चीरमंशुके पर्यवेष्टयत्।।३७
तद् दृष्ट्वा रुरुदुः सर्वे राजदाराः समन्ततः।
वसिष्ठस्तु तदाकर्ण्य रुदितं भर्त्सयन् रुषा।।३८
कैकेयीं प्राह दुर्वृत्ते! राम एव त्वया वृतः।
वनवासाय दुष्टे! त्वं सीतायै किं प्रयच्छसि।।३९
यदि रामं समन्वेति सीता भक्त्या पतिव्रता।
दिव्याम्बरधरा नित्यं सर्वाभरणभूषिता।।४०
रमयत्वनिशं रामं वनदुःखनिवारिणी।
राजा दशरथोऽप्याह सुमन्त्रं रथमानय।।४१
रथमारुह्य गच्छन्तु वनं वनचरप्रियाः।
इत्युक्त्वा राममालोक्य सीतां चैव सलक्ष्मणम्।।४२
दुःखान्निपतितो भूमौ रुरोदाश्रुपरिप्लुतः।
आरुरोह रथं सीता शीघ्रं रामस्य पश्यतः।।४३

**इत्युक्त्वेति**—वनचरप्रिया। वनचरा मुनयो वानराश्च प्रिया येषां, तेषां प्रियो वा, तेन तेषां भक्त्यैव वनं गच्छति न तु सरस्वत्याविष्टकैकेयीप्रेरणया तेन रामप्रेरितैव सीता शीघ्रमारुरोहेत्यनेन वने स्वयमेव श्रीरामं परिचरिष्यामीति उत्साहातिशयः सूचितः।४२-४३।

रामः प्रदक्षिणं कृत्वा पितरं रथमारुहत्।
लक्ष्मणः खड्गयुगलं धनुस्तूणीयुगं तथा।।४४
गृहीत्वा रथमारुह्य नोदयामास सारथिम्।
तिष्ठ तिष्ठ सुमन्त्रेति राजा दशरथोऽब्रवीत्।।४५

गच्छ गच्छेति रामेण नोदितो चोदयद्रथम्।
रामे दूरं गते राजा मूर्च्छितः प्रापतद् भुवि ॥४६
पौरास्तु बालवृद्धाश्च वृद्धा ब्राह्मणसत्तमाः।
तिष्ठ तिष्ठेति रामेति क्रोशन्तो रथमन्वयुः ॥४७

**पौरा इति**—बालवृद्धाः पौराः ब्राह्मणव्यतिरिक्ताः ब्राह्मणसत्तमाः शोकाभासेन विस्मृतवामदेवोपदेशाः ।४७

राजा रुदित्वा सुचिरं मां नयन्तु गृहं प्रति।
कौशल्याया राममातुरित्याह परिचारकान् ॥४८
किञ्चित्कालं भवेत्तत्र जीवनं दुःखितस्य मे।
अत ऊर्ध्वं न जीवामि चिरं रामं विना कृतः ॥४९
ततो गृहं प्रविश्यैव कौशल्यायाः पपात ह।
मूर्च्छितश्च चिराद् बुद्ध्वा तूष्णीमेवावतस्थिवान् ॥५०
रामस्तु तमसातीरं गत्वा तत्रावसत्सुखी।
जलं प्राश्य निराहारो वृक्षमूलेऽस्वपद्विभुः ॥५१
सीतया सह धर्मात्मा धनुष्पाणिस्तु लक्ष्मणः।
पालयामास धर्मज्ञः सुमन्त्रेण समन्वितः ॥५२
पौराः सर्वे समागत्य स्थितास्तस्याविदूरतः।
शक्ता रामं पुरं नेतुं नो चेद् गच्छामहे वनम् ॥५३

**पौरा इति**—रामं पुरं नेतुं यदि शक्तास्तदा परावृत्य नेष्यामो नो चेद्वनमेव गमिष्याम इति निश्चयमित्यर्थः। एतेन श्रीरामस्य सर्वप्रियत्वं ध्वनितम्। अत्र प्रकरणे सर्वेषां दुःखातिशयवर्णने सीतासखीनां दुःखस्य मुख्यतया वर्णयितव्येऽपि तदवर्णनेन नित्यसाकेतविहारिणा श्रीरामेण विहरणाद्वियोगाभावो ध्वनितः। तेन वनगमनलीला तेषामज्ञातेवेति[1] ।५३

इति निश्चयमाज्ञाय तेषां रामोऽतिविस्मितः।
नाहं गच्छामि नगरमेते वै क्लेशभागिनः ॥५४
भविष्यन्तीति निश्चित्य सुमन्त्रमिदमब्रवीत्।
इदानीमेव गच्छामः सुमन्त्र ! रथमानय ॥५५

---

१. अज्ञातेति मदीयपुस्तके।

इत्याज्ञप्तः सुमन्त्रोऽपि रथं वाहैरयोजयत्।
आरुह्य रामः सीता च लक्ष्मणोऽपि ययुर्द्रुतम्।।५६
अयोध्याभिमुखं गत्वा किञ्चिद् दूरं ततो ययुः।
तेऽपि राममदृष्ट्वैव प्रातरुत्थाय दुःखिताः।।५७

**अयोध्याभिमुखमिति**—एते यथा मामयोध्यां गच्छन्तं जानीयुरिति भावः। ततः किञ्चिद्दूरं ययुः। एतेन पाषाणवतीं भूमिमवाप्य परावृत्य गता इति वक्तव्यम्।५७

रथनेमिगतं मार्गं पश्यन्तस्ते पुरं ययुः।
हृदि रामं ससीतं ते ध्यायन्तस्तस्थुरन्वहम्।।५८

**रथेति**—ते पुरं ययुरेतेन तेषां श्रीरामे प्रेमातिशयो व्यक्तः। ध्यायन्तो वामदेवोपदेशं स्मृतवन्तस्तस्थुरेतेन प्रेमाकुलतया पुनरनुगमनाक्षमत्वं सूचितम्।५८

सुमन्त्रोऽपि रथं शीघ्रं नोदयामास सादरम्।
स्फीतान् जनपदान् पश्यन् रामः सीतासमन्वितः।।५९
गङ्गातीरं समागच्छच्छृङ्गवेराविदूरतः।
गङ्गां दृष्ट्वा नमस्कृत्य स्नात्वा सानन्दमानसः।।६०
शिंशपावृक्षमूले स निषसाद रघूत्तमः।
ततो गुहो जनैः श्रुत्वा रामागममहोत्सवम्।।६१

**शिंशपेति**—रामागमनमहोत्सवं श्रुत्वा तस्य परमानन्दो जात इति भावः।६१

सखायं स्वामिनं द्रष्टुं हर्षात्तूर्णं समापतत्।
फलानि मधुपुष्पादि गृहीत्वा भक्तिसंयुतः।। ६२

**सखायमिति**—स्वामिनमित्यनेन गुहस्य दासत्वमायाति, सखायमित्यनेन गुहस्य मित्रत्वमायाति न च दास्यं, कथं मित्रत्वं ? 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता भोगमात्रसाम्यलिंगाच्च जगत् व्यापारवर्जमि'ति श्रुति[1] सूत्राभ्याम् उभयविधधर्माविरोधात्। तेन गुहस्तु श्रीरामं स्वामिनमेव मनुते रामस्तु तं मित्रमिति व्यक्तम्।६२

---

१. श्रुतिसूत्रम् मदीयपुस्तके।

रामस्याग्रे विनिक्षिप्य दण्डवत्प्रापतद् भुवि।
गुहमुत्थाप्य तं तूर्णं राघवः परिषस्वजे ॥६३

**रामस्येति**—राघवः परिषस्वजे एतेन यः कोऽपि रामभक्तो ब्रह्मादिभ्योऽपि शुचितमो भवतीति ध्वनितम्। उक्तञ्च श्रीभागवते-विप्राद् द्विषड्गुणयुतादरविन्दनाभपादार-विन्दविमुखात् श्वपचं वरिष्ठं। मन्ये तदर्पितमनोवचने हितार्थं प्राणं पुनाति स कुलं न तु भूरिमानः॥ इति। पाद्मेऽपि 'न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः। सर्ववर्णेषु ते शूद्रा ये न भक्ता जनार्दने'॥ इति। अगस्त्यसंहितायामपि 'रामचन्द्रः परब्रह्म जीवेश्वरविलक्षणः। तद्भक्ता ब्राह्मणा ज्ञेयाः शूद्राः क्षुद्रसुरार्चकाः ॥ ६३

संपृष्टकुशलो रामं गुहः प्राञ्जलिरब्रवीत्।
धन्योऽहमद्य मे जन्म नैषादं लोकपावन! ॥६४
बभूव परमानन्दः स्पृष्ट्वा तेऽङ्गं रघूत्तम!।
नैषादराज्यमेतत्ते किङ्करस्य रघूत्तम! ॥६५

**बभूवेति**—एतन्नैषादराज्यं ते तवैव तेन निषादराजस्य सर्वार्पणमिति।६५

त्वदधीनं वसन्नत्र पालयास्मान् रघूद्वह!।
आगच्छ यामो नगरं पावनं कुरु मे गृहम्॥६६
गृहाण फलमूलानि त्वदर्थं सञ्चितानि मे।
अनुगृह्णीष्व भगवन्! दासस्तेऽहं सुरोत्तम! ॥६७
रामस्तमाह सुप्रीतो वचनं शृणु मे सखे!।
न वेक्ष्यामि गृहं ग्रामं नव वर्षाणि पञ्च च॥६८

**राम इति**—न वेक्ष्यामीति सखिकथितस्याप्यस्वीकारेण रामस्य दृढव्रतत्वं ध्वनितम्।६८

दत्तमन्येन नो भुञ्जे फलमूलादि किञ्चन।
राज्यं ममैतत्ते सर्वं त्वं सखा मेऽतिवल्लभः॥६९

**दत्तमिति**—अस्य राज्यस्य भरताय राज्ञा दत्तत्वादत्र भोजनमनुचितमित्यभि-प्रायः।६९

वटक्षीरं समानाय्य जटामुकुटमादरात्।
बबन्ध लक्ष्मणेनाथ सहितो रघुनन्दनः॥७०
जलमात्रं तु सम्प्राश्य सीतया सह राघवः।
आस्तृतं कुशपर्णाद्यैः शयनं लक्ष्मणेन हि॥७१

**जलमात्रमिति**––गङ्गायाः हिमवतः सकाशान्निःसृतत्वादेतज्जलं भरतराज्यान्तर्गतं न किन्तु वन्यमेव। वनराज्यस्य च पित्रा स्वस्मै दत्तत्वादिति जलमात्रप्राशनेऽभिप्रायः।७१

उवास तत्र नगरप्रासादाग्रे यथा पुरा।
सुष्वाप तत्र वैदेह्या पर्यङ्क इव संस्कृते॥७२

**उवासेति**––उवासेत्यनेन तस्य हर्षविषादराहित्यं ध्वनितम्।७२

ततोऽविदूरे परिगृह्य चापं,
सबाणतूणीरधनुः स लक्ष्मणः।
ररक्ष रामं परितो विपश्यन्,
गुहेन सार्धं सशरासनेन॥७३

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे[1] उमामहेश्वरसंवादे
अयोध्याकाण्डे [2]पञ्चमोऽध्यायः।५

⊙

[3]इति श्रीसिद्धि श्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामयोध्याकाण्डे
पञ्चमोऽध्यायः।५

⊙



---

१. 'उमामहेश्वरसंवादे' इत्यंशः रा० व० पुस्तकस्थः। २. पञ्चमसर्गः रा० व० पु०।
३. इति सिद्धिश्रीमदध्यात्मध्वनिप्रकाशिकायां पञ्चमसर्गः। ५. रा० व० पु०।

## अथ षष्ठोऽध्यायः

**श्रीमहादेव उवाच--**

सुप्तं रामं समालोक्य गुहः साश्रु परिप्लुतः।
लक्ष्मणं प्राह विनयाद् भ्रातः ! पश्यसि राघवम् ॥१
शयानं कुशपत्रौघसंस्तरे सीतया सह।
यः शेते स्वर्णपर्यङ्के स्वास्तीर्णे भवनोत्तमे ॥२
कैकेयी रामदुःखस्य कारणं विधिना कृता।
मन्थराबुद्धिमास्थाय कैकेयी पापमाचरत् ॥३
तच्छ्रुत्वा लक्ष्मणः प्राह सखे ! शृणु वचो मम।
कः कस्य हेतुर्दुःखस्य कश्च हेतुः सुखस्य वा ॥४

**तच्छ्रुत्वेति**--को हेतुः अन्यो न कोऽपीत्यर्थः।४

स्वं पूर्वार्जितकर्मैव कारणं सुखदुःखयोः ॥५

कस्तर्हि हेतुस्तत्राह--**स्वपूर्वेति**।५

सुखस्य दुःखस्य न कोऽपि दाता,
परो ददातीति कुबुद्धिरेषा।
अहं करोमीति वृथाभिमानः,
स्वकर्मसूत्रग्रथितो हि लोकः ॥६

एतदेवोपपादयति **सुखस्येति**--सुखं स्वयमपि न तस्य संपादक इत्याह, अहं सुखादिजनकक्रियां करोमीति वृथाभिमानः अस्वतन्त्रत्वादिति भावः। तदेवाह स्वकर्मसूत्रग्रथितः ईश्वरेणेति शेषः। यथा सूत्रयुक्तः काष्ठपुत्तलीं सूत्रचालनेनानेकविधक्रियावतीं करोति एवमीश्वरः कर्मसूत्रचालनेन तथा कारयतीति भावः।६

सुहृन्मित्रार्युदासीनद्वेष्यमध्यस्थबान्धवाः ।
स्वयमेवाऽऽचरन्कर्म तथा तत्र विभाव्यते ॥७

**सुहृदिति**--सुहृन्मित्रे सोपाधिनिरुपाधिभेदाद्भिन्ने एवमरिद्वेष्यौ एते कर्मसुहृत्वादिप्रयोजकं स्वयमेवाचरन् ये सुहृत्त्वादिभाजो भवन्ति एवं तत्र सुखदुःखादिविषये विभाव्यते विज्ञायते।७

सुखं वा यदि वा दुःखं स्वकर्मवशगो नरः।
यद्यद्यथागतं तत्तद् भुक्त्वा स्वस्थमना भवेत्॥८
न मे भोगागमे वाञ्छा न मे भोगविवर्जने।
आगच्छत्वथ मागच्छत्वभोगवशगो भवे॥९

**नेति**--अ, इति निषेधार्थमव्ययं पृथक् पदं न भवे न भवामीत्यर्थः।९

यस्मिन् देशे च काले च यस्माद्वा येन केन वा।
कृतं शुभाशुभं कर्म भोज्यं तत्तत्र नान्यथा॥१०
अलं हर्षविषादाभ्यां शुभाशुभफलोदये।
विधात्रा विहितं यद्यत्तदलङ्घ्यं सुरासुरैः॥ ११
सर्वदा सुखदुःखाभ्यां नरः प्रत्यवरुध्यते।
शरीरं पुण्यपापाभ्यामुत्पन्नं सुखदुःखवत्॥१२
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्।
द्वयमेतद्धि जन्तूनामलङ्घ्यं दिनरात्रिवत्॥१३
सुखमध्ये स्थितं दुःखं दुःखमध्ये स्थितं सुखम्।
द्वयमन्योऽन्यसंयुक्तं प्रोच्यते जलपङ्कवत्॥१४
तस्माद्धैर्येण विद्वांस इष्टानिष्टोपपत्तिषु।
न हृष्यन्ति न मुह्यन्ति सर्वं मायेति भावनात्॥१५

**तस्मादिति**--यस्मात्सुखदुःखयोरेवं व्यवस्था तस्माद्विद्वांस इष्टानिष्टोपपत्तिषु सर्वं मायेति भावनात् धैर्येण न हृष्यन्ति न मुह्यन्ति १५

गुहलक्ष्मणयोरेवं भाषतोर्विमलं नभः।
बभूव रामः सलिलं स्पृष्ट्वा प्रातः समाहितः॥१६

**गुहेति**--।१६

उवाच शीघ्रं सुदृढां नावमानय मे सखे!।
श्रुत्वा रामस्य वचनं निषादाधिपतिर्गुहः॥१७

**उवाचेति**--मे अवतरणायेति शेषः।१७

स्वयमेव दृढां नावमानिनाय सुलक्षणाम्।
स्वामिन्नारुह्यतां नौका सीतया लक्ष्मणेन च॥१८
वाहये ज्ञातिभिः सार्धमहमेव समाहितः।
तथेति राघवः सीतामारोप्य शुभलक्षणाम्॥१९
गुहस्य हस्तावालम्ब्य स्वयं चारोहदच्युतः।
आयुधादीन् समारोप्य लक्ष्मणोऽप्यारुरोह च॥२०
गुहस्तां वाहयामास ज्ञातिभिः सहितः स्वयम्।
गङ्गामध्ये गता गङ्गां प्रार्थयामास जानकी॥२१

**गुह इति**—स्वयं वाहयामासेत्यनेन यद्यपि रामस्तं सखायं मनुते तथापि स्वमत्यनुसारेणाङ्गीकृतदास्यभावेन दास्यरसो व्यक्तः।२१

देवि! गङ्गे! नमस्तुभ्यं निवृत्ता वनवासतः।
रामेण सहिताहं त्वां लक्ष्मणेन च पूजये॥२२
सुरामांसोपहारैश्च नानाबलिभिरादृता।
इत्युक्त्वा परकूलं तौ शनैरुत्तीर्य जग्मतुः॥२३
गुहोऽपि राघवं प्राह गमिष्यामि त्वया सह।
अनुज्ञां देहि राजेन्द्र! नो चेत्प्राणांस्त्यजाम्यहम्॥२४
श्रुत्वा नैषादिवचनं श्रीरामस्तमथाब्रवीत्।
चतुर्दश समाः स्थित्वा दण्डके पुनरप्यहम्॥२५
आयास्याम्युदितं सत्यं नासत्यं रामभाषितम्।
इत्युक्त्वालिङ्ग्य तं भक्तं समाश्वास्य पुनः पुनः॥२६
निवर्तयामास गुहं सोऽपि कृच्छ्राद्ययौ गृहम्।
तत्र मेध्यं मृगं हत्वा पक्त्वा हुत्वा च ते त्रयः॥२७
भुक्त्वा वृक्षतले तत्र सुखमासत तां निशाम्।
ततो रामस्तु वैदेह्या लक्ष्मणेन समन्वितः॥२८

**निवर्तयामासेति**—मेध्यं मृगं हत्वा पक्त्वा हुत्वा भुक्त्वा सुखमासत उपविविशुरितिवाच्यार्थेन नगरादिषु भरतराज्यत्वान्न भुक्तं वने दण्डकारण्ये स्वराज्यत्वाद् भुक्तमिति भावः।२७-२८।

भरद्वाजाश्रमपदं गत्वा बहिरुपस्थितः।
तत्रैकं बटुकं दृष्ट्वा रामः प्राह च हे बटो! ॥२९

रामो दाशरथिः सीतालक्ष्मणाभ्यां समन्वितः।
आस्ते बहिर्वनस्येति ह्युच्यतां मुनिसन्निधौ॥३०

तच्छ्रुत्वा सहसा गत्वा पादयोः पतितो मुनेः।
स्वामिन्! रामः समागत्य वनाद् बहिरवस्थितः॥३१

सभार्यः सानुजः श्रीमानाह मां देवसन्निभः।
भरद्वाजाय मुनये ज्ञापयस्व यथोचितम्॥३२

तच्छ्रुत्वा सहसोत्थाय भरद्वाजो मुनीश्वरः।
गृहीत्वार्घ्यं च पाद्यं च रामसामीप्यमाययौ॥३३

दृष्ट्वा रामं यथान्यायं पूजयित्वा सलक्ष्मणम्।
आह मे पर्णशालां भो राम! राजीवलोचन!॥३४

**दृष्ट्वेति**--राजीवलोचनेति सम्बोधनेन यादृशानन्दस्तव दर्शनमात्रेणाभूत्तादृश-स्तपोज्ञानादिभिर्नेति व्यञ्जितम्।३४

आगच्छ पादरजसा पुनीहि रघुनन्दन!।
इत्युक्त्वोटजमानीय सीतया सह राघवौ॥३५

**आगच्छेति**--पादरजसा पुनीहि। एतेन भरद्वाजस्य रामोपासकत्वं ध्वनितम्।३५

भक्त्या पुनः पूजयित्वा चकारातिथ्यमुत्तमम्।
अद्याहं तपसः पारं गतोऽस्मि तव संगमात्॥३६

**भक्त्येति**--तपसः पारं फलं सर्वतपःफलमेतत् यत्तव दर्शनमिति भावः। एतेन श्रीरामदर्शनार्थमेव भरद्वाजेन तपः कृतमिति ध्वनितम्। भक्त्या पुनः पूजयित्वेत्यनेनादौ क्षीरसागरवासिनारायणमूलप्रकृतिलक्ष्मीआदिनारायणानां पूजनं कृतम्-अनन्तरं नित्यायोध्याविहार्यावेशेन सलक्ष्मणसीतारामयोः पूजनं कृतमिति गम्यते।३६

ज्ञातं राम तवोदन्तं भूतं चागामिकं च यत्।
जानामि त्वां परात्मानं मायया कार्यमानुषम्॥३७

**ज्ञातमिति**--आगामिकं भावि उदन्तं वृत्तान्तं तत्र भूतवृत्तान्तमाह जानामीति। मायया कृपया कार्याय लोकोद्धाराय रावणादिवधार्थाय च मानुषं गृहीतम्, नित्यद्विभुज-श्रीरामावेशं परात्मानम्।३७

यदर्थमवतीर्णोऽसि प्रार्थितो ब्रह्मणा पुरा।
यदर्थं वनवासस्ते यत्करिष्यसि वै पुरः ॥३८
जानामि ज्ञानदृष्ट्याहं जातया त्वदुपासनात्।
इतः परं त्वां किं वक्ष्ये कृतार्थोऽहं रघूत्तम! ॥३९
यत्त्वां पश्यामि काकुत्स्थं पुरुषं प्रकृतेः परम्।
रामस्तमभिवाद्याह सीतालक्ष्मणसंयुतः ॥४०

**जानामीति**—यदर्थमवतीर्णोऽसि रामावेशं गृहीत्वेति शेषः, तत्सर्वं जानामीत्यर्थः। किञ्च जानामीति सार्द्धमेकान्वयि, हे रघूत्तम! श्रीरामावेशयुतनारायण! त्वदुपासनात् जातया षष्ठशरीरीयविज्ञानदृष्ट्याऽहं इतः रूपात् निजोपास्यरामावेशं ज्ञात्वा भक्त्या परम् आवेशतदाधाराभ्यां भिन्नं त्वां तदावेशितं प्रकृतेः परं काकुत्स्थं ककुदि सर्वश्रेष्ठे नित्यसाकेते तिष्ठतीति ककुत्स्थः स एव काकुत्स्थः स चासौ पुरुषो नित्यद्विभुजस्तं श्रीरामं पश्यामि, अतः कृतार्थोऽहं, अतः किं वक्ष्ये रामस्यानिर्वचनीयत्वात् किं वक्तव्यमित्यर्थः। अनेन नित्यरासे भरद्वाजः सखीरूपवासनयाऽऽस्ते इति ध्वन्यते।३९-४०।

अनुग्राह्यास्त्वया ब्रह्मन्! वयं क्षत्रियबान्धवाः।
इति सम्भाष्य तेऽन्योऽन्यमुषित्वा मुनिसन्निधौ ॥४१

**अनुग्राह्या इति**—हे ब्रह्मन्! वयम् अनुग्राह्याः अनु पश्चात् ग्राह्याः नेदानीमित्यर्थः। यतः क्षत्रियबान्धवाः क्षत्रं शौर्यम् अस्ति येषां ते क्षत्रियाः शौर्यवन्तः बान्धवाः सर्वलोकहितकरास्ते च ते चेति कर्मधारयः लोकहितार्थं च तं हत्वा पश्चाद् गमिष्यामीति तदाऽतिथ्यादि-सत्काराय ग्राह्या इति फलितोऽर्थः। यद्वा अनु पश्चात् सखीरूपग्रहणानन्तरं ग्राह्या वयं कीदृशाः 'ब्राह्मणः क्षत्रियमुपास्तेऽधस्तादि'ति श्रुत्या भवादृशैः ब्रह्मविद्भिरुपास्यः तेन ब्रह्मविज्ञानोत्तरमेव सखीरूपप्राप्तिरिति व्यज्यते। सखीरूपं प्राप्तानां भक्तानां स्नेहेन बध्यन्ते बन्धवस्ते च ते चेति कर्मधारयः। तेन वाङ्मनसगोचरातीतनित्यरासमण्डलं सखीरूपेणैव गम्यमिति यद्वा हे ब्रह्मन्! ब्रह्मज्ञ! यतः वयं क्षत्रियबान्धवाः 'ब्राह्मणः क्षत्रियमुपास्तेऽधस्तादिति' श्रुत्या सखीभावरूपेण त्वदुपास्यरामस्य बान्धवाः दशरथपुत्रत्वादतो वयमनुग्राह्याः। दशरथपुत्रत्वम् आवेशेऽपि इत्यभिप्रायान्नारायणस्येयमुक्तिः। यथा श्रुतार्थस्तु परोक्षवादो[1] वेदोऽयमिति भागवतोक्तात् शिवतात्पर्याच्च तुच्छतरः। ते श्रीरामादयः अन्योऽन्यं प्रागुक्तं सम्भाष्य ततो रामो मुनिसन्निधावुषित्वा।४१

---

१. वादोऽयम् इति मदीयपुस्तके।

प्रातरुत्थाय यमुनामुत्तीर्य मुनिदारकैः।
कृताप्लवेन मुनिना दृष्टमार्गेण राघवः॥४२

**प्रातरिति**—त्रिवेण्यां कृताप्लवेन कृतस्नानेन मुनिना दृष्टमार्गेण दर्शितमार्गेण राघवो मार्गदर्शकैर्मुनिदारकैः सह यमुनामुत्तीर्य, कृताप्लवेन मुनिना दर्शितमार्गेणेत्यनेन त्रिवेण्यां सर्वे रामादयः पूर्वस्नाताः इति व्यक्तम्। आनन्दमयशरीरत्वान्मुण्डनानुक्तिः।४२

प्रययौ चित्रकूटाद्रिं वाल्मीकेर्यत्र चाश्रमः।
गत्वा रामोऽथ वाल्मीकेराश्रमं ऋषिसंकुलम्॥४३

**प्रययाविति**—यत्र वाल्मीकेराश्रमस्तं चित्रकूटाद्रिं चित्रकूटकामदगिरेर्द्वादशक्रोश-पर्यन्तं चित्रकूटम् एवेति बोध्यम्।४३

नानामृगद्विजाकीर्णं नित्यपुष्पफलाकुलम्।
तत्र दृष्ट्वा समासीनं वाल्मीकिं मुनिसत्तमम्॥४४
ननाम शिरसा रामो लक्ष्मणेन च सीतया।
दृष्ट्वा रामं रमानाथं वाल्मीकिर्लोकसुन्दरम्॥४५
जानकीलक्ष्मणोपेतं जटामुकुटमण्डितम्।
कन्दर्पसदृशाकारं कमनीयाम्बुजेक्षणम्॥४६
दृष्ट्वैव सहसोत्तस्थौ विस्मयानिमिषेक्षणः।
आलिङ्ग्य परमानन्दं रामं हर्षाश्रुलोचनः॥४७

**नानामृगेति**—रमानाथं नारायणम् उक्तविशेषणविशिष्टं रामं तद्रूपं वाङ्मनस-गोचरातीतं दृष्ट्वा विस्मयेन श्रीरामस्तु साकेतविहारमपहाय क्वापि न गच्छति अत्र कुतः कथमागत एवं रूपेण अनिमिषे ईक्षणे नेत्रे यस्य सः आसीदिति शेषः। प्रेमपारवश्येन शरीरविस्मृतिरिति भावः। समासीनमित्यनेन श्रीरामं श्रुत्वा तदागमनानन्तरं च दृष्ट्वा निर्वर्ण्य रमानाथं नारायणं ज्ञात्वेत्यर्थः सहसोत्तस्थौ, हर्षजाश्रुभिः पूर्णे लोचने यस्य सः श्रीराममेवातिसुन्दरमेतेन तद्रूपं दृष्ट्वा किरातादयज्ञानिनां तिरश्चाञ्च प्रेमाऽजायत इति व्यज्यते। परमानन्दं साकारत्वेऽपि आनन्दभिन्नपदार्थशून्यशरीरम्।४४-४७।

पूजयित्वा जगत्पूज्यं भक्त्यार्घ्यादिभिरादृतः।
फलमूलैः स मधुरैर्भोजयित्वा च लालितः॥४८
राघवः प्राञ्जलिः प्राह वाल्मीकिं विनयान्वितः।
पितुराज्ञां पुरस्कृत्य दण्डकानागता वयम्॥४९

भवन्तो यदि जानन्ति किं वक्ष्यामोऽत्र कारणम्।
यत्र मे सुखवासाय भवेत्स्थानं वदस्व तत्॥५०

**भवन्त इति**—यदि जानन्ति अतः किं वक्ष्यामः? त्वं तु सर्वज्ञ इति भावः।५०

सीतया सहितः कालं किञ्चित्तत्र नयाम्यहम्।
इत्युक्तो राघवेणासौ मुनिः सस्मितमब्रवीत्॥५१

**सीतयेति**—सस्मितमिति-स्वयं सर्वान्तर्यामितया सर्वज्ञोऽज्ञ इव मां त्रिकालज्ञं स्थापयित्वा पृच्छतीति भावः।५१

त्वमेव सर्वलोकानां निवासस्थानमुत्तमम्।
तवापि सर्वभूतानि निवाससदनानि हि॥५२

**त्वमेवेति**—सर्वाधारत्वादिति भावः। तवापीति सर्वव्यापकत्वादिति भावः। तथा च श्रुतिः 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' ॥ इति।५२

एवं साधारणं स्थानमुक्तं ते रघुनन्दन!।
सीतया सहितस्येति विशेषं पृच्छतस्तव॥५३
तद् वक्ष्यामि रघुश्रेष्ठ! यत्ते नियतमन्दिरम्।
शान्तानां समदृष्टीनामद्वेष्टॄणां च जन्तुषु॥५४

**तद्वक्ष्यामीति**—जन्तुषु अद्वेष्टॄणां द्वेषकारणे सत्यपि द्वेषरहितानाम्। एतेन गृहस्थ-भक्ताः सूचिता।५४

त्वामेव भजतां नित्यं हृदयं तेऽधिमन्दिरम्।
धर्माधर्मान्परित्यज्य त्वामेव भजतोऽनिशम्॥५५
सीतया सह ते राम! तस्य हृत्सुखमन्दिरम्॥५६

**त्वामेवेति**—त्वामेव भजतामेतेन त्वद्भजनं विना शमादिकं व्यर्थमेवेति ध्वनितम्। एष ध्वनिः सर्वत्रानुसन्धेयः। एतेन वानप्रस्थाश्रमस्थाः भक्ताः सूचिताः। धर्माधर्मान्-विहितनिषिद्धसकलकर्माणि त्यक्त्वा यस्त्वामेव भजेत तस्य हृदयं हे राम! सीतया सह वस्तुं तव सुखं मन्दिरं सुखजनकं गृहम् एतेन संन्यासिभक्ताः सूचिताः।५५-५६।

त्वन्मन्त्रजापको यस्तु त्वामेव शरणं गतः।
निर्द्वन्द्वो निःस्पृहस्तस्य हृदयं ते सुमन्दिरम्॥५७

निरहङ्कारिणः शान्ता ये रागद्वेषवर्जिताः।
समलोष्टाश्मकनकास्तेषां ते हृदयं गृहम्॥५८

**त्वन्मन्त्रेति**—त्वामेव शरणं गताः प्रधानाः त्रिदण्डिनः श्रीवैष्णवाः सूचिताः। **निरहङ्कारिणः** ब्रह्माहमस्मीत्यहङ्काररहिताः परमहंसभक्ताः सूचिताः।५७-५८।

त्वयि दत्तमनोबुद्धिर्यः सन्तुष्टः सदा भवेत्।
त्वयि सन्त्यक्तकर्मा यस्तन्मनस्ते शुभं गृहम्॥५९
यो न द्वेष्ट्यप्रियं प्राप्य प्रियं प्राप्य न हृष्यति।
सर्वं मायेति निश्चित्य त्वां भजेत्तन्मनो गृहम्॥६०

**त्वयीति**—त्वयि सन्त्यक्तकर्मा त्वदर्पिताखिलः 'दारान् सुतान् गृहान् प्राणान् यत्तदस्मै निवेदनम्' इति भागवतोक्तेः। एतेन शुद्धाद्वैतमतावलम्बिनः समर्पणकर्तारः सूचिताः। यो नेति—प्रियाप्रियं सुखदुःखं सर्वं माया मायाकार्यम् अस्वतन्त्रम् इति निश्चित्य त्वां स्वतन्त्रं भजेत् आत्मानमपि अस्वतन्त्रं त्वां सेवेदित्यर्थः। एतेन मायाजीवौ भगवत्परतन्त्रौ भगवान् स्वतन्त्र इति भेदवादिनो वैष्णवाः सूचिताः।५९-६०।

षड्भावादिविकारान् यो देहे पश्यति नात्मनि।
क्षुत्तृट्सुखं भयं दुःखं प्राणबुद्ध्योर्निरीक्षते॥
संसारधर्मैर्निर्मुक्तस्तस्य ते मानसं गृहम्॥६१

**षडिति**—भावः जन्म तदादीन् सत्तावृद्धिविपरिणामक्षयविनाशरूपान्विकारान् देहे पश्यति नात्मनि तं नित्यं जन्मादिरहितं अविनाशिनं पुष्करपलाशवद् ब्रह्म निर्लेपं पश्यतीत्यर्थः। क्षुत्तृट्भयं प्राणस्य सुखादिबुद्धेरिति विवेकः। एतेन 'सांख्यादिमतावलम्बिनः' सूचिताः।६१

पश्यन्ति ये सर्वगुहाशयस्थं,
त्वां चिद्घनं सत्यमनन्तमेकम्।
अलेपकं सर्वगतं वरेण्यं,
तेषां हृदब्जे सह सीतया वस॥६२

**पश्यन्तीति**—सर्वचेतनाचेतनाः गुहाः देहा ता एव आशयाः स्थानं तत्रस्थं चिद्विग्रहमित्यर्थः। तत्रापि सत्तामात्रम्। अनन्तमविनाशिनं सर्वगतमविनाशिनं सर्वगतमपि अलेपकं निर्लेपं चिद्घनं चैतन्यधनम् आनखशिखं चैतन्यमूर्तिमित्यर्थः वरेण्यं प्रेयसीभावेन वरीतुं योग्यं ईदृशं त्वां ये पश्यन्ति तेषाम् एतेन 'राधावल्लभीयमतावलम्बिनो' भक्ताः सूचिताः। अत्र वसेत्यनेन इदमेव मुख्यस्थानमिति व्यज्यते।६२

निरन्तराभ्यासदृढीकृतात्मनां,
त्वत्पादसेवापरिनिष्ठितानाम् ।
त्वन्नामकीर्त्या हृतकल्मषाणां,
सीतासमेतस्य गृहं हृदब्जे ॥६३

**निरन्तरेति**—निरन्तरं सर्वत्र भगवद्भावनाभ्यासेन दृढीकृतः तदेकविषयीकृतः आत्मा मनो येषां त्वत्पादसेवायां परिनिष्ठितानां तत्पराणाम् एतेन 'भेदाभेदवादिनो वैष्णवाः' सूचिताः।६३

राम ! त्वन्नाममहिमा वर्ण्यते केन वा कथम् ।
यत्प्रभावादहं राम ! ब्रह्मर्षित्वमवाप्तवान् ॥६४

**रामेति**—एतेन रामनाम्नो मनोवचनागोचरत्वं ध्वनितम् । यत्प्रभावादेतेन रामनामप्रभावस्यातर्क्यत्वम् ।६४

अहं पुरा किरातेषु किरातैः सह वर्धितः ।
जन्ममात्रद्विजत्वं मे शूद्राचाररतः सदा ॥६५
शूद्रायां बहवः पुत्रा उत्पन्ना मेऽजितात्मनः ।
ततश्चौरैश्च संगम्य चौरोऽहमभवं पुरा ॥६६
धनुर्बाणधरो नित्यं जीवानामन्तको यमः ।
एकदा मुनयः सप्त दृष्टा महति कानने ॥६७
साक्षान्मया प्रकाशन्तो ज्वलनार्कसमप्रभाः ।
तानन्वधावं लोभेन तेषां सर्वपरिच्छदान् ॥६८
ग्रहीतुकामस्तत्राहं तिष्ठ तिष्ठेति चाब्रवम् ।
दृष्ट्वा मां मुनयोऽपृच्छन् किमायासि द्विजाधम ! ॥६९
अहं तानब्रुवं किञ्चिदादातुं मुनिसत्तमाः ! ।
पुत्रदारादयः सन्ति बहवो मे बुभुक्षिताः ॥७०
तेषां संरक्षणार्थाय चरामि गिरिकानने ।
ततो मामूचुरव्यग्राः पृच्छ गत्वा कुटुम्बकम् ॥७१
यो यो मया प्रतिदिनं क्रियते पापसञ्चयः ।
यूयं तद्भागिनः किं वा नेति वेति पृथक् पृथक् ॥७२

वयं स्थास्यामहे तावदागमिष्यसि निश्चयः।
तथेत्युक्त्वा गृहं गत्वा मुनिभिर्यदुदीरितम्॥७३
अपृच्छं पुत्रदारादींस्तैरुक्तोऽहं रघूत्तम!।
पापं तवैव तत्सर्वं वयं तु फलभागिनः॥७४
तच्छ्रुत्वा जातनिर्वेदो विचार्य पुनरागमम्।
मुनयो यत्र तिष्ठन्ति करुणापूर्णमानसाः॥७५
मुनीनां दर्शनादेव शुद्धान्तःकरणोऽभवम्।
धनुरादीन् परित्यज्य दण्डवत्पतितोऽस्म्यहम्॥७६
रक्षध्वं मां मुनिश्रेष्ठाः! गच्छन्तं निरयार्णवम्।
इत्यग्रे पतितं दृष्ट्वा मामूचुर्मुनिसत्तमाः॥७७
उत्तिष्ठोत्तिष्ठ भद्रं ते सफलः सत्समागमः।
उपदेक्ष्यामहे तुभ्यं किञ्चित्तेनैव मोक्ष्यसे।
परस्परं समालोच्य दुर्वृत्तोऽयं द्विजाधमः॥७८
उपेक्ष्य एव सद्वृत्तैस्तथापि शरणं गतः।
रक्षणीयः प्रयत्नेन मोक्षमार्गोपदेशतः॥७९
इत्युक्त्वा राम! ते नाम व्यत्यस्ताक्षररूपकम्।
एकाग्रमनसात्रैव मरेति जप सर्वदा॥८०

**इत्युक्त्वेति**—व्यत्यस्ते विपरीतपौर्वापर्ये अक्षरे यस्मिन् तादृशं रूपं यस्य तत्। ते नाम तत्स्वरूपं मरेति जप तस्यानधिकारित्वात् प्रतिलोमेनोपदिष्टवन्त इत्यर्थः।८०

आगच्छामः पुनर्यावत्तावदुक्तं सदा जप।
इत्युक्त्वा प्रययुः सर्वे मुनयो दिव्यदर्शनाः॥८१

**आगच्छाम इति**—आगच्छामः पुनरित्यनेन तेषां कृपातिशयः सूचितः।८१

अहं यथोपदिष्टं तैस्तथाकरवमञ्जसा।
जपन्नेकाग्रमनसा बाह्यं विस्मृतवानहम्॥८२
एवं बहुतिथे काले गते निश्चलरूपिणः।
सर्वसङ्गविहीनस्य वल्मीकोऽभून्ममोपरि॥८३

**एवमिति**—सर्वत्र रामोऽस्तीति नामार्थविचारेण पदन्यासाभावान्निश्चलाङ्गस्येत्यर्थः।८३

ततो युगसहस्रान्ते ऋषयः पुनरागमन्।
मामूचुर्निष्क्रमस्वेति तच्छ्रुत्वा तूर्णमुत्थितः॥८४
वल्मीकान्निर्गतश्चाहं नीहारादिव भास्करः।
मामप्याहुर्मुनिगणा वाल्मीकिस्त्वं मुनीश्वर! ॥८५
वल्मीकात्सम्भवो यस्माद् द्वितीयं जन्म तेऽभवत्।
इत्युक्त्वा ते ययुर्दिव्यगतिं रघुकुलोत्तम! ॥८६

**वल्मीकादिति**—त्वदात्मनि त्वच्छरीरे च रामोऽस्तीति पुनस्तदुपदेशेन वल्मीकान्निर्गतः निःसृतश्चाहमित्यर्थः। नीहारादिव भास्कर इत्यनेन रामनाम्नोऽमृतादप्यधिकत्वेन 'व्यतिरेकालङ्कारो' व्यक्तः।८५-८६।

अहं ते राम! नाम्नश्च प्रभावादीदृशोऽभवम्।
अद्य साक्षात्प्रपश्यामि ससीतं लक्ष्मणेन च॥८७

**अहमिति**—हे राम! तव नाम्नो मरेति व्यत्यस्तप्रभावादीदृशः सूर्यतुल्यप्रकाशः कालजेताऽभवम्। अद्य साक्षात् लक्ष्मणेन सहितं लक्ष्मणं त्वां च पश्यामि एतेन य आनुपूर्वीविशिष्टं तव नाम जपति तस्य किं फलं भवतीति न जानामीति ध्वनितम्।८७

रामं राजीवपत्राक्षं त्वां मुक्तो नात्र संशयः।
आगच्छ राम! भद्रं ते स्थलं वै दर्शयाम्यहम्॥८८

**राममिति**—पूर्वं साधूनां हृदयस्य तद्वासस्थलत्वेन निवेदितेऽप्यत्र पुनः स्थलं वै दर्शयाम्यहमित्युक्त्या साधूनां हृदयं यत्सेवया त्वन्निवासयोग्यं भवतीति तत्स्थलं दर्शयिष्यामीति ध्वनितं। 'यावता चित्रकूटस्य नरः शृङ्गाण्यवेक्षते। कल्याणानि समाधत्ते न पापे कुरुते मनः।' इति वाल्मीकीये श्रीरामोक्तेः।८८

एवमुक्त्वा मुनिः श्रीमांल्लक्ष्मणेन समन्वितः।
शिष्यैः परिवृतो गत्वा मध्ये पर्वतगङ्गयोः॥८९
तत्र शालां सुविस्तीर्णां कारयामास वासभूः।
प्राक्पश्चिमं दक्षिणोदक् शोभनं मन्दिरद्वयम्॥९०

**तत्रेति**—तत्र ऋषिदर्शितस्थाने शालां मन्दिरद्वयञ्च वासभूः सकललोकनिवासस्थानमिति रामविशेषणं सर्ववासस्थानस्यापि तस्य वासनिर्माणोक्त्याऽद्भुतरसो व्यक्तः।९०

जानक्या सहितो रामो लक्ष्मणेन समन्वितः।
तत्र ते देवसदृशा ह्यवसन् भवनोत्तमे॥९१

वाल्मीकिना तत्र सुपूजितोऽयं,
रामः ससीतः सह लक्ष्मणेन।
देवैर्मुनीन्द्रैः सहितो मुदाऽऽस्ते,
स्वर्गे यथा देवपतिः स शच्या॥९२

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डे षष्ठोऽध्यायः।६



**वाल्मीकिनेति**—मुदाऽऽस्ते-एतेन अयोध्यावासादप्यधिकसुखं मनुते इति ध्वनितम्। तेन तस्य चित्रकूटादधिकं प्रियं नास्तीति ध्वनितम्। तेन च तस्य तत्र नित्यविहारो ध्वनितः। उक्तं च वाल्मीकीये-'दर्शने चित्रकूटस्य मन्दाकिन्याश्च शोभने। अधिकं पुरवासाच्च मन्ये तव च दर्शनात्'।९२

[1]इति सिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामयोध्याकाण्डे
षष्ठोऽध्यायः।६



---

१. इति सिद्धि० श्रीमदध्यात्मरामायणे ध्वनिप्रकाशिकायां षष्ठोऽध्यायः। इत्यस्ति रा० व० पु०।

## अथ सप्तमोऽध्यायः

**श्रीमहादेव उवाच--**

सुमन्त्रोऽपि तदायोध्यां दिनान्ते प्रविवेश ह।
वस्त्रेण मुखमाच्छाद्य बाष्पाकुलितलोचनः ॥१

**सुमन्त्रोऽपीति**—वस्त्रेण मुखमाच्छाद्येत्यनेन श्रीरामं विहायागतोऽहं कथं स्वमुखं दर्शयामीति लज्जातिशयः सूच्यते।१

बहिरेव रथं स्थाप्य राजानं द्रष्टुमाययौ।
जयशब्देन राजानं स्तुत्वा तं प्रणनाम ह॥२
ततो राजा नमन्तं तं सुमन्त्रं विह्वलोऽब्रवीत्।
सुमन्त्र! रामः कुत्रास्ते सीतया लक्ष्मणेन च॥३
कुत्र त्यक्तस्त्वया रामः किं मां पापिनमब्रवीत्।
सीता वा लक्ष्मणो वापि निर्दयं मां किमब्रवीत्॥४
हा राम! हा गुणनिधे! हा सीते! प्रियवादिनि!।
दुःखार्णवे निमग्नं मां म्रियमाणं न पश्यसि॥५
विलप्यैवं चिरं राजा विमग्नो दुःखसागरे।
एवं मन्त्री रुदन्तं तं प्राञ्जलिर्वाक्यमब्रवीत्॥६
रामः सीता च सौमित्रिर्मया नीता रथेन ते।
शृङ्गवेरपुराभ्याशे गङ्गाकूले व्यवस्थिताः॥७
गुहेन किञ्चिदानीतं फलमूलादिकं च यत्।
स्पृष्ट्वा हस्तेन सम्प्रीत्या नाग्रहीद्विससर्ज तत्॥८

**गुहेनेति**—प्रीत्या गुहप्रीत्या हस्तेन स्पृष्ट्वा नाग्रहीत्, संभावितकैकेयीपुत्रराज्ये आहारं न करिष्यामीति प्रतिज्ञावशादिति भावः।८

वटक्षीरं समानाय्य गुहेन रघुनन्दनः।
जटामुकुटमाबद्ध्य मामाह रघुनन्दनः॥९

सुमन्त्र ! ब्रूहि राजानं शोकस्तेऽस्तु न मत्कृते।
साकेतादधिकं सौख्यं विपिने नो भविष्यति॥१०

**सुमन्त्र इति**—राजानं ब्रूहि वक्ष्यमाणं वदेति शेषः। अधिकं सौख्यं त्वत्कृतशुभानुचिन्तनं शोकत्याग एव भवतीति सर्वथा शोकस्त्याज्य इति भावः।१०

मातुर्मे वन्दनं ब्रूहि शोकं त्यजतु मत्कृते।
आश्वासयतु राजानं वृद्धं शोकपरिप्लुतम्॥११
सीता चाश्रुपरीताक्षी मामाह नृपसत्तम!।
दुःखगद्गदया वाचा रामं किञ्चिदवेक्षती॥१२
साष्टाङ्गप्रणिपातं मे ब्रूहि श्वश्र्वोःपदाम्बुजे।
इति प्ररुदती सीता गता किञ्चिदवाङ्मुखी॥१३

**साष्टाङ्गेति**—श्वश्र्वोः श्वश्रूश्वशुरयोः आर्षस्त्र्येकशेषः। गता चलितेत्यर्थः।१३

ततस्तेऽश्रुपरीताक्षा नावमारुरुहुस्तदा।
यावद् गङ्गां समुत्तीर्य गतास्तावदहं स्थितः॥१४

**तत इति**—ते श्रीरामादयः। तावदहं स्थितः उदक्कूले इति शेषः।१४

ततो दुःखेन महता पुनरेवाहमागतः।
ततो रुदन्ती कौशल्या राजानमिदमब्रवीत्॥१५
कैकेय्यै प्रियभार्यायै प्रसन्नो दत्तवान् वरम्।
त्वं राज्यं देहि तस्यैव मत्पुत्रः किं विवासितः॥१६

**कैकेय्या इति**—तस्यैव तत्पुत्रस्यैव।१६

कृत्वा त्वमेव तत्सर्वमिदानीं किं नु रोदिषि।
कौशल्यावचनं श्रुत्वा क्षते स्पृष्ट इवाग्निना॥१७
पुनः शोकाश्रुपूर्णाक्षः कौशल्यामिदमब्रवीत्।
दुःखेन म्रियमाणं मां किं पुनर्दुःखयस्यलम्॥१८
इदानीमेव मे प्राणा उत्क्रमिष्यन्ति निश्चयः।
शप्तोऽहं बाल्यभावेन केनचिन्मुनिना पुरा॥१९
पुराहं यौवने दृप्तश्चापबाणधरो निशि।
अचरं मृगयासक्तो नद्यास्तीरे महावने॥२०

तत्रार्धरात्रसमये मुनिः कश्चित्तृषार्दितः।
पिपासार्दितयोः पित्रोर्जलमानेतुमुद्यतः ॥२१
अपूरयज्जले कुम्भं तदा शब्दोऽभवन्महान्।
गजः पिबवति पानीयमिति मत्वा महानिशि।
बाणं धनुषि सन्धाय शब्दवेधिनमक्षिपम् ॥२२
हा हतोऽस्मीति तत्राभूच्छब्दो मानुषसूचकः।
कस्यापि न कृतो दोषो मया केन हतो विधे! ॥२३

हा हत इति—केन हतः अहमिति शेषः।२३

प्रतीक्षते मां माता च पिता च जलकाङ्क्षया।
तच्छ्रुत्वा भयसन्त्रस्तस्ततोऽहं पौरुषं वचः ॥२४
शनैर्गत्वाथ तत्पार्श्वं स्वामिन्! दशरथोऽस्म्यहम्।
अजानता मया विद्धस्त्रातुमर्हसि मां मुने! ॥२५
इत्युक्त्वा पादयोस्तस्य पतितो गद्गदाक्षरः।
तदा मामाह स मुनिर्मा भैषीर्नृपसत्तम! ॥२६
ब्रह्महत्या स्पृशेन्न त्वां वैश्योऽहं तपसि स्थितः।
पितरौ मां प्रतीक्षेते क्षुत्तृड्भ्यां परिपीडितौ ॥२७
तयोस्त्वमुदकं देहि शीघ्रमेवाविचारयन्।
न चेत्त्वां भस्मसात्कुर्यात्पिता मे यदि कुप्यति ॥२८
जलं दत्त्वा तु तौ नत्वा कृतं सर्वं निवेदय।
शल्यमुद्धर मे देहात्प्राणांस्त्यक्ष्यामि पीडितः ॥२९
इत्युक्तो मुनिना शीघ्रं बाणमुत्पाट्य देहतः।
सजलं कलशं धृत्वा गतोऽहं यत्र दम्पती ॥३०
अतिवृद्धावन्धदृशौ क्षुत्पिपासार्दितौ निशि।
नायाति सलिलं [1]गृह्य पुत्रः किं वात्र कारणम् ॥३१
अनन्यगतिकौ वृद्धौ शोच्यौ तृट्परिपीडितौ।
आवामुपेक्षते किं वा भक्तिमानावयोः सुतः ॥३२

---

१. गृह्येति आर्षः प्रयोगः।

इति चिन्ताव्याकुलौ तौ मत्पादन्यासजं ध्वनिम्।
श्रुत्वा प्राह पिता पुत्र! किं विलम्बः कृतस्त्वया॥३३
देह्यावयोः सुपानीयं पिब त्वमपि पुत्रक!।
इत्येवं लपतोर्भीत्या सकाशमगमं शनैः॥३४
पादयोः प्रणिपत्याहमब्रवं विनयान्वितः।
नाहं पुत्रस्तवयोध्याया राजा दशरथोऽस्म्यहम्॥३५
पापोऽहं मृगयासक्तो रात्रौ मृगविहिंसकः।
जलावताराद् दूरेऽहं स्थित्वा जलगतं ध्वनिम्॥३६
श्रुत्वाहं शब्दवेधित्वादेकं बाणमथात्यजम्।
हतोऽस्मीति ध्वनिं श्रुत्वा भयात्तत्राहमागतः॥३७
जटा विकीर्य पतितं दृष्ट्वाऽहं मुनिदारकम्।
भीतो गृहीत्वा तत्पादौ रक्ष रक्षेति चाब्रवम्॥३८
मा भैषीरिति मां प्राह ब्रह्महत्याभयं न ते।
मत्पित्रोःसलिलं दत्त्वा नत्वा प्रार्थय जीवितम्॥३९
इत्युक्तो मुनिना तेन ह्यागतो मुनिहिंसकः।
रक्षेतां मां दयायुक्तौ युवां हि शरणागतम्॥४०
इति श्रुत्वा तु दुःखार्तौ विलप्य बहु शोच्य[1] तम्।
पतितौ नौ सुतो यत्र नय तत्राविलम्बयन्॥४१
ततो नीतौ सुतो यत्र मया तौ वृद्धदम्पती।
स्पृष्ट्वा सुतं तौ हस्ताभ्यां बहुशोऽथ विलेपतुः॥४२
हाहेति क्रन्दमानौ तौ पुत्र! पुत्रेत्यवोचताम्।
जलं देहीति पुत्रेति किमर्थं न ददास्यलम्॥४३
ततो मामूचतुः शीघ्रं चितिं रचय भूपते!।
मया तदैव रचिता चितिस्तत्र निवेशिताः।
त्रयस्तत्राग्निरुत्सृष्टो दग्धास्ते त्रिदिवं ययुः॥४४
तत्र वृद्धःपिता प्राह त्वमप्येवं भविष्यसि।
पुत्रशोकेन मरणं प्राप्स्यसे वचनान्मम॥४५

---

१. शोच्येति आर्षः प्रयोगः।

स इदानीं मम प्राप्तः शापकालोऽनिवारितः ।
इत्युक्त्वा विललापाथ राजा शोकसमाकुलः ॥४६

हा राम ! पुत्र ! हा सीते ! हा लक्ष्मण ! गुणाकर ! ।
त्वद्वियोगादहं प्राप्तो मृत्युं कैकेयिसम्भवम् ॥४७

वदन्नेवं दशरथः प्राणांस्त्यक्त्वा दिवं गतः ।
कौशल्या च सुमित्रा च तथान्या राजयोषितः ॥४८

**वदन्नेवमिति**—दिवं दीव्यन्तीं प्रकाशमानां ब्रह्मरूपामयोध्यातो गुप्तायोध्यां गत इत्यर्थः । 'अयोध्या च परब्रह्म सरयूः सगुणः पुमान् ।' इति स्मृतेः, एतेन दशरथस्तु नित्यमुक्त एव तेन सह कश्यपोऽपि मुक्तोऽभूदिति व्यक्तम् । तथा च श्रीवाल्मीकीये श्रीरामवचनं 'स तीर्णो मानुषं देहं परित्यज्य पिता हि नः । दैवीमृद्धिमनुप्राप्तो ब्रह्मलोकविहारिणीम् ॥ इति । विपरीतं यदीयं नाम जपन् वाल्मीकिर्ब्रह्मर्षिरभूत् । किञ्च 'दैवात् शूकरशावकेन निहतो म्लेच्छो हतो जर्जरो, हा रामेण हतोऽस्मि भूमिपतितो जल्पंस्तनुंस्त्यक्तवान् । तीर्णो गोपदवद् भवार्णवमहो ! नाम्नः प्रभावात् पुनः, किं चित्रं यदि रामनामरसिकास्ते यान्ति रामास्पदम् ॥' इत्यादि प्रामाण्यात् यथाकथञ्चिदपि रामेति वदन् मुक्तिं प्राप्नोति । श्रीदशरथः प्रेमाकुलतया रामेति जपन् तमेव चिन्तयन् साकेतलोकं गतवान् इति किं चित्रमिति भावः । तेन दशरथस्य स्वर्गप्राप्तिं संभावयन्तो हास्यास्पदमिति ।४८

चुक्रुशुश्च विलेपुश्च उरस्ताडनपूर्वकम् ।
वसिष्ठः प्रययौ तत्र प्रातर्मन्त्रिभिरावृतः ॥४९

**चुक्रुशुरिति**—चुक्रुशुरित्यादि वृद्धो राजेति यावत् श्लोकाः स्पष्टार्थाः ।४९

तैलद्रोण्यां दशरथं क्षिप्त्वा दूतानथाब्रवीत् ।
गच्छत त्वरितं साश्वा युधाजिन्नगरं प्रति ॥५०

तत्रास्ते भरतः श्रीमाञ्च्छत्रुघ्नसहितः प्रभुः ।
उच्यतां भरतः शीघ्रमागच्छेति ममाज्ञया ॥५१

अयोध्यां प्रति राजानं कैकेयीं चापि पश्यतु ।
इत्युक्तास्त्वरितं दूता गत्वा भरतमातुलम् ॥५२

युधाजितं प्रणम्योचुर्भरतं सानुजं प्रति ।
वसिष्ठस्त्वब्रवीद्राजन् ! भरतः सानुजः प्रभुः ॥५३

शीघ्रमागच्छतु पुरीमयोध्यामविचारयन्।
इत्याज्ञप्तोऽथ भरतस्त्वरितं भयविह्वलः ।।५४
आययौ गुरुणादिष्टः सह दूतैस्तु सानुजः।
राज्ञो वा राघवस्यापि दुःखं किञ्चिदुपस्थितम् ।।५५
इति चिन्तापरो मार्गे चिन्तयन्नगरं ययौ।
नगरं भ्रष्टलक्ष्मीकं जनसम्बाधवर्जितम् ।।५६
उत्सवैश्च परित्यक्तं दृष्ट्वा चिन्तापरोऽभवत्।
प्रविश्य राजभवनं राजलक्ष्मीविवर्जितम् ।।५७
अपश्यत्कैकेयीं तत्र एकामेवासने स्थिताम्।
ननाम शिरसा पादौ मातुर्भक्तिसमन्वितः ।।५८
आगतं भरतं दृष्ट्वा कैकेयी प्रेमसम्भ्रमात्।
उत्थायालिङ्ग्य रभसा स्वाङ्कमारोप्य संस्थिता ।।५९
मूर्ध्न्यवघ्राय पप्रच्छ कुशलं स्वकुलस्य सा।
पिता मे कुशली भ्राता माता च शुभलक्षणा ।।६०
दिष्ट्या त्वमद्य कुशली मया दृष्टोऽसि पुत्रक!।
इति पृष्टः स भरतो मात्रा चिन्ताकुलेन्द्रियः ।।६१
दूयमानेन मनसा मातरं समपृच्छत।
मातः! पिता मे कुत्रास्ते एका त्वमिह संस्थिता ।।६२
त्वया विना न मे तातः कदाचिद्रहसि स्थितः।
इदानीं दृश्यते नैव कुत्र तिष्ठति मे वद ।।६३
अदृष्ट्वा पितरं मेऽद्य भयं दुःखं च जायते।
अथाह कैकेयी पुत्रं किं दुःखेन तवानघ! ।।६४
या गतिर्धर्मशीलानामश्वमेधादियाजिनाम्।
तां गतिं गतवानद्य पिता ते पितृवत्सल! ।।६५
तच्छ्रुत्वा निपपातोर्व्यां भरतः शोकविह्वलः।
हा तात! क्व गतोऽसि त्वं त्यक्त्वा मां वृजिनार्णवे ।।६६
असमर्प्यैव रामाय राज्ञे मां क्व गतोऽसि भोः!।
इति विलपितं पुत्रं पतितं मुक्तमूर्धजम् ।।६७

उत्थाप्यामृज्य नयने कैकेयी पुत्रमब्रवीत्।
तवाधुना कृत्यतमं कर्त्तव्यं नास्ति सुव्रत! ॥६८
समाश्वसिहि भद्रं ते सर्वं सम्पादितं मया।
तामाह भरतस्तातो म्रियमाणः किमब्रवीत् ॥६९
श्रीरामाय किमुक्तं हि सर्वं ब्रूहि ममानघे!।
तमाह कैकेयी देवी भरतं भयवर्जिता ॥७०
शृणु पुत्र! विशेषेण यदुक्तं गुरुसन्निधौ।
हा राम! राम! सीतेति लक्ष्मणेति पुनः पुनः।
विलपन्नेव सुचिरं देहं त्यक्त्वा दिवं ययौ ॥७१
तामाह भरतो हेऽम्ब! रामः सन्निहितो न किम्।
तदानीं लक्ष्मणो वापि सीता वा कुत्र ते गताः ॥७२

**कैकेय्युवाच—**

रामस्य यौवराज्यार्थं पित्रा ते सम्भ्रमः कृतः।
तव राज्यप्रदानाय तदाहं विघ्नमाचरम् ॥७३
राज्ञा दत्तं हि मे पूर्वं वरदेन वरद्वयम्।
याचितं तदिदानीं मे तयोरेकेन तेऽखिलम् ॥७४
राज्यं रामस्य चैकेन वनवासो मुनिव्रतम्।
ततः सत्यपरो राजा राज्यं दत्त्वा तदैव हि ॥७५
रामं सम्प्रेषयामास वनमेव पिता तव।
सीताप्यनुगता रामं पातिव्रत्यमुपाश्रिता ॥७६
सौभ्रात्रं दर्शयन् राममनुयातोऽपि लक्ष्मणः।
वनं गतेषु सर्वेषु राजा तानेव चिन्तयन् ॥७७
प्रलपन् राम! रामेति ममार नृपसत्तमः।
इति मातुर्वचः श्रुत्वा वज्राहत इव द्रुमः ॥७८
पपात भूमौ निःसंज्ञस्तं दृष्ट्वा दुःखिता तदा।
कैकेयी पुनरप्याह वत्स! शोकेन किं तव ॥७९
राज्ये महति सम्प्राप्ते दुःखस्यावसरः कुतः।
इति ब्रुवन्तीमालोक्य मातरं प्रदहन्निव ॥८०

असम्भाव्यासि पापे ! मे घोरे ! त्वं भर्तृघातिनी।
पापे ! त्वद्गर्भजातोऽहं पापवानस्मि साम्प्रतम्।
अहमग्निं प्रवेक्ष्यामि विषं वा भक्षयाम्यहम् ॥८१
खड्गेन वाथवात्मानं हत्वा यामि यमक्षयम्।
भर्तृघातिनि ! दुष्टे ! त्वं कुम्भीपाकं गमिष्यसि ॥८२
इति निर्भर्त्स्य कैकेयीं कौसल्याभवनं ययौ।
सापि तं भरतं दृष्ट्वा मुक्तकण्ठा रुरोद ह ॥८३
पादयोः पतितस्तस्याः भरतोऽपि तदारुदत्।
आलिङ्ग्य भरतं साध्वी राममाता यशस्विनी ॥८४
कृशातिदीनवदना साश्रुनेत्रेदमब्रवीत्।
पुत्र ! त्वयि गते दूरमेवं सर्वमभूदिदम्।
उक्तं मात्रा श्रुतं सर्वं त्वया ते मातृचेष्टितम् ॥८५
पुत्रः सभार्यो वनमेव यातः,
सलक्ष्मणो मे रघुरामचन्द्रः।
चीराम्बरो बद्धजटाकलापः,
सन्त्यज्य मां दुःखसमुद्रमग्नाम् ॥८६
हा राम ! हा मे रघुवंशनाथ !,
जातोऽसि मे त्वं परतः परात्मा।
तथापि दुःखं न जहाति मां वै,
विधिर्बलीयानिति मे मनीषा ॥८७
स एवं भरतो वीक्ष्य विलपन्तीं भृशं शुचा।
पादौ गृहीत्वा प्राहेदं शृणु मातर्वचो मम ॥८८
कैकेय्या यत्कृतं कर्म रामराज्याभिषेचने।
अन्यद्वा यदि जानामि सा मया नोदिता यदि ॥८९
पापं मेऽस्तु तदा मातर्ब्रह्महत्याशतोद्भवम्।
हत्वा वसिष्ठं खड्गेन अरुन्धत्या समन्वितम् ॥९०
भूयात्तत्पापमखिलं मम जानामि यद्यहम्।
इत्येवं शपथं कृत्वा रुरोद भरतस्तदा ॥९१

कौशल्या तमथालिङ्ग्य पुत्र! जानामि मा शुचः।
एतस्मिन्नन्तरे श्रुत्वा भरतस्य समागमम्॥९२
वसिष्ठो मन्त्रिभिः सार्धं प्रययौ राजमन्दिरम्।
रुदन्तं भरतं दृष्ट्वा वसिष्ठः प्राह सादरम्॥९३
वृद्धो राजा दशरथो ज्ञानी सत्यपराक्रमः।
भुक्त्वा मर्त्यसुखं सर्वमिष्ट्वा विपुलदक्षिणैः॥९४
अश्वमेधादिभिर्यज्ञैर्लब्ध्वा रामं सुतं हरिम्।
अन्ते जगाम त्रिदिवं देवेन्द्रार्धासनं प्रभुः॥९५

**अश्वमेधादिभिरिति**—त्रिदिवं त्रिषु लोकेषु ब्रह्मत्वेन प्रकाशमानं साकेतलोकं गत्वेति शेषः। दीव्यति सद्रक्षणासन्निग्रहेण क्रीडतीति देवः। 'परित्राणाय साधूनां विनाशाय च दुष्कृतां। धर्मसंस्थापनार्थाय संभवामि युगे युगे॥' इति भगवदुक्त्या मत्स्याद्यवतारी नारायणस्तस्य देवस्येन्द्रः श्रीरामः 'तमीश्वराणां परमं महेश्वरं पतिं पतीनां परमं च दैवतम्' इति श्रुतेः। अर्द्धासनं जगामेत्यर्थः 'पितुरङ्कगतं राममिन्द्रनीलमणिप्रभमिति' सनत्कुमारसंहितावचनात् नित्यविहारिणं श्रीराममङ्के निवेश्य स्थिते [1]स्वांशिनि दशरथे प्रविश्य तदर्धासने स्थित इति भावः। ननु साकेते अखण्डरस एवास्ति पितुरङ्कस्थितिरप्यखण्डितास्ति सखिभिः सह नैरन्तर्येण विहारोऽप्यस्ति तस्यैकत्वरूपत्वे तु बालपौगण्डकैशोररूपलीला तद्रसोपयोगितया युगपत्कथं संगच्छत इति चेच्छृणु एक एव श्रीरामः वात्सल्यादिपञ्चरसनिष्ठानां तत्तद्भावनानुसारेण तेन तत्र तत्र तथा तथा नित्यं क्रीडति सदैव मुक्तोऽहमचिन्त्यशक्तिमानिति रामगीतायां श्रीरामोक्त्या अचिन्त्यशक्तितया इदमेव तस्यावाङ्मनसगोचरत्वम् 'अचिन्तनीया ये भावा न तांस्तर्केण योजयेत्' इत्युक्तेः। अन्यथा यथाश्रुतव्याख्याने मोक्षभाजनमिति विरुध्येत। स्पष्टं चैतदादिरामायणे तथाहि —इति मुह्यन्तमाज्ञाय पितरं रघुवंशजम्। दर्शयामास परमं स्वधाम जगदीश्वरम्। ददौ दिव्यां दृशं तस्मै गुणसर्गविवर्जिताम्। रामस्य परमं धाम यया पश्यन्ति सूरयः॥ ततः परमया भक्त्या प्रमोदविपिनं तु वै। अपश्यत्सर्वतो व्याप्तं सत्यं ज्ञानमनन्तकम्॥ तत्रायोध्यां पुरीं दिव्यां मणिकाञ्चनभूषिताम्। रत्नप्राकारमध्यस्थां कल्पद्रुमवनावृताम्। प्रेमामृतप्रवाहस्य सरयूतीरसंश्रिताम्। परमानन्दसन्दोहामपि कौतूहलान्विताम्॥ दिव्यपार्षदसन्दोह[2]संकुलां समहोत्सवाम्। मणिस्तम्भशताकीर्णे तत्र प्रासाद उत्तमे॥ दिव्यसिंहासनासीनमपश्यत्परमोत्सवम्। आत्मानं परमानन्दसर्वमंगलभाजनम्। आत्मनः परितः पुत्रांश्चतुरो विश्वसुन्दरान्। रामादीन् विश्वरमणान् कामकान्तसुविग्रहान्॥

---

१. स्वावेशिनि मदीयपुस्तके। २. सङ्कुलांसो मदीयपुस्तके।

रामसत्तापरिव्याप्तं सर्वस्वं समपश्यत्। न तत्र कालगमनं न च मायाप्रवेशनम्॥ कुतस्तद्-[1]गुणसम्बन्धस्तत्र सम्भावितो भवेत्। अनुभूय परानन्दं स तस्मादुदतिष्ठत इति।९५

तं शोचसि वृथैव त्वमशोच्यं मोक्षभाजनम्।
आत्मा नित्योऽव्ययः शुद्धो जन्मनाशादिवर्जितः॥९६

गुरुत्वाल्लोकदृष्ट्या तं बोधयन्नाह **तमिति**—आत्मा नित्योऽव्यय इत्यस्यैव विवरणं जन्मनाशादिवर्जित इति।९६

शरीरं जडमत्यर्थमपवित्रं विनश्वरम्।
विचार्यमाणे शोकस्य नावकाशः कथञ्चन॥९७
पिता वा तनयो वाऽपि यदि मृत्युवशं गतः।
मूढास्तमनुशोचन्ति स्वात्मताडनपूर्वकम्॥९८

शरीरस्य जडत्वान्नश्वरत्वादेवाशोच्यत्वमित्याह **शरीरमिति**— एवं लोके सर्वोऽपि जनः शोचनीयो नाऽस्ति। विचार्यमाणे रामेण सह दशरथस्य नित्ययोगोऽस्ति। तत्रैव गतो दशरथ इति विचार्यमाणे शोकावकाशः दशरथविषयकशोकावकाशो नास्तीत्यर्थः। स्वात्मताडनपूर्वकं स्वदेहताडनपूर्वकम।९७-९८।

निःसारे खलु संसारे वियोगो ज्ञानिनां यदा।
भवेद्वैराग्यहेतुः स शान्तिसौख्यं तनोति च॥९९

**निःसार इति**—ज्ञानिनां संसारमसारत्वेन जानतां यदा केनचिद्वियोगो भवति तदा स वैराग्यहेतुर्भवेत्।९९

जन्मवान् यदि लोकेऽस्मिंस्तर्हि तं मृत्युरन्वगात्।
तस्मादपरिहार्योऽयं मृत्युर्जन्मवतां सदा॥१००

अथ जातस्य ध्रुवो मृत्युरित्याह-**जन्मवानिति**।१००

स्वकर्मवशतः सर्वजन्तूनां प्रभवाप्ययौ।
विजानन्नप्यविद्वान्यः कथं शोचति बान्धवान्॥१०१

**स्वकर्मेति**—अविद्वानपि अतत्त्वज्ञोऽपि स उत्पत्तिप्रलययोः कर्माधीनत्वं विजानन् कथं बान्धवान् शोचति किं पुनस्तत्त्वज्ञ इति भावः।१०१

---

१. गण इति मदीयपुस्तके।

ब्रह्माण्डकोटयो नष्टाः सृष्टयो बहुशो गताः ।
शुष्यन्ति सागराः सर्वे कैवास्था क्षणजीविते ॥१०२

**ब्रह्माण्डेति**—शुष्यन्ति-वर्तमानसामीप्ये लट्।१०२

चलपत्रान्तलग्नाम्बुबिन्दुवत्क्षणभङ्गुरम् ।
आयुस्त्यजत्यवेलायां कस्तत्र प्रत्ययस्तव ॥१०३
देही प्राक्तनदेहोत्थकर्मणा देहवान् पुनः ।
तद्देहोत्थेन च पुनरेवं देहः सदात्मनः ॥१०४
यथा त्यजति वै जीर्णं वासो गृह्णाति नूतनम् ।
तथा जीर्णं परित्यज्य देही देहं पुनर्नवम् ॥१०५
भजत्येव सदा तत्र शोकस्यावसरः कुतः ।
आत्मा न म्रियते जातु जायते न च वर्धते ॥१०६
षड्भावरहितोऽनन्तः सत्यप्रज्ञानविग्रहः ।
आनन्दरूपो बुद्ध्यादिसाक्षी लयविवर्जितः ॥१०७
एक एव परो ह्यात्मा ह्यद्वितीयः समः स्थितः ।
इत्यात्मानं दृढं ज्ञात्वा त्यक्त्वा शोकं कुरु क्रियाम् ॥१०८

**षड्भावेति**—अनन्तः असङ्ख्याकः एकः जीवत्वेन परः प्रकृते आत्मा जीवः अः वासुदेवः द्वितीयो यस्य सः। मया जानक्या सह समः, श्रीरामस्तत्र स्थितः । रकारवाच्यः श्रीरामः अकारवाच्या सीता तयोः समीपे मकारवाच्यो जीवः स्थित इति फलितोऽर्थः। तेन श्रीरामनामार्थे विचारिते कस्यापि वियोगो नास्तीति सूचितं । प्रज्ञानं श्रीरामाख्यं ब्रह्म इति, पूर्वोक्तरीत्या आत्मानं जीवं दृढ़ं रामप्रज्ञानमानन्दं ब्रह्मेति श्रुतेः, तस्य विग्रहः। लयो नाशस्तस्माद्रहितः।१०७-१०८।

तैलद्रोण्याः पितुर्देहमुद्धृत्य सचिवैः सह ।
कृत्यं कुरु यथान्यायमस्माभिः कुलनन्दन ! ॥१०९
इति सम्बोधितः साक्षाद् गुरुणा भरतस्तदा ।
विसृज्याज्ञानजं शोकं चक्रे सविधि सत्क्रियाम् ॥११०
गुरुणोक्तप्रकारेण आहिताग्नेर्यथाविधि ।
संस्कृत्य स पितुर्देहं विधिदृष्टेन कर्मणा ॥१११

एकादशेऽहनि प्राप्ते ब्राह्मणान्वेदपारगान्।
भोजयामास विधिवच्छतशोऽथ सहस्रशः॥११२

उद्दिश्य पितरं तत्र ब्राह्मणेभ्यो धनं बहु।
ददौ गवां सहस्राणि ग्रामान् रत्नाम्बराणि च॥११३

अवसत्स्वगृहे यत्र राममेवानुचिन्तयन्।
वसिष्ठेन सह भ्रात्रा मन्त्रिभिः परिवारितः॥११४

रामेऽरण्यं प्रयाते सह जनकसुतालक्ष्मणाभ्यां सुघोरं,
माता मे राक्षसीव प्रदहति हृदयं दर्शनादेव सद्यः।
गच्छाम्यारण्यमद्य स्थिरमतिरखिलं दूरतोऽपास्य राज्यं,
रामं सीतासमेतं स्मितरुचिरमुखं नित्यमेवानुसेवे॥११५

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डे सप्तमोऽध्यायः।७

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामयोध्याकाण्डे
सप्तमोऽध्यायः।७

⊙

---

१. इति सिद्धिश्रीमहाराजा० श्रीमदध्यात्म० ध्वनिप्रकाशिकायां सप्तमः। ७ रा० व० पुस्तकस्था पुष्पिका।

## अथ अष्टमोऽध्यायः

**श्रीमहादेव उवाच--**

वसिष्ठो मुनिभिः सार्धं मन्त्रिभिः परिवारितः।
राज्ञः सभां देवसभासन्निभामविशद्विभुः ॥१

**वसिष्ठ इति--**१

तत्रासने समासीनश्चतुर्मुख इवापरः।
आनीय भरतं तत्र उपवेश्य सहानुजम् ॥२
अब्रवीद् वचनं देशकालोचितमरिन्दमम्।
वत्स ! राज्येऽभिषेक्ष्यामस्त्वामद्य पितृशासनात् ॥३

**अब्रवीदिति**—वत्स! राज्येऽभिषेक्ष्याम इत्यनेन श्रीरामस्य सावधिकवनगमनेऽपि वशिष्ठस्य ज्ञानोपदेशपूर्वकराज्याभिषेकाज्ञा परीक्षापूर्वकभरतप्रेमख्यापनार्थमिति-व्यज्यते।३

कैकेय्या याचितं राज्यं त्वदर्थे पुरुषर्षभ !
सत्यसन्धो दशरथः प्रतिज्ञाय ददौ किल ॥४
अभिषेको भवत्वद्य मुनिभिर्मन्त्रपूर्वकम्।
तच्छ्रुत्वा भरतोऽप्याह मम राज्येन किं मुने ! ॥५
रामो राजाधिराजश्च वयं तस्यैव किङ्कराः।
श्वः प्रभाते गमिष्यामो राममानेतुमञ्जसा ॥६
अहं यूयं मातरश्च कैकेयीं राक्षसीं विना।
हनिष्याम्यद्य नैवाहं कैकेयीं मातृगन्धिनीम् ॥७

**अहमिति**—कैकेयीं केकयदेशोद्भवां पूर्वजन्मनि बलेर्भगिनीत्वात् राक्षसीं मन्थरां विना एतेन तत्रापि कमपि विघ्नं न कुर्यादित्याकुलमनस्त्वम्, तेन च सरस्वतीवृत्तान्तस्मरणा-भावस्तस्य व्यज्यते। अहं यूयं मातरः कौशल्यासुमित्राकैकेयीप्रभृतयः। मातृगन्धिनीं कैकेयीं केकयदेशोद्भवां, मन्थराकैकेय्योर्वनगमनात् हन्तारं मामिति भरतोक्तेश्चायमेवार्थः समीचीनः।७

किन्तु मां नो रघुश्रेष्ठः स्त्रीहन्तारं सहिष्यते।
तच्छ्रुत्वोभूते गमिष्यामि पादचारेण दण्डकान्॥८
शत्रुघ्नसहितस्तूर्णं यूयमायात वा न वा।
रामो यथा वने यातस्तथाहं वल्कलाम्बरः॥९

**शत्रुघ्नेति**—यूयमायात वा न वेत्यनेन गुरुवचनातिक्रमः तेन च तस्याऽनिर्गुणा रसरूपाऽनन्यदास्यभक्तिर्व्यज्यते।९

फलमूलकृताहारः शत्रुघ्नसहितो मुने!।
भूमिशायी जटाधारी यावद्रामो निवर्तते॥१०
इति निश्चित्य भरतस्तूष्णीमेवाऽवतस्थिवान्।
साधु साध्विति तं सर्वे प्रशशंसुर्मुदान्विताः॥११
ततः प्रभाते भरतं गच्छन्तं सर्वसैनिकाः।
अनुजग्मुः सुमन्त्रेण नोदिताः साश्वकुञ्जराः॥१२
कौशल्याद्या राजदारा वसिष्ठप्रमुखा द्विजाः।
छादयन्तो भुवं सर्वे पृष्ठतः पार्श्वतोऽग्रतः॥१३
शृङ्गवेरपुरं गत्वा गङ्गाकूले समन्ततः।
उवास महती सेना शत्रुघ्नपरिचोदिता॥१४
आगतं भरतं श्रुत्वा गुहः शङ्कितमानसः।
महत्या सेनया सार्धमागतो भरतः किल॥१५
पापं कर्तुं न वा याति रामस्याविदितात्मनः।
गत्वा तद्धृदयं ज्ञेयं यदि शुद्धस्तरिष्यति॥१६

**आगतमिति**—शंकितमानसः किमयं वने वर्तमानस्यापि श्रीरामस्यानुचितं विधातुं यातीति शङ्का तदेवाह महत्येति—अविदितात्मनः अविदितैतद्वृत्तान्तस्य रामस्य पापं कर्तुं याति न वा याति इति शङ्कितमानस इत्यर्थः।१५-१६।

गङ्गां नोचेत्समाकृष्य नावस्तिष्ठन्तु सायुधाः।
ज्ञातयो मे समायत्ताः पश्यन्तः सर्वतो दिशम्॥१७

नो चेद् यद्यशुद्धस्तदा मे ज्ञातयो नाव आकृष्य सर्वतो दिशं पश्यन्तः समायत्ताः सावधानाः तिष्ठन्तु तदुत्तरणप्रतिबन्धनायेति शेषः। एतेन तस्य शूरतातिशयश्च व्यक्तः।१७

इति सर्वान् समादिश्य गुहो भरतमागतः।
उपायनानि संगृह्य विविधानि बहून्यपि॥१८
प्रययौ ज्ञातिभिः सार्धं बहुभिर्विविधायुधैः।
निवेद्योपायनान्यग्रे भरतस्य समन्ततः॥१९
दृष्ट्वा भरतमासीनं सानुजं सह मन्त्रिभिः।
चीराम्बरं घनश्यामं जटामुकुटधारिणम्॥२०
राममेवानुशोचन्तं राम रामेतिवादिनम्।
ननाम शिरसा भूमौ गुहोऽहमिति चाब्रवीत्॥२१

**इति सर्वानिति**—उपायनानि स्वदेशजातानि राजयोग्यानि मत्स्यादीनि भरतस्याग्रे निवेद्य परितो दृष्ट्वा उक्तविशेषणं भरतं ननामेति चतुर्णामन्वयः। परितोऽवलोकनेन सर्वेषां साध्वसाधुचेष्टापरीक्षणं युज्यते।१८-२१।

शीघ्रमुत्थाप्य भरतो गाढमालिङ्गय सादरम्।
पृष्ट्वानामयमव्यग्रः सखायमिदमब्रवीत्॥२२
भ्रातस्त्वं राघवेणात्र समेतः समवस्थितः।
रामेणालिङ्गितः सार्द्रनयनेनामलात्मना॥२३
धन्योऽसि कृतकृत्योऽसि यत्त्वया परिभाषितः।
रामो राजीवपत्राक्षो लक्ष्मणेन च सीतया॥२४

**शीघ्रमिति**—अनामयम् आरोग्यम् अत्र भरतकर्तृकगुहालिङ्गनेन श्रीरामभक्तेषु जात्यादिविचारो नास्तीति व्यज्यते। तेन च तेषां सर्वोत्तमत्वम्। यतो रामेणालिङ्गितोऽतो धन्योऽसि। सार्द्रनयनेनेत्यनेन प्रेमातिशयो व्यज्यते।२२-२४।

यत्र रामस्त्वया दृष्टस्तत्र मां नय सुव्रत!।
सीतया सहितो यत्र सुप्तस्तद्दर्शयस्व मे॥२५

**यत्रेति**—यत्र त्वया रामो दृष्टस्तत्र मां नय यत्र सुप्तस्तद्दर्शय, एतेनाचार्यवानेव पुरुषो जानातीति रीतिर्दर्शिता।२५

त्वं रामस्य प्रियतमो भक्तिमानसि भाग्यवान्।
इति संस्मृत्य संस्मृत्य रामं साश्रुविलोचनः॥२६

**त्वमिति**—साश्रुविलोचन इत्यनेन प्रेमातिशयो व्यक्तः।२६

गुहेन सहितस्तत्र यत्र रामः स्थितो निशि।
ययौ ददर्श शयनस्थलं कुशसमास्तृतम् ॥२७

सीताभरणसंलग्नस्वर्णबिन्दुभिरञ्चितम् ।
दुःखसन्तप्तहृदयो भरतः पर्यदेवयत् ॥२८

**सीतेति**–सीताभरणसंकर्षणेन संलग्ना ये स्वर्णबिन्दवस्तदाकारचिह्नानि तैरञ्चितं युक्तम्। शयनस्थलं ददर्शेत्यनेन श्रीरामचरणाङ्कितभूभागदर्शनेन सर्वपापक्षयो भवतीति। तेन दर्शनेन मयापि गर्भवासजन्यपापक्षयात् रामदर्शनयोग्यता भविष्यतीति तदाशयो व्यक्तः।२८

अहोऽतिसुकुमारी या सीता जनकनन्दिनी।
प्रासादे रत्नपर्यङ्के कोमलास्तरणे शुभे॥२९

रामेण सहिता शेते सा कथं कुशविष्टरे।
सीता रामेण सहिता दुःखेन मम दोषतः॥३०

**रामेणेति**–सा सीता रामेण सहिता कुशविष्टरे कथं शेते एतेन ईश्वरेच्छाया अतर्क्यत्वं व्यज्यते। एतेन विषादो व्यक्तः। रामेण सहिता सीतेति पुनरुक्तिवर्णनात् व्यासस्यापि शोकाविष्टत्वं व्यक्तम्।३०

धिङ् मां जातोऽस्मि कैकेय्यां पापराशिसमानतः।
मन्निमित्तमिदं क्लेशं रामस्य परमात्मनः॥३१

**धिङ् मामिति**–पापराशिसमानतः पापराशिसमानायां सार्वविभक्तिकस्तसिः। तादृश्यां कैकेय्यां जातोऽस्मि तन्मां धिक् कैकेय्या जातत्वादहमपि पापराशिरिति भावः। एतेन निर्वेदो व्यक्तः। क्लेशशब्दस्यार्धर्चादित्वान्नपुंसकत्वमिति।३१

अहोऽतिसफलं जन्म लक्ष्मणस्य महात्मनः।
राममेव सदाऽन्वेति वनस्थमपि हृष्टधीः॥३२

अहं रामस्य दासा ये तेषां दासस्य किङ्करः।
यदि स्यां सफलं जन्म मम भूयान्न संशयः॥३३

**अहोऽतीति**–लक्ष्मणस्य जन्म अतिसफलम्। हृष्टधीः हृष्टचित्तः। एतेनाहं दुःखमना इह स्थित इति ग्लानिर्व्यक्ता। अहमित्यादिना स्वस्य नीचानुसन्धानमुक्तम्।३२-३३।

भ्रातर्जानासि यदि तत्कथयस्व ममाखिलम्।
यत्र तिष्ठति तत्राहं गच्छाम्यानेतुमञ्जसा।।३४
गुहस्तं शुद्धहृदयं ज्ञात्वा सस्नेहमब्रवीत्।।
देव! त्वमेव धन्योऽसि यस्य ते भक्तिरीदृशी।।३५

**गुह इति**–हे देव! त्वमेव धन्योऽसि यः प्राप्तं राज्यं परित्यज्य राममनुनेतुमागतोऽसि। किमिति पूर्वं मां धन्योऽसीति त्वमुक्तवानसीति भावः।३५

रामे राजीवपत्राक्षे सीतायां लक्ष्मणे तथा।
चित्रकूटाद्रिनिकटे मन्दाकिन्याऽविदूरतः।।३६

**राम इति**–मन्दाकिन्या अविदूरतः सन्निवरार्षः। एतेन चित्रकूटपर्यन्तं गुहस्यैव राज्यमासीदिति प्रतीयते।३६

मुनीनामाश्रमपदे रामस्तिष्ठति सानुजः।
जानक्या सहितो नन्दात्सुखमास्ते किल प्रभुः।।३७

**मुनीनामिति**–नन्दात् समृद्धेः फलमूलादिसमृद्धेरिति यावत्।३७

तत्र गच्छामहे शीघ्रं गङ्गां तर्तुमिहार्हसि।
इत्युक्त्वा त्वरितं गत्वा नावः पञ्चशतानि ह।।३८
समानयत्ससैन्यस्य तर्तुं गङ्गां महानदीम्।
स्वयमेवानिनायैकां राजनावं गुहस्तदा।।३९

**समानयदिति**–अत्यादरं दर्शयितुं भरतोत्तरणाय राजनावं राजयोग्यां नावं स्वयमानिनाय।३९

आरोप्य भरतं तत्र शत्रुघ्नं राममातरम्।
वसिष्ठं च तथान्यत्र कैकेयीं चान्ययोषितः।।४०

**आरोप्येति**–तथा कैकेयीमन्ययोषितश्च अन्यत्रान्यनावीत्यर्थः। अवातरदिति शेषः। कैकेयीम् अन्यनावीत्यनेन तन्नावि क्वापि [1]नारुक्षदिति। तेन [2]पापिन्यानया सह निमज्जेमेति तासां शङ्का।४०

---

१. नारुह्यदिति मदीयपुस्तके। २. पान्यानया इतिमदीयपुस्तके।

तीर्त्वा गङ्गां ययौ शीघ्रं भरद्वाजाश्रमं प्रति।
दूरे स्थाप्य महासैन्यं भरतः सानुजो ययौ ॥४१

**तीर्त्वेति**–भरद्वाजाश्रमपर्यन्तं, सेनयाश्रमोपरोधो माभूदिति किञ्चिद् दूरे संस्थाप्य स्वयं सानुजो ययौ भरद्वाजाश्रमद्वारं प्रतीति शेषः।४१

आश्रमे मुनिमासीनं ज्वलन्तमिव पावकम्।
दृष्ट्वा ननाम भरतः साष्टाङ्गमतिभक्तितः ॥४२
ज्ञात्वा दाशरथिं प्रीत्या पूजयामास मौनिराट्।
पप्रच्छ कुशलं दृष्ट्वा जटावल्कलधारिणम् ॥४३

**ज्ञात्वेति**–भरद्वाजकुशलप्रश्नेन भरतस्य कपटनीतेरुद्घाटने हेतुर्व्यज्यते।४३

राज्यं प्रशासतस्तेऽद्य किमेतद्वल्कलादिकम्।
आगतोऽसि किमर्थं त्वं विपिनं मुनिसेवितम् ॥४४
भरद्वाजवचः श्रुत्वा भरतः साश्रुलोचनः।
सर्वं जानासि भगवन्! सर्वभूताशयस्थितः ॥४५

**भरद्वाजेति**–सर्वज्ञत्वे हेतुगर्भविशेषणं सर्वभूतेषु आशेते व्याप्नोतीति सर्वभूताशयः श्रीरामस्तस्मिन् स्थितः।४५

तथापि पृच्छसे किञ्चित्तदनुग्रह एव मे।
कैकेय्या यत्कृतं कर्म रामराज्यविघातनम् ॥४६
वनवासादिकं वापि नहि जानामि किञ्चन।
भवत्पादयुगं मेऽद्य प्रमाणं मुनिसत्तम! ॥४७

**वनवासादिकमिति**–न जानामीत्यर्थं शपथेन प्रत्यापयति भवत्पादेति।४७

इत्युक्त्वा पादयुगलं मुनेः स्पृष्ट्वार्तमानसः।
ज्ञातुमर्हसि मां देव! शुद्धो वाशुद्ध एव वा ॥४८
मम राज्येन किं स्वामिन्! रामे तिष्ठति राजनि।
किङ्करोऽहं मुनिश्रेष्ठ! रामचन्द्रस्य शाश्वतः ॥४९

**ममेति**–शाश्वतः किंकर इत्यनेन स्वस्य श्रीनारायणरूपेण नित्यकैङ्कर्यकर्तृत्वं सूचितम्।४९

अतो गत्वा मुनिश्रेष्ठ! रामस्य चरणान्तिके।
पतित्वा राज्यसम्भारान् समर्प्यात्रैव राघवम्॥५०

अभिषेक्ष्ये वसिष्ठाद्यैः पौरजानपदैः सह।
नेष्येऽयोध्यां रमानाथं दासः सेवेऽतिनीचवत्॥५१

इत्युदीरितमाकर्ण्य भरतस्य वचो मुनिः।
आलिङ्ग्य मूर्ध्न्यवघ्राय प्रशशंस सविस्मयः॥५२

**इत्युदीरितमिति**—सविस्मयो गृहीतभरतावेशोऽस्मान् वैकुण्ठवासिनारायणे अजानन्निव मत्पादेन शपथं करोतीत्याश्चर्यसहितः।५२

वत्स! ज्ञातं पुरैवैतद् भविष्यं ज्ञानचक्षुषा।
मा शुचस्त्वं परो भक्तः श्रीरामे लक्ष्मणादपि॥५३

**वत्सेति**—त्वं श्रीरामे लक्ष्मणादपि परोऽधिको भक्तः अतस्तस्य तस्मादपि प्रियतर इति भावः।५३

आतिथ्यं कर्तुमिच्छामि ससैन्यस्य तवानघ!।
अद्य भुक्त्वा ससैन्यस्त्वं श्वो गन्ता रामसन्निधिम्॥५४

एवं भरतस्य श्रीरामविषयकं[1] प्रेमाणं परीक्ष्य अयोध्यावासिनां प्रेम परीक्षार्थमाह[2] आतिथ्यमिति।५४

यथाऽऽज्ञापयति भवांस्तथेति भरतोऽब्रवीत्।
भरद्वाजस्त्वपः स्पृष्ट्वा मौनी होमगृहे स्थितः॥५५

**यथेति**—यथाज्ञापयतीत्यनेन भरद्वाजगौरवेण तत्र स्थितस्तेन च तावत्कालस्थितौ तस्य क्लेशातिशयस्तेन च क्षणमपि रामविरहासहिष्णुत्वमिति व्यज्यते।५५

दध्यौ कामदुघां कामवर्षिणीं कामदो मुनिः।
असृजत् कामधुक् सर्वं यथाकाममलौकिकम्॥५६

भरतस्य ससैन्यस्य यथेष्टं च मनोरथम्।
यथा ववर्ष सकलं तृप्तास्ते सर्वसैनिकाः॥५७

---

१. तः २ पर्यन्तः रा० व० पुस्तकस्थः।

वसिष्ठं पूजयित्वाऽग्रे शास्त्रदृष्टेन कर्मणा।
पश्चात् ससैन्यं भरतं तर्पयामास योगिराट्॥५८

उषित्वा दिनमेकन्तु आश्रमे स्वर्गसन्निभे।
अभिवाद्य पुनः प्रातर्भरद्वाजं सहानुजः।
भरतस्तु कृतानुज्ञः प्रययौ रामसन्निधिम्॥५९

**अभिवाद्येति**—प्रातः पुनर्भरद्वाजम् अभिवाद्य प्रयाणायानुज्ञां च प्रार्थ्य कृतानुज्ञ इत्युक्तेः। अत्र आश्रमस्य च स्वर्गतुल्यत्वे तीर्थराजत्वेऽपि स्नानं विनैव ततो गमनेन कदाचित्पुनर्मुनिः स्थितेराज्ञां दद्यादिति तस्य भयं। तेन भोगेष्वनासक्तिस्तेन च श्रीरामे प्रेमातिशयस्तेन च श्रीरामदर्शनोत्कण्ठातिशयो व्यज्यते।५९

चित्रकूटमनुप्राप्य दूरे संस्थाप्य सैनिकान्।
रामसन्दर्शनाकाङ्क्षी प्रययौ भरतः स्वयम्॥६०

**चित्रकूटमिति**—दूरे संस्थाप्य सैनिकान् आश्रमोपघातवारणायेति भावः।६०

शत्रुघ्नेन सुमन्त्रेण गुहेन च परन्तपः।
तपस्विमण्डलं सर्वं विचिन्वानो न्यवर्त्तत॥६१

अदृष्ट्वा रामभवनमपृच्छदृषिमण्डलम्।
कुत्रास्ते सीतया सार्धं लक्ष्मणेन रघूत्तमः॥६२

**अदृष्ट्वेति**—अदृष्ट्वा अपृच्छदित्यनेन सकलसाधनेभ्यः श्रान्तो गुरूपदेशात् परमात्मानं प्राप्नोतीति ध्वन्यते, 'आचार्यवान् पुरुषो वेदेति' श्रुतेः।६२

ऊचुरग्रे गिरेः पश्चाद् गङ्गाया उत्तरे तटे।
विविक्तं रामसदनं रम्यं काननमण्डितम्॥६३

**ऊचुरिति**—गिरेः संकर्षणगिरेः पश्चिमे गङ्गायाः पयस्विन्याः उत्तरे तटे विविक्त-मेकान्तदेशवर्ति।६३

सफलैराम्रपनसैः कदलीखण्डसंवृतम्।
चम्पकैः कोविदारैश्च पुन्नागैर्विपुलैस्तथा॥६४

एवं दर्शितमालोक्य मुनिभिर्भरतोऽग्रतः।
हर्षाद् ययौ रघुश्रेष्ठभवनं मन्त्रिणा सह॥६५

ददर्श दूरादतिभासुरं शुभं,
रामस्य गेहं मुनिवृन्दसेवितम्।
वृक्षाग्रसंलग्नसुवल्कलाजिनं,
रामाभिरामं भरतः सहानुजः ॥६६

ददर्शेति–रामेण रामवासेन अभिरामम्। तत्र तस्य नित्यविहारादिति भावः।६६

इति श्रीबृहद्ब्रह्माण्डपुराणे अध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डेऽष्टमोऽध्यायः ।८

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामयोध्याकाण्डे
अष्टमोऽध्यायः ।८



१. इति सिद्धिश्रीमहाराज० विश्वनाथसिंहजूदेवविरचितायामध्यात्मरामायण-ध्वनिप्रकाशिकायामष्टमः सर्गः। इत्यस्ति रा० व० पुस्तके।

## अथ नवमोऽध्यायः

**श्रीमहादेव उवाच--**

अथ गत्वाऽऽश्रमपदसमीपं भरतो मुदा।
सीतारामपदैर्युक्तं पवित्रमतिशोभनम्॥१

**अथेति**–सीतारामपदयुक्तत्वादतिसमीपम् आश्रमपदे आश्रमस्थानसमीपे पदानि सर्वतो ददर्श। एतेन चित्रकूटे सीतारामयोः नित्यरासोऽस्तीति व्यज्यते।१

स तत्र वज्राङ्कुशवारिजाञ्चित-
ध्वजादिचिह्नानि पदानि सर्वतः।
ददर्श रामस्य भुवोऽतिमङ्गला-
न्यचेष्टयत्पादरजःसु सानुजः॥२

**स तत्रेति**–तत्र वज्रांकुशकमलपूजितध्वजादिचिह्नयुतानि ददर्श। ध्वजे पूजितत्वं स्पष्टरेखत्वं दृष्ट्वा तत्पादचिह्नितदेशरजःसु अचेष्टयत् लुलुवे।२

अहो! सुधन्योऽहममूनि राम-
पादारविन्दाङ्कितभूतलानि।
पश्यामि यत्पादरजो विमृग्यं,
ब्रह्मादिदेवैः श्रुतिभिश्च नित्यम्॥३

**अहो! इति**–यत्पादरजो विमृग्यम् एतेन तत्पादरजसां दुर्लभत्वं व्यज्यते। तेन च श्रीरामस्य परमेश्वरत्वम्।३

इत्यद्भुतप्रेमरसाप्लुताशयो,
विगाढचेता रघुनाथभावने।
आनन्दजाश्रुस्नपितस्तनान्तरः,
शनैरवापाश्रमसन्निधिं हरेः॥४

**इत्यद्भुतेति**–इत्यद्भुतेत्यादिना भरतस्य श्रीरामे पराकाष्ठा व्यज्यते।४

स तत्र दृष्ट्वा रघुनाथमास्थितं,
दूर्वादलश्यामलमायतेक्षणम् ।
जटाकिरीटं नववल्कलाम्बरं,
प्रसन्नवक्त्रं तरुणारुणद्युतिम् ॥५

**स तत्रेति**–तरुणारुणद्युतिं तरुणादित्यप्रकाशम् ।५

विलोकयन्तं जनकात्मजां शुभां,
सौमित्रिणा सेवितपादपङ्कजम् ।
तदाभिदुद्राव रघूत्तमं शुचा,
हर्षाच्च तत्पादयुगं त्वराग्रहीत् ॥६

**विलोकयन्तमिति**–शुचा स्वमातृकृतापराधेन शोकेन हर्षाच्च श्रीरामदर्शनजातात् त्वरया गमनेन मम कैकेयीपुत्रत्वात् मुखावलोकनमनर्हं मत्वान्तर्हितो न भवेदिति व्यज्यते। पादयुगग्रहणेनैव शरणागतवत्सलः स्वचरणलग्नं कदापि न जहातीति व्यज्यते।६

रामस्तमाकृष्य सुदीर्घबाहु-
र्दोर्भ्यां परिष्वज्य सिषिञ्च नेत्रजैः ।
जलैरथाङ्कोपरि संन्यवेशयत्,
पुनः पुनः संपरिषस्वजे विभुः ॥७

**राम इति**–रामस्तमित्यनेन वात्सल्यं व्यक्तम् । भरतवृत्तान्तेन शत्रुघ्नवृत्तान्तेऽपि तद्वद् बोध्यम् ।७

अथ ता मातरः सर्वाः समाजग्मुस्त्वरान्विताः ।
राघवं द्रष्टुकामास्तास्तृषार्ता गौर्यथा जलम् ॥८

**अथेति**–अथ इत्यनेन तासां वात्सल्यं व्यक्तम् ।८

रामः स्वमातरं वीक्ष्य द्रुतमुत्थाय पादयोः ।
ववन्दे साश्रु सा पुत्रमालिङ्ग्यातीवदुःखिता ॥९
इतराश्च तथा नत्वा जननी रघुनन्दनः ।
ततः समागतं दृष्ट्वा वसिष्ठं मुनिपुङ्गवम् ॥१०

**इतरा इति**–इतराः कैकेय्याद्याः जननीः । साश्रु एतेन कैकेयीं सापराधां नामंस्तेत्यपि व्यज्यते।१०

साष्टाङ्गं प्रणिपत्याह धन्योऽस्मीति पुनः पुनः।
यथार्हमुपवेश्याह सर्वानेव रघूद्वहः॥११

**साष्टाङ्गमिति**–साष्टाङ्गमित्यनेन लोकशिक्षणं व्यज्यते। यथार्हं यथायोग्यम्।११

पिता मे कुशली किं वा मां किमाहातिदुःखितः।
वसिष्ठस्तमुवाचेदं पिता ते रघुनन्दन! ॥१२
त्वद्वियोगाभितप्तात्मा त्वामेव परिचिन्तयन्।
रामरामेति सीतेति लक्ष्मणेति ममार ह॥१३
श्रुत्वा तत्कर्णशूलाभं गुरोर्वचनमञ्जसा।
हा हतोऽस्मीति पतितो रुदन् रामः सलक्ष्मणः॥१४

**श्रुत्वेति**–कर्णशूलाभं कर्णयोः शूलरोगतुल्यम्।१४

ततोऽनुरुरुदुः सर्वाः मातरश्च तथापरे।
हा तात! मां परित्यज्य क्व गतोऽसि घृणाकर! ॥१५

**तत इति**—घृणाकर! दयासिन्धो! १५

अनाथोऽस्मि महाबाहो! मां को वा लालयेदितः।
सीता च लक्ष्मणश्चैव विलेपतुरतो भृशम्॥१६
वसिष्ठः शान्तवचनैः शमयामास तां शुचम्।
ततो मन्दाकिनीं गत्वा स्नात्वा ते वीतकल्मषाः॥१७
राज्ञे ददुर्जलं तत्र सर्वे ते जलकाङ्क्षिणे।
पिण्डान्निर्वापयामास रामो लक्ष्मणसंयुतः॥१८
इङ्गुदीफलपिण्याकरचितान्मधुसम्प्लुतान्।
वयं यदन्नाः पितरस्तदन्नाः स्मृतिनोदिताः॥१९
इति दुःखाश्रुपूर्णाक्षः पुनः स्नात्वा गृहं ययौ।
सर्वे रुदित्वा सुचिरं स्नात्वा जग्मुस्तदाश्रमम्॥२०
तस्मिंस्तु दिवसे सर्वे उपवासं प्रचक्रिरे।
ततः परेद्युर्विमले स्नात्वा मन्दाकिनीजले॥२१
उपविष्टं समागम्य भरतो राममब्रवीत्।
राम! राम! महाभाग! स्वात्मानमभिषेचय॥२२

राज्यं पालय पित्र्यं ते ज्येष्ठस्त्वं मे पिता तथा।
क्षत्रियाणामयं धर्मो यत्प्रजापरिपालनम् ॥२३

इष्ट्वा यज्ञैर्बहुविधैः पुत्रानुत्पाद्य तन्तवे।
राज्ये पुत्रं समारोप्य गमिष्यसि ततो वनम् ॥२४

इदानीं वनवासस्य कालो नैव प्रसीद मे।
मातुर्मे दुष्कृतं किंचित्स्मर्तुं नार्हसि पाहि नः ॥२५

इत्युक्त्वा चरणौ भ्रातुः शिरस्याधाय भक्तितः।
रामस्य पुरतः साक्षाद्दण्डवत्पतितो भुवि ॥२८

उत्थाप्य राघवः शीघ्रमारोप्याङ्केऽतिभक्तितः।
उवाच भरतं रामः स्नेहार्द्रनयनः शनैः ॥२७

शृणु वत्स ! प्रवक्ष्यामि त्वयोक्तं यत्तथैव तत्।
किन्तु मामब्रवीत्तातो नव वर्षाणि पञ्च च ॥२८

उषित्वा दण्डकारण्ये पुरं पश्चात्समाविश।
इदानीं भरतायेदं राज्यं दत्तं मयाखिलम् ॥२९

ततः पित्रैव सुव्यक्तं राज्यं दत्तं तवैव हि।
दण्डकारण्यराज्यं मे दत्तं पित्रा तथैव च ॥३०

अतः पितुर्वचः कार्यमावाभ्यामतियत्नतः।
पितुर्वचनमुल्लङ्घ्य स्वतन्त्रो, यस्तु वर्तते ॥३१

स जीवन्नेव मृतको देहान्ते निरयं व्रजेत्।
तस्माद्राज्यं प्रशाधि त्वं वयं दण्डकपालकाः ॥३२

**अत इति**—अत अवाभ्यामपि यत्नतः पितुर्वचः कार्यमित्यनेन त्वया पितृगौरवेण कोशलप्रजारक्षितव्याः। मयापि दण्डकारण्ये रक्षोवधपूर्वकं मुनयो रक्षितव्या इति व्यज्यते।३१-३२।

भरतस्त्वब्रवीद्रामं कामुको मूढधीः पिता।
स्त्रीजितो भ्रान्तहृदय उन्मत्तो यदि वक्ष्यति।
तत्सत्यमिति न ग्राह्यं भ्रान्तवाक्यं यथा सुधीः ॥३३

**भरत इति**—अत्र कामुक इत्यादि भरतवाक्येन पिता स्ववशतया नोक्तवानिति। तेन च तथैव मातापि भ्रमवतीति व्यज्यते। अतः धर्मशास्त्रविरुद्धं तत्सत्यमिति न ग्राह्यम्।३३

**श्रीराम उवाच--**

न स्त्रीजितः पिता ब्रूयान्न कामी नैव मूढधीः।
पूर्वं प्रतिश्रुतं तस्य सत्यवादी ददौ भयात्॥३४

**नेति**--पूर्वं प्रतिश्रुतमित्यनेन अवहितस्य पितुः प्रतिज्ञाप्रहाणमनुचितमिति व्यज्यते।३४

असत्याद् भीतिरधिका महतां नरकादपि।
करोमीत्यहमप्येतत्सत्यं तस्यै प्रतिश्रुतम्॥३५

**असत्यादिति**--नरकादपीत्यनेन लोकेऽप्यसत्यवादिनो महती निन्दा भवतीति व्यज्यते।३५

कथं वाक्यमहं कुर्यामसत्यं राघवो हि सन्।
इत्युदीरितमाकर्ण्य रामस्य भरतोऽब्रवीत्॥३६

**कथमिति**--राघवो हि सन्नित्यनेनात्र वंशे केऽप्यसत्यवादिनो नाभवन्निति व्यज्यते। तेन मयापि वनगमनं प्रतिज्ञातमिति।३६

तथैवं चीरवसनो वने वत्स्यामि सुव्रत!।
चतुर्दशसमास्त्वं तु राज्यं कुरु यथासुखम्॥३७

**तथैवेति**--तथैव [1]त्वत्प्रतिनिधिरूपेणेत्यर्थः।३७

**श्रीराम उवाच--**

पित्रा दत्तं तवैवैतद्राज्यं मह्यं वनं ददौ।
व्यत्ययं यद्यहं कुर्यामसत्यं पूर्ववत् स्थितम्॥३८

**पित्रेति**--व्यत्ययं राज्यवनवासयोरित्यर्थः। [2]तत्त्वेनावयोरभेदान्मत्कृतवनगमनेऽपि [3]तवैव गमनं सेत्स्यतीति तदाशयः। [4]तत्त्वेनावयोरभेदेऽपि व्यक्तिभेदाद्रामाविष्टेन मयैव रावणवधाच्च व्यत्ययो नोपयुज्यते इत्याशयः।[5]३८

---

१. त्वत्प्रतिनिधित्वेन त्वद्वदेवेत्यर्थः इति रा० व० पु०। २. नारायणत्वेन इति रा० व० पु०। ३. तथैव इतिमदीये पुस्तके। ४. तः ५. पर्यन्तः रा० व. पुस्तकस्थः।

**भरत उवाच—**

अहमप्यागमिष्यामि सेवे त्वां लक्ष्मणो यथा।
नो चेत्प्रायोपवेशेन[1] त्यजाम्येतत्कलेवरम् ॥३९[2]

**अहमपीति**–आगमिष्यामि वनमिति शेषः ।३९

इत्येवं निश्चयं कृत्वा दर्भानास्तीर्य चातपे।
मनसाऽपि विनिश्चित्य प्राङ्मुखोपविवेश सः ॥४०

**इत्येवमिति**–यद्यपि रामाविष्टेन त्वयैव रावणो वध्यः लक्ष्मण इव अहमपि त्वामनु-गच्छामि नोचेत्कलेवरं त्यजामि। नारायणान्निसृत्य स्वावेशिनं भरतं प्राप्स्यामीत्यर्थः ।४०

भरतस्याऽपि निर्बन्धं दृष्ट्वा रामोऽतिविस्मितः।
नेत्रान्तसंज्ञां गुरवे चकार रघुनन्दनः ॥४१

**भरतस्येति**–नेत्रान्तसंज्ञां नेत्रान्तेनास्योत्थापनं कुर्विति सूचितम् ।४१

एकान्ते भरतं प्राह वसिष्ठो ज्ञानिनां वरः।
वत्स! गुह्यं शृणुष्वेदं मम वाक्यात्सुनिश्चितम् ॥४२
रामो नारायणः साक्षाद् ब्रह्मणा याचितः पुरा।
रावणस्य वधार्थाय जातो दशरथात्मजः ॥४३

**राम इति**–अयं रामः साक्षान्नारायणः पुरा रावणस्य वधार्थाय ब्रह्मणा याचितः दशरथात्मजः तदावेशयुतः सन् जातः आविर्भूतः। एतेन आवेशिना रामेण सह तव वियोगो नास्ति किमर्थमेनं रुणत्सीति भावः ।४३

योगमायेति सीतेति जाता जनकनन्दिनी।
शेषोऽपि लक्ष्मणो जातो राममन्वेति सर्वदा ॥४४

**योगेति**–या एषा सीतेति प्रसिद्धा न योगमाया, योगशब्देन मूलप्रकृतिः, माया शब्देन प्रेमा जनकनन्दिन्यावेशयुतत्वात् जनकनन्दिनी जाता न तु श्रीरामनित्यानपायिनीत्यर्थः। अयं लक्ष्मणोऽपि शेषे जातः शेष आविश्य जातः न तु श्रीरामस्य नित्यभ्राता लक्ष्मण इत्यर्थः ।४४

रावणं हन्तुकामास्ते गमिष्यन्ति न संशयः।
कैकेय्या वरदानादि यद्यन्निष्ठुरभाषणम् ॥४५

---

१. अत्र सन्धिरार्षः। २. स्वकारणम् इति मदीयपुस्तके।

सर्वं देवकृतं नो चेदेवं सा भाषते कथम्।
तस्मात्त्यजाग्रहं तात! रामस्य विनिवर्तने ।।४६

**रावणमिति**–मातृदोषारोपणेन स्वस्मिन् दोषमारोप्य वनं गच्छेति सर्ववृत्तान्तज्ञस्य तवाग्रहो न युक्त इति भावः। देवकृतं देवैर्वाणीप्रेरणेन कृतं नो चेदेवं रामे परममतिनिष्ठुरं सा वात्सल्यवती कैकेयी कथं वदेन्न कथमपीत्यर्थः।४५-४६।

निवर्तस्व महासैन्यैर्मातृभिः सहितः पुरम्।
रावणं सकुलं हत्वा शीघ्रमेवागमिष्यति ।।४७
इति श्रुत्वा गुरोर्वाक्यं भरतो विस्मयान्वितः।।
गत्वा समीपं रामस्य विस्मयोत्फुल्ललोचनः ।।४८
पादुके देहि राजेन्द्र! राज्याय तव पूजिते।
तयोः सेवां करोम्येव यावदागमनं तव ।।४९

**पादुके इति**–पादुके देहीत्यनेन अहं किमपि कर्तुमसमर्थः तव पादुके एव सर्वं करिष्यत इति व्यज्यते।४९

इत्युक्त्वा पादुके दिव्ये योजयामास पादयोः।
रामस्य ते ददौ रामो भरतायातिभक्तितः ।।५०
गृहीत्वा पादुके दिव्ये भरतो रत्नभूषिते।
रामं पुनः परिक्रम्य प्रणनाम पुनः पुनः ।।५१
भरतः पुनराहेदं भक्त्या गद्गदया गिरा।
नव पंचसमान्ते तु प्रथमे दिवसे यदि ।।५२
नागमिष्यसि चेद्राम! प्रविशामि महानलम्।
बाढमित्येव तं रामो भरतं संन्यवर्तयत् ।।५३

**नागमिष्यसीति**–महानलं रामनामीयाग्निमेव रेफं प्रविशामीत्यनेन रकारार्थो राम इत्युक्तसाकेतविहारिरामं प्राप्स्यामीति सूचितम्।५३

ससैन्यः सवसिष्ठश्च शत्रुघ्नसहितः सुधीः।
मातृभिर्मन्त्रिभिः सार्धं गमनायोपचक्रमे ।।५४
कैकेयी राममेकान्ते स्रवन्नेत्रजलाकुला।
प्राञ्जलिः प्राह हे राम! तव राज्यविघातनम् ।।५५

कृतं मया दुष्टधिया मायामोहितचेतसा।
क्षमस्व मम दौरात्म्यं क्षमासारा हि साधवः॥५६

**कृतमिति**—मायामोहितचेतसेत्यनेन प्रस्तुतो मदपराध एव नास्तीति सूचितम् अंगीकृत्यापि स्वापराधमाह—क्षमस्वेति।५४

त्वं साक्षाद्विष्णुरव्यक्तः परमात्मा सनातनः।
मायामानुषरूपेण मोहयस्यखिलं जगत्॥५७

**त्वं साक्षादिति**—नन्वहं मनुष्यो नेश्वर इति चेत्तत्राह—साक्षाद्विष्णुः सनातनः परमात्मा त्वं मानुषरूपेण मानुषस्य नित्यद्विभुजश्रीरामस्यावेशेन युतः सन्नखिलं जगन्मोहयसि कैकेयीप्रेरणया वनं गच्छसीत्येवं मोहमुत्पादयसीति यत्सा माययैवेत्यर्थः।५७

त्वयैव प्रेरितो लोकः कुरुते साध्वसाधु वा।
त्वदधीनमिदं विश्वमस्वतन्त्रं करोति किम्।
यथा कृत्रिमनर्तक्यो नृत्यन्ति कुहकेच्छया॥५८

एतदेवोपपादयति **त्वयैवेत्यादिना** त्वदिति। स्वतोऽस्वतन्त्रं त्वत्प्रेरणां विना किं करोतीति भावः।५८

त्वदधीना तथा माया नर्तकी बहुरूपिणी।
त्वयैव प्रेरिताहं च देवकार्यं करिष्यता॥५९

**त्वदधीनेति**—नन्वेवं दुःखफलकं त्वत्प्रेरणं मया कथं कर्त्तव्यं तत्राह—देवकार्यं करिष्यतेति। त्वत्प्रेरितैव सरस्वती मन्मुखाद्वरमयाचतेत्यतो न ममापराध इति ध्वनितेन परमविज्ञानवतीति बोध्यम्।५९

पापिष्ठं पापमनसा कर्माचरमरिन्दम।
अद्य प्रतीतोऽसि मम देवानामप्यगोचरः॥६०

**पापिष्ठमिति**—अद्य मम मया प्रतीतोऽसि ज्ञातोऽसि। एतेन भरतमुद्दिश्य वशिष्ठोक्तं कैकेय्यपि श्रुतवतीति ध्वनिः।६०

पाहि विश्वेश्वरानन्त! जगन्नाथ! नमोऽस्तु ते।
छिन्धि स्नेहमयं पाशं पुत्रवित्तादिगोचरम्॥६१
त्वज्ज्ञानानलखड्गेन त्वामहं शरणं गता।
कैकेय्या वचनं श्रुत्वा रामः सस्मितमब्रवीत्॥६२

त्वज्ज्ञानेति –भक्तमातरं ज्ञात्वा वाङ्मनसगोचरातीतनिजस्वरूपज्ञानममलं देहीति ध्वनिः। सस्मितमब्रवीदित्यनेन एषा मदीयनित्यायोध्याविहारिरूपमद्यापि न ज्ञातवतीति व्यज्यते।६२

यदाह मां महाभागे! नानृतं सत्यमेव तत्।
मयैव प्रेरिता वाणी तव वक्त्राद्विनिर्गता॥६३
देवकार्यार्थसिद्ध्यर्थमत्र दोषः कुतस्तव।
गच्छ त्वं हृदि मां नित्यं भावयन्ती दिवानिशम्॥६४

**देवकार्येति**–मां भावयन्तीत्यनेन एतन्मदीयभावनया प्रार्थितवाङ्मनसगोचरातीत-रूपस्य स्फूर्तिर्भविष्यतीति ध्वनितम्।६४

सर्वत्र विगतस्नेहा मद्भक्त्या मोक्ष्यसेऽचिरात्॥६५

**सर्वत्रेति**–सरित्समुद्रादिरूपे विगतस्नेहा चिदचिदात्मकं विश्वं श्रीरामविग्रह इति मद्भक्त्या मद्भावनया सर्वत्र विशेषस्नेहवती सती मोक्ष्यसे।६५

अहं सर्वत्र समदृग्द्वेष्यो वा प्रिय एव वा।
नास्ति मे कल्पकस्येव भजतोऽनुभजाम्यहम्॥६६

**अहमिति**–कुतः यतोऽहं सर्वत्र समदृग् अत एव मम द्वेष्यः प्रियो वा नास्ति। तत्र दृष्टान्तः यथा कल्पकस्य नाट्यकर्तुः। यद्यपि सर्वस्य चिदचिद्रूपस्य मद्रूपत्वात् प्रियो द्वेष्यो वा नास्ति तथापि भजाम्यहम् एतेन स्वस्य प्रियत्वं दर्शितं, तेन एवं भूतं सर्वस्थितं मां भाव-येश्चेत्तदा त्वां[1] मोक्षयिष्यामीति व्यक्तम्।६

मन्मायामोहितधियो मामम्ब! मनुजाकृतिम्।
सुखदुःखाद्यनुगतं जानन्ति न तु तत्त्वतः।
दृष्ट्या मद्गोचरं ज्ञानमुत्पन्नं ते भवापहम्॥६७

**मन्मायेति**–मनुजाकृतिं नित्यद्विभुजरूपं मां मन्मायामोहितधियः सुखदुःखाद्यनुगतं जानन्ति न तु वाङ्मनसगोचरातीतनित्यविहारिणं जानाति मद्विषयं वाङ्मनसागोचर-नित्यविहारिविषयम् अत एवाहं भवन्मूलभूतस्थूलादिशरीरनिवर्तकं, ज्ञानं मदुत्पन्नं दिष्ट्या भद्रं तेन श्रीरामस्य हर्षातिशयः तेन उपदेशेऽप्यस्य ज्ञानस्य दुःस्थिरत्वं व्यक्तम्।६७

---

१. मोचयिष्यामि इति मदीयपुस्तके।

स्मरन्ती तिष्ठ भवने लिप्यसे न च कर्मभिः।
इत्युक्ता सा परिक्रम्य रामं सानन्दविस्मया॥६८

पूर्वोक्तभावनामुपसंहरति, **स्मरन्तीति**–'[1]एतद्भावयन्त्यमानुषं मद्रूपं स्मरन्ती भवने तिष्ठ, तदा कर्मभिर्न लिप्यसे इति। सानन्दविस्मयेति-श्रीरामस्य ब्रह्मस्वरूपज्ञानानन्दः विस्मयस्तु एष परिपूर्ण एव कुतो लोके ममाऽयशःस्थापयित्वा रावणवधाय यातीति।६८

प्रणम्य शतशो भूमौ ययौ गेहं मुदान्विता।
भरतस्तु सहामात्यैर्मातृभिर्गुरुणा सह॥६९
अयोध्यामगमच्छीघ्रं राममेवानुचिन्तयन्।
पौरजानपदान् सर्वानयोध्यायामुदारधीः॥७०
स्थापयित्वा यथान्यायं नन्दिग्रामं ययौ स्वयम्।
तत्र सिंहासने नित्यं पादुके स्थाप्य भक्तितः॥७१
पूजयित्वा यथा रामं गन्धपुष्पाक्षतादिभिः।
राजोपचारैरखिलैः प्रत्यहं नियतव्रतः॥७२

**तत्रेति**–राजोपचारैः गन्धपुष्पादिभिः राममिव ते पूजयित्वेत्यर्थः।७२

फलमूलाशनो दान्तो जटावल्कलधारकः।
अधःशायी ब्रह्मचारी शत्रुघ्नसहितस्तदा॥७३

भरतस्यापि श्रीरामस्येव व्रतकर्तृत्वमाह **फलेति**।७३

राजकार्याणि सर्वाणि यावन्ति पृथिवीतले।
तानि पादुकयोः सम्यङ् निवेदयति राघवः॥७४
गणयन् दिवसानेव रामागमनकाङ्क्षया।
स्थितो रामार्पितमनाः साक्षाद् ब्रह्ममुनिर्यथा॥७५

**गणयन्निति**–ब्रह्ममुनिः ब्रह्मर्षिः।७५

रामस्तु चित्रकूटाद्रौ वसन्मुनिभिरावृतः।
सीतया लक्ष्मणेनापि किंचित्कालमुपावसत्॥७६

**रामस्त्विति**–रामस्तु चित्रकूटाद्रौ मुनिभिः सीतासहितलक्ष्मणेनावृतो वसन्नपि किञ्चत्कालमेवोपावसदित्यर्थः। एवस्याध्याहारः, न बहुकालमित्यर्थः।७६

---

१. एतद्भावनया यत्प्राप्यमानं यद्रूपं तत्स्मरन्ती इति रा० व० पु०।

नागराश्च सदा यान्ति रामदर्शनलालसाः।
चित्रकूटस्थितं ज्ञात्वा सीतया लक्ष्मणेन च ॥७७

तत्र हेतुमाह—**नागराश्चेति**।७७

दृष्ट्वा तज्जनसम्बाधं रामस्तत्याज तं गिरिम्।
दण्डकारण्यगमने कार्यमप्यनुचिन्तयन् ॥७८

**दृष्ट्वेति**—कार्यं राक्षसवधरूपम्।७८

अन्वगात्सीतया भ्रात्रा ह्यत्रेराश्रममुत्तमम्।
सर्वत्र सुखसंवासं जनसम्बाधवर्जितम् ॥७९
गत्वा मुनिमुपासीनं भासयन्तं तपोवनम्।
दण्डवत्प्रणिपत्याह रामोऽहमभिवादये ॥८०
पितुराज्ञां पुरस्कृत्य दण्डकाननमागतः।
वनवासमिषेणापि धन्योऽहं दर्शनात्तव ॥८१

**पितुराज्ञामिति**—प्रसंगादागत्यापि त्वद्दर्शनेनैवाहं धन्यः, किं वक्तव्यं त्वदुद्देशेनैवागतो धन्य इति। एतेन तस्य भक्तप्रियत्वं व्यज्यते।८१

श्रुत्वा रामस्य वचनं रामं ज्ञात्वा हरिं परम्।
पूजयामास विधिवद् भक्त्या परमया मुनिः॥८२
वन्यैः फलैः कृतातिथ्यमुपविष्टं रघूत्तमम्।
सीतां च लक्ष्मणं चैव सन्तुष्टो वाक्यमब्रवीत्॥८३
भार्या मेऽस्तीव संवृद्धा ह्यनसूयेति विश्रुता।
तपश्चरन्ती सुचिरं धर्मज्ञा धर्मवत्सला॥८४

**भार्येति**—अतीवसंवृद्धा अत्यन्तं वृद्धतरा। धर्मवत्सला धर्मप्रिया।८४

अन्तस्तिष्ठति तां सीता पश्यत्वरिनिषूदन।
तथेति जानकीं प्राह रामो राजीवलोचनः॥८५
गच्छ देवीं नमस्कृत्य शीघ्रमेहि पुनः शुभे।
तथेति रामवचनं सीता चापि तथाकरोत्॥८६

**गच्छ देवीमिति**—शीघ्रमेहीत्यनेन श्रीसीतायाः निमेषमात्रविरहो रामस्य दुःसह इति व्यज्यते। तथेत्यङ्गीकृत्य तथाऽकरोत्।८६

दण्डवत्पतितामग्रे सीतां दृष्ट्वातिहृष्टधीः।
अनसूया समालिङ्ग्य वत्से! सीतेति सादरम्॥८७

दिव्ये ददौ कुण्डले द्वे निर्मिते विश्वकर्मणा ।
दुकूले द्वे ददौ तस्यै निर्मले भक्तिसंयुता ।।८८

**दिव्ये इति**–भक्तिसंयुता-साक्षात्परमेश्वरीयमिति भक्तिमती ।८८

अङ्गरागञ्च सीतायै ददौ दिव्यं शुभानना ।
न त्यक्ष्यतेऽङ्गरागेण शोभा त्वां कमलानने! ।।८९

**अङ्गरागमिति**–दिव्यं सदा धार्यमाणत्वेऽपि नित्यनूतनं न त्यक्ष्यते कदाचिदपीति शेषः। अत्राङ्गरागार्पणेन सा [1]भावनया सखीरूपेण सीतासमीपे तिष्ठतीति व्यज्यते ।८९

पातिव्रत्यं पुरस्कृत्य राममन्वेहि जानकि! ।
कुशली राघवो यातु त्वया सह पुनर्गृहम् ।।९०
भोजयित्वा यथान्यायं रामं सीतासमन्वितम् ।
लक्ष्मणं च तदा रामं पुनः प्राह कृताञ्जलिः ।।९१
राम! त्वमेव भुवनानि विधाय तेषां,
संरक्षणाय सुरमानुषतिर्यगादीन् ।
देहान्बिभर्षि न च देहगुणैर्विलिप्त-
स्त्वत्तो बिभेत्यखिलमोहकरी च माया ।।९२

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अयोध्याकाण्डे नवमोऽध्यायः ।९

**रामेति**–हे राम! ब्रह्मरूपेण भुवनानि विधाय सृष्ट्वा तद्रक्षणाय सुरमानुषतिर्यगादीन् बिभर्षि। एतेन निराकारसाकारवामनादयश्च रामस्यैव रूपाणि तेषां रूपी राम एवेति व्यक्तम् । साकारनिराकारदेहत्वेऽपि देहगुणैः साकारत्वनिराकारत्वरूपैर्न लिप्यसे 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिश्रुतेर्यदि ताभ्यां विलक्षणस्तर्हि कीदृशं तस्य रूपमिति चेत् 'आनन्दरूपममृतं यद्विभाति' 'तदा प्रणवानन्दमेवेति' श्रुतेरानन्दरूपमिति ज्ञेयम् ।९२

⊙

[2]इति श्री सिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामयोध्याकाण्डे
नवमोऽध्यायः ।९

⊙

समाप्तमिदमयोध्याकाण्डम् ।

---

१. भावनाम् इति मदीयपुस्तके । २. न काऽपि पुष्पिका रा० व० पु० ।

# अरण्यकाण्डम्

## अथ प्रथमोऽध्यायः

**श्रीमहादेव उवाच—**

अथ तत्र दिनं स्थित्वा प्रभाते रघुनन्दनः।
स्नात्वा मुनिं समामन्त्र्य प्रयाणायोपचक्रमे ॥१

[1]अथेति—दिनं दिनशेषम्।१

मुने! गच्छामहे सर्वे मुनिमण्डलमण्डितम्।
विपिनं दण्डकं यत्र त्वमाज्ञातुमिहार्हसि ॥२

**मुने इति**—मुनिमण्डलमण्डितमिति [2]विशेषणात् तत्र [3]तत्र स्थितान् बहुमुनीन् द्रष्टुं गच्छामहे इति श्रीरामाशयो व्यज्यते। तेन भवत्समीपस्थितोऽपि तेषां प्रेमगुणेन बद्धः। अत्रेरनसूयाया रघुनाथगमनेऽनीच्छा व्यज्यते इति।२

मार्गप्रदर्शनार्थाय शिष्यानाज्ञप्तुमर्हसि।
श्रुत्वा रामस्य वचनं प्रहस्यात्रिर्महायशाः ॥
प्राह तत्र रघुश्रेष्ठं राम! राम! सुराश्रय! ॥३
सर्वस्य मार्गद्रष्टा त्वं तव को मार्गदर्शकः।
तथापि दर्शयिष्यन्ति तव लोकानुसारिणः ॥४
इति शिष्यान् समादिश्य स्वयं किंचित्तमन्वयात्।
रामेण वारितः प्रीत्या अत्रिः स्वभवनं ययौ ॥५
क्रोशमात्रं ततो गत्वा ददर्श महतीं नदीम्।
अत्रेः शिष्यानुवाचेदं रामो राजीवलोचनः ॥६

**क्रोशमात्रमिति**—महतीं उत्कृष्टां श्रीरामदर्शनोत्कण्ठया वर्तमानां मंदाकिनीम्।६

---

१. अत्रादौ मदीयपुस्तके 'श्रीमतेरामानुजाय नमः' इत्यस्ति। २. विशेषणम् रा० व० पु०। ३. तत्रस्थान् रा० व० पु०।

नद्याः सन्तरणे कश्चिदुपायो विद्यते न वा।
ऊचुस्ते विद्यते नौका सुदृढा रघुनन्दन! ॥७
तारयिष्यामहे युष्मान् वयमेव क्षणादिह।
ततो नावि समारोप्य सीतां राघवलक्ष्मणौ ॥८
क्षणात्सन्तारयामासुर्नदीं मुनिकुमारकाः।
रामाभिनन्दिताः सर्वे जग्मुरत्रेरथाश्रमम् ॥९
ततोऽतिविपिनं घोरं झिल्लीझङ्कारनादितम्।
नानामृगगणाकीर्णं सिंहव्याघ्रादिभीषणम् ॥१०
राक्षसैर्घोररूपैश्च सेवितं रोमहर्षणम्।
प्रविश्य विपिनं घोरं रामो लक्ष्मणमब्रवीत् ॥११
इतः परं प्रयत्नेन गन्तव्यं सहितेन मे।
धनुर्गुणेन संयोज्य शरानपि करे दधत् ॥१२
अग्रे यास्याम्यहं पश्चात्त्वमन्वेहि धनुर्धरः।
आवयोर्मध्यगा सीता मायेवात्मपरात्मनोः ॥१३

**अग्रे इति**—आत्मपरात्मनोः संयोगकारिणी माया कृपेव मध्यगा सीतेति।१३

चक्षुश्चारय सर्वत्र दृष्टं रक्षोभयं महत्।
विद्यते दण्डकारण्ये श्रुतपूर्वमरिन्दम! ॥१४

**चक्षुरित्यादि**—दृष्टम्, अपशकुनैः सूचितं। ननु शकुनादिषु को विश्वासस्तत्राह-श्रुतपूर्वमिति।१४

इत्येवं भाषमाणौ तौ जग्मतुः सार्धयोजनम्।
तत्रैका पुष्करिण्यास्ते कह्लारकुमुदोत्पलैः ॥१५

**इत्येवमिति**—सार्धयोजनम्-चित्रकूटस्थस्वाश्रमादिति शेषः।१५

अम्बुजैः शीतलोदेन शोभमाना व्यदृश्यत।
तत्समीपमथो गत्वा पीत्वा तत्सलिलं शुभम् ॥१६
ऊषुस्ते सलिलाभ्यासे क्षणं छायामुपाश्रिताः।
ततो ददृशुरायान्तं महासत्त्वं भयानकम् ॥१७
करालदंष्ट्रवदनं भीषयन्तं स्वगर्जितैः।
वामांसे न्यस्तशूलाग्रग्रथितानेकमानुषम् ॥१८

भक्षयन्तं गजव्याघ्रमहिषं वनगोचरम्।
ज्यारोपितं धनुर्धृत्वा रामो लक्ष्मणमब्रवीत्॥१९

पश्य भ्रातर्महाकायो राक्षसोऽयमुपागतः।
आयात्यभिमुखं नोऽग्रे भीरूणां भयमावहन्॥२०

सज्जीकृतधनुस्तिष्ठ मा भैर्जनकनन्दिनि!।
इत्युक्त्वा बाणमादाय स्थितो राम इवाचलः॥२१

स तु दृष्ट्वा रमानाथं लक्ष्मणं जानकीं तदा।
अट्टहासं ततः कृत्वा भीषयन्निदमब्रवीत्॥२२

कौ युवां बाणतूणीरजटावल्कलधारिणौ।
मुनिवेषधरौ बालौ स्त्रीसहायौ सुदुर्मदौ॥२३

सुन्दरौ बत मे वक्त्रप्रविष्टकवलोपमौ।
किमर्थमागतौ घोरं वनं व्यालनिषेवितम्॥२४

**सुन्दराविति**–सुन्दरावित्यनेन शत्रूणामपि मनोमोहकारिणी रूपमाधुरी सूचिता।२४

श्रुत्वा रक्षोवचो रामः स्मयमान उवाच तम्।
अहं रामस्त्वयं भ्राता लक्ष्मणो मम सम्मतः॥२५

एषा सीता मम प्राणवल्लभा वयमागताः।
पितृवाक्यं पुरस्कृत्य शिक्षणार्थं भवादृशाम्॥२६

**एषेति**–भवादृशां शिक्षणार्थमित्युक्त्या छलेन न कञ्चन हन्तीति सूचितम्।२६

श्रुत्वा तद्रामवचनमट्टहासमथाकरोत्।
व्यादाय वक्त्रं बाहुभ्यां शूलमादाय सत्वरः॥२७

मां न जानासि राम! त्वं विराधं लोकविश्रुतम्।
मद्भयान्मुनयः सर्वे त्यक्त्वा वनमितो गताः॥२८

यदि जीवितुमिच्छाऽस्ति त्यक्त्वा सीतां निरायुधौ।
पलायतं न चेच्छीघ्रं भक्षयामि युवामहम्॥२९

**पलायतमिति**–पलायतमित्युक्त्या तद्रूपमाधुर्यमोहित इति व्यज्यते।२९

इत्युक्त्वा राक्षसः सीतामादातुमभिदुद्रुवे।
रामश्चिच्छेद तद्बाहू शरेण प्रहसन्निव॥३०

ततःक्रोधपरीतात्मा व्यादाय विकटं मुखम्।
राममध्यद्रवद्रामश्चिच्छेद परिधावतः॥३१
पदद्वयं विराधस्य तदद्भुतमिवाभवत्॥३२

**राममिति**—हस्तपादच्छेदनेन सर्वकर्मत्यागात् गत्यन्तराभावाच्च मत्प्राप्तिरिति सूचिता।३२

ततः सर्प इवास्येन ग्रसितुं राममापतत्।
ततोऽर्धचन्द्राकारेण बाणेनास्य महच्छिरः॥३३

चिच्छेद रुधिरौघेण पपात धरणीतले।
ततः सीता समालिङ्ग्य प्रशशंस रघूत्तमम्॥३४

ततो दुन्दुभयो नेदुर्दिवि देवगणेरिताः।
ननृतुश्चाप्सरा हृष्टा जगुर्गन्धर्वकिन्नराः॥३५

**तत इति**—तद्धननं देवानामानन्दजनकम्। तेन पूर्वं तत्पीडिता देवा इति। तेन तद्बलातिशय इति सूचितम्।३५

विराधकायादतिसुन्दराकृति-
र्विभ्राजमानो विमलाम्बरावृतः।
प्रतप्तचामीकरचारुभूषणो,
व्यदृश्यताग्रे गगने रविर्यथा॥३६

प्रणम्य रामं प्रणतार्तिहारिणं,
भवप्रवाहोपरमं घृणाकरम्।
प्रणम्य भूयः प्रणनाम दण्डवत्,
प्रपन्नसर्वार्तिहरं प्रसन्नधीः॥३७

**प्रणम्येति**—श्रीजानकीरामलक्ष्मणानामभेदं मत्वा विशेषणत्रयेण चतुर्थविशेषण-समुदायपरेण च [1]रामरूपेण सर्वान् प्रणमति प्रणम्येति। प्रणतानामार्तिहारिणं रामं भव-प्रवाहस्य संसारप्रवाहस्य उपरमो निर्वृतिः यद्रूपात्तच्छ्रीजानकी रूपं प्रपन्नानां शरणागतानाम् आचार्यत्वेन प्रपत्त्युपदेशेनार्तिहरं प्रपन्नं कृत्वार्तिहरमित्यर्थः। घृणायाः आकरमुत्पत्ति-स्थानमित्यनेन संसारोद्धरणार्थमेवं लीलां करोषीति ध्वनितम्।३७

---

१. रूपेण इति मदीयपुस्तके।

**विराध उवाच—**

श्रीराम ! राजीवदलायताक्ष !,
विद्याधरोऽहं विमलप्रकाशः।
दुर्वाससा कारणकोपमूर्तिना,
शप्तः पुरा सोऽद्य विमोचितस्त्वया ॥३८॥

एवं नत्वा प्रेमाब्धौ निमग्नः पुनर्लब्धसंज्ञः स्वरक्षस्त्वकारणं वर्णयन् विराध उवाच **श्रीरामेति**–राजीवं कमलं, कारणकोपमूर्तिना कारणेन कोपवन्मूर्तिना, गायमानोऽहं दुर्वाससाऽत्र न गेयतामिति निवारितेऽपि गायन्नेवावोचं भवतैवान्यत्र गम्यतामावयोःसमस्थान-मेतदित्युत्तरदानेन जनितकोपमूर्तिनेत्यर्थः। यद्वा अकारणकोपरूपमूर्तिना तेन सोऽपि त्वत्सदृश इति व्यज्यते। त्वया मोचित इत्यनेन तच्छापोऽनुग्रहादपि श्रेष्ठस्तेन तद्दया-लुतातिशयः सूचितः।३८

इतः परं त्वच्चरणारविन्दयोः,
स्मृतिः सदा मेऽस्तु भवोपशान्तये।
त्वन्नामसंकीर्तनमेव वाणी,
करोतु मे कर्णपुटं त्वदीयम् ॥३९

कथामृतं पातु करद्वयं ते,
पादारविन्दार्चनमेव कुर्यात्।
शिरश्च ते पादयुगप्रणामं,
करोतु नित्यं भवदीयमेवम् ॥४०

**इतः परमिति**–इतः परमित्यादिप्रार्थनया गान्धर्वैश्वर्येण पूर्वं मत्तः मुनिमपमानितवान्। इदानीं दिव्यैश्वर्यप्राप्तौ तादृङ्मतिर्माभूदिति तस्य भयं व्यज्यते।३९-४०।

नमस्तुभ्यं भगवते विशुद्धज्ञानमूर्त्तये।
आत्मारामाय रामाय सीतारामाय वेधसे ॥४१
प्रपन्नं पाहि मां राम ! यास्यामि त्वदनुज्ञया।
देवलोकं रघुश्रेष्ठ ! माया मां मा वृणोतु ते ॥४२
इति विज्ञापितस्तेन प्रसन्नो रघुनन्दनः।
ददौ वरं तदा प्रीतो विराधाय महामतिः ॥४३

**नम इति**–भगवते। 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा। उत्पत्तिं प्रलयञ्चैव भूतानामगतिं गतिम्। वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति।' ऐश्वर्यसम्पन्नाय ऐश्वर्यादिसम्पन्नत्वेन किं प्राकृतवद् विकारवान्नि-त्यत्राह-विशुद्धज्ञानमूर्त्तये। यथा च श्रुतिः-'सत्यं ज्ञानमनन्तं ब्रह्मेति'। एतेन त्वदैश्वर्यमपि

दिव्यम्। आत्मारामाय रामायेति आत्मनि स्वस्वरूपे आरामः क्रीडा येषां ते शुकादयस्तानयते परनारायणादिरूपेण प्राप्नोतीति आत्मारामायः परब्रह्मप्रकाशित्वेन तद्रूपप्रतीत्याऽत्मारामायरामः तस्मै, श्रीसीतारामाय रासे सीतया आ नित्यं रमते इति नित्यविहारिणे इत्यर्थः। वेधसे रासादिलीलाकर्त्रे, स्वाभीष्टं प्रार्थयते प्रपन्नमिति देवलोकं प्रकाशब्रह्मरूपं गन्धर्वलोकभोगं भुञ्जानमपि मां माया त्वल्लोकप्राप्तिप्रतिबन्धकरूपा, मावृणोतु। इतीति–तेन विज्ञापितः प्रसन्नो वरं ददौ। [1]महती उदारा मतिर्यस्येति।४१-४३।

गच्छ विद्याधराशेषमायादोषगुणा जिताः।
त्वया मद्दर्शनात्सद्यो मुक्तो ज्ञानवतां वरः॥४४

**गच्छेति**–वरमेवाह अशेषा मायाया दोषरूपा लोके गुणास्तेन लोके प्रसिद्धा त्वया मद्दर्शनात् जिताः। ज्ञानवतां वरस्त्वं सद्यो मुक्तोऽसीति, क्रममुक्तिं प्रार्थितवते सद्यो मुक्तिदानात् श्रीरामस्य वाञ्छातोऽधिकफलदातृत्वं व्यञ्जितम् तेन प्रहर्षणालङ्कारो व्यक्तः।४४

मद्भक्तिर्दुर्लभा लोके जाता चेन्मुक्तिदा यतः।
अतस्त्वं भक्तिसम्पन्नः परं याहि ममाज्ञया॥४५

रामेण रक्षोनिधनं सुघोरं,
शापाद्विमुक्तिर्वरदानमेवम्।
विद्याधरत्वं पुनरेव लब्धं,
रामं गृणन्नेति नरोऽखिलार्थान्॥४६

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डे प्रथमोऽध्यायः।१

**रामेणेति**–अत्र विद्याधरत्वं विद्याया 'आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मरे' त्युक्तज्ञानरूपाया धरतीति तथा मुक्त इत्यर्थः। अन्यथा पूर्वोक्तसद्योमुक्तिर्विरुध्येत।४६

⊙

[2]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामरण्यकाण्डे
प्रथमोऽध्यायः।१

⊙

---

१. म उदारा इति मदीयपुस्तके। २. इति श्रीमदध्यात्मरामायणे १ रा० व० पु०।

## अथ द्वितीयोऽध्यायः

**श्रीमहादेव उवाच—**

विराधे स्वर्गते रामो लक्ष्मणेन च सीतया।
जगाम शरभङ्गस्य वनं सर्वसुखावहम्॥१

**विराध इति**—अत्र स्वः शब्देनायोध्या। तथा च श्रुतिः—'देवानां पूरयोध्या यस्य हिरण्मयः कोशः स्वर्गो लोको ज्योतिषा प्रतपते इति।१

शरभङ्गस्ततो दृष्ट्वा रामं सौमित्रिणा सह।
आयान्तं सीतया सार्धं सम्भ्रमादुत्थितः सुधीः॥२
अभिगम्य सुसम्पूज्य विष्टरेषूपवेशयत्।
आतिथ्यमकरोत्तेषां कन्दमूलफलादिभिः॥३
प्रीत्याह शरभङ्गोऽपि रामं भक्तपरायणम्।
बहुकालमिहैवासं तपसे कृतनिश्चयः॥४
तव सन्दर्शनाकाङ्क्षी राम! त्वं परमेश्वरः।
अद्य मत्तपसा सिद्धं यत्पुण्यं बहु विद्यते॥
तत्सर्वं तव दास्यामि ततो मुक्तिं व्रजाम्यहम्॥५

**शरभङ्ग इति**—सुधीरिति पदेन श्रीरामाय निजतपःसमर्पणात् तस्य मुक्तिप्राप्त्याकाङ्क्षा व्यञ्जिता।[1] तेन च पापं तु श्रीरामदर्शनादेव प्रक्षीणम्, अवशिष्टं तप आदि पुण्यं तदपि श्रीरामाय निवेदितं ततश्च मुक्त्यधिकारी भवति। तथा च श्रुतिः—यदा विदां पुण्यपापेऽपि निरञ्जनपरमं मत्सात्म्यमुपैतीत्यादि।[2] २-५।

समर्प्य रामस्य महत्सुपुण्य-
फलं विरक्तः शरभङ्गयोगी।
चितिं समारोहयदप्रमेयं,
रामं ससीतं सहसा प्रणम्य॥६

**समर्प्येति**—योगीत्यनेन योगेनैव चितिमुदज्वालयदिति भावः।६

---

१. तः  २. पर्यन्तः नास्ति रा० व० पु०।

ध्यायंश्चिरं राममशेषहृत्स्थं,
दूर्वादलश्याममलमम्बुजाक्षम् ।
चीराम्बरं स्निग्धजटाकलापं,
सीतासहायं सहलक्ष्मणं तम् ॥७

**ध्यायन्निति**–ध्यायन्निति पदेन जटावल्कलधारिणमग्रे पश्यन्नपि नित्यविहारिरूपमेव ध्यायन् देहं जहावित्याशयः ।७

को वा दयालुः स्मृतकामधेनु-
रन्यो जगत्यां रघुनायकादहो ।
स्मृतो मया नित्यमनन्यभाजा,
ज्ञात्वा स्मृतिं मे स्वयमेव यातः ॥८

पश्यत्विदानीं देवेशो रामो दाशरथिः प्रभुः ।
दग्ध्वा स्वदेहं गच्छामि ब्रह्मलोकमकल्मषः ॥९

**पश्यत्विति**–ब्रह्मलोकपदेनात्रायोध्यैव गृह्यते 'ब्रह्मलोके प्रयास्यतीति' मूलरामायणात् अयोध्यां च परब्रह्मेति' स्कान्दाच्च ।९

अयोध्याधिपतिर्मेऽस्तु हृदये राघवः सदा ।
यद्वामाङ्के स्थिता सीता मेघस्येव तडिल्लता ॥१०

इति रामं चिरं ध्यात्वा दृष्ट्वा च पुरतः स्थितम् ।
प्रज्वाल्य सहसा वह्निं दग्ध्वा पञ्चात्मकं वपुः ॥११

दिव्यदेहधरः साक्षाद्ययौ लोकपतेःपदम् ।
ततो मुनिगणाः सर्वे दण्डकारण्यवासिनः ॥
आजग्मू राघवं द्रष्टुं शरभङ्गनिवेशनम् ॥१२

**दिव्यदेहेति**–दिव्यदेहधरः षष्ठशरीरं प्राप्तः लोकपतेः नित्यविहारिश्रीरामस्य पदं ययौ ।१२

दृष्ट्वा मुनिसमूहं तं जानकीरामलक्ष्मणाः ।
प्रणेमुः सहसा भूमौ मायामानुषरूपिणः ॥१३

**दृष्ट्वेति**–मायामानुषरूपिण इति । माया दंभकृपायां चेति विश्वप्रकाशात् माया कृपा तया हेतुना मानुषरूपं नित्यमस्त्येषामिति नित्ययोगमेतत्कृपयैव तादृशं रूपं शरणागतान् दर्शयतीति भावः ।१३

आशीर्भिरभिन्द्याथ रामं सर्वहृदि स्थितम्।
ऊचुः प्राञ्जलयः सर्वे धनुर्बाणधरं हरिम्॥१४
भूमेर्भारावताराय जातोऽसि ब्रह्मणार्थितः।
जानीमस्त्वां हरिं लक्ष्मीं जानकीं लक्ष्मणं तथा॥१५
शेषांशं शङ्खचक्रे द्वे भरतं सानुजं तथा।
अतश्चादौ ऋषीणां त्वं दुःखं मोक्तुमिहार्हसि॥१६

**भूमेरिति**—शेषोऽनन्तोंऽशो यस्य तं लक्ष्मणं जानीमः। सानुजं सशत्रुघ्नं भरतं द्वे शंखचक्रे धारयन्तौ वैकुंठेशभूनारायणाविति जानीमः। रामादिरूपचतुष्टयं धृत्वा नारायणोऽवतीर्ण इति। अन्यथा व्याख्यानेऽत्रैव, [1]'चतुर्धात्मानमेवाऽहं संसृजामीतरयोः पृथगिति 'बभूवतुश्चक्रधरौ दिव्यौ' 'कैकेयीसूनुर्लवणान्तकश्चे' त्युपक्रमोपसंहारौ विरुध्येताम्। वाल्मीकीये च 'कृत्वात्मानं चतुर्विधमिति' 'वैकुण्ठेशस्तु भरतः क्षीराब्धीशश्च लक्ष्मणः। शत्रुघ्नस्तु स्वयं भूमा रामसेवार्थमागता' इति पञ्चरात्रे चोक्तं च विरुध्येत। [2]तस्माल्लक्ष्मणभरतशत्रुघ्नाः शेषशंखचक्रांशा इति कथनं[3] किञ्च गदापद्मयोरप्यंशावतारावनुक्त्वा शंखचक्रयोरेवावतारकथनं तु[4] हास्यास्पदमेव।१५-१६।

आगच्छ यामो मुनिसेवितानि,
वनानि सर्वाणि रघूत्तम! क्रमात्।
द्रष्टुं सुमित्रासुतजानकीभ्यां,
तदा दयास्मासु दृढा भविष्यति॥१७

इति विज्ञापितो रामः कृताञ्जलिपुटैर्विभुः।
जगाम मुनिभिः सार्धं द्रष्टुं मुनिवनानि सः॥१८
ददर्श तत्र पतितान्यनेकानि शिरांसि सः।
अस्थिभूतानि सर्वत्र रामो वचनमब्रवीत्॥१९
अस्थीनि केषामेतानि किमर्थं पतितानि वै।
तमूचुर्मुनयो राम! ऋषीणां मस्तकानि हि॥२०
राक्षसैर्भक्षितानीश! प्रमत्तानां समाधितः।
अन्तरायं मुनीनां ते पश्यन्तोऽनुचरन्ति हि॥२१

---

१. चतुर्धात्मनवे इति मदीयपुस्तके। २. तः ३. पर्यन्तभागस्य स्थाने तस्माल्लक्ष्मण-भरताद्याः शेषशंखचक्राङ्गा इति कथनम् मदीयपुस्तके। ३. तः ४. पर्यन्तः भागः रा० व० पुस्तके नास्ति।

श्रुत्वा वाक्यं मुनीनां स भयदैन्यसमन्वितम्।
प्रतिज्ञामकरोद्रामो वधायाशेषरक्षसाम्॥२२

**श्रुत्वेति**—अस्थिदर्शनदैन्यवचनश्रवणमात्रेणाशेषरक्षसां वधाय प्रतिज्ञामकरोदित्यनेन श्रीरामस्य करुणातिशयो व्यज्यते।२२

पूज्यमानः सदा तत्र मुनिभिर्वनवासिभिः।
जानक्या सहितो रामो लक्ष्मणेन समन्वितः॥२३
उवास कतिचित्तत्र वर्षाणि रघुनन्दनः।
एवं क्रमेण संपश्यन्नृषीणामाश्रमान्विभुः॥२४

**उवासेति**—कतिचिद्वर्षाणि चित्रकूटम् एकं वर्षमुषित्वा[1] शेषद्वे वर्षे उवासेत्यर्थः।२४

सुतीक्ष्णस्याश्रमं प्रागात् प्रख्यातमृषिसङ्कुलम्।
सर्वर्तुगुणसम्पन्नं सर्वकालसुखावहम्॥२५
राममागतमाकर्ण्य सुतीक्ष्णः स्वयमागतः।
अगस्त्यशिष्यो रामस्य मन्त्रोपासनतत्परः॥
विधिवत्पूजयामास, भक्त्युत्कण्ठितलोचनः॥२६

**सूतीक्ष्ण उचाव--**

त्वन्मन्त्रजाप्यहमनन्तगुणाप्रमेय !,
सीतापते ! शिवविरिञ्चिसमाश्रिताङ्घ्रे !
संसारसिन्धुतरणामलपोतपाद !,
रामाभिराम ! सततं तव दासदासः॥२७

मामद्य सर्वजगतामविगोचरस्त्वं,
त्वन्मायया सुतकलत्रगृहान्धकूपे।
मग्नं निरीक्ष्य मलपुद्गलपिण्डमोह-
पाशानुबद्धहृदयं स्वयमागतोऽसि॥२८

**मामद्येति**—सर्वजगतामविषयस्त्वं मां त्वन्मायया सुतकलत्रगृहान्धकूपे मग्नम् अन्यं जनं च निरीक्ष्य अद्य इहागतोऽसि अवाङ्मनसगोचरत्वात् सर्वेषां विरक्तानां

---

१. शद्व वर्षाणि इति मदीयपुस्तके।

गृहस्थानां च अगोचरोऽपि स्वकृपयैव सर्वदृष्टिपथं प्राप्तोऽसीत्याशयः। तेन श्रीरामस्य कारुण्यगुणातिशयो व्यज्यते।२८

त्वं सर्वभूतहृदयेषु कृतालयोऽपि,
त्वन्मन्त्रजाप्यविमुखेषु तनोषि मायाम्।
त्वन्मन्त्रसाधनपरेष्वपयाति माया,
सेवानुरूपफलदोऽसि यथा महीपः॥२९

**त्वमिति**—त्वन्मन्त्रजापविमुखेषु त्वं मायां न तनोषि किं? नैवापि तं स्वयमेव त्वदीयमाया आवृणोति? त्वं तु सर्वभूतकृतालयत्वेन कथमपि स्वाभिमुखं जीवमुद्दिधीर्षु सन् स्थितोऽसि तेन त्वं परमदयालुरेवेति व्यज्यते।२९

विश्वस्य सृष्टिलयसंस्थितिहेतुरेक-
स्त्वं मायया त्रिगुणया विधिरीशविष्णू।
भासीश! मोहितधियां विविधाकृतिस्त्वं,
यद्वद्रविःसलिलपात्रगतो ह्यनेकः॥३०

**विश्वस्येति**—यथा शत्रुभावेन मित्रभावेन राजसेवां कुर्वतां जनानां सेवैव तत्तत्कर्मानुरोधेन फलं ददाति तथा सृष्ट्यादिहेतुः सन् विधिरूपः हररूपः हरिरूपः एकस्त्वमेव भासि। त्रिगुणया मायया मोहितधियां त्वं पूर्वोक्तविविधाकृतिर्भासीति अस्मिन्नर्थे यथा रविरेक एव सन् सलिलपात्रेषु नाना प्रतीयते तद्वत्। तेन यस्य कस्यापि देवस्योपासकः त्वामेव प्राप्नोतीति बोध्यम् 'सौराःशैवाश्च गाणेशा वैष्णवाः शक्तिपूजकाः। मामेव प्राप्नुवन्तीह वर्षापः सागरं यथा॥' इति स्मृतेः।३०

प्रत्यक्षतोऽद्य भवतश्चरणारविन्दं,
पश्यामि राम! तमसः परतः स्थितस्य।
दृग्रूपतस्त्वमसतामविगोचरोऽपि,
त्वन्मन्त्रपूतहृदयेषु सदा प्रसन्नः॥३१

ननु अवाङ्मनसगोचरोऽहं किं देवद्वारैव प्रत्यक्षो भवामीति चेदत आह—**प्रत्यक्षत इति**—दृग्रूपतः दृग्रूपस्य दृष्टेरित्यर्थः सार्वविभक्तिकस्तसिः, अगोचरोऽपि वाङ्मनसागोचरत्वात् दृगविषयो भवसीति शेषः। तेन निजं षष्ठशरीरं दत्त्वा स्वयमेव दृश्यो भवसीत्यर्थः।३१

पश्यामि राम! तव रूपमरूपिणोऽपि,
मायाविडम्बनकृतं सुमनुष्यवेषम्।
कन्दर्पकोटिसुभगं कमनीयचाप-
बाणं दयार्द्रहृदयं स्मितचारुवक्त्रम्॥३२

**पश्यामीति**—ननु प्रत्यक्षे कथमवाङ्मनसगोचरत्वमिति वदेत् तदाह—अरूपिणोऽपि पश्यामीति। वाङ्मनसगोचररूपरहितस्य सर्वेषामुद्धरणार्थं तव मनुष्यवेषं मायाविडम्बनकृतं मायायाः कृपायाः विडम्बनेन प्रत्यक्षस्य प्रत्यक्षानुकरणेन कृतम् आविष्कृतम् आनन्दरूपस्य सुमनुष्यवेषकरणं कृपयैव कारणमिति भावः। स्वरूपं दत्त्वा दृष्ट्यैव दृश्यो भवसीति व्यज्यते। 'ब्रह्मणैव श्यतीति' 'आदत्ते हरिहस्ते' त्यादिश्रुतिस्मृतिभ्यां तेनेदं रूपं भक्तेभ्य एव दर्शयसि नान्येभ्य इति व्यज्यते, 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' इति श्रुतेः।३२

सीतासमेतमजिनाम्बरमप्रधृष्यं,
सौमित्रिणा नियतसेवितपादपद्मम्।
नीलोत्पलद्युतिमनन्तगुणं प्रशान्तं,
मद्भागधेयमनिशं प्रणमामि रामम्॥३३

तदेवाह **सीतेति**—सौमित्रिणा नियतसेवितपादपङ्कजं यस्य राजरूपस्य, राजरूपं तु तत्रैव प्रविष्टं लक्ष्मणादीनां भाग्यसत्त्वात् अजिनाम्बररूपं तु मद्भागधेयम् अस्माकं भाग्यादेव वनं प्रत्यागतं। तेन जीवोद्धारायैव त्वं वनं प्रविष्टो न केवलं रावणवधायेति व्यज्यते। तेन च जीवानामुपरि निर्हेतुकवात्सल्यम्।३३

जानन्तु राम! तव रूपमशेषदेश—
कालाद्युपाधिरहितं घनचित्प्रकाशम्।
प्रत्यक्षतोऽद्य मम गोचरमेतदेव,
रूपं विभातु हृदये न परं विकाङ्क्षे॥३४

**जानन्त्विति**—हे राम! अशेषदेशकालाद्युपाधिरहितम् आनन्दघनचिन्मात्रस्वरूपनित्यविहारिरूपम् अवाङ्मनसगोचरम् केवलं लक्ष्मणादयः जानन्तु, मम हृदये प्रत्यक्षतोऽद्य दृश्यमानं द्विभुजम् अजिनाम्बरमेतदेव रूपं मे विभातु। इतः परमन्यन्न काङ्क्षे, ध्यातुं नेच्छामि। तेन तदेव रूपं तदेवेति व्यज्यते।३४

इत्येवं स्तुवतस्तस्य रामः सुस्मितमब्रवीत्।
मुने! जानामि ते चित्तं निर्मलं मदुपासनात्॥३५

**इत्येवमिति**—सस्मितमब्रवीदित्यनेन नारायणो आवेशेनाऽप्यागतोऽहं तथा त्वं ज्ञातवानिति ध्वनिः। मदुपासनाच्चित्तं निर्मलमित्यनेन [1]सर्वेश्वरेभ्यो ब्रह्मणश्च परं मां मदुपासनातिरिक्तसाधनेन [2]जानामीति व्यङ्ग्यम्।३५

अतोऽहमागतो द्रष्टुं मदृते नान्यसाधनम्।
मन्मन्त्रोपासका लोके मामेव शरणं गताः॥३६
निरपेक्षा नान्यगतास्तेषां दृश्योऽहमन्वहम्।
स्तोत्रमेतत्पठेद्यस्तु त्वत्कृतं मत्प्रियं सदा॥३७
सद्भक्तिर्मे भवेत्तस्य ज्ञानं च विमलं भवेत्।
त्वं ममोपासनादेव विमुक्तोऽसीह सर्वतः॥३८

**निरपेक्षा इति**—निरपेक्षानन्यगतित्वात् ते मामेव सर्वत्र पश्यन्तीति भावः। ३७-३८।

देहान्ते मम सायुज्यं लप्स्यसे नात्र संशयः।
गुरुं ते द्रष्टुमिच्छामि ह्यगस्त्यं मुनिनायकम्॥
किञ्चित् कालं तत्र वस्तुं मनो मे त्वरयत्यलम्॥३९

**देहान्त इति**—देहान्ते शरीरस्य नष्टे जाते सायुज्यं सहयोगः सखीरूपेण रासमण्डले मम सन्निधौ स्थास्यसि-इत्याशयः। किञ्चित् कालं तत्र वस्तुमित्यनेन तस्योपासकप्रवरत्वं व्यक्तम्।३९

सुतीक्ष्णोऽपि तथेत्याह श्वो गमिष्यसि राघव!।
अहमप्यागमिष्यामि चिराद् दृष्टो महामुनिः॥४०
अथ प्रभाते मुनिना समेतो,
रामः ससीतः सह लक्ष्मणेन।
अगस्त्यसम्भाषणलोलमानसः,
शनैरगस्त्यानुजमन्दिरं ययौ॥४१

---

१. सर्वेभ्यो ब्रह्मणः इति मत्पुस्तके। २. जानातीति मदीयपुस्तके।

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे अरण्यकाण्डे द्वितीयोऽध्यायः ।२

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां व्यङ्ग्यप्रकाशिकायामरण्यकाण्डे द्वितीयोऽध्यायः ।२

⊙



१. काऽपि पुष्पिका नास्ति रा० व० पु०।

## अथ तृतीयोऽध्यायः

**श्रीमहादेव उवाच—**

अथ रामः सुतीक्ष्णेन जानक्या लक्ष्मणेन च।
अगस्त्यस्यानुजस्थानं मध्याह्ने समपद्यत ॥१

**अथेति**—अगस्त्यानुजस्य अग्निजिह्वनाम्नः। तस्यैव सुदर्शनेत्यपि नाम।१

तेन सम्पूजितः सम्यग्भुक्त्वा मूलफलादिकम्।
परेद्युः प्रातरुत्थाय जग्मुस्तेऽगस्त्यमण्डलम् ॥२
सर्वर्तुफलपुष्पाढ्यं नानामृगगणैर्युतम्।
पक्षिसङ्घैश्च विविधैर्नादितं नन्दनोपमम् ॥३
ब्रह्मर्षिभिर्देवर्षिभिः सेवितं मुनिमन्दिरैः।
सर्वतोऽलंकृतं साक्षाद् ब्रह्मलोकमिवापरम् ॥४
बहिरेवाश्रमस्याथ स्थित्वा रामोऽब्रवीन्मुनिम्।
सुतीक्ष्ण! गच्छ त्वं शीघ्रमागतं मां निवेदय ॥५
अगस्त्यमुनिवर्याय सीतया लक्ष्मणेन च।
महाप्रसाद इत्युक्त्वा सुतीक्ष्णः प्रययौ गुरोः ॥६
आश्रमं त्वरया तत्र ऋषिसङ्घसमावृतम्।
उपविष्टं रामभक्तैर्विशेषेण समायुतम् ॥७
व्याख्यातराममन्त्रार्थं शिष्येभ्यश्चातिभक्तितः।
दृष्ट्वागस्त्यं मुनिश्रेष्ठं सुतीक्ष्णः प्रययौ मुनेः ॥८
दण्डवत्प्रणिपत्याह विनयावनतः सुधीः।
रामो दाशरथिर्ब्रह्मन्! सीतया लक्ष्मणेन च ॥
आगतो दर्शनार्थं ते बहिस्तिष्ठति साञ्जलिः ॥९

**अगस्त्य उवाच—**

शीघ्रमानय भद्रं ते रामं मम हृदि स्थितम्।
तमेव ध्यायमानोऽहं काङ्क्षमाणोऽत्र संस्थितः ॥१०

इत्युक्त्वा स्वयमुत्थाय मुनिभिः सहितो द्रुतम्।
अभ्ययात्परया भक्त्या गत्वा राममथाब्रवीत्॥११
आगच्छ राम! भद्रं ते दिष्ट्या तेऽद्य समागमः।
प्रियातिथिर्मम प्राप्तोऽस्यद्य मे सफलं दिनम्॥१२

**शीघ्रमानयेति**—रामं हृदि स्थितं शीघ्रमानयेत्युक्त्वा स्वयमेवाभ्ययादित्यनेन दाशरथिरागत इत्युक्तेस्तस्य नित्यविहारिणोऽन्यत्र गमनासंभवात् आनयेत्युक्तं स्वयं न गतः। पुनः नित्यविहारिण आवेशं गृहीत्वा परनारायण एव श्रीरामरूपेणागत इति ध्यायमानः स्वयमेव जगामेति भावः।१०-१२।

रामोऽपि मुनिमायान्तं दृष्ट्वा हर्षसमाकुलः।
सीतया लक्ष्मणेनापि दण्डवत्पतितो भुवि॥१३
द्रुतमुत्थाप्य मुनिराड्राममालिङ्ग्य भक्तितः।
तद्गात्रस्पर्शजाह्लादस्रवन्नेत्रजलाकुलः ॥१४

**द्रुतमिति**—तद्गात्रस्पर्शेत्यादिना मुनेः श्रीरामविषयकप्रेमातिशयो व्यज्यते।१४

गृहीत्वा करमेकेन करेण रघुनन्दनम्।
जगाम स्वाश्रमं हृष्टो मनसा मुनिपुङ्गवः॥१५
सुखोपविष्टं सम्पूज्य पूजया बहुविस्तरम्।
भोजयित्वा यथान्यायं भोज्यैर्वन्यैरनेकधा॥१६
सुखोपविष्टमेकान्ते रामं शशिनिभाननम्।
कृताञ्जलिरुवाचेदमगस्त्यो भगवानृषिः॥१७
त्वदागमनमेवाहं प्रतीक्षन्समवस्थितः।
यदा क्षीरसमुद्रान्ते ब्रह्मणा प्रार्थितः पुरा॥१८
भूमेर्भारापनुत्त्यर्थं रावणस्य वधाय च।
तदादि दर्शनाकाङ्क्षी तव राम! तपश्चरन्॥
वसामि मुनिभिः सार्धं त्वामेव परिचिन्तयन्॥१९
सृष्टेः प्रागेक एवासीर्निर्विकल्पोऽनुपाधिकः।
त्वदाश्रया त्वद्विषया माया ते शक्तिरुच्यते॥२०

**सृष्टेरिति**—सृष्टेः प्रागेकः अविभक्तनामरूपचिदचित्प्रपञ्चं स्वस्मिन्नेकीकृत्य प्रलये एक एवासीः त्वदाश्रया त्वच्चिच्छक्त्याधारा त्वद्विषया त्वच्छरीरभूतजडशक्तिविषया।२०

त्वामेव निर्गुणं शक्तिरावृणोति यदा तदा।
अव्याकृतमिति प्राहुर्वेदान्तपरिनिष्ठिताः॥२१

**त्वामेवेति**—त्वामिति षष्ठ्यर्थे द्वितीया। त्वच्छरीरभूतं निर्गुणम् अनुमित्यज्ञान-गुणं समष्ट्यात्मकं जीवं [1]चिच्छक्ति [2]त्वदचित्‌शक्तिरावृणोति यदा [3]तदा तद्विशिष्ट-शक्तिमेवाव्याकृतमिति प्राहुः।२१

मूलप्रकृतिरित्येके प्राहुर्मायेति केचन।
अविद्या संसृतिर्बन्ध इत्यादि बहुधोच्यते॥२२

**मूलप्रकृतिरिति**—या जीवमावृणोति तां बहुधा वर्णयन्तीत्याह केचनेत्यादि।२२

त्वया संक्षोभ्यमाणा सा महत्तत्त्वं प्रसूयते।
महत्तत्त्वादहङ्कारस्त्वया संचोदितादभूत्॥२३

अहङ्कारो महत्तत्त्वसंवृतस्त्रिविधोऽभवत्।
सात्त्विको राजसश्चैव तामसश्चेति भण्यते॥२४

तामसात्सूक्ष्मतन्मात्राण्यासन् भूतान्यतः परम्।
स्थूलानि क्रमशो राम! क्रमोत्तरगुणानि ह॥२५

राजसानीन्द्रियाण्येव सात्त्विका देवता मनः।
तेभ्योऽभवत्सूत्ररूपं लिङ्गं सर्वगतं महत्॥२६

ततो विराट् समुत्पन्नः स्थूलाद् भूतकदम्बकात्।
विराजः पुरुषात् सर्वं जगत्स्थावरजङ्गमम्॥२७

देवतिर्यङ्मनुष्याश्च कालकर्मक्रमेण तु।
त्वं रजोगुणतो ब्रह्मा जगतः सर्वकारणम्॥२८

सत्त्वाद्विष्णुस्त्वमेवास्य पालकः सद्भिरुच्यते।
लये रुद्रस्त्वमेवास्य त्वन्माया गुणभेदतः॥२९

**त्वयेति**—त्वया संक्षोभ्यमाणेत्यारभ्य त्वन्माया गुणभेदत इत्यन्तश्लोकाः स्पष्टाः। २३-२९।

---

१. नास्ति रा० व० पु०। २. चित् शक्तिरावृणोति रा० व० पु। ३. तदेति नास्ति रा० व० पु०।

जाग्रत्स्वप्नसुषुप्त्याख्या वृत्तयो बुद्धिजैर्गुणैः ।
तासां विलक्षणो राम ! त्वं साक्षी चिन्मयोऽव्ययः ।।३०

**जाग्रदिति**—तासां जाग्रदादिवृत्तीनां त्वमेवान्तर्यामिरूपेण साक्षीत्यर्थः। विलक्षण-जाग्रत्स्वप्नादिसप्ताज्ञानभूमिकाभिन्नः चिन्मयः चित्स्वरूपः अविनाशी ।३०

सृष्टिलीलां यदा कर्तुमीहसे रघुनन्दन ! ।
अङ्गीकरोषि मायां त्वं तदा वै गुणवानिव ।।३१

**सृष्टिलीलामिति**—सृष्टिलीलां कर्तुमीहसे यदा तदा ब्रह्मरूपेण मायामङ्गीकरोषि, गुणवानिव भवसीति शेषः। नित्यविहारिरूपेण तु श्रीमदयोध्यायामेव सदा तिष्ठती-त्यभिप्रायः ।३१

राम ! माया द्विधा भाति विद्याऽविद्येति ते सदा ।
प्रवृत्तिमार्गनिरता वेदान्तार्थविचारकाः ।।३२
त्वद्भक्तिनिरता ये च ते वै विद्यामयाः स्मृताः ।
अविद्यावशगा ये तु नित्यं संसारिणश्च ते ।।
विद्याभ्यासरता ये तु नित्यमुक्तास्त एव हि ।।३३

**त्वद्भक्तीति**—त्वद्भक्तिनिरताः सगुणभक्तिपराः ते विद्याप्रचुराः। पूर्वं ये विद्याभ्यासेन त्वदनुरागरूपनिर्गुणां भक्तिं प्राप्ता ते नित्यं मुक्ता एव ।३३

लोके त्वद्भक्तिनिरतास्त्वन्मन्त्रोपासकाश्च ये ।
विद्या प्रादुर्भवेत्तेषां नेतरेषां कदाचन ।।३४

विद्या कथं निष्पद्यत इत्याकाङ्क्षायां तत्प्रकारमाह **लोके त्वद्भक्ति इति**—त्वद्-भक्तिनिरताः त्वच्छगुणभक्तिनिरताः[१] ।३४

अतस्त्वद्भक्तिसम्पन्ना मुक्ता एव न संशयः ।
त्वद्भक्त्यमृतहीनानां मोक्षःस्वप्नेऽपि नो भवेत् ।।३५
किं राम ! बहुनोक्तेन सारं किञ्चिद् ब्रवीमि ते ।
साधुसङ्गतिरेवात्र मोक्षहेतुरुदाहृता ।।३६

---

१. 'अनुरागरूपनिर्गुणभक्तिम्' इत्यंशः अधिको मदीयपुस्तके दृश्यते । स चात्रा-प्रासङ्गिकः ।

साधवः समचित्ता ये निःस्पृहा विगतैषिणः।
दान्ताः प्रशान्तास्त्वद्भक्ता: निवृत्ताखिलकामनाः।।३७

इष्टप्राप्तिविपत्त्योश्च समाः सङ्गविवर्जिताः।
संन्यस्ताखिलकर्माणः सर्वदा ब्रह्मतत्पराः।।३८

पूर्वोक्तनिर्गुणभक्तिफलमुपसंहरति **अत इत्यादिना**—किमिति। साधुलक्षणमाह-साधव इति। ३५-३८।

यमादिगुणसम्पन्नाः सन्तुष्टा येन केनचित्।
सत्सङ्गमो भवेद्यर्हि त्वत्कथाश्रवणे रतिः।।३९

**यमेति**—यर्हि यदा त्वत्कथाश्रवणे निष्ठा ततो रतिः ततो भावस्ततः प्रेमा तत्र श्रवणादिषु नैश्चल्यं लयाद्यभावरूपं निष्ठाध्याने स्वस्वरूपेष्टरूपगोचरत्वं, रतिः देहेन्द्रियाणां भगवच्चेष्टाकारत्वं भावं प्रेमा परानुरक्तिः 'सा परानुरक्तिरीश्वरे' इति शाण्डिल्यसूत्रात्। 'आदौ श्रद्धा ततः साधुसङ्गोऽथ भजनक्रिया। ततोऽनर्थनिवृत्तिः स्यात्ततो निष्ठा रुचिस्ततः। अथाऽऽसक्तिस्ततो भावस्ततः प्रेमाऽभ्युदञ्चति। साधकानामयं प्रेम्णः प्रादुर्भावे भवेत् क्रमः।।' इति भक्तिरसामृतसिन्धूक्तेः।३९

समुदेति ततो भक्तिस्त्वयि राम! सनातने।
त्वद्भक्तावुपपन्नायां विज्ञानं विपुलं स्फुटम्।।४०

**समुदेतीति**—ततो भक्तिः प्रेमेत्यर्थः। त्वत्प्रेमभक्तौ सिद्धायां सत्यां विपुलं विज्ञानं विशेषज्ञानं साक्षात्कारः। तथा च स्मृतिः 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्।। भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।।' इति। ततो प्रेमैव रसरूपा भवति। रसश्च शान्तदास्यसख्यवात्सल्यप्रियतेति पञ्चधा मुख्यः, हास्याद्भुतवीरकरुणरौद्रभयानकबीभत्सभेदात् गौणः सप्तविधः। एवं द्वादशधा। तेन भक्तः तव लोके प्रविश्य द्वादशविधहरिलीलारसे निमग्नो भवतीति ध्वनिः।४०

उदेति मुक्तिमार्गोऽयमाद्यश्चतुरसेवितः।
तस्माद्राघव! सद्भक्तिस्त्वयि मे प्रेमलक्षणा।।४१

सदा भूयाद्धरे! सङ्गस्त्वद्भक्तेषु विशेषतः।
अद्य मे सफलं जन्म भवत्सन्दर्शनादभूत्।।४२

अद्य मे क्रतवः सर्वे बभूवुः सफलाः प्रभो!।
दीर्घकालं मया तप्तमनन्यमतिना तपः॥
तस्येह तपसो राम! फलं तव पदार्चनम्॥४३

सदा मे सीतया सार्धं हृदये वस राघव!।
गच्छतस्तिष्ठतो वापि स्मृतिः स्यान्मे सदा त्वयि॥४४

**अद्येति**—तपसः फलं तव पदार्चनमेव। तेन जीवन्मुक्तनित्यमुक्तानां तव प्रेमैव मुख्यं फलमिति भावः। सीतया सार्द्धं मम हृदये वसेत्येतेन विहारिरूपेण मम हृदये वसेति ध्वनितम्। ४३-४४।

इति स्तुत्वा रमानाथमगस्त्यो मुनिसत्तमः।
ददौ चापं महेन्द्रेण रामार्थे स्थापितं पुरा॥४५

**इति स्तुत्वेति**—रमानाथं रामावेशयुतरामरूपनारायणम् इति। परशुरामाद् यद्धनुर्गृहीत्वा श्रीरामेण वरुणाय दत्तं देवेन्द्रेणागस्त्याय दत्तं तदेवाह-रामार्थे स्थापितमिति।४५

अक्षय्यौ बाणतूणीरौ खड्गो रत्नविभूषितः।
जहि राघव! भूभारभूतं राक्षसमण्डलम्॥४६

यदर्थमवतीर्णोऽसि मायया मनुजाकृतिः।
इतो योजनयुग्मे तु पुण्यकाननमण्डितः॥४७

**यदर्थमिति**—मायया कृपया मनुजाकृतिः तदावेशयुक्तत्वादिति भावः। 'परमात्मा नराकृतिरिति' स्मृतेः।४७

अस्ति पञ्चवटीनाम्ना आश्रमो गौतमीतटे।
नेतव्यस्तत्र ते कालः शेषो रघुकुलोद्वह! ॥
तत्रैव बहुकार्याणि देवानां कुरु सत्पते! ॥४८

**अस्तीति**—कालः वर्षद्वयात्मकः तत्र नेयः। अवशिष्टेन [1]एकवर्षेण देवतानां बहुकार्याणि रावणादिवधरूपाणि कुरु।४८

---

१. एकवता नार्याणि वधयाणि कुरु इति मदीये पुस्तके।

श्रुत्वा तदागस्त्यसुभाषितं वचः,
स्तोत्रं च तत्त्वार्थसमन्वितं विभुः।
मुनिं समाभाष्य मुदान्वितो ययौ,
प्रदर्शितं मार्गमशेषविद्धरिः॥४९

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डे तृतीयोऽध्यायः।३

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामरण्यकाण्डे
तृतीयोऽध्यायः।३

---

१. इति ध्वनिप्रकाशिकायां तृतीयोऽध्यायः। रा० व० पु०।

## अथ चतुर्थोऽध्यायः

**श्रीमहादेव उवाच----**

मार्गे व्रजन् ददर्शाथ शैलशृङ्गमिव स्थितम्।
वृद्धं जटायुषं रामः किमेतदिति विस्मितः॥१

धनुरानय सौमित्रे! राक्षसोऽयं पुरः स्थितः।
इत्याह लक्ष्मणं रामो हनिष्याम्यृषिभक्षकम्॥२

तच्छ्रुत्वा रामवचनं गृध्रराड् भयपीडितः।
वधार्होऽहं न ते राम! पितुस्तेऽहं प्रियः सखा॥३

जटायुर्नाम भद्रं ते गृध्रोऽहं प्रियकृत्तव॥४

पञ्चवट्यामहं वत्स्ये तवैव प्रियकाम्यया।
मृगयायां कदाचित्तु प्रयाते लक्ष्मणेऽपि च॥५

सीता जनककन्या मे रक्षितव्या प्रयत्नतः।
श्रुत्वा तद्गृध्रवचनं रामः सस्नेहमब्रवीत्॥६

**मार्गे इति**---एतेन यत्प्राप्तिकामस्त्वं स एव राक्षसमूलनाशकोऽहं प्राप्तः इत्यन्यसन्निधिवैशिष्ट्येन तस्मै श्रावितमिति व्यङ्ग्यम्।१-६।

साधु गृध्रमहाराज! तथैव कुरु मे प्रियम्।
अत्रैव मे समीपस्थो नातिदूरे वने वसन्॥७

**साधु गृध्रेति**---अत्रैव नातिदूरे इत्यनेन जानकीं रक्षन्नातिदूरे तिष्ठेति अत्र समीपं च मा तिष्ठेति तेन तस्य पितृसखत्वात् तस्मात् संकोचो व्यज्यते।७

इत्यामन्त्रितमालिङ्ग्य ययौ पञ्चवटीं प्रभुः।
लक्ष्मणेन सह भ्रात्रा सीतया रघुनन्दनः॥८

गत्वा ते गौतमीतीरं पञ्चवट्यां सुविस्तरम्।
मन्दिरं कारयामास लक्ष्मणेन सुबुद्धिना॥९

तत्र ते न्यवसन् सर्वे गङ्गाया उत्तरे तटे।
कदम्बपनसाम्रादिफलवृक्षसमाकुले ॥१०
विविक्ते जनसम्बाधवर्जिते नीरुजस्थले।
विनोदयन् जनकजां लक्ष्मणेन विपश्चिता॥११
अध्युवास सुखं रामो देवलोक इवापरः।
कन्दमूलफलादीनि लक्ष्मणोऽनुदिनं तयोः॥१२
आनीय प्रददौ रामसेवातत्परमानसः।
धनुर्बाणधरो नित्यं रात्रौ जागर्ति सर्वतः॥१३
स्नानं कुर्वन्त्यनुदिनं त्रयस्ते गौतमीजले।
उभयोर्मध्यगा सीता कुरुते च गमागमौ॥१४
आनीय सलिलं नित्यं लक्ष्मणः प्रीतमानसः।
सेवतेऽहरहः प्रीत्या एवमासन् सुखं त्रयः॥१५
एकदा लक्ष्मणो राममेकान्ते समुपस्थितम्।
विनयावनतो भूत्वा पप्रच्छ परमेश्वरम्॥१६
भगवन्! श्रोतुमिच्छामि मोक्षस्यैकान्तिकीं गतिम्।
त्वत्तः कमलपत्राक्ष! संक्षेपाद् वक्तुमर्हसि॥१७
ज्ञानं विज्ञानसहितं भक्तिवैराग्यबृंहितम्।
आचक्ष्व मे रघुश्रेष्ठ! वक्ता नान्योऽस्ति भूतले॥१८

**श्रीराम उवाच—**

शृणु वक्ष्यामि ते वत्स! गुह्याद् गुह्यतरं परम्।
यद्विज्ञाय नरो जह्यात्सद्यो वैकल्पिकं भ्रमम्॥१९

**शृणु इति**—नरो यद्विज्ञाय वैकल्पिकं भ्रमं जह्यादित्यस्य त्वं तु मम मूर्तिरेव यद्यन्यस्य वैकल्पिको भ्रमः स्यात्तर्हि स सद्यो निवर्तेत तेन श्रीलक्ष्मणस्य जीवेषु दयालुत्वं व्यज्यते।१९

आदौ मायास्वरूपं ते वक्ष्यामि तदनन्तरम्।
ज्ञानस्य साधनं पश्चाज्ज्ञानं विज्ञानसंयुतम्॥२०
ज्ञेयं च परमात्मानं यज्ज्ञात्वा मुच्यते भयात्।
अनात्मनि शरीरादावात्मबुद्धिस्तु या भवेत्॥२१

सैव माया तयैवासौ संसारः परिकल्प्यते।
रूपे द्वे निश्चिते पूर्वं मायायाः कुलनन्दन! ॥२२

**ज्ञेयञ्चेति**—अनात्मनि आत्मभिन्ने शरीरादौ। आदिनेन्द्रियमनश्चित्ताहङ्कारादयो गृह्यन्ते। अत्रात्मबुद्धिः देह एवात्मेतिबुद्धिर्या तयैवाहंममादिरूपः संसारः। शरीरादितरं च तस्याः मायायाः च रूपे। २१-२२।

विक्षेपावरणे तत्र प्रथमं कल्पयेज्जगत्।
लिङ्गाद्यं ब्रह्मपर्यन्तं स्थूलसूक्ष्मविभेदतः॥२३

ते आह—**विक्षेपावरणे इति**—प्रथमं विक्षेपशक्तिरूपं महदादि ब्रह्मपर्यन्तं जगत् कल्पयेत्। चित्तं तत्र प्रवृत्य संसारं कल्पयेत्।२३

अपरं त्वखिलं ज्ञानरूपमावृत्य तिष्ठति।
मायया कल्पितं विश्वं परमात्मनि केवले॥२४

द्वितीयस्वरूपमाह **अपरमिति**—आवरणशक्तिरूपम् अखिलं चिदचिदात्मकं सर्वं जगत् श्रीरामशरीरमिति नित्यायोध्याविहारिश्रीरामज्ञानमावृत्य तिष्ठति। केवले चिद्रूपे परमात्मनि सति विश्वं सरित्समुद्रादिरूपं सर्वं मायया कल्पितम्।२४

रज्जौ भुजङ्गवद् भ्रान्त्या विचारे नास्ति किञ्चन।
श्रूयते दृश्यते यद्यत्स्मर्यते वा नरैः सदा॥२५

दृष्टान्तमाह **रज्जाविति**—भ्रान्त्या यथा रज्जौ भुजङ्गप्रतीतिस्तथा भ्रान्त्यैवेयं सरिदयं समुद्र इत्यादिप्रतीतिः। विचारे सति तत्सर्वं चिज्जगत् श्रीरामशरीरम्। ततोऽतिरिक्तं नास्ति किञ्चिदिति।२५

असदेव हि तत्सर्वं यथा स्वप्नमनोरथौ।
देह एव हि संसारवृक्षमूलं दृढं स्मृतम्॥२६
तन्मूलः पुत्रदारादिबन्धः किं तेऽन्यथात्मनः॥२७

**तन्मूल इति**—अन्यथा 'देहाभावे[1] ते पुत्रादय आत्मनः किं भवन्ति न किमपीत्यर्थः।२७

देहस्तु स्थूलभूतानां पञ्च तन्मात्रपञ्चकम्।
अहङ्कारश्च बुद्धिश्च इन्द्रियाणि तथा दश॥२८

---

१. गृहाभावे इति मदीयपु०।

चिदाभासो मनश्चैव मूलप्रकृतिरेव च।
एतत्क्षेत्रमिति ज्ञेयं देह इत्यभिधीयते॥२९

देहं विशिनष्टि **चिदाभास**[1]इति—मनो मूलप्रकृतिरेतत्सर्वं क्षेत्रं तदेव देह इत्युच्यते।२९

एतैर्विलक्षणो जीवः परमात्मा निरामयः।
तस्य जीवस्य विज्ञाने साधनान्यपि शृणु॥३०

**एतैरिति**—एतैर्देहादिभिर्विलक्षणो भिन्नः जीवः परमात्मा च। तस्य जीवब्रह्मपरमात्मविषयकविज्ञाने साधनानि मत्तः शृणु।३०

जीवश्च परमात्मा च पर्यायो नात्र भेदधीः।
मानाभावस्तथा दम्भहिंसादिपरिवर्जनम्॥३१
पराक्षेपादिसहनं सर्वत्रावक्रता तथा।
मनोवाक्कायसद्भक्त्या सद्गुरोः परिसेवनम्॥३२
बाह्याभ्यन्तरसंशुद्धिः स्थिरता सत्क्रियादिषु।
मनोवाक्कायदण्डश्च विषयेषु निरीहता॥३३

नन्वयमात्मा ब्रह्मेत्यादिश्रुतेस्तयोरैक्यात्कथं द्वयोर्भेद अत आह **जीव इत्यादि**—जीवः परमात्मा चेति पर्याय इति न यतो मानाभावः। नात्र विस्पष्टं किञ्चित्प्रमाणमस्ति तस्मात्, तथात्र भेदधीर्निश्चितेति, सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा। न चायमात्मेत्यादिश्रुतयो विरुध्येरन् इति वाच्यं, जीवात्मनोर्बृंहणत्वपरमात्मशरीरत्वप्रतिपादनपरत्वेन तासां चारितार्थ्यात् भेदव्यपदेशाच्च अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यादि सर्वे शब्दाः प्रयुज्यन्ते। सति भेदेऽपि वस्तुष्वित्यादि श्रुतिसूत्रस्मृतिभ्यश्च, तस्माज्जीवपरमात्मनोः पर्याय इत्यत्र मानाभाव एव साधनान्याह दम्भेत्यादि।३१-३३।

निरहङ्कारता जन्मजराद्यालोचनं तथा।
असक्तिः स्नेहशून्यत्वं पुत्रदारधनादिषु॥३४
इष्टानिष्टागमे नित्यं चित्तस्य समता तथा।
मयि सर्वात्मके रामे ह्यनन्यविषया मतिः॥३५

**इष्टानिष्टेति**—सर्वसाधनानां फलमाह मयीति—सर्वात्मके मयीत्येव वक्तव्ये रामे इत्यधिकोक्तिः नित्यविहारिणि श्रीरामे स्वस्याभेदाभिप्रायेण। अविषये सर्वत्र चिदग्रहः श्रीराम एवेत्येतद्विषया।३५

---

१. चिदाभासत देह इत्यर्थः मदीयपु०।

जनसम्बाधरहितशुद्धदेशनिषेवणम् ।
प्राकृतैर्जनसंघैश्च ह्यरतिः सर्वदा भवेत् ॥ ३६

आत्मज्ञाने सदोद्योगो वेदान्तार्थावलोकनम् ।
उक्तैरेतैर्भवेज्ज्ञानं विपरीतैर्विपर्ययः ॥ ३७

सिंहावलोकनेन पुनः साधनानि वदति **जनसंबाधेत्यादि** ।३६-३७।

बुद्धिप्राणमनोदेहाहङ्कृतिभ्यो विलक्षणः ।
चिदात्माहं नित्यशुद्धो बुद्ध एवेति निश्चयम् ॥ ३८

येन ज्ञानेन संवित्ते तज्ज्ञानं निश्चितं च मे ।
विज्ञानं च तदैवैतत्साक्षादनुभवेद्यदा ॥ ३९

आत्मा सर्वत्र पूर्णः स्याच्चिदानन्दात्मकोऽव्ययः ।
बुद्ध्याद्युपाधिरहितः परिणामादिवर्जितः ॥ ४०

स्वप्रकाशेन देहादीन् भासयन्ननपावृतः ।
एक एवाद्वितीयश्च सत्यज्ञानादिलक्षणः ॥ ४१

**बुद्धिप्राणेति**—यदा मद्रूपं साक्षादनुभवेत्तदैतदेव मे विज्ञानं भवति। आत्मा नित्यविहारिप्रकाशात्मा सर्वत्र पूर्णः व्याप्तः प्राकृतबुद्ध्यादिसर्वोपाधिरहितः स्वप्रकाशेन देहान् भासयन् स्थितः। अद्वितीयः समाधिकरहितः एकः चिदचिद्विग्रहत्वेन सजातीयविजातीयरहितः। एवकारेण स्वगतभेदशून्यः विग्रहत्वेन तु भेदोऽस्त्येव ।३८-४१।

असङ्गः स्वप्रभो द्रष्टा विज्ञानेनावगम्यते ।
आचार्यशास्त्रोपदेशादैक्यज्ञानं यदा भवेत् ॥ ४२

आत्मनोर्जीवपरयोर्मूलाविद्या तदैव हि ।
लीयते कार्यकरणैः सहैव परमात्मनि ॥ ४३

**असङ्ग इति**—द्रष्टा साक्षीत्यनयोः आत्मपदवाच्ययोः जीवपरयोः जीवपरमात्मनोः आचार्यगुरूपदेशात् ऐक्यज्ञानं चित्त्वेन यदा उत्पद्यते तदा परमात्मनि चिद्विग्रहिणि विचारितेति शेषः। मूलाविद्या चिदचिद्विग्रहिश्रीरामाज्ञानं नश्यति यदा मूलाविद्या ब्रह्माहमस्मीत्येवं रूपज्ञानरूपा परमात्मनि चिदचिद्विग्रहिणि रामे विचारिते सति शरीर-शरीरिभेदज्ञाने लीयते नश्यति ।४२-४३।

साऽवस्था मुक्तिरित्युक्ता ह्युपचारोऽयमात्मनि।
इदं मोक्षस्वरूपं ते कथितं रघुनन्दन! ॥४४
ज्ञानविज्ञानवैराग्यसहितं मे परात्मनः।
किन्त्वेतद्दुर्लभं मन्ये मद्भक्तिविमुखात्मनाम् ॥४५

**साऽवस्थेति**—सा मूलाविद्यानाशरूपावस्था मुक्तिः। आत्मनि जीवे उपचारः गौणी मुख्या तु षष्ठशरीरप्राप्त्यन्तरभाविनी। सा च मद्भक्तिविमुखस्य दुर्लभा।४४-४५।

चक्षुष्मतामपि यथा रात्रौ सम्यङ्‌ न दृश्यते।
पदं दीपसमेतानां दृश्यते सम्यगेव हि॥४६
एवं मद्भक्तियुक्तानामात्मा सम्यक् प्रकाशते।
मद्भक्तेः कारणं किञ्चिद् वक्ष्यामि शृणु तत्त्वतः॥४७
मद्भक्तसङ्गमः सेवा मद्भक्तानां निरन्तरम्।
एकादश्युपवासादि मम पर्वानुमोदनम्॥४८
मत्कथाश्रवणे पाठे व्याख्याने सर्वदा रतिः।
मत्पूजापरिनिष्ठा च मम नामानुकीर्तनम्॥४९
एवं सततयुक्तानां भक्तिरव्यभिचारिणी।
मयि सञ्जायते नित्यं ततः किमवशिष्यते॥५०
अतो मद्भक्तियुक्तस्य ज्ञानं विज्ञानमेव च।
वैराग्यं च भवेच्छीघ्रं ततो मुक्तिमवाप्नुयात्॥५१

**अत इति**—मद्भक्तियुक्तस्य साधनभक्तियुक्तस्य ज्ञानं वाक्यजन्यं ततो विज्ञानं स्वपरस्वरूपविशेषज्ञानं ततो वैराग्यं वशीकाराख्यं सर्वत्र सर्वाभिलाषनिवृत्तिः स्वरूप एवानुरागात् ततो मुक्तिः, षष्ठशरीररूपा 'मुक्तस्य विग्रहलाभ' इति श्रुतेः।५१

कथितं सर्वमेतत्ते तव प्रश्नानुसारतः।
अस्मिन् मनः समाधाय यस्तिष्ठेत् स तु मुक्तिभाक्॥५२
न वक्तव्यमिदं यत्नान्मद्भक्तिविमुखाय हि।
मद्भक्ताय प्रदातव्यमाहूयापि प्रयत्नतः॥५३
य इदं तु पठेन्नित्यं श्रद्धाभक्तिसमन्वितः।
अज्ञानपटलध्वान्तं विधूय परिमुच्यते॥५४

भक्तानां मम योगिनां सुविमलस्वान्तातिशान्तात्मनां,
मत्सेवाभिरतात्मनां च विमलज्ञानात्मनां सर्वदा।
सङ्गं यः कुरुते सदोद्यतमतिस्तत्सेवनानन्यधी-
र्मोक्षस्तस्य करे स्थितोऽहमनिशं दृश्यो भवे नान्यथा॥५५

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डे चतुर्थोऽध्यायः।४

एवं षष्ठशरीरं प्राप्तस्य जीवन्मुक्तस्य स्थितिमाह **भक्तानामिति—भक्तानां** मत्कृपालब्धषष्ठशरीरेण श्रवणादिनवविधभक्तिकर्तॄणां योगिनां मयि रागात्मक-भक्तियोगयुक्तानाम् अत एव सुविमलस्वान्तातिशान्तात्मनां सुविमले स्वान्ते हृदये अतिशान्तः आत्मा जीवो येषां ते तेषाम् अनेन तेषां मया सह द्वादशविधलीलारसानन्दा-नुभवेन आनन्दातिशयो व्यज्यते। विमलज्ञानात्मनां विमलज्ञानस्वरूपम् आत्मा षष्ठशरीरं येषाम् एतादृशानां जीवन्मुक्तानां सर्वदा यः सङ्गं कुरुते सदोद्यतमतिः सदा उद्यता तत्सङ्गे वर्धमाना मतिर्यस्य सः पुनः न केवलं तत्सङ्गे उद्यतमतिः किन्तु तत्सङ्गप्रभावात् सेवनान-न्यधीः[1] अन्येषामप्राप्तषष्ठशरीराणामपि सतां सेवने अनन्या [2]धीर्यस्य सः एवं भूतस्य मद्भक्तस्य करे मोक्षः स्थितः। [3]अप्राप्तषष्ठशरीराणि स (ते) एवान्येभ्योऽपि मोक्षं दातुं समर्था भवन्तीत्यर्थः। तस्यैवाहं-दृश्यो भवे भवामि किमुत मद्भक्तस्येति काव्या-र्थापत्तिरलङ्कारो व्यक्तः।५५

⊙

[4]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामरण्यकाण्डे
चतुर्थोऽध्यायः।४

⊙

---

१. तः, २. पर्यन्तः पाठः रा० व० पुस्तकस्थः। ३. अयमंशः रा० व० पुस्तके न विद्यते। ४. इति ध्वनिप्रकाशिकायामरण्यकाण्डे चतुर्थोऽध्यायः। रा० व० पु०।

## अथ पञ्चमोऽध्यायः

**श्रीमहादेव उवाच--**

तस्मिन् काले महारण्ये राक्षसी कामरूपिणी।
विचचार महासत्त्वा जनस्थाननिवासिनी।।१
एकदा गौतमीतीरे पञ्चवट्याः समीपतः।
पद्मवज्राङ्कुशाङ्कानि पदानि जगतीपतेः।।२
दृष्ट्वा कामपरीतात्मा पादसौन्दर्यमोहिता।
पश्यन्ती सा शनैरायाद्राघवस्य निवेशनम्।।३

**एकदेति**–पद्मादिचरणचिह्नानि दृष्ट्वैव राक्षसी तत्रापि वृद्धा सा विमोहितेत्यनेन पादस्यैव सर्वातिशायि सौन्दर्यं तेन वस्तुना किमुत सर्वाङ्गसौन्दर्यमिति काव्यार्थापत्तिरलङ्कारो व्यज्यते।२-३।

तत्र सा तं रमानाथं सीतया सह संस्थितम्।
कन्दर्पसदृशं रामं दृष्ट्वा कामविमोहिता।।४
राक्षसी राघवं प्राह कस्य त्वं कः किमाश्रमे।
युक्तो जटावल्कलाद्यैः साध्यं किं तेऽत्र मे वद।।५
अहं शूर्पणखा नाम राक्षसी कामरूपिणी।
भगिनी राक्षसेन्द्रस्य रावणस्य महात्मनः।।६
खरेण सहिता भ्रात्रा वसाम्यत्रैव कानने।
राज्ञा दत्तं च मे सर्वं मुनिभक्षा वसाम्यहम्।।७
त्वां तु वेदितुमिच्छामि वद मे वदतां वर!।
तामाह रामनामाहमयोध्याधिपतेः सुतः।।८
एषा मे सुन्दरी भार्या सीता जनकनन्दिनी।
स तु भ्राता कनीयान्मे लक्ष्मणोऽतीवसुन्दरः।।९
किं कृत्यं ते मया ब्रूहि कार्यं भुवनसुन्दरि!
इति रामवचः श्रुत्वा कामार्ता साऽब्रवीदिदम्।।१०

**एषेति**—त्वं च भुवनसुन्दरीत्यनेन अत्यन्ततिरस्कृतवाच्यव्यङ्ग्येन निरुपमत्वेन लक्ष्मणोऽतीवसुन्दरस्त्वमेव लोकेऽतीवकुरूपेति उभयोर्निरुपमत्वेन समत्वे लक्ष्मणमेव वरीतुं योग्येत्याशयः।९-१०।

एहि राम! मया सार्धं रमस्व गिरिकानने।
कामार्ताहं न शक्नोमि त्यक्तुं त्वां कमलेक्षणम्॥११
रामः सीतां कटाक्षेण पश्यन् सस्मितमब्रवीत्।
भार्या ममैषा कल्याणी विद्यते ह्यनपायिनी॥१२
त्वं तु सापत्न्यदुःखेन कथं स्थास्यसि सुन्दरि!।
बहिरास्ते मम भ्राता लक्ष्मणोऽतीवसुन्दरः॥१३
तवानुरूपो भविता पतिस्तेनैव संचर।
इत्युक्ता लक्ष्मणं प्राह पतिर्मे भव सुन्दर!॥१४
भ्रातुराज्ञां पुरस्कृत्य संगच्छावोऽद्य मा चिरम्।
इत्याह राक्षसी घोरा लक्ष्मणं काममोहिता॥१५

**तवानुरूप इति**—तवानुरूपः पतिर्भविता तव अनुरूपो योग्यः लक्ष्मणः पतिर्भविता यदा त्वं कुब्जारूपेण भविष्यसि तदा लक्ष्मणः श्रीकृष्णरूपेण तव पतिर्भविष्यतीत्यर्थः। तेन नारायण एव श्रीरामरूपं नित्यविहारिश्रीकृष्णवेशं गृहीत्वा मथुरां गतः नित्यविहारि-श्रीकृष्णस्तु वृन्दावने नित्यं विहरतीति व्यक्तम्। तेन परिहासेऽपि श्रीरामस्य मिथ्या-वचनाभावो व्यक्तः।१४-१५।

तामाह लक्ष्मणः साध्वि! दासोऽहं तस्य धीमतः।
दासी भविष्यसि त्वं तु ततो दुःखतरं नु किम्॥१६

**तामाहेति**—हे साध्वि! तस्य धीमतः रामस्याहं दासः तेन त्वमपि दासी भविष्यसि। अर्थान्तरसंक्रमितवाच्यव्यङ्ग्येन कुरूपेण दासीभवसि। ततो दासीभावात्तव किन्नु दुःखं न किमपीत्यर्थान्तरेण लक्ष्मणस्यापि मिथ्यावचनाभावो व्यक्तः। साऽब्रवीदित्यत्रा-प्यत्यन्ततिरस्कृतवाच्यव्यङ्ग्येनेदानीं त्वं साध्वी। अतो नेदानीं मम परिग्रहणयोग्येति व्यक्तम्। शूर्पणखा कुब्जा जातेति गर्गसंहितायामुक्तम्।१६

तमेव गच्छ भद्रं ते स तु राजाखिलेश्वरः।
तच्छ्रुत्वा पुनरप्यागाद्राघवं दुष्टमानसा॥१७

**तमेव गच्छेति**—ते भद्रं तमेव गच्छ, तत्र हेतुः सः अखिलानामस्मदीश्वराणामीश्वरः, पुनः राजते अस्मदाद्यपेक्षया सौन्दर्यादिभिः प्रकाशते इति। एतेन रामो यन्मां सुन्दरं वदति तत्तु अन्यापेक्षयेति व्यक्तम्।१७

क्रोधाद्राम ! किमर्थं मां भ्रमयस्यनवस्थितः।
इदानीमेव तां सीतां भक्षयामि तवाग्रतः॥१८

इत्युक्त्वा विकटाकारा जानकीमनुधावति।
ततो रामाज्ञया खड्गमादाय परिगृह्य ताम्॥१९
चिच्छेद नासां कर्णौ च लक्ष्मणो लघुविक्रमः।
ततो घोरध्वनिं कृत्वा रुधिराक्तवपुर्द्रुतम्॥२०

**चिच्छेदेति**–चिच्छेद कर्णावित्यनेन यदा स्वस्मिन् पतिभावना कृता तया तदा परिहासं चकार, यदा च भक्षयितुमुद्यता तदा कर्णनासाच्छेदं चकारेति। तेन च यो यथैव भावयति तं तथैव फलेन योजयति इति व्यज्यते। अत्र स्मृतिः 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति।२०

क्रन्दमाना पपाताग्रे खरस्य परुषाक्षरा।
किमेतदिति तामाह खरः खरतराक्षरः॥२१

केनैवं कारितासि त्वं मृत्योर्वक्त्रानुवर्तिना।
वद मे तं वधिष्यामि कालकल्पमपि क्षणात्॥२२

तमाह राक्षसी रामः सीतालक्ष्मणसंयुतः।
दण्डकं निर्भयं कुर्वन्नास्ते गोदावरीतटे॥२३

मामेवं कृतवांस्तस्य भ्राता तेनैव चोदितः।
यदि त्वं कुलजातोऽसि वीरोऽसि जहि तौ रिपू॥२४

तयोस्तु रुधिरं पास्ये भक्षयैतौ सुदुर्मदौ।
नो चेत्प्राणान्परित्यज्य यास्यामि यमसादनम्॥२५

तच्छ्रुत्वा त्वरितं प्रागात्खरः क्रोधेन मूर्च्छितः।
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम्॥२६

चोदयामास रामस्य समीपं वधकाङ्क्षया।
खरश्च त्रिशिराश्चैव दूषणश्चैव राक्षसः॥२७

सर्वे रामं ययुः शीघ्रं नानाप्रहरणोद्यताः।
श्रुत्वा कोलाहलं तेषां रामः सौमित्रिमब्रवीत्॥२८

श्रूयते विपुलः शब्दो नूनमायान्ति राक्षसाः।
भविष्यति महद्युद्धं नूनमद्य मया सह॥२९

सीतां नीत्वा गुहां गत्वा तत्र तिष्ठ महाबल!
हन्तुमिच्छाम्यहं सर्वान् राक्षसान् घोररूपिणः॥३०

**सीतां नीत्वेति**–सीतां नीत्वा गुहां गत्वा तत्र तिष्ठेत्यनेन एक एवाहम् एतान् सकलराक्षसान् हनिष्ये इति स्वसामर्थ्यं देवादीन् प्रत्याययतीति व्यङ्ग्यम्। स्वाज्ञाकारिणि लक्ष्मणे च वात्सल्यं व्यज्यते।३०

अत्र किञ्चिन्न वक्तव्यं शापितोऽसि ममोपरि।
तथेति सीतामादाय लक्ष्मणो गह्वरं ययौ॥३१

रामः परिकरं बद्ध्वा धनुरादाय निष्ठुरम्।
तूणीरावक्षयशरौ बद्ध्वायत्तोऽभवत्प्रभुः॥३२

तत आगत्य रक्षांसि रामस्योपरि चिक्षिपुः।
आयुधानि विचित्राणि पाषाणान्पादपानपि॥३३

तानि चिच्छेद रामोऽपि लीलया तिलशःक्षणात्।
ततो बाणसहस्रेण हत्वा तान् सर्वराक्षसान्॥३४

खरं त्रिशिरसञ्चैव दूषणञ्चैव राक्षसम्।
जघान प्रहरार्धेन सर्वानेव रघूत्तमः॥३५

**खरमिति**–प्रहरार्धेन सर्वान् राक्षसान् हत्वा इत्यनेन रौद्ररसो व्यक्तः।३५

लक्ष्मणोऽपि गुहामध्यात्सीतामादाय राघवे।
समर्प्य राक्षसान्दृष्ट्वा हतान्विस्मयमाययौ॥३६

**लक्ष्मणोऽपीति**–हतान् राक्षसान् दृष्ट्वा लक्ष्मणो विस्मयमाययावित्यनेन एतावन्मात्रराक्षसहननार्थं ससीतं मां किमित्यपसारितवान् इति हेतुर्व्यज्यते, तस्य पराक्रमातिशयश्च विस्मयमाययौ इत्यत्र लक्ष्मणविस्मयदर्शनात् मत्पराक्रमं जानतोऽपि लक्ष्मणस्य विस्मयोऽभूदिति श्रीरामः आश्चर्यं प्राप्तस्तेनाद्भुतरसो व्यङ्ग्यः। गुहां गत्वा तत्र तिष्ठेत्यनेन वात्सल्यं, पूज्यमानः सदा तत्र मुनिभिर्वनवासिभिरित्यादौ दास्यरसः।३६

सीता रामं समालिङ्ग्य प्रसन्नमुखपङ्कजा।
शस्त्रव्रणानि चाङ्गेषु ममार्ज जनकात्मजा॥३७

**सीतेति**–सीता राममालिङ्ग्येति शृङ्गारो व्यज्यते। शस्त्रव्रणानि ममार्जेति स्वगतव्रणमार्जनदर्शनात् बीभत्सरसो ध्वन्यते। तावतो राक्षसान् हत्वापि सोत्साहतया वीररसोऽपि सूच्यते। मुनिदेवादिकृतया श्रीरामविषयकस्तुत्या शान्तो व्यक्तः। शूर्पणखामुद्दिश्य लक्ष्मणेन समं हास्यकरणात् सख्यरसः। शूर्पणखाप्रकरेण हास्यरसः, खरत्रिशिरोदूषणादिवधे रौद्रभयानकौ, मुनिजनास्थिविलोकनात् करुणरसोदयः। एवमरण्यकाण्डे द्वादशधा लीलारसो व्यञ्जितः:।३७

साऽपि दुद्राव, दृष्ट्वा तान् हतान् राक्षसपुङ्गवान्।
लङ्कां गत्वा सभामध्ये क्रोशन्ती पादसन्निधौ।।३८
रावणस्य पपातोर्व्यां भगिनी तस्य रक्षसः।
दृष्ट्वा तां रावणः प्राह भगिनीं भयविह्वलाम्।।३९
उत्तिष्ठोत्तिष्ठ वत्से! त्वं विरूपकरणं तव।
कृतं शक्रेण वा भद्रे! यमेन वरुणेन वा।।४०
कुबेरेणाथवा ब्रूहि भस्मीकुर्यां क्षणेन तम्।
राक्षसी तमुवाचेदं त्वं प्रमत्तो विमूढधीः।।४१
पानासक्तः स्त्रीविजितः षण्ढः सर्वत्र लक्ष्यसे।
चारचक्षुर्विहीनस्त्वं कथं राजा भविष्यसि।।४२
खरश्च निहतः सङ्ख्ये दूषणस्त्रिशिरास्तथा।
चतुर्दशसहस्राणि राक्षसानां महात्मनाम्।।४३
निहतानि क्षणेनैव रामेणासुरशत्रुणा।
जनस्थानमशेषेण मुनीनां निर्भयं कृतम्।
न जानासि विमूढस्त्वमत एव मयोच्यते।।४४

**जनस्थानमिति**–भयावेशा पराक्रमातिशयसूचनाय वा क्षणेनेत्युक्तवती।४४

**रावण उवाच**—

को वा रामः किमर्थं वा कथं तेनासुरा हताः।
सम्यक्कथय मे तेषां मूलघातं करोम्यहम्।।४५

**शूर्पणखोवाच—**

जनस्थानादहं याता कदाचिद्गौतमीतटे।
तत्र पञ्चवटी नाम पुरा मुनिजनाश्रया ॥४६
तत्राश्रमे मया दृष्टो रामो राजीवलोचनः।
धनुर्बाणधरः श्रीमान् जटावल्कलमण्डितः ॥४७

**तत्राश्रम इति—**राजीवलोचन इति श्रीरामसौन्दर्यानुभवावेशादुक्तम् । तेन श्रीरघुनन्दनसौन्दर्यस्यातिशयो ध्वन्यते ।४७

कनीयाननुजस्तस्य लक्ष्मणोऽपि तथाविधः।
तस्य भार्या विशालाक्षी रूपिणी श्रीरिवापरा ॥४८
देवगन्धर्वनागानां मनुष्याणां तथाविधा।
न दृष्टा न श्रुता राजन् ! द्योतयन्ती वनं शुभा ॥४९
आनेतुमहमुद्युक्ता तां भार्यार्थं तवानघ ! ।
लक्ष्मणो नाम तद्भ्राता चिच्छेद मम नासिकाम् ॥५०
कर्णौ च नोदितस्तेन रामेण स महाबलः।
ततोऽहमतिदुःखेन रुदती खरमन्वगाम् ॥५१
सोऽपि रामं समासाद्य युद्धं राक्षसयूथपैः।
अतः क्षणेन रामेण तेनैव बलशालिना ॥५२
सर्वे तेन विनष्टा वै राक्षसा भीमविक्रमाः।
यदि रामो मनः कुर्यात्त्रैलोक्यं निमिषार्धतः ॥५३

**सर्वे तेनेति—**यदि रामो मनः कुर्यादित्यादिना त्रिलोक्यां खरबलस्य सर्वोत्कृष्टत्वं तेन च श्रीरामबलस्याप्रमेयत्वम् ।५३

भस्मीकुर्यान्न सन्देह इति भाति मम प्रभो ! ।
यदि सा तव भार्या स्यात् सफलं तव जीवितम् ॥५४

**भस्मीकुर्यादिति—**यदि सा तव भार्या भर्तुं योग्या पूजनाभरणयोग्या सेवनीया यद्वा भातीति भाः तवान्तः करणे प्रकाशकर्त्री सा च सार्या पूज्या स्वामिनीति यावत् तदा तव जीवितं सफलं भवेन्मुक्तिभाग्भवेः। तेन श्रीसीताया दुष्टेभ्यो निर्हेतुकमोक्षदातृत्वं तेन च सीतायाः निर्हेतुकदयालुत्वं व्यज्यते ।५४

अतो यतस्व राजेन्द्र ! यथा ते वल्लभा भवेत् ।
सीता राजीवपत्राक्षी सर्वलोकैकसुन्दरी ।।५५

**अत इति**–अतो हे राजेन्द्र ! सीता तव वल्लभा तव स्वामिनी यथा भवेत्तथा यतस्व ।५५

साक्षाद्रामस्य पुरतः स्थातुं त्वं न क्षमः प्रभो ! ।
मायया मोहयित्वा तु प्राप्स्यसे तां रघूत्तमम् ।।५६
श्रुत्वा तत्सूक्तवाक्यैश्च दानमानादिभिस्तथा ।
आश्वास्य भगिनीं राजा प्रविवेश स्वकं गृहम् ।
तत्र चिन्तापरो भूत्वा निद्रां रात्रौ न लब्धवान् ।।५७

एकेन रामेण कथं मनुष्य-
मात्रेण नष्टः सबलः खरो मे ।
भ्राता कथं मे बलवीर्यदर्प-
युतो विनष्टो बत राघवेण ।।५८

यद्वा न रामो मनुजः परेशो,
मां हन्तुकामः सबलं बलौघैः ।
सम्प्रार्थितोऽयं द्रुहिणेन पूर्वं,
मनुष्यरूपोऽद्य रघोः कुलेऽभूत् ।।५९

**यद्वेति**–ननु शूर्पणखायाः कुत ईदृग्ज्ञानमिति चेन्न श्रीलक्ष्मणस्याचार्यस्य करस्पर्शन दर्शनपरिहाससंभाषणेन तस्यास्तथात्वेनादोषात् । ननु विहितभक्त्याऽविहितया वा तां प्राप्स्यामि इति चेत् विहितया विलम्बेनैकस्यैव मुक्तिः स्यात् अविहितया सद्योमुक्तिः सपरिकरस्यापि भविष्यतीत्यविहितैव भक्तिः कर्तव्येत्यभिप्रायेणाह मायया मोहयित्वेति-रघूत्तमं मायया मोहयित्वा तां प्राप्स्यसे इत्यन्वयः । तेन खरादिमुक्तिदर्शनेन तुभ्यमपि मुक्तिं दित्सतीति मया ज्ञातम् । अतः त्वन्मायया मोहं प्राप्स्यत्येवेति व्यक्तम् । एतेन खरादीन् हत्वा मुक्तिदातुः श्रीरामस्य हननपूर्वकं त्वन्मुक्तिदानेच्छास्तीति व्यक्तम् ।५६

वध्यो यदि स्यां परमात्मनाहं,
वैकुण्ठराज्यं परिपालयेऽहम् ।
नो चेदिदं राक्षसराज्यमेव,
भोक्ष्ये चिरं राममतो व्रजामि ।।६०

**वध्य इति**—यदि परमात्मनाहं वध्यस्तर्हि वैकुण्ठस्य श्रीरामस्य राज्यं परिपालयेयं तेन सह परितो रक्षामि ।६०

इत्थं विचिन्त्याखिलराक्षसेन्द्रो,
रामं विदित्वा परमेश्वरं हरिम् ।
विरोधबुद्ध्यैव हरिं प्रयामि,
द्रुतं न भक्त्या भगवान् प्रसीदेत् ।।६१

इति श्रीबृहद्ब्रह्माण्डपुराणे अध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डे पञ्चमोऽध्यायः ।५

⊙

**इत्थमिति**—रामं परमेश्वरं हरिं ज्ञात्वा भक्तक्लेशापहारिश्रीरामावेशयुतं परमेश्वरं नारायणं ज्ञात्वा ।६१

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामरण्यकाण्डे
पञ्चमोऽध्यायः ।५

⊙

---

१. इति ध्वनिप्रकाशिकायामरण्यकाण्डे पञ्चमोऽध्यायः ।५ । रा० व० पु० ।

## अथ षष्ठोऽध्यायः

**श्रीमहादेव उवाच—**

विचिन्त्यैवं निशायां स प्रभाते रथमास्थितः।
रावणो मनसा कार्यमेकं निश्चित्य बुद्धिमान्॥१
ययौ मारीचसदनं परं पारमुदन्वतः।
मारीचस्तत्र मुनिवज्जटावल्कलधारकः॥२
ध्यायन् हृदि परात्मानं निर्गुणं गुणभासकम्।
समाधिविरमेऽपश्यद्रावणं गृहमागतम्॥३

**ध्यायन्निति**—हृदि परात्मानं ध्यायन्नित्यनेन हृदि विहितां भक्तिमेव कुरुत इति ध्वन्यते। निर्गुणं गुणभासकमिति विशेषणद्वयं निर्गुणाङ्गिनः श्रीरामस्यैव ध्यानं करोतीत्यर्थः।३

द्रुतमुत्थाय चालिङ्ग्य पूजयित्वा यथाविधि।
कृतातिथ्यं सुखासीनं मारीचो वाक्यमब्रवीत्॥४
समागमनमेतत्ते रथेनैकेन रावण!
चिन्तापर इवाभासि हृदि कार्यं विचिन्तयन्॥५
ब्रूहि मे नहि गोप्यं चेत्करवाणि तव प्रियम्।
न्याय्यं चेद् ब्रूहि राजेन्द्र! वृजिनं मां स्पृशेन्नहि॥६

**ब्रूहीति**—न्याय्यमित्यनेनाधर्मं वदसि चेन्न करिष्यामीत्याशयः। तेन जानकीहरणार्थं मृगं विधातुमिहागत इति ज्ञातवानिति व्यज्यते। तेन च सर्वत्र पूर्णश्रीरामचन्द्रध्यानेन तन्मनसः संशुद्धिर्यातीति।६

**रावण उवाच—**

अस्ति राजा दशरथः साकेताधिपतिः किल।
रामनामा सुतस्तस्य ज्येष्ठः सत्यपराक्रमः॥७

शूर्पणखावाक्यात् निश्चितामविहितां भक्तिं दर्शयन्नाह **अस्तीति**। सत्य-पराक्रम इत्यनेन रामो मां हत्वा मुक्तिं दास्यतीति तत्सुनिश्चयो व्यज्यते।७

विवासयामास सुतं वनं वनजनप्रियम्।
भार्यया सहितं भ्रात्रा लक्ष्मणेन समन्वितम्॥८
स आस्ते विपिने घोरे पञ्चवट्याश्रमे शुभे।
तस्य भार्या विशालाक्षी सीता लोकविमोहिनी॥९

**स आस्त इति**—सीता लोकविमोहिनी लोकस्य विगतमोहकर्त्री तेनानीता सीतापि मोहं दूरीकरिष्यतीति निश्चितम्।९

रामो निरपराधान्मे राक्षसान् भीमविक्रमान्।
खरं च हत्वा विपिने सुखमास्तेऽतिनिर्भयः॥१०

**राम इति**—रामः मे निरपराधान् राक्षसान् भीमविक्रमान् खरं च विपिने हत्वा निर्भयः सन् सुखमास्त इत्यन्वयः। तेनापहतपाप्मत्वं श्रीरामस्येति व्यज्यते।१०

भगिन्याः शूर्पणखाया निर्दोषायाश्च नासिकाम्।
कर्णौ चिच्छेद दुष्टात्मा वने तिष्ठति निर्भयः॥११

**भगिन्या इति**—दुष्टानामप्यात्मा सर्वेषामन्तर्यामीत्यर्थः। तेन तत्प्रेरणयैव अविहितां भक्तिमवलम्बितवानस्मीति ध्वन्यते।११

अतस्त्वया सहायेन गत्वा तत्प्राणवल्लभाम्।
आनयिष्यामि विपिने रहिते राघवेण ताम्॥१२

**अत इति**—तत्प्राणवल्लभामित्यनेन प्राणभूतायाः सीताया आनयनेन रामोऽप्यागमिष्यतीति व्यञ्जितम्।१२

त्वं तु मायामृगो भूत्वा ह्याश्रमादपनेष्यसि।
रामञ्च लक्ष्मणञ्चैव तदा सीतां हराम्यहम्॥१३
त्वं तु तावत्सहायं मे कृत्वा स्थास्यसि पूर्ववत्।
इत्येवं भाषमाणं तं रावणं वीक्ष्य विस्मितः॥१४
केनेदमुपदिष्टं ते मूलघातकरं वचः।
स एव शत्रुर्वध्यश्च यस्त्वन्नाशं प्रतीक्षते॥१५

**त्वन्त्विति**—पूर्ववत्स्थास्यसीत्यनेन तद्बाणहननेन। आत्मदास्यं हरेः स्वाम्यमित्युक्तपूर्वस्वभावे स्थित्वा मुक्तो भविष्यसीति व्यक्तं कथमेतस्यैतादृशं ज्ञानं जातमिति विस्मितो बभूवेत्यर्थः। तदेवाह पृच्छति **केनेदमिति** रावणोक्तामविहितां भक्तिं संविज्ञा-

यापि विहितां भक्ति [1]प्रदर्शयन्नाह केनेदमिति मूलघातकरं मूलाज्ञाननाशकरं इदमविहित-भक्तिविधायकं वचः केनाचार्येणोपदिष्टम्।[2]

यद्यपि मूलाज्ञाननाशः विहितायामविहितायामपि समः तथापि विहितायाम् ऐहिकसुखपूर्वकामुष्मिकसुखस्य सत्त्वात् सैव विधेया न तु अविहितेति भावः। यस्त्वन्नाशं ऐहिकसुखविघातं प्रतीक्षते स एवोपदेष्टा एव त्वच्छत्रुरतो वध्यः ।१४-१५।

रामस्य पौरुषं स्मृत्वा चित्तमद्यापि रावण ! ।
बालोऽपि मां कौशिकस्य यज्ञसंरक्षणाय सः ।।१६

**रामस्येति**—रामस्य पौरुषं स्मृत्वाऽद्यापि मे चित्तं तमेव ध्यायतीति शेषः, विहितां करोमीत्यर्थ । तेनाऽविहितास्वीकारे त्वन्नाश स्यात् व्यक्तं तदेवाह।१६

आगतस्त्विषुणैकेन पातयामास सागरे।
योजनानां शतं रामस्तदादि भयविह्वलः।।१७
स्मृत्वा स्मृत्वा तदेवाहं रामं पश्यामि सर्वतः।।१८

दण्डकेऽपि पुनरप्यहं वने,
पूर्ववैरमनुचिन्तयन् हृदि।
तीक्ष्णशृङ्गमृगरूपमेकदा,
मादृशैर्बहुभिरावृतोऽभ्यगाम्।।१९

**दण्डकेऽपीति**—पूर्ववैरमनुस्मरन् वीरस्य भावः वैरम् पराक्रमम्। एतादृशः पराक्रमः ईश्वरातिरिक्तस्य न संभवतीत्यनुस्मरन् अयं राजपुत्र ईश्वरो वेति परीक्षणाय तीक्ष्णशृङ्गरूपं धृत्वेति शेषः। पुनरभ्यगाम्।१९

राघवं जनकजासमन्वितं,
लक्ष्मणेन सहितं त्वरान्वितः।
आगतोऽहमथ हन्तुमुद्यतो,
मां विलोक्य शरमेकमक्षिपत्।।२०
तेन विद्धहृदयोऽहमुद्भ्रमन्,
राक्षसेन्द्र! पतितोऽस्मि सागरे।
तत्प्रभृत्यहमिदं समाश्रितः,
स्थानमूर्जितमिदं भयार्दितः।।२१

---

१. तः २ पर्यन्तः पाठः रा० व० पुस्तकस्थः।

**तेनेति**—यतः भयादितः अविहितभक्तौ भयादितोऽतस्तत्प्रभृति तदादि ऊर्जितम् ऐहिकामुष्मिकफलप्रदमिदं विहितभक्त्यवस्थानं समाश्रितः। एतेन पूर्वोक्तानां सहायकर्तॄणां राक्षसानामनुक्त्या शरेण ते भस्मीभूता इति ध्वन्यते।२१

रामभेव सततं विभावये,
भीतभीत इव भोगराशितः।
राजरत्नरमणीरथादिकं,
श्रोत्रयोर्यदि गतं भयं भवेत्॥२२

**राममेवेति**—यद्वस्तु भोगसमूहसाधनं ततोऽपि भीतभीतः अत्यन्तभीत इव राममेव भावये तदेवोपपादयति-राजेति। राजरत्नरमणीरथादिकं यदि श्रोत्रयोः विशेदिति शेषस्तदा रकारमहिम्ना भयं संसारभयं गतं नष्टं भवेत्। अनेन नामनामिनोरभेदो व्यक्तः।२२

राम आगत इहेति शङ्कया,
बाह्यकार्यमपि सर्वमत्यजम्।
निद्रया परिवृतो यदा स्वपे,
राममेव मनसानुचिन्तयन्॥२३
स्वप्नदृष्टिगतराघवं तदा,
बोधितो विगतनिद्र आस्थितः।
तद्भवानपि विमुच्य चाग्रहं,
राघवं प्रतिगृहं प्रयाहि भोः॥२४

**स्वप्नेति**—तत्तस्मात् भवानपि आग्रहं राघवम् उद्दिश्य अविहितभक्त्याग्रहं विमुच्य त्यक्त्वा विहितभक्तिं गृहीत्वा गृहं याहि तत्तत्साधनानि स्वीकुर्वित्यर्थः। एतेन यथा तैलधारवदवच्छिन्ननामस्मरणं मया क्रियते तथा त्वयापि कर्तव्यमिति तात्पर्यं। तेन च त्वमपि मुक्तो भविष्यसीति सूचितम्।२४

रक्ष राक्षसकुलं चिरागतं,
तत्स्मृतौ सकलमेव नश्यति।
तव हितं वदतो मम भाषितं,
परिगृहाण परात्मनि राघवे॥२५

**रक्षेति**—चिरागतं चिरेण ऋद्धिं प्राप्तं राक्षसकुलं रक्ष एवं विरोधेन तत्स्मृतौ सकलमेव राक्षसकुलं नश्यति। यद्वा ननु श्रीरामः परमेश्वर एव तद्धस्तमरणान्मम शीघ्रं

मुक्तिरेवेति चेत्तत्राह–रक्षेति। तत्स्मृतौ मुक्तिर्भविष्यतीति सत्यं तथापि रक्षःकुलं रक्ष, यतः चिरागतम्, इत्यनेन तव मातामहः सुमाली नामा स्वकुलवर्धनाय स्वकन्यां कैकसीं विश्रवसे दत्तवानतः स्वकुलरक्षणं कर्तव्यमिति भावः। उक्तमर्थमुपसंहरति-तवेति। तव हितं वदतः मम भाषितं परिगृहाण।२५

त्यज विरोधमतिं भज भक्तितः,
परमकारुणिको रघुनन्दनः।
अहमशेषमिदं मुनिवाक्यतो,
ऽशृणवमादियुगे परमेश्वरः॥२६

**त्यजेति**—हितमेवाह-परात्मनि रामे विरोधमतिम् अविहितभक्तिं त्यज। भक्तितः विहितभक्त्या भज ननु राक्षसमपि कथं स प्रसीदति तत्राह परमकारुणिक इति।२६

ब्रह्मणार्थित उवाच तं हरिः,
किं तवेप्सितमहं करवाणि तत्।
ब्रह्मणोक्तमरविन्दलोचन !,
त्वं प्रयाहि भुवि मानुषं वपुः।
दशरथात्मजभावमञ्जसा
जहि रिपुं दशकन्धरं हरे ! ॥२७

**ब्रह्मणार्थित इति**—अरविन्दलोचन ! त्वं भुवि मानुषं वपुः मनुष्यावतारं प्रयाहि प्राप्नुहि। ननु सर्वावध्यत्वं प्राप्तस्य रावणस्य 'विष्णुचक्रनिपातैश्च शतशो देवसंयुगे' इत्यादि वाल्मीकीयोक्तेर्विष्णुनापि वधासंभवात् किं मनुष्यावतारेण इत्यत आह-दशरथात्मजभावमिति। दशरथात्मजस्य नित्यविहारिणः सर्वस्य वशी सर्वस्येशान' इति श्रुत्या सर्वातीतपरात्परश्रीरामस्य भाव आवेशो यस्मिन् ततश्च दशकन्धरं रिपुम् अञ्जसा अनायासेन नाशयेत्यर्थः। एतेन तच्छक्तियुक्तरामतः सर्वावध्यत्वं प्राप्तवतस्तस्य वधे न समर्थो भविष्यसीतिवस्तुना नित्यविहारिसर्वेश्वरेश्वरनित्यद्विभुजश्रीरामादेव तस्य वधत्वं स्थापितं न सामान्यमानुषादिति व्यज्यते।२७

अतो न मानुषो रामः साक्षान्नारायणोऽव्ययः।
मायामानुषवेषेण वनं यातोऽतिनिर्भयः॥२८
भूभारहरणार्थाय गच्छ तात ! गृहं सुखम्।
श्रुत्वा मारीचवचनं रावणः प्रत्यभाषत॥२९

**अत इति**—अतोऽयं श्रीरामः प्राकृतमानुषो न अपि तु साक्षान्नारायण एव कृपया

[1]मानुषवेषेण श्रीरामवेशेन वनं यातः प्राप्तः। सुखं गच्छेत्यनेन तद्विरोधेन सकुलस्त्वं नङ्क्ष्यमीति-सूचितम्। २८-२९।

परमात्मा यदा रामः प्रार्थितो ब्रह्मणा किल।
मां हन्तुं मानुषो भूत्वा यत्नादिह समागतः॥३०

मारीचवचनं श्रुत्वा तमाह **परमात्मेति सार्धेन**। परमात्मेत्यादिना यः स्वामिन इच्छानुरोधेन सर्वं करोति स भक्तः उत तद्विरोधेनेति त्वयैव विचारणीयमिति ध्वन्यते।३०

करिष्यत्यचिरादेव सत्यसंकल्प ईश्वरः।
अतोऽहं यत्नतः सीतामानेष्याम्येव राघवात्॥३१

**स्वसिद्धान्तमाह**—अतोऽहमिति। अतो हेतोः स्वामिनः सत्यसंकल्पसंस्थापनाय यत्नतः राघवात् तां सीतां नेष्यामि। तेन सकुलस्य मे वधो भविष्यतीति तेन चाहमेव विहितामवलम्बितवान् न तु त्वमिति सूचितम्॥३१

वधे प्राप्ते रणे वीर! प्राप्स्यामि परमं पदम्।
यद्वा रामं रणे हत्वा सीतां प्राप्स्यामि निर्भयः॥३२

**वध इति**—ततः संकल्पसिद्ध्यर्थं स्वामिना रणे वधे जाते सति सकुलोऽहं परमं पदं प्राप्स्यामि। प्राकृतमनुष्यश्चेत्तर्हि तमेव हत्वा सीतां प्राप्स्यामि तेन तत्संकल्प-स्थापनं भक्तमात्रेप्सितत्वेन त्वयापि तदेवकर्त्तव्यमिति सूचितम्।३२

तदुत्तिष्ठ महाभाग! विचित्रमृगरूपधृक्।
रामं सलक्ष्मणं शीघ्रमाश्रमादतिदूरतः॥३३
आक्रम्य गच्छ त्वं शीघ्रं सुखं तिष्ठ यथापुरा।
अतः परं च यत्किंचिद् भाषसेमद्विभीषणम्॥३४

**तदुत्तिष्ठेति**—हे महाभाग! अतस्त्वम् उत्तिष्ठ। महाभाग इत्यनेन ब्रह्मचारिवेष-मात्रेण त्वं मुक्तो न भविष्यसि किन्तु तदाराधनेनैवेति व्यज्यते। सुखं तिष्ठ यथापुरेत्यनेन तद्दर्शनहननाभ्यामेव आत्मदास्यं हरेः स्वाम्यमित्युक्तं शुद्धस्वरूपं प्राप्स्यसीति व्यक्तम्। ३३-३४।

हनिष्याम्यसिनानेन त्वामत्रैव न संशयः।
मारीचस्तद्वचःश्रुत्वा स्वात्मन्येवान्वचिन्तयत्॥३५

---

१. मानुषेण इति मत्पुस्तके

यदि मां राघवो हन्यात्तदा मुक्तो भवार्णवात्।
मां हन्याद्यदि चेद्दुष्टस्तदा मे निरयो ध्रुवम्॥३६
इति निश्चित्य मरणं रामादुत्थाय वेगतः।
अब्रवीद्रावणं राजन्! करोम्याज्ञां तव प्रभो!॥३७
इत्युक्त्वा रथमास्थाय गतो रामाश्रमं प्रति।
शुद्धजाम्बूनदप्रख्यो मृगोऽभूद्रौप्यबिन्दुकः॥३८
रत्नश्रृङ्गो मणिखुरो नीलरत्नविलोचनः।
विद्युत्प्रभो विमुग्धास्यो विचचार वनान्तरे॥३९

**रत्नश्रृङ्ग** इति—रत्नश्रृङ्गजाम्बूनदप्रख्यइत्यादिविशेषणविशिष्टमृगरूपधारणेन लोके एतादृशमृगस्यासत्त्वात् मां कपटमृगं जानातीति मारीचेन स्वामिन्यनुकूलत्वं रामाय स्वस्वरूपं च ज्ञापितं न तु स्वस्मिन् धौर्त्यमिति तेन तस्यापि विहिता भक्तिर्व्यक्ता।३९

रामाश्रमपदस्यान्ते सीता दृष्टिपथे चरन्॥४०
क्षणं च धावत्यवतिष्ठते क्षणं,
समीपमागत्य पुनर्भयावृतः।
एवं स मायामृगवेषरूपधृक्,
चचार सीतां परिमोहयन्खलः॥४१

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डे षष्ठोऽध्यायः।६

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामरण्यकाण्डे
षष्ठोऽध्यायः।६

⊙

---

१. नेयं पुष्पिका रा० व० पु०

## अथ सप्तमोऽध्यायः

**श्रीमहादेव उवाच—**

अथ रामोऽपि तत्सर्वं ज्ञात्वा रावणचेष्टितम्।
उवाच सीतामेकान्ते शृणु जानकि! मे वचः ॥१
रावणो भिक्षुरूपेण आगमिष्यति तेऽन्तिकम्।
त्वं तु छायां त्वदाकारां स्थापयित्वोटजे विश।
अग्नावदृश्यरूपेण वर्षं तिष्ठ ममाज्ञया ॥२

**रावण इति**—सीतायाः त्रीणि रूपाणि नित्यसाकेतवासिनः प्रेमा, अयोध्यातः वनं प्रति गन्तुः आदिनारायणस्य लक्ष्मीर्लङ्कागमनकारिणी मूलप्रकृतिः। सैव वेदवती पर्यायाच्छाया। त्वं स्वच्छायां वेदवतीं त्वल्लीनत्वेन त्वदाकारां मूलप्रकृतिमपि उटजे पर्णशालायां संस्थाप्य अग्नौ विशेत्यर्थः। अत्र चाग्नावेव स्थापकत्वेन स्वनामबीजस्थापितेति अग्नावपि अदृश्यरूपेण वर्षं तिष्ठेत्यनेन मम स्वरूपेण एव तिष्ठेति व्यक्तम्। तेन रकारस्य रामरूपता व्यक्ता।२

रावणस्य वधान्ते मां पूर्ववत्प्राप्स्यसे शुभे! ॥३

**रावणस्येति**—पुनः रावणवधान्ते प्रकटीभूय पूर्ववत् मां प्राप्स्यसीत्यर्थः।३

श्रुत्वा रामोदितं वाक्यं सापि तत्र तथाऽकरोत्।
माया सीतां बहिः स्थाप्य स्वयमन्तर्दधे ऽनले ॥४
मायासीतां तदापश्यन्मृगं मायाविनिर्मितम्।
हसन्ती राममभ्येत्य प्रोवाच विनयान्विता ॥५
पश्य राम! मृगं चित्रं कानकं रत्नभूषितम्।
विचित्रबिन्दुभिर्युक्तं चरन्तमकुतोभयम् ॥
बद्ध्वा देहि मम क्रीडामृगो भवतु सुन्दरः ॥६
तथेति धनुरादाय गच्छन् लक्ष्मणमब्रवीत्।
रक्ष त्वमतियत्नेन सीतां मत्प्राणवल्लभाम् ॥७

मायिनः सन्ति विपिने राक्षसा घोरदर्शनाः।
अतोऽत्रावहितः साध्वीं रक्ष सीतामनिन्दिताम् ॥८
लक्ष्मणो राममाहेदं देवायं मृगरूपधृक्।
मारीचोऽत्र न सन्देह एवंभूतो मृगः कुतः ॥९

**लक्ष्मण इति**—अत्र च मारीचज्ञानात् श्रीरामकृताग्निसीतास्थापनादिकमपि ज्ञातवानिति सूचितम् ।९

**श्रीराम उवाच**—

यदि मारीच एवायं तदा हन्मि न संशयः।
मृगश्चेदानयिष्यामि सीताविश्रमहेतवे ॥१०
गमिष्यामि मृगं बद्ध्वा ह्यानयिष्यामि सत्वरः।
त्वं प्रयत्नेन सन्तिष्ठ सीतासंरक्षणोद्यतः ॥११
इत्युक्त्वा प्रययौ रामो मायामृगमनुद्रुतः।
माया यदाश्रया लोकमोहनी जगदाकृतिः ॥१२
निर्विकारश्चिदात्मापि पूर्णोऽपि मृगमन्वगात्।
भक्तानुकम्पी भगवानिति सत्यं वचो हरिः ॥१३

**निर्विकार इति**—भक्तानुकम्पीत्यनेन भक्तसंकल्पं पूरयतीति तेन मारीचरावणयोरपि मुक्तिर्भविष्यतीति सूचितम् ।१३

कर्तुं सीताप्रियार्थाय जानन्नपि मृगं ययौ।
अन्यथा पूर्णकामस्य रामस्य विदितात्मनः ॥१४
मृगेण वा स्त्रिया वापि किं कार्यं परमात्मनः।
कदाचिद्दृश्यतेऽभ्याशे क्षणं धावति लीयते ॥१५
दृश्यते च ततो दूरादेवं राममपाहरत्।
ततो रामोऽपि विज्ञाय राक्षसोऽयमिति स्फुटम् ॥१६
विव्याध शरमादाय राक्षसं मृगरूपिणम्।
पपात रुधिराक्तास्यो मारीचः पूर्वरूपधृक् ॥१७
हा हतोऽस्मि महाबाहो! त्राहि लक्ष्मण! मां द्रुतम्।
इत्युक्त्वा रामवद्वाचा पपात रुधिराशनः ॥१८

**हा हत इति**—हे लक्ष्मण! मां त्राहीत्यनेन 'आचार्यवान् पुरुषो वेदे'ति श्रुत्या

आचार्यसम्बन्धादेव भगवत्प्राप्तिर्भवतीत्याचार्यस्य [1]लक्ष्मणस्य नामोच्चारणे हेतुः। रामवद्वाचा इत्यनेन निरन्तररामभावनया कीटभृङ्गन्यायेन रामरूपोऽभूदिति व्यक्तम्।१८

यन्नामाज्ञोऽपि मरणे स्मृत्वा तत्साम्यमाप्नुयात्।
किमुताग्रे हरिं पश्यंस्तेनैव निहतोऽसुरः॥१९
तद्देहादुत्थितं तेजः सर्वलोकस्य पश्यतः।
राममेवाविशद्देवा विस्मयं परमं ययुः॥२०

**तद्देहादिति**—तद्देहात् मारीचदेहादुत्थितं तेजः सर्वलोकस्य सर्वे लोकाः **यस्मिन्** तस्य सर्वलोकाधारस्य रामस्य पश्यतः तमेव राममेवाविशत् नामरूपलीलाधाम्नामैक्यात् रामरूपे लीनत्वात् तद्धाम एवाविशदित्यर्थः। तदा देवाः तदिन्द्रियाभिमानिदेवताः विस्मयं पूर्वं तत्सहचारिणो वयम् इदानीं तेन सह कुतो न लीना इत्याश्चर्यं ययुः।२०

किं कर्म कृत्वा किं प्राप्तः पातकी मुनिहिंसकः।
अथवा राघवस्यायं महिमा नात्र संशयः॥२१

**किं कर्मेति**—पातकी मुनिहिंसक अयं मारीचः किं कर्म कृत्वा रामस्वरूपं **प्राप्तः**। अर्थात् अस्माकमग्रे एव केनाप्यकृतं महत् कुत्सितं कर्म कृत्वाऽपि केनापि अप्राप्यं सर्वात्मश्रीरामरूपे लयं प्राप्तः इदमप्याश्चर्यम्। अथवा राघवस्यायं महिमा इत्यनेन रामस्याघटितघटनापटीयस्त्वं व्यक्तम्। पूर्वत्र कृतां शङ्कां स्वयमेव समादधते रामबाणेनेतित्रिभिः।२१

रामबाणेन संविद्धः पूर्वं राममनुस्मरन्।
भयात्सर्वं परित्यज्य गृहवित्तादिकं च यत्॥२२
हृदि रामं सदा ध्यात्वा निर्धूताशेषकल्मषः।
अन्ते रामेण निहतः पश्यन् राममवाप सः॥२३
द्विजो वा राक्षसो वापि पापी वा धार्मिकोऽपि वा।
त्यजन्कलेवरं रामं स्मृत्वा याति परं पदम्॥२४

**द्विज इति**—द्विजो वेति श्लोकेन रावणो मुक्तिं प्राप्स्यतीति सूचितम्। **किञ्च** कलेवरं त्यजन् रामं स्मृत्वा परं पदं यात्यनेन वा परमपदप्राप्तौ तदीयस्मरणं विना उपायान्तरं नास्तीति सूचितम्। रामं स्मृत्वेत्यनेन 'राम एव परं ब्रह्मे' ति ध्वनितम्।२४

---

१. लक्ष्मणनाम इति मदीयपुस्तके।

इति तेऽन्योन्यमाभाष्य ततो देवा दिवं ययुः।
रामस्तच्चिन्तयामास म्रियमाणोऽसुराधमः॥२५

**इति त इति**--एवं तदिन्द्रियस्थदेवाः परस्परमुक्त्वाऽऽकाशे स्थित्वा पुष्पाणि मुमुचुः।२५

हा लक्ष्मणेति मद्वाक्यमनुकुर्वन् ममार किम्।
श्रुत्वा मद्वाक्यसदृशं वाक्यं सीतापि किं भवेत्॥२६
इति चिन्तापरीतात्मा रामो दूरान्न्यवर्तत।
सीता तद्भाषितं श्रुत्वा मारीचस्य दुरात्मनः॥२७

**इति चिन्तेति**--इति चिन्तापरीतात्मा लीलयेति शेषः।२७

भीतातिदुःखसंविग्ना लक्ष्मणं त्विदमब्रवीत्।
गच्छ लक्ष्मण! वेगेन भ्राता तेऽसुरपीडितः॥२८
हा लक्ष्मणेति वचनं भ्रातुस्ते न शृणोषि किम्।
तामाह लक्ष्मणो देवि! रामवाक्यं न तद्भवेत्॥२९
यः कश्चिद्राक्षसो देवि! म्रियमाणोऽब्रवीद्वचः।
रामस्त्रैलोक्यमपि यः क्रुद्धो नाशयति क्षणात्॥३०
स कथं दीनवचनं भाषतेऽमरपूजितः।
क्रुद्धा लक्ष्मणमालोक्य सीता वाष्पविलोचना॥३१
प्राह लक्ष्मण! दुर्बुद्धे! भ्रातुर्व्यसनमिच्छसि।
प्रेषितो भरतेनैव रामनाशाभिकाङ्क्षिणा॥३२
मां नेतुमागतोऽसि त्वं रामनाश उपस्थिते।
न प्राप्स्यसे त्वं मामद्य पश्य प्राणांस्त्यजाम्यहम्॥३३
न जानातीदृशं रामस्त्वां भार्याहरणोद्यतम्।
रामादन्यं न स्पृशामि त्वां वा भरतमेव वा॥३४
इत्युक्त्वा बध्यमाना सा स्वबाहुभ्यां रुरोद ह।
तच्छ्रुत्वा लक्ष्मणः कर्णौ पिधायातीव दुःखितः॥३५
मामेवं भाषसे चण्डि! धिक् त्वां नाशमुपैष्यसि।
इत्युक्त्वा वनदेवीभ्यः समर्प्य जनकात्मजाम्॥३६

**मामेवमिति**--हे चण्डि! त्वां धिक् यतः त्वं मामेवं भाषसे अत एव नाशम्

अदर्शनमुपैष्यसि। रावणेन हृता भविष्यसीति भावः। चण्डीत्यनेन मूलप्रकृतिरूपां त्वां वहिः संस्थाप्य जानकीमग्नौ निवेशयामासेति जानामीति सूचितम्।३६

ययौ दुःखातिसंविग्नो राममेव शनैः शनैः।
ततोऽन्तरं समालोक्य रावणो भिक्षुवेषधृक्॥३७

**ययाविति**—तद्वाक्यस्मरणेन दुःखातिसंविग्न इत्यनेन चण्डीवाक्यस्य कठोरतातिशयो व्यज्यते। शनैः शनैरित्यनेन शङ्काभावः सूचितः। वनदेवीभ्यः समर्पणमित्यनेनात्र लङ्कायाञ्च तालफलमूलादिभिः त्वां रक्षन्त्विति। भिक्षुवेषधृक् त्रिदण्डिवेषधृक्। इदञ्च वाल्मीकीये स्पष्टम्। एतेन वैष्णवभावमन्तरा जानकीरघुनन्दनयोः प्राप्तिर्नैवास्तीति सूचितम्।३७

सीतासमीपमगमत्स्फुरद्दण्डकमण्डलुः।
सीता तमवलोक्याशु नत्वा सम्पूज्य भक्तितः॥३८
कन्दमूलफलादीनि दत्त्वा स्वागतमब्रवीत्।
मुने! भुङ्क्ष्व फलादीनि विश्रमस्व यथासुखम्॥३९
इदानीमेव भर्ता मे ह्यागमिष्यति ते प्रियम्।
करिष्यति विशेषेण तिष्ठ त्वं यदि रोचते॥४०

**इदानीमेवेति**—विशेषेण ते प्रियं करिष्यतीत्यनेन वाञ्छितां मुक्तिं दास्यतीति ध्वनितम्।४०

**भिक्षुरुवाच—**

का त्वं कमलपत्राक्षि! को वा भर्त्ता तवानघे!।
किमर्थमत्र ते वासो वने राक्षससेविते॥
ब्रूहि भद्रे! ततः सर्वं स्ववृत्तान्तं निवेदये॥४१

**सीतोवाच—**

अयोध्याधिपतिः श्रीमान् राजा दशरथो महान्।
तस्य ज्येष्ठः सुतो रामः सर्वलक्षणलक्षितः॥४२
तस्याहं धर्मतः पत्नी सीता जनकनन्दिनी।
तस्य भ्राता कनीयांश्च लक्ष्मणो भ्रातृवत्सलः॥४३
पितुराज्ञां पुरस्कृत्य दण्डके वस्तुमागतः।
चतुर्दश समास्त्वां तु ज्ञातुमिच्छामि मे वद॥४४

**अयोध्याधिपतिरिति**—अयोध्येत्यारभ्य मे वदेत्यन्तेन श्रीरामोपदेश एव कृत इति ध्वन्यते। सीता जनकनन्दिनी सीतावेशेन जनकनन्दिनी। ननु 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च। श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः॥' इति स्मृतौ भर्तृनामोच्चारणस्य निषिद्धत्वात् सीतया स्वपतिनामोच्चारणं कथं कृतमिति चेदुच्यते तस्य पुनर्वसुचतुर्थचरणजातत्वात् हिरण्यनाभ इति अवतारप्रयुक्तं रामनाम इति अनादिसिद्धम् इत्यतो नोक्तदोषः। ४२-४४।

**भिक्षुरुवाच**—

पौलस्त्यतनयोऽहं तु रावणो राक्षसाधिपः।
त्वत्कामपरितप्तोऽहं त्वां नेतुं पुरमागतः॥४५

**पौलस्त्येति**—पौलस्त्यतनयोऽहमित्यनेन कुलपरम्परयैव मुनिरहमिति विज्ञापितमिति ध्वनिः। मुनित्वात् किं मननं करोषीति चेत्तत्राह—त्वत्कामपरितप्तोऽहमिति। त्वां प्राप्तुं त्वत्कामनया त्वत्प्राप्त्यभिलाषेण परितः तप्तोऽहमित्यर्थः। निरंतरसेवनार्थम् अत एव त्वां पुरं नेतुमागत एतेन त्वामेव ध्यायेमेति भावः।४५

मुनिवेषेण रामेण किं करिष्यसि मां भज।
भुङ्क्ष्व भोगान् मया सार्धं त्यज दुःखं वनोद्भवम्॥४६

**मुनिवेषेणेति**—(मुनिवेषेण रामेण) सह किं करिष्यसि, यदर्थं त्वमागतासि तत्तु न सेत्स्यति अर्थाद्राजरूपेण मां राजलक्ष्मीं भजेत्यर्थः। मया राजलक्ष्म्या सार्धं भोगान् भुङ्क्ष्वेत्यर्थः। तेन युवयोर्मुनिवेषो मह्यं न रोचत इति, तेन श्रीरामशरेणेदं शरीरं विहाय यथा सखिरूपेण त्वां प्राप्स्यामि तथा कुर्विति प्रार्थना ध्वन्यते।४६

श्रुत्वा तद्वचनं सीता भीता किञ्चिदुवाच तम्।
यद्येवं भाषसे मां त्वं नाशमेष्यसि राघवात्॥४७

**श्रुत्वेति**—तदुत्तरमाह—यद्येवमिति। यदि त्वं मामेवं भाषसे तर्हि राघवात् नाशमेष्यसि। एतेन मुक्तो भूत्वा सखीरूपं प्राप्य रासमंडले प्रवेक्ष्यसीति सूचितम्। मुक्ताः सखीरूपमेव प्राप्नुवन्तीत्यत्र शुको मुक्तो वामदेवो वेति। 'तमुवाच प्रियारूपं लब्धवन्तं शुकं हरिरिति' श्रुतिस्मृतिप्रमाणम्।४७

आगमिष्यति रामोऽपि क्षणं तिष्ठ सहानुजः।
मां को धर्षयितुं शक्तो हरेर्भार्यां शशो यथा॥४८

**आगमिष्यतीति**—आगमिष्यति रामः क्षणं तिष्ठेत्यनेनात्रैव मुक्तिं दास्यसीति सूचितम्। त्वं तु कैकेय्या राज्यान्निष्कासितासि कथं मुक्तिं दास्यसीति चेत्तत्राह-मां को

धर्षयितुं शक्तः न कोऽपीत्यर्थः। एतेन तुभ्यं मुक्तिं दातुमागतास्मीति। तेन सौलभ्यगुणः। तेन भक्तवात्सल्यातिशयो ध्वन्यते।४८

रामबाणैर्विभिन्नस्त्वं पतिष्यसि महीतले।
इति सीतावचः श्रुत्वा रावणः क्रोधमूर्च्छितः॥४९

**रामबाणैरिति**—क्रोधमूर्च्छित इत्यनेन सकुलमुक्तिमिच्छोः रावणस्य केवलं स्वमुक्तिर्नेष्टेति ध्वनितम्। एतदर्थास्वीकारे पूर्वोक्तं 'वध्यो यदि स्यां परमात्मनाहं वैकुण्ठराज्यं परिपालयेऽहम्' इति मातृबुद्ध्याऽन्वपालयदिति च पूर्वोक्ततद्ग्रन्थविरोध एव स्यात्। तस्मात् 'परोक्षवादाः ऋषयः, परोक्षं च मनुप्रियम्' इत्युक्तरीत्यास्मदुक्त एवार्थः समीचीनः।४९

स्वरूपं दर्शयामास महापर्वतसन्निभम्।
दशास्यं विंशतिभुजं कालमेघसमद्युतिम्॥५०
तद्दृष्ट्वा वनदेव्यश्च भूतानि च वितत्रसुः।
ततो विदार्य धरिणीं नखैरुद्धृत्य बाहुभिः॥५१
तोलयित्वा रथे क्षिप्त्वा ययौ क्षिप्रं विहायसा।
हा राम! हा लक्ष्मणेति रुदती जनकात्मजा॥५२

**तद्दृष्ट्वेति**—नखैः धरिणीं [1]विदार्य उत्पाट्य बाहुभिः उद्धृत्य [2]भुवःसकाशात् उपरि कृत्वा तोलयित्वा दोलायामिव आन्दोलयित्वा अनेन तस्य सखीभावना सूचिता। रथे क्षिप्त्वा क्षिप्रं विहायसा ययौ। एतेन मातृक्रोडस्था कन्या सर्वत्र सुखिनीति विचार्य एतत्कृतमिति सूचितम्। मम विलापं श्रुत्वा जीवानां करुणोदेष्यतीति, तेन प्रेम्णा अनायासेन मुक्तिर्भविष्यति इति विलापकारणं तु श्रीराम एवाग्रे वक्ष्यति। ५१-५२।

भयोद्विग्नमना दीना पश्यन्ती भुवमेव सा।
श्रुत्वा तत्क्रन्दितं दीनं सीतायाः पक्षिसत्तमः॥५३
जटायुरुत्थितः शीघ्रं नगाग्रात्तीक्ष्णतुण्डकः।
तिष्ठ तिष्ठेति तं प्राह को गच्छति ममाग्रतः॥५४

---

१. मदीये रा० व० पुस्तके च 'उद्धृत्य' इति पाठः, स न समीचीनः। २. भुज इति मदीयपुस्तके।

मुषित्वा लोकनाथस्य भार्यां शून्याद्वनालयात्।
शुनको मन्त्रपूतं त्वं पुरोडाशमिवाध्वरे ॥५५
इत्युक्त्वा तीक्ष्णतुण्डेन चूर्णयामास तद्रथम्।
वाहान् बिभेद पादाभ्यां चूर्णयामास तद्धनुः ॥५६
ततः सीतां परित्यज्य रावणः खड्गमाददे।
चिच्छेद पक्षौ सामर्षः पक्षिराजस्य धीमतः ॥५७

**तत इति**—सीतां परित्यज्य रावणः खड्गमाददे। एतेन युद्धे समर्थोऽभूदिति। तेन जटायुषः पराक्रमातिशयो व्यज्यते। ५७

पपात किञ्चिच्छेषेण प्राणेन भुवि पक्षिराट्।
पुनरन्यरथेनाशु सीतामादाय रावणः ॥५८
क्रोशन्ती राम ! रामेति त्रातारं नाधिगच्छति।
हा राम ! हा जगन्नाथ ! मां न पश्यसि दुःखिताम् ॥५९

**क्रोशन्तीति**—जगन्नाथेति सम्बुद्ध्या त्वद्दर्शनार्थमेव प्राणं धारयामीति व्यक्तम्। ५९

रक्षसा नीयमानां स्वां भार्यां मोचय राघव ! ।
हा लक्ष्मण ! महाभाग त्राहि मामपराधिनीम् ॥६०
वाक्शरेण हतस्त्वं मे क्षन्तुमर्हसि देवर ! ।
इत्येवं क्रोशमानां तां रामागमनशङ्कया ॥६१
जगाम वायुवेगेन सीतामादाय सत्वरः।
विहायसा नीयमाना सीताऽपश्यदधोमुखी ॥६२
पर्वताग्रे स्थितान् पञ्च वानरान् वारिजानना।
उत्तरीयार्धखण्डेन विमुच्याभरणादिकम् ॥६३
बद्ध्वा चिक्षेप रामाय कथयन्त्विति पर्वते।
ततः समुद्रमुल्लङ्घ्य लङ्कां गत्वा स रावणः ॥६४

**बद्ध्वेति**—कथयन्त्वितीत्यनेन अनादिरामायणीयलीलातत्त्वम्। तेन यदा सीता लङ्कागमनं[1] तदा सुग्रीवं मित्रं कृत्वा एव रामो रावणं जघानेति तेन आगमिष्यत्येवेति भूषणप्रक्षेपहेतुः तेन स्वेच्छयैव तस्या लङ्कागमनमिति व्यज्यते। ६४

---

१. अत्र कृतवती इत्यधिकः पाठोऽपेक्षितः ।

स्वान्तःपुरे रहस्येतामशोकविपिनेऽक्षिपत् ।
राक्षसीभिः परिवृतां मातृबुद्ध्याऽन्वपालयत् ॥६५

**स्वान्तःपुर इति**——मातृबुद्ध्याऽन्वपालयदित्यनेन मुक्तिं दत्त्वेयमेव भरणपोषणादि करिष्यतीति तन्निश्चयो व्यज्यते।६५

कृशातिदीना परिकर्मवर्जिता,
दुःखेन शुष्यद्वदनातिविह्वला ।
हा राम ! रामेति विलप्यमाना,
सीता स्थिता राक्षसवृन्दमध्ये ॥६६

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डे सप्तमोऽध्यायः ।७

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामरण्यकाण्डे
सप्तमोऽध्यायः ।७



---

१. रा० व० पु० न काऽपि पुष्पिका ।

## अथ अष्टमोऽध्यायः

**श्रीमहादेव उवाच--**

रामो मायाविनं हत्वा राक्षसं कामरूपिणम्।
प्रतस्थे स्वाश्रमं गन्तुं ततो दूराद् ददर्श तम्॥१
आयान्तं लक्ष्मणं दीनं मुखेन परिशुष्यता।
राघवश्चिन्तयामास स्वात्मन्येव महामतिः॥२

**आयान्तमिति--**शुष्यता मुखेनोपलक्षितमागतं लक्ष्मणं दृष्ट्वा महामतिः श्रीरामः स्वात्मनि इति चिन्तयामास।२

लक्ष्मणस्तन्न जानाति मायासीतां मया कृताम्।
ज्ञात्वाप्येनं वञ्चयित्वा शोचामि प्राकृतो यथा॥३

**लक्ष्मण इति--**लक्ष्मणस्तन्न जानातीति काकुः जानात्येवेत्यर्थः। इति ज्ञात्वाऽपि एनं वञ्चयित्वा यथा प्राकृतस्तथा शोचामि।३

यद्यहं विरतो भूत्वा तूष्णीं स्थास्यामि मन्दिरे।
तदा राक्षसकोटीनां वधोपायः कथं भवेत्॥४

ज्ञातुरपि लक्ष्मणस्य वञ्चने हेतुमाह--**यदीति**--माया सीता हृता न तु प्रेमा इति हेतोः यद्यहं विरतः सन् मन्दिरे तूष्णीं स्थास्यामि तदा राक्षसकोटीनां वधोपायः कथं भवेन्न कथमपीत्यर्थः। अतः राक्षसहननार्थं लक्ष्मणं वञ्चयित्वा शोककरणमेवोचितमित्यर्थः।४

यदि शोचामि तां दुःखसन्तप्तः कामुको यथा।
तदा क्रमेणानुचिन्वन्सीतां यास्येऽसुरालयम्॥
रावणं सकुलं हत्वा सीतामग्नौ स्थितां पुनः॥५
मयैव स्थापितां नीत्वा याताऽयोध्यामतन्द्रितः।
अहं मनुष्यभावेन जातोऽस्मि ब्रह्मणार्थितः॥६
मनुष्यभावमापन्नः किञ्चित्कालं वसामि कौ।
ततो मायामनुष्यस्य चरितं मेऽनुशृण्वताम्॥७

मुक्तिःस्यादप्रयासेन भक्तिमार्गानुवर्तिनाम् ।
निश्चित्यैवं तदा दृष्ट्वा लक्ष्मणं वाक्यमब्रवीत् ॥८

**मयैवेति**—मनुष्यभावेन नित्यद्विभुजश्रीरामावेशेन जातः प्रादुर्भूतः । मायया जीवोद्धारार्थं कृपया मनुष्यनाट्यं कुर्वतो मे चरितं विलापादिकम् अनुशृण्वतां श्रुत्वा रोदनादि अनुकुर्वताम् अतएव भक्तिमार्गानुवर्तिनां तत्प्रेम्णाऽप्रयासेन मुक्तिः स्यात् संसारादिति शेषः।६-८।

किमर्थमागतोऽसि त्वं सीतां त्यक्त्वा मम प्रियाम् ।
नीता वा भक्षिता वाऽपि राक्षसैर्जनकात्मजा ॥९
लक्ष्मणः प्राञ्जलिः प्राह सीताया दुर्वचो रुदन् ।
हा लक्ष्मणेति वचनं राक्षसोक्तं श्रुतं तया ॥१०
त्वद्वाक्यसदृशं श्रुत्वा मां गच्छेति त्वराब्रवीत् ।
रुदन्ती सा मया प्रोक्ता देवि ! राक्षसभाषितम् ॥११
नेदं रामस्य वचनं स्वस्था भव शुचिस्मिते ! ।
इत्येवं सान्त्विता साध्वी मया प्रोवाच मां पुनः ॥
यदुक्तं दुर्वचो राम ! न वाच्यं पुरतस्तव ॥१२

वञ्चनप्रकारमाह—**किमर्थमिति**—ज्ञात्वाऽप्येनं वञ्चयित्वेति रामेङ्गितं विज्ञाय तथैवाह लक्ष्मणः प्राञ्जलिरित्यादिना। एतदुक्त्या तदिच्छानुसारेणैव सर्वं करोतीति सूचितम्। ९-१२।

कर्णौ पिधाय निर्गत्य यातोऽहं त्वां समीक्षितुम् ।
रामस्तु लक्ष्मणं प्राह तथाप्यनुचितं कृतम् ॥१३
त्वया स्त्रीभाषितं सत्यं कृत्वा त्यक्ता शुभानना ।
नीता वा भक्षिता वापि राक्षसैर्नात्र संशयः ॥१४
इति चिन्तापरो रामः स्वाश्रमं त्वरितो ययौ ।
तत्रादृष्ट्वा जनकजां विललापातिदुःखितः ॥१५
हा प्रिये ! क्व गतासि त्वं नासि पूर्ववदाश्रमे ।
अथवा मद्विमोहार्थं लीलया क्व विलीयसे ॥१६
इत्याचिन्वन् वनं सर्वं नापश्यज्जानकीं तदा ।
वनदेव्यः कुतः सीतां ब्रुवन्तु मम वल्लभाम् ॥१७

मृगाश्च पक्षिणो वृक्षा दर्शयन्तु मम प्रियाम्।
इत्येवं विलपन्नेव रामः सीतां न कुत्रचित्॥१८
सर्वज्ञः सर्वथा क्वाऽपि नापश्यद्रघुनन्दनः।
आनन्दोऽप्यन्वशोचत्तामचलोऽप्यनुधावति ॥१९
निर्भयो निरहङ्कारोऽप्यखण्डानन्दरूपवान्।
मम जायेति सीतेति विललापातिदुःखितः॥२०
एवं मायामनुचरन्नसक्तोऽपि रघूत्तमः।
आसक्त इव मूढानां भाति तत्त्वविदां न हि॥२१
एवं विचिन्वन् सकलं वनं रामः सलक्ष्मणः।
भग्नं रथं छत्रचापं कूबरं पतितं भुवि॥२२
दृष्ट्वा लक्ष्मणमाहेदं पश्य लक्ष्मण! केनचित्।
नीयमानां जनकजां तं जित्वाऽन्यो जहार ताम्॥२३
ततः कञ्चिद्भुवो भागं गत्वा पर्वतसन्निभम्।
रुधिराक्तवपुर्दृष्ट्वा रामो वाक्यमथाब्रवीत्॥२४
एष वै भक्षयित्वा तां जानकीं शुभदर्शनाम्।
शेते विविक्तेऽतितृप्तः पश्य हन्मि निशाचरम्॥२५
चापमानय शीघ्रं मे बाणं च रघुनन्दन!।
तच्छ्रुत्वा रामवचनं जटायुः प्राह भीतवत्॥२६

**चापमिति**—भीतवत् न तु भीत इत्यनेन श्रीरामो मनुष्यनाट्यं करोतीति जानातीति सूचितम्।२६

मां न मारय भद्रं ते म्रियमाणं स्वकर्मणा।
अहं जटायुस्ते भार्याहारिणं समनुद्रुतः॥२७
रावणं तत्र युद्धं मे बभूवारिविमर्दन!।
तस्य वाहान् रथं चापं छित्त्वाहं तेन घातितः॥२८
पतितोऽस्मि जगन्नाथ! प्राणांस्त्यक्ष्यामि पश्य माम्॥२९

**पतित इति**—प्राणांस्त्यक्ष्यामि पश्य मामित्यनेन यद्येनं पश्यन् प्राणांस्त्यक्ष्यामि तर्हि योगिदुर्लभां मुक्तिं प्राप्स्यामीति तन्निश्चयो व्यज्यते।२९

तच्छ्रुत्वा राघवो दीनं कण्ठप्राणं ददर्श ह।
हस्ताभ्यां संस्पृशन् रामो दुःखाश्रुवृतलोचनः॥३०
जटायो! ब्रूहि मे भार्या केन नीता शुभानना।
मत्कार्यार्थं हतोऽसि त्वमतो मे प्रियबान्धवः॥३१
जटायुः सन्नया वाचा वक्त्राद्रक्तं समुद्वमन्।
उवाच रावणो राम! राक्षसो भीमविक्रमः॥३२
आदाय मैथिलीं सीतां दक्षिणाभिमुखो ययौ।
इतो वक्तुं न मे शक्तिः प्राणांस्त्यक्ष्यामि तेऽग्रतः॥३३
दिष्ट्या दृष्टोऽसि राम! त्वं म्रियमाणेन मेऽनघ!।
परमात्मासि विष्णुस्त्वं मायामनुजरूपधृक्॥३४

**दिष्ट्येति**—परमात्मा आदिनारायणस्त्वं मायया अस्मदादिसकलजीवोद्धारक-कृपया मनुजस्य श्रीरामस्यावेशेन तद्रूपधृग्।३४

अन्तकालेऽपि दृष्ट्वा त्वां मुक्तोऽहं रघुसत्तम!।
हस्ताभ्यां स्पृश मां राम! पुनर्यास्यामि ते पदम्॥३५

**अन्तकाल इति**—परमात्मज्ञानेऽपि चरणेन मां स्पृशेति वक्तव्ये हस्ताभ्यां मां स्पृशेत्युक्तस्य रामे वात्सल्यातिशयस्तेनौर्ध्वदेहिकमपि त्वमेव कुर्विति सूचितम्।३५

तथेति रामः पस्पर्श तदङ्गं पाणिना स्मयन्।
ततः प्राणान्परित्यज्य जटायुः पतितो भुवि॥३६

**तथेतीति**—स्मयन् पस्पर्श इत्यनेन तिरश्चामप्येतादृशं मुनिदुर्लभं विज्ञानमिति स्मयहेतुः। यदा रावणघातजन्यपीडानिवारणं नेच्छति मत्पितुः स्वारूप्यमिच्छतीति।३६

रामस्तमनुशोचित्वा बन्धुवत्साश्रुलोचनः।
लक्ष्मणेन समानाय्य काष्ठानि प्रददाह तम्॥३७
स्नात्वा दुःखेन रामोऽपि लक्ष्मणेन समन्वितः।
हत्वा वने मृगं तत्र मांसखण्डान् समन्ततः॥३८
शाद्वले प्राक्षिपद्रामः पृथक् पृथगनेकधा।
भक्षन्तु पक्षिणः सर्वे तृप्तो भवतु पक्षिराट्॥३९
इत्युक्त्वा राघवः प्राह जटायो! गच्छ मत्पदम्।
मत्सारूप्यं भजस्वाद्य सर्वलोकस्य पश्यतः॥४०

**इत्युक्त्वेति**—हे जटायो! त्वं मत्पदं साकेतं गच्छेत्यर्थः। गत्वा च तत्र, मत्सारूप्यं भजस्व। मत्पितुः सारूप्यम् मध्यमपदलोपी समासः। विमानं भानुसन्निभमिति वक्ष्यमाणरीत्या, यथा देशस्थितं सूर्यं सर्वे जनाः पश्यन्ति तत्सन्निभविमानारोहेण सर्वलोकस्य पश्यतः सतः।४०

ततोऽनन्तरमेवासौ दिव्यरूपधरः शुभः।
विमानवरमारुह्य भास्वरं भानुसन्निभम्।।४१
शङ्खचक्रगदापद्मकिरीटवरभूषणैः।
द्योतयन् स्वप्रकाशेन पीताम्बरधरोऽमलः।।४२
चतुर्भिः पार्षदैर्विष्णोस्तादृशैरभिपूजितः।
स्तूयमानो योगिगणैः राममाभाष्य सत्वरः।।
कृताञ्जलिपुटो भूत्वा तुष्टाव रघुनन्दनम्।।४३

**तत इति**—ततोऽनन्तरमेवासौ जटायुः दिव्यरूपधरः सन् भानुसन्निभं भास्वरं विमान [1]श्रेष्ठमाह [2]सत्त्वप्रकाशेन सर्वाःदिशः द्योतयन् प्रकाशयन् शंखचक्रगदापद्मैः किरीटेन वरभूषणैश्चोपलक्षितस्य विष्णोश्चतुर्भिस्तादृशैर्विष्णुसदृशैः पार्षदैरभिपूजितः यद्वा चतुर्भिः पार्षदैः सहितः शंखचक्रादिभिर्द्योतयन् साकेतलोको तद्वद् वदरीवने स्थितो यो विष्णुः तस्य पूजितः साकेतलोकनयनार्थं तेनैवात्रागत्य पूजित इत्यर्थः। विष्णोरिति कर्तरि षष्ठी साकेतचतुर्द्वारवर्णनप्रस्तावे वशिष्ठसंहितायां बृहत्संहितायां च साकेतोत्तरद्वारे महावैकुण्ठसंज्ञमस्तीति विस्तरेण वर्णितमिति। योगिगणैः स्तूयमानः एवं भूतः सन् राममाभाष्य सम्बोध्य रघुनन्दनं तुष्टावेति त्रयाणामन्वयः। 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति भगवद्वचनात् आत्मानं दशरथसखं मत्वा श्रीरामे वात्सल्यभक्तिं कुर्वतो जटायोर्दशरथसारूप्यमुक्तिर्जातेति बोध्यम्। ४१-४३

**जटायुरुवाच**—

अगणितगुणमप्रमेयमाद्यं,
सकलजगत्स्थितिसंयमादिहेतुम्।
उपरमपरमं परात्मभूतं
सततमहं प्रणतोऽस्मि रामचन्द्रम्।।४४

---

१. श्रेष्ठमारुह्य इत्युचितः। २. स्वप्रकाशेन इत्युचितः।

निरवधिसुखमिन्दिराकटाक्षं,
क्षपितसुरेन्द्रचतुर्मुखादिदुःखम् ।
नरवरमनिशं नतोऽस्मि रामं,
वरदमहं वरचापबाणहस्तम् ।।४५

**निरवधिसुखमिति**—नरवरमिति प्रकाशिनित्यविहारिश्रीरामभेदाभिप्रायेणेति बोध्यम्। तच्छक्तिधारकत्वेन स एवमिति भावः।४५

त्रिभुवनकमनीयरूपमीड्यं,
रविशतभासुरमीहितप्रदानम् ।
शरणदमनिशं सुरागमूले,
कृतनिलयं रघुनन्दनं प्रपद्ये ।।४६

**त्रिभुवनेति**—रविशतभासुरमिति। ब्रह्म त्वत्प्रभेति भावः। ईहितप्रदानं भक्तेहितदानस्वभावं, सुरागमूले शोभनो रागःप्रीतिः तस्य मूलमाश्रयश्चितौ तत्सुकृतस्थानम्। ४६

भवविपिनदवाग्निनामधेयं,
भवमुखदैवतदैवतं दयालुम् ।
दनुजपतिसहस्रकोटिनाशं,
रवितनयासदृशं हरिं प्रपद्ये ।।४७

**भवविपिनेति**—दनुजपतिसहस्रकोटिनाशमित्यनेन सामर्थ्यातिशयः तेन लघुकालेन सपरिकरं रावणं हत्वा सीतां नेष्यस्येवेति ध्वन्यते। रवितनयासदृशं रवितनया यमुना तत्सदृशं नवदूर्वादलसदृशमिति यावत्। हरिमित्यनेन शीघ्रं भरतादीनां क्लेशं हरिष्यस्येवेति सूचितम्।४७

अविरतभवभावनातिदूरं,
भवविमुखैर्मुनिभिः सदैव दृश्यम् ।
भवजलधिसुतारणाङ्घ्रिपोतं,
शरणमहं रघुनन्दनं प्रपद्ये ।।४८

**अविरतभवेति**—अविरतभवस्य संसारस्य भावना येषां तेषामतिदूरं संसारविमुखैर्मुनिभिः सदैव दृश्यमिति, अत्र प्रत्यक्षतः सर्वैरवतारकाले दृश्यत्वात् कथमदृश्यमिति शङ्कायां तद्दर्शनेच्छामात्रेणसंसाराभावात् मुक्ता एव त्वां पश्यन्तीति हेतुसमर्थनरूपकाव्यलिङ्गालङ्कारो व्यज्यते। तेन ये ये राक्षसादयः त्वां पश्यन्ति ते संसारान्निर्मुक्तामुनय एवेति।४८

गिरिशगिरिसुतामनोनिवासं,
गिरिवरधारिणमीहिताभिरामम् ।
सुरवरदनुजेन्द्रसेविताङ्घ्रिं,
सुरवरदं रघुनायकं प्रपद्ये ।।४९

**गिरिशेति**——गिरिवरधारिणमित्यनेन कृष्णरूपेण त्वमेव सदा वृन्दावने विहरसि। उपलक्षणं चैतदन्येषामवताराणाम्। तेनावतारी त्वमेवासीति सूचितं तेन नित्यप्रमोदवन-विहारिश्रीरघुनन्दनस्यावेशो नित्यवृन्दावनविहारी, आदिनारायणस्तु सर्वेषामवतारा-णामवतारीति सर्वमुपसंहृत्याह-रघुनायकमिति। रहन्ते लोकाल्लोकोत्तरं गच्छन्तीति रघवो जीवाः तेषां नायकः एतेन त्वमेव सर्वोपास्योऽसीति सूचितम्।४९

परधनपरदारवर्जितानां,
परगुणभूतिषु तुष्टमानसानाम्।
परहितनिरतात्मनां सुसेव्यं,
रघुवरमम्बुजलोचनं प्रपद्ये ।।५०

**परधनेति**——परधनेत्यादीप्सितपदानां सुसेव्यमित्यनेनान्वयः। त्वद्भक्ता अपि कृतपरमधर्माङ्गीकारा इति भावः। अम्बुजलोचनमित्यनेन त्वद्दृष्टिर्यस्योपरि पतति तस्य त्रिदुःखनाशो भवतीति सूचितम्।५०

स्मितरुचिरविकासिताननाब्ज-
मतिसुलभं सुरराजनीलनीलम्।
सितजलरुहचारुनेत्रशोभं,
रघुपतिमीशगुरोर्गुरुं प्रपद्ये ।।५१

**स्मितरुचिरेति**——स्मितेनेषद्धासेन रुचिरं विकासितमाननं यस्येत्यनेन नित्योत्सवः सूचितः। अतिसुलभम् इत्यनेन भक्तवात्सल्यं ध्वनितम्। ईशगुरोर्गुरुमेतेन त्वमेव सर्वेश्वरो-ऽसीति भावः।५१

हरिकमलजशम्भुरूपभेदा-
त्त्वमिह विभासि गुणत्रयानुवृत्तः।
रविरिव जलपूरितोदपात्रे-
ष्वमरपतिस्तुतिपात्रमीशमीडे ।।५२

**हरिकमलजेति**——यथैकोऽपि रवि [1]रुदकपात्रेष्वनेको विभाति तथैव त्वमेकोऽपि गुणभेदाद्धर्यादिसंज्ञः विभासि। अनेन त्वं तु निर्गुणोऽसीति सूचितम्।५२

---

१ रुदय इति मत्पुस्तके।

रतिपतिशतकोटिसुन्दराङ्गं,
शतपथगोचरभावनाविदूरम् ।
यतिपतिहृदये सदा विभातुं,
रघुपतिमार्तिहरं प्रभुं प्रपद्ये ।।५३

ननु निर्गुणत्वात्तर्हि किमहमरूप इति चेत्तत्राह **रतिपतिरिति**-रतिपतिः कामस्ततोऽपि शतकोटिगुणं सुन्दरमङ्गं यस्येत्यर्थः। तर्हि प्राकृतोऽहमत आह—शतपथगोचर-भावनाविदूरं शतपथेषु अनेकवेदोक्तमार्गेषु गोचरा या भावना तया विशेषतो दूरम् अवाङ्मनसगोचरं, यतिपतयः तद्धृदये रघवो जीवाः तेषां पतिम् अत एवार्तिहरम् ।५३

इत्येवं स्तुवतस्तस्य प्रसन्नोऽभूद्रघूत्तमः।
उवाच गच्छ भद्रं ते मम विष्णोः परं पदम् ।।५४
शृणोति य इदं स्तोत्रं लिखेद्वा नियतः पठेद्।
स याति मम सारूप्यं मरणे मत्स्मृतिं लभेत् ।।५५
इति राघवभाषितं तदा,
श्रुतवान् हर्षसमाकुलो द्विजः।
रघुनन्दनसाम्यमास्थितः,
प्रययौ ब्रह्मसुपूजितं पदम् ।।५६

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डे अष्टमोऽध्यायः।८

**इतीति**—रघुनन्दनस्य दशरथस्य साम्यमास्थितः जटायुः ब्रह्मसुपूजितं सर्वैः सुष्ठु पूजितं ब्रह्म अयोध्यां ययौ। 'अयोध्या च परब्रह्म सरयूःसगुणः पुमान्' इति वसिष्ठ-संहितोक्तेः।५६

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामरण्यकाण्डे
अष्टमोऽध्यायः।८

⊙

---

१. रा० व० पुस्तके पुष्पिका न विद्यते।

## अथ नवमोऽध्यायः

**श्रीमहादेव उवाच—**

ततो रामो लक्ष्मणेन जगाम विपिनान्तरम्।
पुनर्दुःखं समाश्रित्य सीताऽन्वेषणतत्परः॥१

तत्राद्‌भुतसमाकारो राक्षसः प्रत्यदृश्यत।
वक्षस्येव महावक्त्रश्चक्षुरादिविवर्जितः॥२

बाहू योजनमात्रेण व्यापृतौ तस्य रक्षसः।
कबन्धो नाम दैत्येन्द्रः सर्वसत्त्वविहिंसकः॥३

तद्‌बाह्‌वोर्मध्यदेशे तौ चरन्तौ रामलक्ष्मणौ।
ददर्शतुर्महासत्त्वं तद्‌बाहुपरिवेष्टितौ॥४

रामः प्रोवाच विहसन् पश्य लक्ष्मण! राक्षसम्।
शिरःपादविहीनोऽयं यस्य वक्षसि चाननम्॥५

बाहुभ्यां लभ्यते यद्यत्तत्तद्‌भक्षन् स्थितो ध्रुवम्।
आवामप्येतयोर्बाह्‌वोर्मध्ये संकलितौ ध्रुवम्॥६

गन्तुमन्यत्र मार्गो न दृश्यते रघुनन्दन!।
किं कर्तव्यमितोऽस्माभिरिदानीं भक्षयेत्स नौ॥७

**गन्तुमन्यत्रेति**—मनुष्यनाट्येनेयमुक्तिः, तथा लक्ष्मणाभिप्रायज्ञाने तात्पर्यम्।७

लक्ष्मणस्तमुवाचेदं किं विचारेण राघव!।
आवामेकैकमव्यग्रौ छिन्द्यावस्य भुजौ ध्रुवम्॥८

तथेति रामः खड्गेन भुजं दक्षिणमच्छिनत्।
तथैव लक्ष्मणो वामं चिच्छेद भुजमञ्जसा॥९

ततोऽतिविस्मितो दैत्यः कौ युवां सुरपुङ्गवौ।
मद्‌बाहुच्छेदकौ लोके दिवि देवेषु वा कुतः॥१०

ततोऽब्रवीद्धसन्नेव रामो राजीवलोचनः।
अयोध्याधिपतिः श्रीमान् राजा दशरथो महान्॥११

**तत इति**—ततोऽब्रवीद्धसन्नेवेत्यनेन सर्वलोकाच्छेद्ययोस्त्वद्भुजयोः छेदनेऽपि स्वोद्धारकं रामं न जानासीति हासे हेतुर्व्यक्तः।११

रामोऽहं तस्य पुत्रोऽसौ भ्राता मे लक्ष्मणः सुधीः।
मम भार्या जनकजा सीता त्रैलोक्यसुन्दरी॥१२
आवां मृगयया यातौ तदा केनापि रक्षसा।
नीतां सीतां विचिन्वन्तौ चागतौ घोरकानने॥१३
बाहुभ्यां वेष्टितावत्र तव प्राणरिरक्षया।
छिन्नौ तव भुजौ त्वं च को वा विकटरूपधृक्॥१४

**कबन्ध उवाच**—

धन्योऽहं यदि रामस्त्वमागतोऽसि ममान्तिकम्।
पुरा गन्धर्वराजोऽहं रूपयौवनदर्पितः॥१५
विचरंल्लोकमखिलं वरनारीमनोहरः।
तपसा ब्रह्मणो लब्धमवध्यत्वं रघूत्तम!॥१६
अष्टावक्रं मुनिं दृष्ट्वा कदाचिदहसं पुरा।
क्रुद्धोऽसावाह दुष्ट! त्वं राक्षसो भव दुर्मते!॥१७
अष्टावक्रः पुनः प्राह वन्दितो मे दयापरः।
शापस्यान्तं च मे प्राह तपसा द्योतितप्रभः॥१८
त्रेतायुगे दाशरथिर्भूत्वा नारायणः स्वयम्।
आगमिष्यति ते बाहू छिद्येते योजनायतौ॥१९

**त्रेतायुग इति**—दाशरथिर्भूत्वा नित्यविहारिप्रकाशिद्विभुजश्रीरामावेशं गृहीत्वेत्यर्थः।१९

तेन शापाद्विनिर्मुक्तो भविष्यसि यथा पुरा।
इति शप्तोऽहमद्राक्षं राक्षसीं तनुमात्मनः॥२०
कदाचिद् देवराजानमभ्यद्रवमहं रुषा।
सोऽपि वज्रेण मां राम! शिरोदेशेऽभ्यताडयत्॥२१

तदा शिरो गतं कुक्षिं पादौ च रघुनन्दन!।
ब्रह्मदत्तवरान्मृत्युर्नाभून्मे वज्रताडनात् ॥२२

मुखाभावे कथं जीवेदयमित्यमराधिपम्।
ऊचुः सर्वे दयाविष्टा मां विलोक्यास्यवर्जितम् ॥२३

ततो मां प्राह मघवा जठरे ते मुखं भवेत्।
बाहू ते योजनायामौ भविष्यत इतो व्रज ॥२४

इत्युक्तोऽत्र वसन्नित्यं बाहुभ्यां वनगोचरान्।
भक्षयाम्यधुना बाहू खण्डितौ मे त्वयानघ! ॥२५

इतः परं मां श्वभ्रास्ये निक्षिपाग्नीन्धनावृते।
अग्निना दह्यमानोऽहं त्वया रघुकुलोत्तम! ॥२६

पूर्वरूपमनुप्राप्य भार्यामार्गं वदामि ते।
इत्युक्ते लक्ष्मणेनाशु श्वभ्रं निर्माय तत्र तम् ॥२७

निक्षिप्य प्रादहत्काष्ठैस्ततो देहात्समुत्थितः।
कन्दर्पसदृशाकारः सर्वाभरणभूषितः ॥२८

रामं प्रदक्षिणं कृत्वा साष्टाङ्गं प्रणिपत्य च।
कृताञ्जलिरुवाचेदं भक्तिगद्गदया गिरा ॥२९

**राममिति**—प्रणिपत्य उरसा रिंगन् सर्पवदित्यर्थः ।२९

**गन्धर्व उवाच**—

स्तोतुमुत्सहते मेऽद्य मनो रामातिसम्भ्रमात्।
त्वामनन्तमनाद्यन्तं मनोवाचामगोचरम् ॥३०

**स्तोतुमिति**—मनो वाचामगोचरम्। एतेनास्मद्दृष्टिपथे स्वकृपयैव चरसीति भावः।३०

सूक्ष्मं ते रूपमव्यक्तं देहद्वयविलक्षणम्।
दृग्रूपमितरत्सर्वं दृश्यं जडमनात्मकम्।
तत्कथं त्वां विजानीयाद् व्यतिरिक्तं मनः प्रभो! ॥३१

**सूक्ष्ममिति**—मनोवचनागोचरत्वमेवाह–ते सूक्ष्मं रूपम् अन्तर्यामिरूपम् अव्यक्तं निराकारप्रकाशब्रह्मरूपं देहद्वयविलक्षणम् एतत्साकारनिराकाररूपविलक्षणं 'वैष्णवीं

तां महाबाहो ! यदाकाशं सनातनम् ।' इति । इतरत्सर्वं साकारनिराकाररूपद्वयात् प्रकाशिरूपाच्च भिन्नं दृश्यं दृश्यमानं जडं तस्यापि द्रष्टारं त्वाम् अनात्मकम् अलब्धषष्ठशरीरम् अत एव त्वद्व्यतिरिक्तं मनः कथं विजानीयात् ।३१

बुद्ध्यात्माभासयोरैक्यं जीव इत्यभिधीयते ।
बुद्ध्यादिसाक्षी ब्रह्मैव तस्मिन्निर्विषयेऽखिलम् ॥३२

यदा नामरूपविभागानर्हस्य वासनाविशिष्टव्यष्ट्यात्मकभगवच्चिच्छरीरस्य महाप्रलये ब्रह्मणि लीनस्य 'तदैक्षत बहु स्याम्' इति श्रुत्युक्तरीत्या जीववासनानुसारेण भगवत्संकल्पात् यदा चित्तसंयोगस्तदा जीवसंज्ञा जातेति तस्यापि न ज्ञानयोग्यतेति वक्तुं तत्स्वरूपमाह **बुद्ध्येति**—बुद्धौ अन्तःकरणचतुष्टये य आत्मनश्चिच्छरीरस्याभासः आत्मनि चिच्छरीरे यो बुद्ध्याभासः तयोरैक्यं तादृशाध्यासैक्यविषयीभूतं यदा तदा चिच्छरीरमेव जीव इत्यभिधीयते। तर्हि ब्रह्मैव जानीयादत आह-बुद्ध्यादीति। ब्रह्म तु बुद्ध्यादीनां मनश्चित्तादीनामपि साक्षी न तु तवेत्यर्थः। तस्मिन्निर्विषये विषयशून्ये निर्विकारे विकाररहिते अखिलात्मनि अज्ञानवशादिदमखिलं जगदारोप्यते तत् ब्रह्मास्ति। एतेन ज्ञानोपकरणाभावात् प्रकाशरूपं ब्रह्म प्रकाशिनं त्वां कथं विजानीयादिति सूचितम्।३२

आरोप्यतेऽज्ञानवशान्निर्विकारेऽखिलात्मनि ।
हिरण्यगर्भस्ते सूक्ष्मं देहं स्थूलं विराट् स्मृतम् ॥३३
भावनाविषयो राम ! सूक्ष्मं ते ध्यातृमङ्गलम् ॥३४

यदि ब्रह्मैव न जानाति तर्हि स्थूलसूक्ष्मशरीरत्वात् विराट् हिरण्यगर्भादयः शरीरिणं त्वां कथं विजानन्तीति भावः। सर्वस्यापि ज्ञानाविषयत्वेन तुच्छत्वमाशङ्क्याह **भावनेति**—तत्र सूक्ष्मं प्रकाशित्वेन ते रूपं ध्यातॄणां मङ्गलकरं भावनाविषयो हृदयपुण्डरीकादौ ध्येयमिति। एतेन 'यमेवैष वृणुते तेन लभ्येति' श्रुत्या तत्कृपयैव इयं हृदयपुण्डरीके स्फुरतीति व्यक्तम्। ३४

भूतं भव्यं भविष्यच्च यत्रेदं दृश्यते जगत् ।
स्थूलेऽण्डकोशे देहे ते महदादिभिरावृते ।
सप्तभिरुत्तरगुणैर्वैराजो धारणाश्रयः ॥३५
त्वमेव सर्वकैवल्यं लोकास्तेऽवयवाः स्मृताः ।
पातालं ते पादमूलं पार्ष्णिस्तव महातलम् ॥३६
रसातलं ते गुल्फौ तु तलातलमितीर्यते ।
जानुनी सुतलं राम ! ऊरुस्ते वितलं तथा ॥३७

अतलं च मही राम! जघनं नाभिगं नभः।
उरःस्थलं ते ज्योतींषि ग्रीवा ते मह उच्यते॥३८

वदनं जनलोकस्ते तपस्ते शंखदेशगम्।
सत्यलोको रघुश्रेष्ठ! शीर्षण्यास्ते सदा प्रभो!॥३९

इन्द्रादयो लोकपाला बाहवस्ते दिशः श्रुती।
अश्विनौ नासिके राम! वक्त्रं तेऽग्निरुदाहृतः॥४०

चक्षुस्ते सविता राम! मनश्चन्द्र उदाहृतः।
भ्रूभङ्ग एव कालस्ते बुद्धिस्ते वाक्पतिर्भवेत्॥४१

रुद्रोऽहङ्काररूपस्ते वाचश्छन्दांसि तेऽव्यय!।
यमस्ते दंष्ट्रदेशस्थो नक्षत्राणि द्विजालयः॥४२

हासो मोहकरी माया सृष्टिस्तेऽपाङ्गमोक्षणम्।
धर्मः पुरस्तेऽधर्मश्च पृष्ठभाग उदीरितः॥४३

निमिषोन्मेषणे रात्रिंदिवा चैव रघूत्तम!।
समुद्राः सप्त ते कुक्षिर्नाड्यो नद्यस्तव प्रभो!॥४४

रोमाणि वृक्षौषधयो रेतो वृष्टिस्तव प्रभो!।
महिमा ज्ञानशक्तिस्त एवं स्थूलं वपुस्तव॥४५

यदस्मिन् स्थूलरूपे ते मनः सन्धार्यते नरैः।
अनायासेन मुक्तिः स्यादतोऽन्यन्नहि किञ्चन॥४६

स्थूलरूपभावनयैव सूक्ष्मरूपस्फूर्तिर्भवतीति वक्तुं तत्स्वरूपमाह **भूतमित्यादि-** सार्धद्वादशभिः। **यदस्मिन्** स्थूलरूपे मनः सन्धार्यते तेन मुक्तिरित्यस्यायं भावः तच्छरीरत्वेन सरित्समुद्रादिकं पश्यन् 'त्वद्भावोत्पत्त्या विग्रहालाभ' इति श्रुत्या त्वत्कृपालब्धषष्ठशरीरं प्राप्य तच्छरीरदृशा त्वां पश्यति युगलं सूक्ष्मं ते रूपं [1]जानन्तीति।३५-४६।

अतोऽहं राम! रूपं ते स्थूलमेवानुभावये।
यस्मिन् ध्याते प्रेमरसः सरोमपुलको भवेत्॥४७

---

१. अत्र प्रसङ्गानुसारेण 'जानाति' इति समीचीनः।

**अत इति**—यस्मिन् ध्याते सरोमपुलकः प्रेमरसो भवति। एतेन स्थूलभवनात् सूक्ष्मचतुर्भुजादिरूपस्फूर्तिसाधनमिति व्यक्तम्।४७

तदैव मुक्तिःस्याद्राम! यदा ते स्थूलभावकः।
तदप्यास्तां तवैवाहमेतद्रूपं विचिन्तये॥४८

धनुर्बाणधरं श्यामं जटावल्कलभूषितम्।
अपीच्यवयसं सीतां विचिन्वन्तं सलक्ष्मणम्॥४९

इदमेव सदा मे स्यान्मानसे रघुनन्दन!।
सर्वज्ञः शंकरः साक्षात्पार्वत्या सहितः सदा॥५०
त्वद्रूपमेवं सततं ध्यायन्नास्ते रघूत्तम!।
मुमूर्षूणां तदा काश्यां तारकं ब्रह्मवाचकम्॥५१

**तदैवेत्यादि**—तदैव मुक्तिः स्यादित्यनेन ज्ञानमात्रेण मुक्तिर्नैषास्तीति सूचितम्। तदप्यास्तामिति। तदपि पूर्वोक्तस्थूलसूक्ष्मरूपं श्रीरामावेशविभुत्वादास्तां मम तु इदमेवाभीष्टमिति एतद्रूपमिति। एतद्रूपध्यानप्रार्थनायां हेतुमाह—इदमिति। सर्वज्ञः शङ्करोऽपि पार्वत्या सहितः त्वद्रूपं ध्यायन्नास्ते मुमुक्षूणां राम रामेत्युपदिशति च। एतेन एतद्रूपस्य समाधिकराहित्यं सूचितम्। शङ्करः ध्यायन्नास्त इत्यनेन जटावल्कलवैशिष्ट्ये न तात्पर्यं किन्तु द्विभुजरूप एवेत्यपि व्यक्तम्।४८-५१।

राम रामेत्युपदिशन् सदा सन्तुष्टमानसः।
अतस्त्वं जानकीनाथ! परमात्मा सुनिश्चितः॥५२

ततोऽपि सुलभमाह **राम रामेत्यादिना**—या मुक्तिः साकारनिराकारध्यानेन सा तवाक्षररामनामोच्चारणमात्रेणैवेत्यर्थः। जानकीनाथेत्यनेन नित्यविहारिपरमात्मा त्वमसीति भावः।५२

सर्वे ते मायया मूढास्त्वां न जानन्ति तत्त्वतः।
नमस्ते रामभद्राय वेधसे परमात्मने॥५३
अयोध्याधिपते! तुभ्यं नमः सौमित्रिसेवित!।
त्राहि त्राहि जगन्नाथ! मां माया नावृणोतु ते॥५४

**श्रीराम उवाच**—

तुष्टोऽहं देवगन्धर्व! भक्त्या स्तुत्या च तेऽनघ!।
याहि मे परमं स्थानं योगिगम्यं सनातनम्॥५५

**तुष्टोऽहमिति**--योगिगम्यं योगः भगवद्दत्तषष्ठशरीरसम्बन्धः सोऽस्ति येषामिति योगिनस्तैर्गम्यं प्राप्यम्।५५

जयन्ति ये नित्यमनन्यबुद्ध्या,
भक्त्या त्वदुक्तं स्तवमागमोक्तम्।
तेऽज्ञानसम्भूतभवं विहाय,
मां यान्ति नित्यानुभवानुमेयम्।।५६

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डे नवमोऽध्यायः।९

**जयन्तीति**--नित्यानुभवानुमेयम्-नित्यो योऽनुभवः प्रकाशब्रह्मानन्दरूपः तेन अनुमेयं मां प्रकाशिनम्।५६



[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामरण्यकाण्डे
नवमोऽध्यायः।९



---

१. रा० व० पुस्तके पुष्पिका न विद्यते।

## अथ दशमोऽध्यायः

**श्रीमहादेव उवाच—**

लब्ध्वा वरं स गन्धर्वः प्रयास्यन् राममब्रवीत्।
शबर्यास्ते पुरोभागे आश्रमे रघुनन्दन! ॥१

**लब्ध्वेति**—भार्यामार्गं वदामि ते इति पूर्वप्रतिज्ञातत्वेऽपि मार्गं नाऽवदत् तेन परमात्मा श्रीरामः स्वयमेव सर्वं जानातीति तस्याशयो व्यक्तः। शबर्यास्ते पुरोभागे इत्यनेन अनादिरामायणीयलीला सूचिता।१

भक्त्या त्वत्पादकमले भक्तिमार्गविशारदा।
तां प्रयाहि महाभाग! सर्वं ते कथयिष्यति॥२
इत्युक्त्वा प्रययौ सोऽपि विमानेनार्कवर्चसा।
विष्णोःपदं रामनामस्मरणे फलमीदृशम्॥३

**इत्युक्त्वेति**—पद्यते इति पदं विष्णोः पदं विष्णुप्राप्यं साकेताख्यम्। रामनामस्मरणे ईदृशं फलम्। एतेन पूर्वत एव रामस्मरणं कुर्वन् स्थित इति सूचितम्।३

त्यक्त्वा तद्विपिनं घोरं सिंहव्याघ्रादिदूषितम्।
शनैरथाश्रमपदं शबर्या रघुनन्दनः॥४
शबरी राममालोक्य लक्ष्मणेन समन्वितम्।
आयान्तमाराद्धर्षेण प्रत्युत्थायाचिरेण सा॥५
पतित्वा पादयोरग्रे हर्षपूर्णाश्रुलोचना।
स्वागतेनाभिनन्द्याथ स्वासने संन्यवेशयत्॥६

**पतित्वेति**—अश्रुलोचनेत्यनेन प्रेमातिशयः सूचितः।६

रामलक्ष्मणयोः सम्यक्पादौ प्रक्षाल्य भक्तितः।
तज्जलेनाभिषिच्याङ्गमथार्घ्यादिभिरावृता ॥७
सम्पूज्य विधिवद्रामं ससौमित्रिं सपर्यया।
सङ्गृहीतानि दिव्यानि रामार्थं शबरी मुदा॥८

**सम्पूज्येति**—राङ्गृहीतानीत्यनेन यद्वृक्षफलं भक्षणे स्वाद्वागतं तद्वृक्षफलानि स्थापितवतीति तेन तस्याः स्नेहाधिक्यं सूचितम्।८

फलान्यमृतकल्पानि ददौ रामाय भक्तितः।
पादौ सम्पूज्य कुसुमैः सुगन्धैः सानुलेपनैः॥९
कृतातिथ्यं रघुश्रेष्ठमुपविष्टं सहानुजम्।
शबरी भक्तिसम्पन्ना प्राञ्जलिर्वाक्यमब्रवीत्॥१०
अत्राश्रमे रघुश्रेष्ठ! गुरवो मे महर्षयः।
स्थिताः शुश्रूषणं तेषां कुर्वती समुपस्थिता॥११
बहुवर्षसहस्राणि गतास्ते ब्रह्मणः पदम्।
गमिष्यन्तोऽब्रुवन्मां त्वं वसात्रैव समाहिता॥१२
रामो दाशरथिर्जातः परमात्मा सनातनः।
राक्षसानां वधार्थाय ऋषीणां रक्षणाय च॥१३

**राम इति**—श्रीरामः नित्यसाकेतविहारिरामः जातः आवेशेन प्रादुर्भूतः।१३

आगमिष्यति सैकाग्रध्याननिष्ठा स्थिरा भव।
इदानीं चित्रकूटाद्रावाश्रमे वसति प्रभुः॥१४

**आगमिष्यतीति**—आगमिष्यति नारायणे आवेशेनेति शेषः। एतच्छरीरं विहाय दिव्यदेहेन [1]भवद्दर्शनोत्कण्ठातिशयेन ब्रह्मणः पदं [2]साकेतं गमिष्यन्तस्ते ध्यानपरायणा कदा राम आगमिष्यतीति ध्याने तत्परा स्थिरा भवेत्यनेन स्वाधिकाधिकारां दर्शनयोग्यां च ज्ञात्वा [3]स्थापितवन्त इति हेतुर्व्यज्यते।१४

यावदागमनं तस्य तावद्रक्ष कलेवरम्।
दृष्ट्वैव राघवं दग्ध्वा देहं यास्यसि तत्पदम्॥१५
तथैवाकरवं राम! त्वद्ध्यानैकपरायणा।
प्रतीक्ष्यागमनं तेऽद्य सफलं गुरुभाषितम्॥१६
तव सन्दर्शनं राम! गुरूणामपि मे नहि।
योषिन्मूढा प्रमेयात्मन्! हीनजातिसमुद्भवा॥१७

**तवेति**—हे राम! गुरूणां तव दर्शनम् अपिस्त्वर्थे, मम तु नहि, ध्यानाऽसम्भवात्। ध्यानाऽसम्भवमेव दर्शयति योषिदिति।१७

---

१. 'भवद्दर्शनोत्कण्ठातिशयेन' अयमंशः न विद्यते रा० व० पु०। २. चित्रकूटं इति रा० व० पु०। ३ स्थायिवंत इति मदीयपुस्तके।

तव दासस्य दासानां शतसंख्योत्तरस्य वा।
दासीत्वे नाधिकारोऽस्ति कुतः साक्षात्तवैव हि॥१८
कथं रामाद्य मे दृष्टस्त्वं मनोवागगोचरः।
स्तोतुं न जाने देवेश! किं करोमि प्रसीद मे॥१९

**कथमिति**—हे राम! त्वं मयाऽद्य कथं दृष्टः एतेन कृपालुतातिशयः, तेन सौशील्यं तेन सौलभ्यगुणातिशयो व्यज्यते।१९

**श्रीराम उवाच**—

पुंस्त्वे स्त्रीत्वे विशेषो वा जातिनामाश्रमादयः।
न कारणं मद्भजने भक्तिरेव हि कारणम्॥२०
यज्ञदानतपोभिर्वा वेदाध्ययनकर्मभिः।
नैव द्रष्टुमहं शक्यो मद्भक्तिविमुखैः सदा॥२१
तस्माद् भामिनि! संक्षेपाद् वक्ष्येऽहं भक्तिसाधनम्।
सतां संगतिरेवात्र साधनं प्रथमं स्मृतम्॥२२
द्वितीयं मत्कथालापस्तृतीयं मद्गुणेरणम्।
व्याख्यातृत्वं मद्वचसां चतुर्थं साधनं भवेत्॥२३
आचार्योपासनं भद्रे! मद्बुद्ध्याऽमायया सदा।
पञ्चमं पुण्यशीलत्वं यमादि नियमादि च॥२४
निष्ठा मत्पूजने नित्यं षष्ठं साधनमीरितम्।
मम मन्त्रोपासकत्वं साङ्गं सप्तममुच्यते॥२५
मद्भक्तेष्वधिका पूजा सर्वभूतेषु मन्मतिः।
बाह्यार्थेषु विरागित्वं शमादिसहितं तथा॥२६
अष्टमं नवमं तत्त्वविचारो मम भामिनि!।
एवं नवविधा भक्तिःसाधनं यस्य कस्य वा॥२७

**अष्टममिति**—मम तत्त्वविचारः सर्वत्र मद्दर्शनः एवं नवविधं भक्तिसाधनं यस्य कस्यापि भवतु।२७

स्त्रियो वा पुरुषस्यापि तिर्यग्योनिगतस्य वा।
भक्तिः सञ्जायते प्रेमलक्षणा शुभलक्षणे!॥२८

भक्तौ सञ्जातमात्रायां मत्तत्त्वानुभवस्तदा।
ममानुभवसिद्धस्य मुक्तिस्तत्रैव जन्मनि॥२९

**स्त्रियो वेति**—तेषां प्रेमलक्षणा भक्तिस्ततः मत्तत्त्वानुभवस्ततो मुक्तिः मद्रास-मण्डले प्रवेशः इत्यर्थः।२८-२९।

स्यात्तस्मात्कारणं भक्तिर्मोक्षस्येति सुनिश्चितम्।
प्रथमं साधनं यस्य भवेत्तस्य क्रमेण तु॥३०
भवेत्सर्वं ततो भक्तिर्मुक्तिरेव सुनिश्चितम्।
यस्मान्मद्भक्तियुक्ता त्वं ततोऽहं त्वामुपस्थितः॥३१
इतो मद्दर्शनान्मुक्तिस्तव नास्त्यत्र संशयः।
यदि जानासि मे ब्रूहि सीता कमललोचना॥३२
कुत्रास्ते केन वा नीता प्रिया मे प्रियदर्शना॥३३

**शबर्युवाच**—

देव! जानासि सर्वज्ञः सर्वं त्वं विश्वभावन!।
तथापि पृच्छसे यन्मां लोकाननुसृतः प्रभो!॥३४
ततोऽहमभिधास्यामि सीता यत्राधुना स्थिता।
रावणेन हृता सीता लङ्कायां वर्ततेऽधुना॥३५
इतः समीपे रामास्ते पम्पा नाम सरोवरम्।
ऋष्यमूकगिरिर्नाम तत्समीपे महानगः॥३६
चतुर्भिर्मन्त्रिभिः सार्धं सुग्रीवो वानराधिपः।
भीतभीतः सदा यत्र तिष्ठत्यतुलविक्रमः॥३७
वालिनश्च भयाद् भ्रातुस्तदगम्यमृषेर्भयात्।
वालिनस्तत्र गच्छ त्वं तेन सख्यं कुरु प्रभो!॥३८
सुग्रीवेण स सर्वं ते कार्यं सम्पादयिष्यति।
अहमग्निं प्रवेक्ष्यामि तवाग्रे रघुनन्दन!॥३९
मुहूर्तं तिष्ठ राजेन्द्र! यावद् दग्ध्वा कलेवरम्।
यास्यामि भगवन् राम! तव विष्णोः परं पदम्॥४०

**मुहूर्त्तमिति**—विष्णोः परं तव पदम्।४०

इति रामं समामन्त्र्य प्रविवेश हुताशनम्।
क्षणान्निर्धूय सकलमविद्याकृतबन्धनम्।
रामप्रसादाच्छबरी मोक्षं प्रापातिदुर्लभम्॥४१

किं दुर्लभं जगन्नाथे श्रीरामे भक्तवत्सले।
प्रसन्नेऽधमजन्मापि शबरी मुक्तिमाप सा॥४२

किं पुनर्ब्राह्मणा मुख्याः पुण्याः श्रीरामचिन्तकाः।
मुक्तिं यान्तीति तद्भक्तिर्मुक्तिरेव न संशयः॥४३

भक्तिर्मुक्तिविधायिनी भगवतः श्रीरामचन्द्रस्य हे!
लोकाः कामदुघाङ्घ्रिपद्मयुगलं सेवध्वमत्युत्सुकाः।
नानाज्ञानविशेषमन्त्रवितर्तिं त्यक्त्वा सुदूरे भृशं,
रामं श्यामतनुं स्मरारिहृदये भान्तं भजध्वं बुधाः!॥४४

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
अरण्यकाण्डे दशमोऽध्यायः।

**भक्तिरिति**—यतः श्रीरामचन्द्रस्य भक्तिर्मुक्तिदा अतः श्रीरामस्य कामदुघं चरणपद्मयुगलं सेवध्वम्, अत्युत्सुकाः अत्युत्कण्ठावन्तः सन्तः नानाज्ञानविशेषवितर्तिं मन्त्रवितर्तिं च सुदूरे त्यक्त्वा अनन्यो भूत्वेत्यर्थः। भृशं [1]प्रतिशमेन श्यामतनुं श्रीरामं हे बुधाः! भजध्वं, स्मरारिहृदये भान्तमेतेन सर्वेश्वरोपास्यत्वं व्यक्तं तेन श्रीरामं विहाय ये अन्यदेवं तदुपासनं समाश्रयन्ति ते मूर्खा एवेति सूचितम्॥४४

⊙

इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामरण्यकाण्डे
दशमोऽध्यायः।१०

⊙

**समाप्तमिदमरण्यकाण्डम्।**

---

१. अतिशयेन इति साधीयान् पाठः।

# किष्किन्धाकाण्डम्

## अथ प्रथमोऽध्यायः

**श्रीमहादेव उवाच--**

ततः सलक्ष्मणो रामः शनैः पम्पासरस्तटम्।
आगत्य सरसां श्रेष्ठं दृष्ट्वा विस्मयमाययौ॥१

**तत इति--**वक्ष्यमाणविशेषणयुक्तं सरः दृष्ट्वा विस्मयं ययौ। मनुष्यसंचारानर्हे अत्र केन निर्मितमिति विस्मये हेतुः।१

क्रोशमात्रं सुविस्तीर्णमगाधामलशम्बरम्।
उत्फुल्लाम्बुजकल्हारकुमुदोत्पलमण्डितम्॥२
हंसकारण्डवाकीर्णं चक्रवाकादिशोभितम्।
जलकुक्कुटकोयष्टिक्रौञ्चनादोपनादितम्॥३
नानापुष्पलताकीर्णं नानाफलसमावृतम्।
सतां मनः स्वच्छजलं पद्मकिञ्जल्कवासितम्॥४
तत्रोपस्पृश्य सलिलं पीत्वा श्रमहरं विभुः।
सानुजः सरसस्तीरे शीतलेन पथा ययौ॥५
ऋष्यमूकगिरेः पार्श्वे गच्छन्तौ रामलक्ष्मणौ।
धनुर्बाणकरौ दान्तौ जटावल्कलमण्डितौ।
पश्यन्तौ विविधान् वृक्षान् गिरेःशोभां सुविक्रमौ॥६
सुग्रीवस्तु गिरेर्मूर्ध्नि चतुर्भिः सह वानरैः।
स्थित्वा ददर्श तौ यान्तावारुरोह गिरेः शिरः॥७
भयादाह हनूमन्तं कौ तौ वीरवरौ सखे!।
गच्छ जानीहि भद्रं ते बटुर्भूत्वा द्विजाकृतिः॥८

**भयादिति--**भयादाहेत्यनेन वीराग्रगण्यबलशालिसुग्रीवस्य वालिन एव भयसत्त्वे सामान्यमनुष्यमात्रेण भयानर्हस्यापि भयं, तेन वालिप्रार्थनयागतौ किं नरनारायणाविति

ज्ञात्वैव भयमभूदिति व्यज्यते। बटुर्ब्रह्मचारी भूत्वा जानीहि। एतेन किमयं वाल्युपरि ममोपरि वा कृपां कृत्वा साक्षात्परब्रह्मैव रूपद्वयेनागतमिति जानीहीति विज्ञापितमिति व्यक्तम्।८

वालिना प्रेषितौ किं वा मां हन्तुं समुपागतौ।
ताभ्यां सम्भाषणं कृत्वा जानीहि हृदयं तयोः॥९

**वालिनेति**—संभाषणं कृत्वा तयोः हृदयं जानीहि। एतेन वेषान्तरागतस्य संभाषणेन ज्ञानाभावादपि तव बहिर्मुख्यवायुरूपेण संचारात् त्वमेव जानासीति।९

यदि तौ दुष्टहृदयौ संज्ञां कुरु कराग्रतः।
विनयावनतो भूत्वा एवं जानीहि निश्चयम्॥१०

**यदीति**—संज्ञां कुर्वित्युक्तं पलाय्यागच्छेति नोक्तम्। तेन समर्थत्वात् त्वं युद्धं कुर्विति सूचितम्। तेन पराक्रमातिशयं ज्ञापितवानिति। तेन हनुमत ईश्वरादप्युत्कृष्टत्वं 'न कालस्य न शक्रस्य न विष्णोर्वित्तपस्य च। कर्माणि यानि श्रूयन्ते तानि युद्धे हनूमतः॥' इति वाल्मीकीये अगस्त्यं प्रति श्रीरामवाक्यात्।१०

तथेति बटुरूपेण हनुमान् समुपागतः।
विनयावनतो भूत्वा रामं नत्वेदमब्रवीत्॥११

**तथेतीति**—रामं नत्वेत्यनेन क्षत्रियेषु नमस्कारानर्हेष्वपि ब्रह्मचारिरूपेण हनूमतैव नमस्कारः कृतः न तु रामेण, तेन दर्शनमात्रेणैव हनुमद्रामयोः सेवकस्वामिज्ञानं जातमिति व्यक्तम्।११

कौ युवां पुरुषव्याघ्रौ युवानौ वीरसम्मतौ।
द्योतयन्तौ दिशः सर्वाः प्रभया भास्कराविव॥१२
युवां त्रैलोक्यकर्तारावितिं भाति मनो मम।
युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ॥१३
मायया मानुषाकारौ चरन्ताविव लीलया।
भूभारहरणार्थाय भक्तानां पालनाय च॥१४
अवतीर्णाविह परौ चरन्तौ क्षत्रियाकृती।
जगत्स्थितिलयौ सर्गं लीलया कर्तुमुद्यतौ॥१५
स्वतन्त्रौ प्रेरकौ सर्वहृदयस्थाविहेश्वरौ।
नरनारायणौ लोके चरन्ताविति मे मतिः॥१६

**कौ युवामित्यादि**—कौ युवामित्यारभ्य मे मतिरित्यन्तेन श्रीजानकीमदृष्ट्वा सन्देहेन

विभूतिरुक्ता, तेन त्वमेव नित्यविहारिपरमेश्वरोऽसीति सूचितम्। कौ युवामिति प्रश्ने नित्यायोध्याविहारिणः तवागमनाभावः जानक्या रहितत्वञ्चेति हेतुद्वयम्।१२-१६।

श्रीरामो लक्ष्मणं प्राह पश्यैनं बटुरूपिणम्।
शब्दशास्त्रमशेषेण श्रुतं नूनमनेकधा॥१७

**श्रीराम इति**––शब्दश्च शास्त्राणि च एतेषां समाहारः शब्दशास्त्रं शब्दप्रधानं शब्दशास्त्रम् अष्टविधव्याकरणं शास्त्राणि मीमांसादीनि षट् अशेषेण साकल्येन तत्रापि अनेकधा बहुवारं नूनं श्रुतम्। एतेन सर्वशास्त्रज्ञत्वेन सर्वशास्त्रप्रतिपाद्यं मां जानातीति सूचितम्।१७

अनेन भाषितं कृत्स्नं न किञ्चिदपशब्दितम्।
ततः प्राह हनूमन्तं राघवो ज्ञानविग्रहः॥१८

**अनेनेति**––अनेन कृत्स्नं मद्विभूतिरूपं भाषितं तत्र किञ्चिन्नापशब्दितं न मिथ्याप्रयुक्तमित्यर्थः।१८

अहं दाशरथी रामस्त्वयं मे लक्ष्मणोऽनुजः।
सीतया भार्यया सार्धं पितुर्वचनगौरवात्॥१९

ब्रह्महेतुद्वयोत्तरमाह––**अहमिति**––दाशरथिः नित्यायोध्याविहार्यविशयुक्तत्वादिति शेषः। भार्ययेति भर्तारं प्रेमातिशयेन आयातीति भार्या पृषोदरादित्वात् तृचो लोपः दीर्घः। सीतया सार्धम् सिनोति स्वगुणेन भर्तारं बध्नातीति प्रेमा सीता तया सार्धमित्यर्थः। तेन [1]सा लक्ष्मीः। अः विष्णुः आः ब्रह्मा ऐः महेश्वरः एषां समाहारः सि तत इता अन्तर्यामितया प्राप्तेति नित्या सीताऽयोध्यायामेव स्थितेति सूचितम्।१९

आगतस्तत्र विपिने स्थितोऽहं दण्डके द्विज!।
तत्र भार्या हृता सीता रक्षसा केनचिन्मम।
तामन्वेष्टुमिहायातौ त्वं को वा कस्य वा वद॥२०

**आगत इति**––प्रथमहेतोरुत्तरमुक्तं द्वितीयस्योत्तरमाह––तत्रेति। तत्र दण्डकारण्ये केनचित्सृष्टिस्थितिसंहाररूपे आर्याः मुख्याः तेषां भ्रमणकारिणी मूलप्रकृतिः हृतेति तेन प्रेमा सीताऽग्नौ स्थापितेति तेन सूचितम्।२०

**बटुरुवाच**––

सुग्रीवो नाम राजा यो वानराणां महामतिः।
चतुर्भिर्मन्त्रिभिः सार्धं गिरिमूर्धनि तिष्ठति॥२१

———————

१. श्रीः मत्पुस्तके।

भ्राता कनीयान् सुग्रीवो वालिनः पापचेतसः।
तेन निष्कासितो भार्या हृता तस्येह वालिना॥२२
तद्भयादृष्यमूकाख्यं गिरिमाश्रित्य संस्थितः।
अहं सुग्रीवसचिवो वायुपुत्रो महामते! ॥२३
हनूमान्नाम विख्यातो ह्यंजनीगर्भसंभवः।
तेन सख्यं त्वया युक्तं सुग्रीवेण रघूत्तम! ॥२४

**हनूमानिति**—तेन सह त्वया सख्यं युक्तं मम दुःखत्वात् न तु वालिना। यदि वालिनं हत्वा सुग्रीवाय राज्यं दास्यसि तदा तद्बलं त्वद्बलं भविष्यतीति तेन सीताऽन्वेषणादिकमपि भविष्यतीति सूचितं। यदि वालिना सह सख्यं कृत्वा सीतान्वेषणादिकं कुरुषे तर्हि समर्थत्वात् तद्यशस्तस्यैवेति सूचितम्।२४

भार्यापहारिणं हन्तुं सहायस्ते भविष्यति।
इदानीमेव गच्छाम आगच्छ यदि रोचते॥२५

**श्रीराम उवाच—**

अहमप्यागतस्तेन सख्यं कर्त्तुं कपीश्वर!।
सख्युस्तस्यापि यत्कार्यं तत्करिष्याम्यसंशयम्॥२६
हनूमान् स्वस्वरूपेण स्थितो राममथाब्रवीत्।
आरोहतां मम स्कन्धौ गच्छामः पर्वतोपरि॥२७

**हनूमानिति**—आरोहतां मम स्कन्धावित्यनेन तथा गमनात् सुग्रीवाय विश्वासो ध्वनितः।२७

यत्र तिष्ठति सुग्रीवो मन्त्रिभिर्वालिनो भयात्।
तथेति तस्यारुरोह, स्कन्धं रामोऽथ लक्ष्मणः॥२८
उत्पपात गिरेर्मूर्ध्नि क्षणादेव महाकपिः।
वृक्षच्छायां समाश्रित्य स्थितौ तौ रामलक्ष्मणौ॥२९
हनूमानपि सुग्रीवमुपगम्य कृताञ्जलिः।
व्येतु ते भयमायातौ राजन्! श्रीरामलक्ष्मणौ॥३०

**हनूमानपीति**—ते भयं व्येतु। तेन त्वद्भयनाशनायागताविति जानीहीति। राजन्निति सम्बोधनेन वालिनं हत्वा तुभ्यं राज्यं दास्यत इति विज्ञापितमिति व्यक्तं, तेन हनूमतः प्रज्ञातिशयो व्यक्तः।३०

शीघ्रमुत्तिष्ठ रामेण सख्यं ते योजितं मया।
अग्निं साक्षिणमारोप्य तेन सख्यं द्रुतं कुरु॥३१

**शीघ्रमिति**—शीघ्रमुत्तिष्ठेत्यनेन सत्कारार्हत्वेन तावानयेति सूचितम्। द्रुतमित्यनेन इन्द्रोऽत्रागत्य स्वपुत्रेण वालिना सख्यं कारयिष्यतीति तस्मै भयं दर्शितमिति व्यक्तम्। अग्निं साक्षिणमारोप्य इति अग्नौ साक्षित्वम् आरोप्य अनेन जीवानां श्रीरामप्रापिका जानकी अग्नौ स्थिता तामेव साक्षिणीं कुर्विति सूचितम्।३१

ततोऽतिहर्षात्सुग्रीवः समागम्य रघूत्तमम्।
वृक्षशाखां स्वयं छित्वा विष्टराय ददौ मुदा॥३२
हनूमान्लक्ष्मणायादात्सुग्रीवाय च लक्ष्मणः।
हर्षेण महताविष्टाः सर्वे एवावतस्थिरे॥३३

**हनूमानिति**—लक्ष्मणः श्रीरामेण सखित्वेन गृहीत इति ज्ञात्वा सुग्रीवायासनं ददावित्यर्थः। तेन श्रीरामलक्ष्मणस्य [1]दास्यानि वातिशयो ध्वनिः।३३

लक्ष्मणस्त्वब्रवीत्सर्वं रामवृत्तान्तमादितः।
वनवासाभिगमनं सीताहरणमेव च॥३४
लक्ष्मणोक्तं वचः श्रुत्वा सुग्रीवो राममब्रवीत्।
अहं करिष्ये राजेन्द्र! सीतायां परिमार्गणम्॥३५
साहाय्यमपि ते राम! करिष्ये शत्रुघातिनः।
शृणु राम! मया दृष्टं किंचित्ते कथयाम्यहम्॥३६
एकदा मन्त्रिभिः सार्धं स्थितोऽहं गिरिमूर्धनि।
विहायसा नीयमानां केनचित् प्रमदोत्तमाम्॥३७
क्रोशन्तीं राम! रामेति दृष्ट्वास्मान्पर्वतोपरि।
आमुच्याभरणान्याशु स्वोत्तरीयेण भामिनी॥३८
निरीक्ष्याधः परित्यज्य क्रोशन्ती तेन रक्षसा।
नीताहं भूषणान्याशु गुहायामक्षिपं प्रभो!॥३९
इदानीमपि पश्य त्वं जानीहि तव वा न वा।
इत्युक्त्वानीय रामाय दर्शयामास वानरः॥४०

---

१. दास्यातिशय इति पाठः साधीयान्।

विमुच्य रामस्तद् दृष्ट्वा हा सीतेति मुहुर्मुहुः।
हृदि निक्षिप्य तत्सर्वं रुरोद प्राकृतो यथा ॥४१

आश्वास्य राघवं भ्राता लक्ष्मणो वाक्यमब्रवीत्।
अचिरेणैव ते राम! प्राप्यते जानकी शुभा।
वानरेन्द्रसहायेन हत्वा रावणमाहवे ॥४२

सुग्रीवोऽप्याह हे राम! प्रतिज्ञां करवाणि ते।
समरे रावणं हत्वा तव दास्यामि जानकीम् ॥४३

ततो हनूमान् प्रज्वाल्य तयोरग्निं समीपतः।
तावुभौ रामसुग्रीवावग्नौ साक्षिणि तिष्ठति ॥४४

बाहू प्रसार्य चालिङ्ग्य परस्परमकल्मषौ।
समीपे रघुनाथस्य सुग्रीवः समुपाविशत् ॥४५

**बाहूइति**—अकल्मषौ मां शरणं नागच्छेच्चेत्तदा रावणं गमिष्यत्येव यदि वाली शरणमागच्छेत्तर्हि तस्यैव राज्यमेतद्रूपकपटरहितौ रामसुग्रीवौ आलिङ्ग्य परस्परं 'सखे' इत्यवदतामिति शेषः। ततः रघुनाथस्य समीपे सुग्रीवः समुपाविशत्। उभौ समीपे तिष्ठत इत्यनुक्त्या श्रीरामेण सख्यत्वेन गृहीतोऽपि अहं दासोऽस्मीति मत्वैव श्रीरामसमीपे उपाविशदित्यर्थः सूचितः।४५

स्वोदन्तं कथयामास प्रणयाद्रघुनायके।
सखे! श्रृणु ममोदन्तं वालिना यत्कृतं पुरा ॥४६

मयपुत्रोऽथ मायावी नाम्ना परमदुर्मदः।
किष्किन्धां समुपागत्य वालिनं समुपाह्वयत् ॥४७

सिंहनादेन महता वाली तु तदमर्षणः।
निर्ययौ क्रोधताम्राक्षो जघान दृढमुष्टिना ॥४८

दुद्राव तेन संविग्नो जगाम स्वगुहां प्रति।
अनुदुद्राव तं वाली मायाविनमहं तथा ॥४९

ततः प्रविष्टमालोक्य गुहां मायाविनं रुषा।
वाली मामाह तिष्ठ त्वं बहिर्गच्छाम्यहं गुहाम्।
इत्युक्त्वाविश्य स गुहां मासमेकं न निर्ययौ ॥५०

मासादूर्ध्वं गुहाद्वारान्निर्गतं रुधिरं बहु।
तद् दृष्ट्वा परितप्ताङ्गो मृतो वालीति दुःखितः ॥५१

गुहाद्वारि शिलामेकां निधाय गृहमागतः।
ततोऽब्रवं मृतो वाली गुहायां रक्षसा हतः॥५२
तच्छ्रुत्वा दुःखिताः सर्वे मामनिच्छन्तमप्युत।
राज्येऽभिषेचनं चक्रुः सर्वे वानरमन्त्रिणः॥५३
शिष्टं तदा मया राज्यं किञ्चित्कालमरिन्दम!।
ततः समागतो वाली मामाह परुषं रुषा॥५४
बहुधा भर्त्सयित्वा मां निजघान च मुष्टिभिः।
ततो निर्गत्य नगरादधावं परया भिया॥५५
लोकान् सर्वान् परिक्रम्य ऋष्यमूकं समाश्रितः।
ऋषेः शापभयात्सोऽपि नायातीमं गिरिं प्रभो! ॥५६
तदादि मम भार्यां स स्वयं भुङ्क्ते विमूढधीः।
अतो दुःखेन सन्तप्तो हृतदारो हृताश्रयः॥५७
वसाम्यद्य भवत्पादसंस्पर्शात्सुखितोऽस्म्यहम्।
मित्रदुःखेन सन्तप्तो रामो राजीवलोचनः॥५८

**वसामीति**—सुखितोऽस्मीत्यनेन तस्य राज्यं प्राप्तमेवेति निश्चयो व्यज्यते।५८

हनिष्यामि तव द्वेष्यं शीघ्रं भार्यापहारिणम्।
इति प्रतिज्ञामकरोत् सुग्रीवस्य पुरस्तदा॥५९
सुग्रीवोऽप्याह राजेन्द्र! वाली बलवतां बली।
कथं हनिष्यति भवान्देवैरपि दुरासदम्॥६०
शृणु ते कथयिष्यामि तद्बलं बलिनां वर!।
कदाचिद् दुन्दुभिर्नाम महाकायो महाबलः॥६१

**शृण्विति**—बलिनां वरेत्यनेन न त्वां भीषये स्वभीत्या तद्बलं वर्णयामीति सूचितम्।६१

किष्किन्धामगमद्राम! महामहिषरूपधृक्।
युद्धाय वालिनं रात्रौ समाह्वयत भीषणः॥६२
तच्छ्रुत्वाऽसहमानोऽसौ वाली परमकोपनः।
महिषं शृङ्गयोर्धृत्वा पातयामास भूतले॥६३

पादेनैकेन तत्कायमाक्रम्यास्य शिरो महत्।
हस्ताभ्यां भ्रामयंश्छित्वा तोलयित्वाक्षिपद् भुवि ॥६४
पपात तच्छिरो राम! मातङ्गाश्रमसन्निधौ।
योजनात्परितं तस्मान्मुनेराश्रममण्डले ॥६५
रक्तवृष्टिः पपातोच्चैर्दृष्ट्वा तां क्रोधमूर्च्छितः।
मातङ्गो वालिनं प्राह यद्यागन्तासि मे गिरिम् ॥६६
इतः परं भग्नशिरा मरिष्यसि न संशयः।
एवं शप्तस्तदारभ्य ऋष्यमूकं न यात्यसौ ॥६७
एतज्ज्ञात्वाहमप्यत्र वसामि भयवर्जितः।
राम! पश्य शिरस्तस्य दुन्दुभेः पर्वतोपमम् ॥६८
तत्क्षेपणे यदा शक्तः शक्तस्त्वं वालिनो वधे।
इत्युक्त्वा दर्शयामास शिरस्तद्गिरिसन्निभम् ॥६९

**तत्क्षेपण इति**—यदा तत्क्षेपणे शक्तः त्वं तदा वालिनो वधेऽपि समर्थोऽसि। तेन सुकुमाराङ्गं मित्रं बलिना शत्रुणा योधयितुं नोत्सहे इति। तेन सौहार्दातिशयो व्यज्यते। यद्वा रामचरणस्पर्शात् दुन्दुभिरपि मुक्तो भवत्विति अस्थि उत्क्षेपणप्रार्थनायां हेतुस्तेन सुग्रीवस्य निर्हेतुकदयालुतातिशयः।६९

दृष्ट्वा रामः स्मितं कृत्वा पादाङ्गुष्ठेन चाक्षिपत्।
दशयोजनपर्यन्तं तदद्भुतमिवाभवत् ॥७०
साधु साध्विति सम्प्राह सुग्रीवो मन्त्रिभिः सह।
पुनरप्याह सुग्रीवो रामं भक्तपरायणम् ॥७१

**दृष्ट्वेति**—स्मितं कृत्वेत्यनेन वानरसखे अस्थिस्पर्शनमपि जातमिति स्मयहेतुः व्यक्तः। तदद्भुतमिवाभवदित्यनेन दुन्दुभिस्तु मुक्त एवाभूत्, परन्तु एतच्चरणस्पर्शो तच्चरणं कमपि न त्यजति अस्थि दशयोजनपर्यन्तं कथं प्राक्षिपदित्याश्चर्यम्। पादाङ्गुष्ठेनेत्यनेन [1]भक्तपरायणं भक्ताधीनम् एतेन अस्थिप्रक्षेपणादिवदन्यदपि मदुक्तं करिष्यत्येवेति। पुनरप्याहेत्यनेन सत्यपि शरीरपराक्रमे अतिकोमलाङ्गे मुष्टिप्रहारं द्रष्टुमशक्यतया बाणेन घातयितुं बाणपरीक्षा कर्तव्येति तस्याशयो व्यज्यते। एतेन [2]ये ये मुक्तास्तेते तच्चरणस्पर्शा-

१. तः २. पर्यन्तभागः रा० व० पु० नास्ति।

देवेति रामस्य सुग्रीवाशयाभिज्ञत्वं भक्तपराधीनत्वं व्यक्तं सुग्रीवस्य साधुता च। ७०-७१।

एते ताला महासाराः सप्त पश्य रघूत्तम!।
एकैकं चालयित्वासौ निष्पत्रान्कुरुतेऽञ्जसा।।७२

चेतनस्य दुन्दुभेः मुक्ति दृष्ट्वा अचेतनानां सप्ततालानां मुक्ति द्रष्टुमाह—**एते ताला महासारा इत्यादिना।** एतेन च स्थावरमुक्तिदाता अपीति सुग्रीवस्य परमात्मज्ञानमभूदिति व्यक्तं तदेवाग्रे वक्ष्यति—'देव! त्वं जगतां नाथः परमात्मा सनातनः।' ७२

यदि त्वमेकबाणेन विद्ध्वा छिद्रं करोषि चेत्।
हतस्त्वया तदा वाली विश्वासो मे प्रजायते।
तथेति धनुरादाय सायकं तत्र सन्दधे।।७३
बिभेद च तदा रामः सप्त तालान्महाबलः।
तालान् सप्त विनिर्भिद्य गिरिं भूमिं च सायकः।।७४
पुनरागत्य रामस्य तूणीरे पूर्ववत् स्थितः।
ततोऽतिहर्षात्सुग्रीवो राममाहातिविस्मितः।।७५

**पुनरागत्येति**—अतिविस्मित इत्यस्यातिकोमलाङ्गत्वेऽपि इत्थं कर्म करोतीत्याशयः।७५

देव! त्वं जगतां नाथः परमात्मा न संशयः।
मत्पूर्वकृतपुण्यौघैः संगतोऽद्य मया सह।।७६
त्वां भजन्ति महात्मानः संसारविनिवृत्तये।
त्वां प्राप्य मोक्षसचिवं प्रार्थयेऽहं कथं भवम्।।७७

**त्वामिति**—मोक्षसचिवं मोक्षसहायं मोक्षदातारमित्यर्थः। त्वां प्राप्य भवं संसारं कथं प्रार्थये कथमपि नेत्यर्थः।७७

दाराः पुत्रा धनं राज्यं सर्वं त्वन्मायया कृतम्।
अतोऽहं देवदेवेश! नाकाङ्क्षेऽन्यत्प्रसीद मे।।७८
आनन्दानुभवं त्वाद्य प्राप्तोऽहं भाग्यगौरवात्।
मृदर्थं यतमानेन निधानमिव सत्पते!।।७९
अनाद्यविद्यासंसिद्धं बन्धनं छिन्नमद्य नः।
यज्ञदानतपःकर्म पूर्तेष्टादिभिरप्यसौ।।८०

न जीर्यंते पुनर्दार्ढ्यं भजते संसृतिः प्रभो ! ।
त्वत्पाददर्शनात्सद्यो नाशमेति न संशयः ॥८१

क्षणार्धमपि यच्चित्तं त्वयि तिष्ठत्यचञ्चलम् ।
तस्याज्ञानमनर्थानां मूलं नश्यति तत्क्षणात् ॥८२

तत्तिष्ठतु मनो राम ! त्वयि नान्यत्र मे सदा ॥८३

राम रामेति यद्वाणी मधुरं गायति क्षणम् ।
स ब्रह्महा सुरापो वा मुच्यते सर्वपातकैः ॥८४

न काङ्क्षे विजयं राम ! न च दारसुखादिकम् ।
भक्तिमेव सदा काङ्क्षे त्वयि बन्धविमोचनीम् ॥८५

त्वन्मायाकृतसंसारस्त्वदंशोऽहं रघूत्तम ! ।
स्वपादभक्तिमादिश्य त्राहि मां भवसंकटात् ॥८६

न काङ्क्षे विजयमित्यारभ्य रघूत्तमेत्यन्तेन यातं सर्वत्र ब्रह्मज्ञानमनूद्य इदानीं तत्फलरूपां भक्तिं प्रार्थयति—**त्वन्मायेत्यादिना**।८६

पूर्वं मित्रार्युदासीनास्त्वन्मायाऽऽवृतचेतसः ।
आसन्मेऽद्य भवत्पाददर्शनादेव राघव ! ॥८७

सर्वं ब्रह्मैव मे भाति क्व मित्रं क्व च मे रिपुः ।
यावत्त्वन्मायया बद्धस्तावद्गुणविशेषता ॥८८

सा यावदस्ति नानात्वं तावद् भवति नान्यथा ।
यावन्नानात्वमज्ञानात्तावत्कालकृतं भयम् ॥८९

अतोऽविद्यामुपास्ते यः सोऽन्धे तमसि मज्जति ।
मायामूलमिदं सर्वं पुत्रदारादिबन्धनम् ।
तदुत्सारय मायां त्वं दासीं तव रघूत्तम ! ॥९०

त्वत्पादपद्मार्पितचित्तवृत्ति-
स्त्वन्नामसंगीतकथासु वाणी ।
त्वद्भक्तसेवानिरतौ करौ मे,
त्वदङ्गसङ्गं लभतां मदङ्गम् ॥९१

त्वन्मूर्तिभक्तान् स्वगुरुं च चक्षुः,
पश्यत्वजस्रं स शृणोतु कर्णः।
त्वज्जन्मकर्माणि च पादयुग्मं,
व्रजत्वजस्रं तव मन्दिराणि ॥९२
अङ्गानि ते पादरजोविमिश्र-
तीर्थानि बिभ्रत्वहिशत्रुकेतो ! ।
शिरस्त्वदीयं भवपद्मजाद्यै-
र्जुष्टं पदं राम ! नमत्वजस्रम् ॥९३

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
किष्किन्धाकाण्डे प्रथमोऽध्यायः ।१

⊙

[१]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां किष्किन्धाकाण्डे
प्रथमोऽध्यायः ।१



१. इति किष्किन्धाकाण्डे ध्वनिप्रकाशिकायां प्रथमोऽध्यायः । रा० व० पु०।

## अथ द्वितीयोऽध्यायः

**श्रीमहादेव उवाच—**

इत्थं स्वात्मपरिष्वङ्गनिर्धूताशेषकल्मषम्।
रामः सुग्रीवमालोक्य सस्मितं वाक्यमब्रवीत्॥१

**इत्थमिति**—स्वात्मपरिष्वङ्गः स्वशरीरालिङ्गनं तेन दूरीकृतान्यशेषाणि कल्मषाणि यस्य तं जीवन्मुक्तमित्यर्थः। सस्मितमित्यस्य मत्सख्येन जीवन्मुक्तोऽयं तथापि ज्ञानेच्छुः इत्येवं कपिस्वभावं न त्यजतीति सूचितम्।१

मायां मोहकरीं तस्मिन् वितन्वन् कार्यसिद्धये।
सखे! त्वदुक्तं यत्तन्मां सत्यमेव न संशयः॥२

**मायामिति**—मायां योगमायां मोहकरीं भक्तविमोहनीं [1]संवर्धनीशक्तिमिति यावत्।२

किन्तु लोका वदिष्यन्ति मामेवं रघुनन्दनः।
कृतवान् किं कपीन्द्राय सख्यं कृत्वाऽग्निसाक्षिकम्॥३
इति लोकापवादो मे भविष्यति न संशयः
तस्मादाह्वय भद्रं ते गत्वा युद्धाय वालिनम्॥४
बाणेनैकेन तं हत्वा राज्ये त्वामभिषेचये।
तथेति गत्वा सुग्रीवः किष्किन्धोपवनं द्रुतम्॥५
कृत्वा शब्दं महानादं तमाह्वयत वालिनम्।
तच्छ्रुत्वा भ्रातृनिनदं रोषताम्रविलोचनः॥६
निर्जगाम गृहाच्छीघ्रं सुग्रीवो यत्र वानरः।
तमापतन्तं सुग्रीवः शीघ्रं वक्षस्यताडयत्॥७
सुग्रीवमपि मुष्टिभ्यां जघान क्रोधमूर्च्छितः।
वाली तमपि सुग्रीव एवं क्रुद्धौ परस्परम्॥८

---

१. सन्धिनी रा० व० पु०।

अयुद्ध्येतामेकरूपौ दृष्ट्वा रामोऽतिविस्मितः।
न मुमोच तदा बाणं सुग्रीववधशङ्कया॥९

**अयुद्ध्येतामिति**—रामः धर्मसूक्ष्मतत्त्वज्ञः एकरूपौ दृष्ट्वा स्वस्मिन्निरपराद्धत्वादिति शेषः। अतिविस्मितः कृतप्रतिज्ञत्वादिति शेषः। सुग्रीववधशङ्कयेत्यस्य वालिनि मृते अयमपि शुद्धहृदयत्वेन भ्रातृशोकान्मृतो मा भूदित्याशयः।९

ततो दुद्राव सुग्रीवो वमन् रक्तं भयाकुलः।
वाली स्वभवनं यातः सुग्रीवो राममब्रवीत्॥१०
किं मां घातयसे राम! शत्रुणा भ्रातृरूपिणा।
यदि मद्धनने वाञ्छा त्वमेव जहि मां विभो!॥११
एवं मे प्रत्ययं कृत्वा सत्यवादिन्! रघूत्तम!।
उपेक्षसे किमर्थं मां शरणागतवत्सल!॥१२
श्रुत्वा सुग्रीववचनं रामः साश्रुविलोचनः।
आलिङ्ग्य मा स्म भैषीस्त्वं दृष्ट्वा वामेकरूपिणौ॥१३

**श्रुत्वेति**—साश्रुविलोचन इति। सुग्रीवस्य वचनं श्रुत्वा मित्रत्वेन समदुःखतया साश्रुलोचनः तेन सख्यरसो व्यक्तः। आलिङ्ग्येत्यस्य शरीरव्यथां हृतवानित्याशयः।१३

मित्रघातित्वमाशङ्क्य मुक्तवान् सायकं नहि।
इदानीमेव ते चिह्नं करिष्ये भ्रमशान्तये॥१४

**मित्रघातित्वमिति**—भ्रमः रामलक्ष्मणयोः आसनदानसमये भेदबुद्धिरूपस्तच्छान्तये। चिह्नं विज्ञानप्रतिबन्धकीभूतलक्ष्मणाय दत्तासनरूपभक्तापराधनाशनलक्ष्मणशरणागतिरूपं, तत्करिष्ये।१४

गत्वाह्वय पुनः शत्रुं हतं द्रक्ष्यसि वालिनम्।
रामोऽहं त्वां शपे भ्रातर्हनिष्यामि रिपुं क्षणात्॥१५

**गत्वेति**—त्वां शपे यदि न हनिष्यामि तर्हि तवैव शपथ इत्यर्थः। अहं रामः तेन कृतचिह्नत्वाद्रामसहायकोऽयमिति जानन्नागमिष्यति तदा हन्मीत्याशयः। तेन रामस्य मम स्वरूपचौर्येण हननं योग्यमिति ध्वनितम्।१५

इत्याश्वास्य स सुग्रीवं रामो लक्ष्मणमब्रवीत्।
सुग्रीवस्य गले पुष्पमालामुन्मुच्य पुष्पिताम्॥१६

प्रेषयस्व महाभाग! सुग्रीवं वालिनं प्रति।
लक्ष्मणस्तु तदा बद्ध्वा गच्छ गच्छेति सादरम्॥१७
प्रेषयामास सुग्रीवं सोऽपि गत्वा तथाकरोत्।
पुनरप्यद्भुतं शब्दं कृत्वा वालिनमाह्वयत्॥१८

**प्रेषयामासेति**—अद्भुतमेतेन सुग्रीवस्य हर्षातिशयः तेन विजयोऽपि भविष्यतीति सूचितम्।१८

तच्छ्रुत्वा विस्मितो वाली क्रोधेन महता वृतः।
बद्ध्वा परिकरं सम्यग्गमनायोपचक्रमे॥१९

**तच्छ्रुत्वेति**—अयं केनापि बलिना सहागत इति विस्मयहेतुः।१९

गच्छन्तं वालिनं तारा गृहीत्वा निषिषेध तम्।
न गन्तव्यं त्वयेदानीं शङ्का मेऽतीव जायते॥२०
इदानीमेव ते भग्नः पुनरायाति सत्वरः।
सहायो बलवांस्तस्य कश्चिन्नूनं समागतः॥२१
वाली तामाह हे सुभ्रु! शङ्का ते व्येतु तद्गता।
प्रिये! करं परित्यज्य गच्छ गच्छामि तं रिपुम्॥२२
हत्वा शीघ्रं समायास्ये सहायस्तस्य को भवेत्।
सहायो यदि सुग्रीवस्ततो हत्वोभयं क्षणात्॥२३
आयास्ये मा शुचः शूरः कथं तिष्ठेद् गृहे रिपुम्।
ज्ञात्वाप्याह्वयमानं हि हत्वाऽयास्यामि सुन्दरि!॥२४

**तारोवाच**—

मत्तोऽन्यच्छृणु राजेन्द्र! श्रुत्वा कुरु यथोचितम्।
आह मामङ्गदः पुत्रो मृगयायां श्रुतं वचः॥२५
अयोध्याधिपतिः श्रीमान् रामो दाशरथिः किल।
लक्ष्मणेन सह भ्रात्रा सीतया भार्यया सह॥२६
आगतो दण्डकारण्यं तत्र सीता हृता किल।
रावणेन सह भ्रात्रा मार्गमाणोऽथ जानकीम्॥२७

आगतो ऋष्यमूकाद्रिं सुग्रीवेण समागतः।
चकार तेन सुग्रीवः सख्यं चानलसाक्षिकम्॥२८
प्रतिज्ञां कृतवान् रामः सुग्रीवाय सलक्ष्मणः।
वालिनं समरे हत्वा राजानं त्वां करोम्यहम्॥२९
इति निश्चित्य तौ यातौ निश्चितं शृणु मद्वचः।
इदानीमेव ते भग्नः कथं पुनरुपागतः॥३०

**इति निश्चित्येति**—इदानीमेव ते भग्नः कथं पुनरुपागतः इत्यनेन बलवता सहायेन शरीरव्यथामपि ते करिष्यतीति व्यक्तम्।३०

अतस्त्वं सर्वथा वैरं त्यक्त्वा सुग्रीवमानय।
यौवराज्येऽभिषिञ्चाशु रामं त्वं शरणं व्रज॥३१
पाहि मामङ्गदं राज्यं कुलं च हरिपुङ्गव!।
इत्युक्त्वाश्रुमुखी तारा पादयोः प्रणिपत्य तम्॥३२
हस्ताभ्यां चरणौ धृत्वा रुरोद भयविह्वला।
तामालिङ्ग्य तदा वाली सस्नेहमिदमब्रवीत्॥३३
स्त्रीस्वभावाद् बिभेषि त्वं प्रिये! नास्ति भयं मम।
रामो यदि समायातो लक्ष्मणेन समं प्रभुः॥३४
तदा रामेण मे स्नेहो भविष्यति न संशयः।
रामो नारायणः साक्षादवतीर्णोऽखिलप्रभुः॥३५

**तदेति**—मे स्नेहो भविष्यति संशयो नास्ति। तेन यथा तस्य प्रभुः तथा ममापीति प्रबलत्वादहमेव सीतान्वेषणे समर्थः न स इति हेतुद्वयं व्यक्तम्।३५

भूभारहरणार्थाय श्रुतं पूर्वं मयानघे!।
स्वपक्षः परपक्षो वा नास्ति तस्य परात्मनः॥३६
आनेष्यामि गृहं साध्वि! नत्वा तच्चरणाम्बुजम्।
भजतोऽनुभजत्येष भक्तिगम्यः सुरेश्वरः॥३७

**भूभारेत्यादि**—यदि भूभारहरणाय सुग्रीवार्थं मद्धनने [1]कृतज्ञः तर्हि सत्यसन्धत्वाद्ध-निष्यत्येव। यदि अकृतप्रतिज्ञः तर्हि सत्यसन्धस्य तस्य परमात्मनः स्वपक्षपरपक्षाभावात्

---

१. कृतप्रतिज्ञः इत्युचितः।

चरणाम्बुजं नत्वा गृहमानयिष्यामीति सार्धश्लोकस्य भावः। एतेन पण्डितम्मन्यतया भूभारं नामन्यतेति व्यक्तम्।३६-३७।

यदि स्वयं समायाति सुग्रीवो हन्मि तं क्षणात्।
यदुक्तं यौवराज्याय सुग्रीवस्याभिषेचनम्॥३८
कथमाहूयमानोऽहं युद्धाय रिपुणा प्रिये!।
शूरोऽहं सर्वलोकानां सम्मतः शुभलक्षणे!॥३९

**कथमिति**—शूरोऽहं सर्वलोकानां सम्मतः इत्यनेन तारोपदेशोऽधिगृहमानीय सुग्रीवस्य यौवराज्याभिषेकार्थं न शरणं गतः। शूरतया तस्यान्तःकरणे रामेण साकं युद्धकरणेनैव मुक्तिग्रहणेच्छास्तीति। उक्तं वाल्मीकीये तेनैव-'त्वत्तो हि वधमाकाङ्क्षन् वार्यमाणोऽपि तारया। सुग्रीवेण सह भ्रात्रा द्वन्द्वयुद्धमुपागतः॥' इति तेन 'आनेक्ष्यामि गृहं साध्वि नत्वा तच्चरणाम्बुजम्' इत्यादि पूर्वोक्तताराश्वासनार्थं वाङ्मात्रम्। तेन तस्य क्रूरत्वम्।३९

भीतभीतमिदं वाक्यं कथं वाली वदेत्प्रिये!।
तस्माच्छोकं परित्यज्य तिष्ठ सुन्दरि! वेश्मनि॥४०

**भीतभीतमिति**—कथं वाली वदेदित्यनेन यदि रामः हनिष्यत्येव तदा तत्रैव मुक्तिं प्राप्स्यामि यदि न हनिष्यति तदा गृहमानयित्वा भक्त्यात्रैव मुक्तिं प्राप्स्यामीति तस्य निश्चयो व्यज्यते।४०

एवमाश्वास्य तारां तं शोचन्तीमश्रुलोचनाम्।
गतो वाली समुद्युक्तः सुग्रीवस्य वधाय सः॥४१
दृष्ट्वा वालिनमायान्तं सुग्रीवो भीमविक्रमः।
उत्पपात गले बद्धपुष्पमालः पतङ्गवत्॥४२

**दृष्ट्वेति**—गले बद्धपुष्पमालः सुग्रीवः पतङ्गवत् नारायणात् प्राप्तप्रसादो वनमालः गरुड़ इव उत्पपात युद्धाय तत्सम्मुखमिति शेषः। एतेन वालिनः सूर्यसादृश्यं व्यक्तम्। तेन तस्यान्तः क्रूरता व्यक्ता।४२

मुष्टिभ्यां ताडयामास वालिनं सोऽपि तं तथा।
अहन्वाली च सुग्रीवं सुग्रीवो वालिनं तथा॥४३
रामं विलोकयन्नेव सुग्रीवो युयुधे युधि।
इत्येवं युध्यमानौ तौ दृष्ट्वा रामः प्रतापवान्॥४४

**राममिति**—सुग्रीवः रामं विलोकयन्नेवेत्यनेन युध्यमानयोस्तयोर्दर्शनयोग्यत्वे सत्यपि वाली रामं न पश्यन्नपि मनागपि, तेन तस्य दुर्मदतातिशयो व्यक्तः।४४

बाणमादाय तूणीरादैन्द्रे धनुषि सन्दधे।
आकृष्य कर्णपर्यन्तमदृश्यो वृक्षखण्डगः॥४५

**बाणमादायेति**—अवृक्षखण्डग इति च्छेदः। वृक्षसमूहे चौर्यत्वेन न प्राप्तः अत एवादृश्यः अनधिकः दृश्यो यस्मात् स सर्वदृश्य इत्यर्थः।४५

निरीक्ष्य वालिनं सम्यग्लक्ष्यं तद्धृदयं हरिः।
उत्ससर्जाशनिसमं महावेगं महाबलः॥४६

बिभेद स शरो वक्षो वालिनः कम्पयन्महीम्।
उत्पपात महाशब्दं मुञ्चन्स निपपात ह॥४७
तदा मुहूर्तं निःसंज्ञो भूत्वा चेतनमाप सः।
ततो वाली ददर्शाग्रे रामं राजीवलोचनम्।
धनुरालम्ब्य वामेन हस्तेनान्येन सायकम्॥४८
बिभ्राणं चीरवसनं जटामुकुटधारिणम्।
विशालवक्षसं भ्राजद्वनमालाविभूषितम्॥४९
पीनचार्वायतभुजं नवदूर्वादलच्छविम्।
सुग्रीवलक्ष्मणाभ्यां च पार्श्वयोः परिसेवितम्॥५०

**बिभेदेति**—अग्रे ददर्श एतेन यदि वृक्षखण्डगः स्यात्तदा ततो गमनं वक्तव्यमेव तदनुक्त्या श्रीरामः वालिसमक्षमेव स्थित इति सूचितम्, ददर्शेत्यनेन बाणस्पर्शनमात्रेणान्तःकरणशुद्ध्या तन्मदो निर्गत इति ध्वनितम्। सुग्रीवलक्ष्मणाभ्यां परिसेवितम् एतेन सुग्रीवसमीपे पूर्वत एव स्थितवन्ताविति सूचितम्। ननु 'अन्येन सह युध्यमानम् अन्यो न हन्यादिति, न्यायेन धर्मयुद्धार्थं निषिद्धत्वेन सुग्रीवेण सह युध्यमानं वालिनं श्रीरामः कथं हतवानिति चेदुच्यते मदेन राममनादृत्य तत्समीपे स्थितं सुग्रीवं हतवानतो 'दुर्बलं विनिघ्नन्तं प्रबलं राजा हन्यादि'त्युक्तराजधर्ममनुसृत्य रामेण हतः इति नोक्तदोषावकाशः।४७-५०।

विलोक्य शनकैः प्राह वाली रामं विगर्हयन्।
किं मयापकृतं राम! तव येन हतोऽस्म्यहम्॥५१

**विलोक्येति**—विगर्हयन् आत्मानमिति शेषः। किं मयापकृतं येन हतोऽस्मि। अत्र यो-

ऽपकारं करोति तद्धननं योग्यं तदभावेऽपि हतोऽस्मि। तेन पाप्मानमपि मां बाणेनाङ्कितं कृत्वा मोक्षं दास्यतीति तेन श्रीरामस्य दयालुतातिशयो ध्वनितः।५१

राजधर्ममविज्ञाय गर्हितं कर्म ते कृतम्।
वृक्षखण्डे तिरोभूत्वा त्यजता मयि सायकम्॥५२

**राजेति**—राजधर्मं धर्मराज्यवत् यथाकर्मफलप्रदानानुरूपमविज्ञाय विस्मृत्येत्यर्थः मह्यं मोक्षं दातुं गर्हितं निरपराधहननरूपं कर्म त्वया कृतमित्यर्थः। एतेन अहेतुककरुणया [1]'जीवान् संसारान्मोचयसीति सूचितम्। वृक्षसमूहे तिरोभूत्वा[2] प्रत्यक्षत इत्यर्थः।५२

यशः किं लप्स्यसे राम! चौरवत्कृतसङ्गरः।
यदि क्षत्रियदायादो मनोर्वंशसमुद्भवः।
युद्धं कृत्वा समक्षं मे प्राप्स्यसे तत्फलं तदा॥५३

**यशः किमिति**—अतएव चौरवत्कृतसङ्गरोऽसि किं? नासीत्यर्थः। अतएव यशः लप्स्यसे, यशस्तु लोकविदितबलो रावणः [3]यस्य कक्षां गतः तद्वधे पराक्रमातिशयविदितत्वरूपं, पापात्मनोऽपि तस्य मुक्तिं दत्तवानिति अहो दयालुतातिशयरूपं च प्राप्स्यसीत्यर्थः। एतेन [4]एतत्तव यशः श्रुत्वा रावणोऽपि त्वत्तः एव मुक्तिं ग्रहीष्यतीति व्यज्यते। यदि क्षत्रियपुत्रोऽसि यदि मनोर्वंशसमुद्भवोऽसि तदा मे मत्तः समक्षं फलं प्राप्स्यसे प्राप्तो भविष्यति। अत्र फलं प्राप्स्य इत्यनुक्त्या यदि त्वं क्षत्रियपुत्रोऽसि तर्ह्येवंभूतोऽप्यहं त्वद्बाणेन न मृतो भवामि त्वां जयेयमेव। यदीश्वरोऽसि तदा मुक्तिदानेन यत् [5]फलं तत्प्राप्स्यसीति तेन त्वच्छरताडनात् व्यथा नास्तीति सूचितम्।५३

सुग्रीवेण कृतं किं ते मया वा न कृतं किमु।
रावणेन हृता भार्या तव राम! महावने॥५४

**सुग्रीवेणेति**—सुग्रीवेण किं कृतं मया किं न कृतं। यदि त्वां प्राप्तो भूः तदाऽहमपि शरणमागमिष्ये इति सूचितम्।५४

सुग्रीवं शरणं यातस्तदर्थमिति शुश्रुम।
बत राम! न जानीषे मद्बलं लोकविश्रुतम्॥५५

---

१. तः २. पर्यन्तः पाठः रा० व० पुस्तकस्थः। ३. तस्य मत्पुस्तके। ४. 'एतत्' न विद्यते मत्पुस्तके। ५. 'फलं तत्' न विद्यते मत्पुस्तके।

रावणं सकुलं बद्ध्वा ससीतं लङ्कया सह।
आनयामि मुहुर्त्तार्धाद्यदि चेच्छसि राघव! ॥५६
धर्मिष्ठ इति लोकेऽस्मिन् कथ्यसे रघुनन्दन ! ॥५७

ननु किमेवं जल्पसि? त्वं सद्यो मुक्तिं प्राप्तवानसीति सत्यम्। तथापि समर्थोऽप्यहं त्वत्कैङ्कर्यं किमपि न कृतवानस्मीत्येवं मां बाधते तेन न तव कार्यकरणेन मम बलं सफलमभूदिति पश्चात्ताप एव तस्य व्यज्यते। तेन सुग्रीवः किमपूर्वं कृतवान् येन त्वत्कार्ये नियुक्त इति ध्वनयन् पश्चात्तापमेवाह **सुग्रीवमिति** त्रिभिः। हे राम! तदर्थं रावणनाशपूर्वकसीताप्राप्त्यर्थं सुग्रीवशरणं यातस्त्वम् अर्थात् तत्कार्ये सुग्रीवमेव योजयामास न तु मां। यद्यहं योजित आसं तर्हि सकुलं मित्रमपि रावणं बद्ध्वा सीतां नयामि आनयेयं यदि चेदानीमपि त्वमिच्छसि तर्हि निर्व्यथः सन् मुहूर्तार्धं नयामि मरणासन्नकालेऽपि यदीच्छसीत्याद्युक्त्या संदेहदूरीकरणाय ईश्वरश्चेन्मां निर्व्यथं करिष्यति येन सीतानयने समर्थः स्यां नो चेत् तद्बाणघातेऽपि न मरिष्ये इत्येवं रूपपरीक्षा कृतेति व्यक्तम्। वतेति खेदे अस्मिन् लोके धर्मिष्ठ इति कथ्यसे। एवं भूतः त्रिलोकेशः सर्वज्ञतमो मदुपास्यः भवानस्मद्बलं न जानीते किं, येन ज्येष्ठं मां विहाय कनिष्ठं हीनतमं सुग्रीवं शरणं गतः अर्थात् तत्कार्ये योजितः इत्येवं मां बाधते इति तात्पर्यार्थः।५५-५७।

वानरं व्याधवद्धत्वा धर्मं कं लप्स्यसे वद।
अभक्ष्यं वानरं मांसं हत्वा मां किं करिष्यसि॥५८

**वानरमिति**—यदि राजपुत्रोऽसि तर्हि वानरं मां व्याधवत् हत्वा कं धर्मं लप्स्यसे न कमपीत्यर्थः, ऐहिकपारलौकिकप्रयोजनाभावात्। तदेव दर्शयति अभक्ष्यमिति। ईश्वरपक्षे अन्तरांगार्थेनाह वानरमिति। यदीश्वरोऽसि तर्हि वानरं वानरशरीरं धर्मं प्राक्तनमेतच्छरीरसम्पादितं क्रियमाणं च व्याधवद्धत्वा किं सुखं प्राप्स्यसि यदर्थं सर्वजीवान्तर्यामितया सर्वत्र स्थितो तल्लाभादिति भावः। एतेन मुक्तिदानं भवतोऽभीष्टमेवेति सूचितम्। एवं नो चेत्तर्हि त्वमेव वदेति योजना। हत्वेत्यनेन दिव्यशरीरं दत्त्वा पुण्यपापाद्रहितं कृत्वा मह्यं मुक्तिं दास्यत्येवेति तन्निश्चयो व्यक्तः। 'तदा विद्वान् पुण्यपापे विधूय, निरञ्जनःपरमं साम्यमुपैतीति' श्रुतेः। वतेत्यादिना स्वशरीरबलं विनिन्द्य इदानीं शरीरमपि निन्दति यतो वानरं मांसम् अभक्ष्यं भक्षणानर्हम् अतो मां हत्वा किं करिष्यसि। एतेन एतच्छरीरमपि त्वदुपयोगि न जातमिति। तेन च खाद्यमृगो नाभवमिति पश्चात्ताप एव तस्येति, तेन च श्रीरामार्थं यत् न तत् सर्वं व्यर्थमेवेति सूचितम्।५८

इत्येवं बहुभाषन्तं वालिनं राघवोऽब्रवीत्।
धर्मस्य गोप्ता लोकेऽस्मिंश्चरामि सशरासनः॥५९

**इत्येवमिति**—तस्य पण्डितम्मन्यतां त्याजयन्नाह–धर्मस्येत्यादिना।५९

अधर्मकारिणं हत्वा सद्धर्मं पालयाम्यहम्।
दुहिता भगिनी भ्रातुर्भार्या चैव तथा स्नुषा॥६०
समा यो रमते तासामेकामपि विमूढधीः।
पातकी स तु विज्ञेयः स वध्यो राजभिः सदा॥६१
त्वं तु भ्रातुः कनिष्ठस्य भार्यायां रमसे बलात्।
अतो मया धर्मविदा हतोऽसि वनगोचर!॥६२
त्वं कपित्वान्न जानीषे महान्तो विचरन्ति यत्।
लोकं पुनानाः संचारैरतस्तान्नातिभाषयेत्॥६३

**त्वमिति**—महान्तः महतःव्यापकब्रह्मण अन्तः समाप्तिर्यस्मिन् सः, आदिति योगविभागादात्वम्, प्रकाशो योऽस्ति तदावेशयुक्ता अस्मदादयश्चत्वारः संचारैः लोकान् पुनानाः पवित्रीकुर्वाणाः स्वपदरजसा तान् संशोध्य मुक्तिभाजः कुर्वाणाः सन्तः विचरन्ति इति यावत् अतस्तान्नातिभाषयेत् न निन्देत्। त्वं तु कपित्वान्न जानासि अतो बहुभाषसे इत्यर्थः। एतेन त्वदादिदुष्कृतकारिणां मुक्तिदानार्थमेव तदावेशं गृहीत्वा आगतोऽस्मीति व्यक्तम्। तेन च श्रीमन्नारायणस्य जीववात्सल्येन कारुण्यातिशयो व्यक्तः।६३

तच्छ्रुत्वा भयसन्त्रस्तो ज्ञात्वा रामं रमापतिम्।
वाली प्रणम्य रभसाद्रामं वचनमब्रवीत्॥६४

**तच्छ्रुत्वेति**—रामं, रमापतिं ज्ञात्वेत्यनेन यदि क्षत्रियदायादोऽसीत्याद्युक्तः सन्देहो नष्ट इति सूचितम्। रभसात् हर्षात्।६४

राम! राम! महाभाग! जाने त्वां परमेश्वरम्।
अजानता मया किंचिदुक्तं तत्क्षन्तुमर्हसि॥६५
साक्षात्त्वच्छरघातेन विशेषेण तवाग्रतः।
त्यजाम्यसून् महायोगिदुर्लभं तव दर्शनम्॥६६
यन्नाम विवशो गृह्णन् म्रियमाणः परं पदम्।
याति साक्षात् स एवाद्य मुमूर्षोर्मे पुरःस्थितः॥६७

देव! जानामि पुरुषं त्वां श्रियं जानकीं शुभाम्।
रावणस्य वधार्थाय जातं त्वां ब्रह्मणार्थितम्॥६८

**देवेति**—त्वां चतुर्भुजनारायणं पुरुषं द्विभुजं रामं जानामि नित्यविहारिपुरुषश्रीरामशक्तियुक्तत्वात्, श्रियं लक्ष्मीं जानकीं जानामि सीतावेशयुक्तत्वात्, एतेन स्वनामबीजे स्थितां मां प्रेमारूपां नामनामिनोरभेदेन श्रीरामाङ्कितां दर्शेति व्यक्तम्। तेन रामदत्तषष्ठशरीरं लब्धवानिति व्यक्तम्।६८

अनुजानीहि मां राम! यान्तं तत्पदमुत्तमम्।
मम तुल्यबले बाले अङ्गदे त्वं दयां कुरु॥६९
विशल्यं कुरु मे राम! हृदयं पाणिना स्पृशन्।
तथेति बाणमुद्धृत्य रामः पस्पर्श पाणिना।
त्यक्त्वा तद्वानरं देहममरेन्द्रोऽभवत्क्षणात्॥७०

**अनुजानीहीति**—मत्तुल्यबले अङ्गदे दयां कुर्वित्यनेन एतच्छरीरेण श्रीरामसेवाऽकरणेऽपि पुत्ररूपेण रामसेवां करिष्ये इति तस्याभिप्रायो व्यक्तः। तेन तस्य बुद्धिमत्तातिशयो व्यक्तः। अनुयान्तम् आज्ञापयेत्यनेन षष्ठशरीरेणैव वदतीति तेन एतच्छरीरस्थं मे हृदयं पाणिना स्पृशन् सन् विशल्यं कुरु। पाणिना स्पृशन्नित्यनेन त्वद्दत्तषष्ठशरीरसाधनमेतच्छरीरमपि कृतार्थीकुर्विति व्यक्तम्। अमरेन्द्रोऽभवत् अमराः इन्द्रादयो देवाः तेभ्योऽपि इन्द्रः परमैश्वर्यवान् श्रीरामपार्षदोऽभूदित्यर्थः। श्रीरामपार्षदादिभ्योऽधिकार इत्यत्र प्रमाणं 'न कालस्य न शक्रस्य न विष्णोर्वित्तपस्य च। कर्माण्येतानि श्रूयन्ते यानि युद्धे हनूमतः॥' इति। अस्मदुक्तार्थस्वीकारे अग्रिमश्लोको न संगच्छते। ६९-७०।

वाली रघूत्तमशराभिहतो विमृष्टो,
रामेण शीतलकरेण सुखाकरेण।
सद्यो विमुच्य कपिदेहमनन्यलभ्यं,
प्राप्तः पदं परमहंसगणैर्दुरापम्॥७१

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
किष्किन्धाकाण्डे द्वितीयोऽध्यायः।२

⊙

**वालीति**—रघूत्तमशराभिहतः रामेण सुखाकरेण शीतलकरेण विमृष्टः वाली कपिदेहं विमुच्य सद्यः अनन्यलभ्यं रामभक्तैकलभ्यम् अत एव परमहंसगणैर्दुरापं साकेताख्यं

पदं प्राप्तः 'सिद्धा ब्रह्मसुखे मग्ना दैत्याश्च हरिणा हताः। तज्ज्योतिर्भेदने शक्ता रसिका हरिवेदिनः॥' इत्युक्तरीत्या बाणाहतस्य सिद्धिं प्राप्य अयोध्याप्रकाशरूपब्रह्मप्राप्तिरेवोचितेति न साकेतप्राप्तिः। तेन श्रीरामावेशयुक्तत्वात् रामावेशविधुरेभ्योऽस्य हरेराधिक्यमिति सूचितम्।७१

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां किष्किन्धाकाण्डे
द्वितीयोऽध्यायः।२



१. इति श्रीमदध्यात्म० टी० द्वितीयोऽध्यायः। २ इति मत्पुस्तके।

### अथ तृतीयोऽध्यायः

श्रीमहादेव उवाच—

निहते वालिनि रणे रामेण परमात्मना।
दुद्रुवुर्वानराः सर्वे किष्किन्धां भयविह्वलाः॥१

तारामूचुर्महाभागे! हतो वाली रणाजिरे।
अङ्गदं परिरक्षाद्य मन्त्रिणः परिनोदय॥२

चतुर्द्वारकपाटादीन् बद्ध्वा रक्षामहे पुरीम्।
वानराणां तु राजानमङ्गदं कुरु भामिनि!॥३

निहतं वालिनं श्रुत्वा तारा शोकविमूर्च्छिता।
अताडयत् स्वपाणिभ्यां शिरो वक्षश्च भूरिशः॥४

किमङ्गदेन राज्येन नगरेण धनेन वा।
इदानीमेव निधनं यास्यामि पतिना सह॥५

इत्युक्त्वा त्वरिता तत्र रुदती मुक्तमूर्धजा।
ययौ तारातिशोकार्ता यत्र भर्तृकलेवरम्॥६

पतितं वालिनं दृष्ट्वा रक्तैःपांसुभिरावृतम्।
रुदती नाथ नाथेति पतिता तस्य पादयोः॥७

करुणं विलपन्ती सा ददर्श रघुनन्दनम्।
राम! मां जहि बाणेन येन वाली हतस्त्वया॥८

गच्छामि पतिसालोक्यं पतिर्मामभिकाङ्क्षते।
स्वर्गेऽपि न सुखं तस्य मां विना रघुनन्दन!॥९

पत्नीवियोगजं दुःखमनुभूतं त्वयानघ!।
वालिने मां प्रयच्छाशु पत्नीदानफलं भवेत्॥१०

सुग्रीव! त्वं सुखं राज्यं दापितं वालिघातिना।
रामेण रुमया सार्धं भुङ्क्ष्व सापत्न्यवर्जितम्॥११

इत्येवं विलपन्तीं तां तारां रामो महामनाः।
सान्त्वयामास दयया तत्त्वज्ञानोपदेशतः॥१२
किं भीरु! शोचसि व्यर्थं शोकस्याविषयं पतिम्।
पतिस्तवायं देहो वा जीवो वा वद तत्त्वतः॥१३

**इत्येवमिति**—महामना एतेन रुदन्तीं तारां दृष्ट्वाऽश्रुलोचनः सन् धैर्यमवलम्बितवानिति सूचितम्, तेन करुणाकरत्वं व्यक्तम्। किमिति—हे भीरु! शोकस्याविषयं पतिं व्यर्थं विशोचसि। शोकाविषयत्वमेवाह पतिरिति। अयं दृश्यमानो देहस्तव पतिः वा अथवा जीवः तत्त्वतः त्वं वद। १२-१३।

पञ्चात्मको जडो देहस्त्वङ्मांसरुधिरास्थिमान्।
कालकर्मगुणोत्पन्नः सोऽप्यास्तेऽद्यापि ते पुरः॥१४

एवं विकल्प्य स्वयं खण्डयति **पञ्चात्मक इति**-त्वङ्मासादिविशेषणविशिष्टः पञ्चात्मको देहः यदि पतिः सोऽद्यापि तव पुरः आस्ते। पञ्चात्मको देहः स्वस्वकारणे लयं प्राप्य तत्तद्रूपेण अग्रेऽपि स्थास्यत एवेति भावः अतः शरीरं न शोचनीयमित्यर्थः।१४

मन्यसे जीवमात्मानं जीवस्तर्हि निरामयः।
न जायते न म्रियते न तिष्ठति न गच्छति॥१५

**मन्यसे इति**—यदि जीवम् आत्मानं पतिं मन्यसे तर्हि जीवो निरामयः नाशरहितः। निरामयत्वं दर्शयति—**न जायत इत्यादिना**। न जायते[1]नोपपद्यते न म्रियते न नश्यति न गच्छति न तिष्ठति स्वयं किमपि कर्तुं न शक्तः, यत्करोति तत् मच्छक्त्यैवेति भावः। 'कर्तृत्व करणत्वं च स्वभावश्चेतना धृतिः। यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया॥' इत्युक्तेः।१५

न स्त्री पुमान् वा षण्ढो वा जीवः सर्वगतोऽव्ययः।
एक एवाद्वितीयोऽयमाकाशवदलेपकः।
नित्यो ज्ञानमयःशुद्धः स कथं शोकमर्हति॥१६

**न स्त्रीति**—न स्त्री न पुमान् न षण्ढः नपुंसकः जीवत्वेन सर्वगतः अव्ययः मदंशत्वान्नित्यः निर्विकारः एकः चित्त्वेन अद्वितीयः। अः वासुदेवः द्वितीयो यस्य सः अन्तर्यामि[2]सहितः इत्यर्थः। आकाशवत् अलेपकः शरीरदोषालिप्तः नित्यः ज्ञानमयः[3]ज्ञानगुणकः शुद्धः ज्ञानस्वरूप एवं सदा वर्तमानो जीवः कथं शोकमर्हति न शोचनीय इति भावः।१६

---

१. नोत्पद्यते इत्युचितः। २. रहित इति मत्पुस्तके। ३. गुणकः इति मत्पुस्तके।

**तारोवाच**—

देहोऽचित्काष्ठवद्राम ! जीवो नित्यश्चिदात्मकः ।
सुखदुःखादिसम्बन्धः कस्य स्याद्राम ! मे वद ॥१७

नन्वेवं विरुद्धधर्मिणोश्चिदचितोः सम्बन्धाभावे सुखदुःखोपलब्धिः कस्येत्याह **देह इति**।१७

**श्रीराम उवाच**—

अहङ्कारादिसम्बन्धो यावद्देहेन्द्रियैः सह ।
संसारस्तावदेव स्यादात्मनस्त्वविवेकिनः ॥१८

अत्रोत्तरमाह **अहङ्कार इत्यादिना**।१८

मिथ्यारोपितसंसारो न स्वयं विनिवर्तते ।
विषयान्ध्यायमानस्य स्वप्ने मिथ्यागमो यथा ॥१९

मिथ्याज्ञानेन आरोपितसंसारः स्वयं न विनिवर्तते। तदेव दृष्टान्तेन स्पष्टयति **विषयानिति**। यथा स्वप्ने विषयान् स्वप्नसम्बन्धिपदार्थान् ध्यायमानस्य पुरुषस्य मिथ्यारोगः-स्वप्नसम्बन्धिपदार्थागमः स्वयं जागरणं विना न निवर्तते इत्यर्थः। मिथ्याज्ञानेन रोपितः संसारः ज्ञानं विना न निवर्तते इत्यर्थः।१९

अनाद्यविद्यासम्बन्धात्तत्कार्याहङ्कृतेस्तथा ।
संसारोऽपार्थकोऽपि स्याद्रागद्वेषादिसङ्कुलः ॥२०
मन एव हि संसारो बन्धश्चैव मनः शुभे ! ।
आत्मा मनः समानत्वमेत्य तद्गतबन्धभाक् ॥२१
यथा विशुद्धःस्फटिकोऽलक्तकादिसमीपगः ।
तत्तद्वर्णयुगाभाति वस्तुतो नास्ति रञ्जनम् ॥२२

**मन एवेति**—मन एव संसारः बन्धश्च तन्मूलकारणमित्यर्थः। आत्मा मनः समानत्वं तत्सम्बन्धम् एत्य प्राप्य तद्गतबन्धं प्राप्तो भवति। तत्रैव दृष्टं तमुपन्यस्तं **यथेति**-एतेन मनः सम्बन्धत्यागे मुक्तिरिति ध्वनितम्। २१-२२।

बुद्धीन्द्रियादिसामीप्यादात्मनः संसृतिर्बलात् ।
आत्मा स्वलिङ्गं तु मनः परिगृह्य तदुद्भवान् ॥२३

कामान् जुषन् गुणैर्बद्धः संसारे वर्ततेऽवशः।
आदौ मनोगुणान् सृष्ट्वा ततः कर्माण्यनेकधा॥२४
शुक्ललोहितकृष्णानि गतयस्तत्समानतः।
एवं कर्मवशाज्जीवो भ्रमत्याभूतसम्प्लवम्॥२५
सर्वोपसंहृतौ जीवो वासनाभिः स्वकर्मभिः।
अनाद्यविद्यावशगस्तिष्ठत्यभिनिवेशतः॥२६
सृष्टिकाले पुनः पूर्ववासनामानसैः सह।
जायते पुनरप्येवं घटीयन्त्रमिवावशः॥२७

मनसैव स्थितिलयोत्पत्तिरिति दर्शितं **बुद्धीत्यादि** पञ्चभिः।२३-२७।

यदा पुण्यविशेषेण लभते सङ्गतिं सताम्।
मद्भक्तानां सुशान्तानां तदा मद्विषया मतिः॥२८

मनः सम्बन्धेनैवाज्ञानिनां दुःखसुखादिवर्णनेन ताराशङ्कां निराकृत्य मनः सम्बन्धमित्युपायमाह **यदेत्यादिभिः**।२८

मत्कथाश्रवणे श्रद्धा दुर्लभा जायते ततः।
ततःस्वरूपविज्ञानमनायासेन जायते॥२९
तदाचार्यप्रसादेन वाक्यार्थज्ञानतः क्षणात्।
देहेन्द्रियमनःप्राणाहङ्कृतिभ्यःपृथक् स्थितम्॥३०

**तदाचार्येति**—देहादिभ्यः पृथक् स्थितम्।३०

स्वात्मानुभवतः सत्यमानन्दात्मानमद्वयम्।
ज्ञात्वा सद्यो भवेन्मुक्तः सत्यमेव मयोदितम्॥३१

**स्वात्मेति**—स्वात्मानुभवः विज्वरविशोकसच्चिदानन्दस्वरूपभगवदंशोऽहमेतद्रूपः ततः सत्यम् आनन्दात्मानम् अद्वयं समाभ्यधिकरहितं 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः, यद्वा सत्यं सत्या अयोध्या निवासित्वेन अस्ति अस्येति सत्यः तं नित्यविहारिणमिति यावत्। आनन्दात्मानं अप्राणखादानन्दमूर्ति आनन्दद्वयममृतं यद्विभाति, 'तदा प्रणखादानन्दमेवेति' श्रुतेः श्रीरामं मां ज्ञात्वा सद्यो मुक्तो भवति।३१

एवं मयोदितं सम्यगालोचयति योऽनिशम्।
तस्य संसारदुःखानि न स्पृशन्ति कदाचन॥३२

**एवमिति**——यः कोऽपि साधारणोऽपि मदुक्तं निरन्तरं सम्यगालोचयति स मुक्तो भवतीत्यर्थः ।३२

त्वमप्येतन्मया प्रोक्तमालोचय विशुद्धधीः ।
न स्पृश्यसे दुःखजालैः कर्मबन्धाद्विमोक्ष्यसे ॥३३
पूर्वजन्मनि ते सुभ्रु ! कृता मद्भक्तिरुत्तमा ।
अतस्तव विमोक्षाय रूपं मे दर्शितं शुभे ! ॥३४
ध्यात्वा मद्रूपमनिशमालोचय मयोदितम् ।
प्रवाहपतितं कार्यं कुर्वन्त्यपि न लिप्यसे ॥३५
श्रीरामेणोदितं सर्वं श्रुत्वा ताराऽतिविस्मिता ।
देहाभिमानजं शोकं त्यक्त्वा नत्वा रघूत्तमम् ॥३६
आत्मानुभवसन्तुष्टा जीवन्मुक्ता बभूव ह ।
क्षणसङ्गममात्रेण रामेण परमात्मना ॥३७

**आत्मानुभवेति**——क्षणसंगममात्रेण मुक्तेत्यनेन रामं बहुकालसङ्गिन अयोध्यावासि-[1]प्रजा वानरादयः मुक्ताः स्युरिति किं वक्तव्यमिति कैमुत्येन काव्यार्थापत्तिरलङ्कारो व्यज्यते ।३७

अनादिबन्धं निर्धूय मुक्ता सापि विकल्मषा ।
सुग्रीवोऽपि च तच्छ्रुत्वा रामवक्त्रात्समीरितम् ॥३८
जहावज्ञानमखिलं स्वस्थचित्तोऽभवत्तदा ।
ततः सुग्रीवमाहेदं रामो वानरपुङ्गवम् ॥३९
भ्रातुर्ज्येष्ठस्य पुत्रेण यद्युक्तं साम्परायिकम् ।
कुरु सर्वं यथान्यायं संस्कारादि ममाज्ञया ॥४०
तथेति बलिभिर्मुख्यैर्वानरैः परिणीय तम् ।
वालिनं पुष्पके क्षिप्त्वा सर्वराजोपचारकैः ॥४१

**तथेति**——पुष्पके पुष्परचिते ।४१

भेरीदुन्दुभिनिर्घोषैर्ब्राह्मणैर्मन्त्रिभिः सह ।
यूथपैर्वानरैः पौरैस्तारया चाङ्गदेन च ॥४२

---

१. 'प्रजा' इति रा० व० पुस्तकस्थः ।

गत्वा चकार तत्सर्वं यथाशास्त्रं प्रयत्नतः।
स्नात्वा जगाम रामस्य समीपं मन्त्रिभिः सह ॥४३

नत्वा रामस्य चरणौ सुग्रीवः प्राह हृष्टधीः।
राज्यं प्रशाधि राजेन्द्र! वानराणां समृद्धिमत् ॥४४

**नत्वेति**—सुग्रीवाय पूर्वमेव राज्यदानेऽपि वानराणां राज्यं प्रशाधीति पुनर्विज्ञापनेन ताराया: विद्यमानतया सुग्रीवस्य राज्यकरणे शङ्का व्यक्ता।४४

दासोऽहं ते पादपद्मं सेवे लक्ष्मणवच्चिरम्।
इत्युक्तो राघवः प्राह सुग्रीवं सस्मितं वचः ॥४५

**दासोऽहमिति**—सस्मितमेतेन ताराप्राप्त्यर्थं मां विज्ञापयतीति विस्मये हेतुर्व्यक्तः।४५

त्वमेवाहं न सन्देहः शीघ्रं गच्छ ममाज्ञया।
पुरराज्याधिपत्ये त्वं स्वात्मानमभिषेचय ॥४६

**त्वमेवेति**—त्वमेवाहमित्यनेन यथा (मम) पुण्यपापसम्बन्धाभावस्तथा मत्सखस्य तवाप्यनघत्वमिति सूचितम्। ममाज्ञया शीघ्रं गच्छेत्यनेन ताराग्रहणजन्यपापं तव नेति व्यज्यते।४६

नगरं न प्रवेक्ष्यामि चतुर्दश समाः सखे!।
आगमिष्यति मे भ्राता लक्ष्मणः पत्तनं तव ॥४७
अङ्गदं यौवराज्ये त्वमभिषेचय सादरम्।
अहं समीपे शिखरे पर्वतस्य सहानुजः ॥४८
वत्स्यामि वर्षदिवसांस्ततस्त्वं यत्नवान् भव।
किञ्चित्कालं पुरे स्थित्वा सीतायाः परिमार्गणे ॥४९
साष्टाङ्गं प्रणिपत्याह सुग्रीवो रामपादयोः।
यदाज्ञापयसे देव! तदद्यैव करोम्यहम् ॥५०
अनुज्ञातश्च रामेण सुग्रीवस्तु सलक्ष्मणः।
गत्वा पुरं तथा चक्रे यथा रामेण चोदितः ॥५१
सुग्रीवेण यथान्यायं पूजितो लक्ष्मणस्तदा।
आगत्य राघवं शीघ्रं प्रणिपत्योपतस्थिवान् ॥५२

ततो रामो जगामाशु लक्ष्मणेन समन्वितः ।
प्रवर्षणगिरेरूर्ध्वं शिखरं भूरिविस्तरम् ।।५३

तत्रैकं गह्वरं दृष्ट्वा स्फाटिकं दीप्तिमच्छुभम् ।
वर्षवातातपसहं फलमूलसमीपगम् ।
वासाय रोचयामास तत्र रामः सलक्ष्मणः ।।५४

दिव्यमूलफलपुष्पसंयुते,
मौक्तिकोपमजलौघपल्वले ।
चित्रवर्णमृगपक्षिशोभिते,
पर्वते रघुकुलोत्तमोऽवसत् ।।५५

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
किष्किन्धाकाण्डे तृतीयोऽध्यायः ।३

**दिव्येति**—दिव्येत्यनेन मूलफलादीनां सनातनत्वं तेन षडर्तुसान्निध्यं तेन निवासयोग्यता व्यक्ता ।५५

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां किष्किन्धाकाण्डे
तृतीयोऽध्यायः ।३

⊙

---

१. इति ध्वनिप्रकाशिकायां तृतीयोऽध्यायः रा० व० पु० ।

## अथ चतुर्थोऽध्यायः

**श्रीशिव उवाच—**

तत्र वार्षिकदिनानि राघवो,
लीलया मणिगुहासु सञ्चरन्।
पक्वमूलफलभोगतोषितो,
लक्ष्मणेन सहितोऽवत्सुखम्॥१

**तत्रेति—**[1]वर्षाणि वर्षाकालिकानि लीलया आखेटादिरूपया।१

वातनुन्नजलपूरितमेघा-
नन्तरस्तनितवैद्युतगर्भान्।
वीक्ष्य विस्मयमगाद् गजयूथान्
यद्वदाहितसुकाञ्चनकक्षान्॥२

**वातनुन्नेति—**वातप्रेरितजलपूर्णमेघान् गजयूथानिव वीक्ष्य विस्मयमगात्। अत्रोपमालङ्कारेण विस्मयपदेन च किमेते सकाञ्चनकक्षायुक्ता अयोध्यातो गता गजाः किं विद्युद्युक्ताः मेघा इति सन्देहालङ्कारेण प्रमादरूपवस्तु व्यज्यते। तेन विरहातिशयः।२

नवघासं समास्वाद्य हृष्टपुष्टमृगद्विजाः।
धावन्तः परितो रामं वीक्ष्य विस्फारितेक्षणाः॥३
न चलन्ति तदा ध्याननिष्ठा इव मुनीश्वराः।
रामं मानुषरूपेण गिरिकाननभूमिषु॥४

**नवघासमिति—**स्वघातिनमपि श्रीरामं वीक्ष्य विस्फारितेक्षणाः सन्तः न चलन्ति। तेन श्रीरामस्य सौन्दर्यातिशयो ध्वनितः।३-४।

चरन्तं परमात्मानं ज्ञात्वा सिद्धगणा भुवि।
मृगपक्षिगणा भूत्वा राममेवानुसेविरे॥५

**चरन्तमिति—**सिद्धगणाः मृगपक्षिणः भूत्वा रामं सेविरे सिषेविरे इत्यनेन यदि

---

१. वार्षिकाणि इत्युचितः।

स्वस्वरूपेण रामं सेवितुं आगच्छेम तर्हि सङ्कोचवशात् लीलां नानुसरेदिति तेषामाशयो व्यज्यते।५

सौमित्रिरेकदा राममेकान्ते ध्यानतत्परम्।
समाधिविरमे भक्त्या प्रणयाद्विनयान्वितः॥६

**सौमित्रिरिति**—ध्यानं च स्वस्वरूपानुसन्धानं तच्चात्र प्रमोदवने रासादिकर्तृस्वावेशिस्वरूपानुसन्धानं समाधिर्लीनः तन्निवृत्तावित्यर्थः।६

अब्रवीद् देव! ते वाक्यात्पूर्वोक्ताद्विगतो मम।
अनाद्यविद्यासम्भूतः संशयो पुहृदि संस्थितः॥७
इदानीं श्रोतुमिच्छामि क्रियामार्गेण राघव!।
भवदाराधनं लोके यथा कुर्वन्ति योगिनः॥८

विरहं विस्मारयितुं लक्ष्मण **अब्रवीत् देवे**त्यादिना। हे देव! जीवानाम् अनाद्यविद्यासंभूतः संसारः कथं विनिवर्तते इति मम हृदि संस्थितः संशयः। पूर्वोक्तात् उपदिष्टात् ते वाक्यात् विगत इत्यर्थः। क्रियामार्गेण पूजामार्गेण। ७-८।

इदमेव सदा प्राहुर्योगिनो मुक्तिसाधनम्।
नारदोऽपि तथा व्यासो ब्रह्मा कमलसम्भवः॥९

**इदमेवेति**—यथा योगिनः कर्मज्ञानभक्तिरूढा एतद्रूपयोगवन्तः। एतेन त्वयि एतादृशो गुणोऽस्ति येन सर्वपूज्योऽसि। तदुक्तम् 'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिरिति'।९

ब्रह्मक्षत्रादिवर्णानामाश्रमाणां च मोक्षदम्।
स्त्रीशूद्राणां च राजेन्द्र! सुलभं मुक्तिसाधनम्।
तव भक्ताय मे भ्रात्रे ब्रूहि लोकोपकारकम्॥१०

**श्रीराम उवाच—**

मम पूजाविधानस्य नान्तोऽस्ति रघुनन्दन!।
तथापि वक्ष्ये संक्षेपाद्यथावदनुपूर्वशः॥११
स्वगृह्योक्तप्रकारेण द्विजत्वं प्राप्य मानवः।
सकाशात् सद्गुरोर्मन्त्रं लब्ध्वा मद्भक्तिसंयुतः॥१२
तेन सन्दर्शितविधिर्मामेवाराधयेत्सुधीः।
हृदये वाऽनले वार्चेत्प्रतिमादौ विभावसौ॥१३

शालग्रामशिलायां वा पूजयेन्मामतन्द्रितः।
प्रातःस्नानं प्रकुर्वीत प्रथमं देहशुद्धये॥१४

**स्वगृह्योक्तेति**—द्विजत्वं प्राप्य सद्गुरोः सकाशात् मन्त्रं लब्ध्वा मद्भक्तिसंयुतः। तेन गुरुणा संदर्शितविधिः अत एव सुधीः मानवः हृदयेऽनले प्रतिमादौ आदिना ब्राह्मणे वैष्णवे च विभावसौ सूर्ये च मामेवार्चयेत्पूजयेत् वा शालग्रामे अतन्द्रितः सन् मामेवार्चयेत्। सार्धद्वयमेकान्वयि। द्विजत्वं प्राप्य गुरोर्मन्त्रं लब्ध्वेत्यनेन प्रणवगायत्र्यादिवैदिकमन्त्रेभ्यो रामनामयुतमन्त्रस्याधिक्यं व्यज्यते। प्रातःस्नानं प्रातःकृत्योपलक्षणम्।१२-१४।

वेदतन्त्रोदितैर्मन्त्रैर्मल्लेपनविधानतः।
सन्ध्यादिकर्म यन्नित्यं तत्कुर्याद्विधिना बुधः॥१५

**वेदतन्त्रेति**—वेदतन्त्रोदितैः वेदोक्तैः द्विजातय पुराणोक्तैः शूद्र इति विवेकः।१५

संकल्पमादौ कुर्वीत सिद्ध्यर्थं कर्मणां सुधीः।
स्वगुरुं पूजयेद् भक्त्या मद्बुद्ध्या पूजको मम॥१६
शिलायां स्नपनं कुर्यात्प्रतिमासु प्रमार्जनम्।
प्रसिद्धैर्गन्धपुष्पाद्यैर्मत्पूजा सिद्धिदायिका॥१७
अमायिकोऽनुवृत्त्या मां पूजयेन्नियतव्रतः।
प्रतिमादिष्वलङ्कारः प्रियो मे कुलनन्दन!॥१८
अग्नौ यजेत हविषा भास्करे स्थण्डिले यजेत्।
भक्तेनोपहृतं प्रीत्यै श्रद्धया मम वार्यपि॥१९

**अग्नाविति**—भास्करे भास्कराकारतुल्ये स्थण्डिले।१९

किं पुनर्भक्ष्यभोज्यादिगन्धपुष्पाक्षतादिकम्।
पूजाद्रव्याणि सर्वाणि सम्पाद्यैवं समारभेत्॥२०
चैलाजिनकुशैः सम्यगासनं परिकल्पयेत्।
तत्रोपविश्य देवस्य सम्मुखे शुद्धमानसः॥२१
ततो न्यासं प्रकुर्वीत मातृकाबहिरान्तरम्।
केशवादि ततः कुर्यात्तत्त्वन्यासं ततः परम्॥२२
मन्मूर्तिपञ्जरन्यासं मन्त्रन्यासं ततो न्यसेत्।
प्रतिमादावपि तथा कुर्यान्नित्यमतन्द्रितः॥२३

**मन्मूर्तिपञ्जरेति**—तत्त्वन्यासम्-आत्मतत्त्वशिवतत्त्वपरतत्त्वविद्यातत्त्वरूपं पञ्जरन्यासं विष्णुपञ्जरोक्तन्यासं मन्त्रन्यासं स्वेष्टषडक्षरादिन्यासम् ।२३

कलशं स्वपुरो वामे क्षिपेत्पुष्पादि दक्षिणे ।
अर्घ्यपाद्यप्रदानार्थं मधुपर्कार्थमेव च ॥२४
तथैवाचमनार्थं तु न्यसेत्पात्रचतुष्टयम् ।
हृत्पद्मे भानुविमले मत्कलां जीवसंज्ञिताम् ॥२५
ध्यायेत्स्वदेहमखिलं तया व्याप्तमरिन्दम ! ।
तामेवावाहयेन्नित्यं प्रतिमादिषु मत्कलाम् ॥२६

**तथैवेति**—जीवसंज्ञितां तदन्तर्गतत्वादिति भावः । मत्कलां मत्सूक्ष्ममूर्तिम् अन्तर्यामिणमित्यर्थः । 'य आत्मनि तिष्ठन्' 'अणोरणीयान्' 'अङ्गुष्ठमात्रः पुरुषः मध्य आत्मनि तिष्ठतीत्यादि' श्रुतेः ।२५-२६ ।

पाद्यार्घ्याचमनीयाद्यैः स्नानवस्त्रविभूषणैः ।
यावच्छक्योपचारैर्वा त्वर्चयेन्मामममायया ॥२७
विभवे सति कर्पूरकुङ्कुमागरुचन्दनैः ।
अर्चयेन्मन्त्रवन्नित्यं सुगन्धकुसुमैः शुभैः ॥२८
दशावरणपूजां वै ह्यागमोक्तां प्रकारयेत् ।
नीराजनैर्धूपदीपैर्नैवेद्यैर्बहुविस्तरैः ॥२९
श्रद्धयोपहरेन्नित्यं श्रद्धाभुगहमीश्वरः ।
होमं कुर्यात्प्रयत्नेन विधिना मन्त्रकोविदः ॥३०

**दशावरणेति**—नीराजनैरिति—'पाठक्रमादर्थक्रमो बलीयानित्युक्तेः, पाद्यार्घ्यमधुपर्काचमनीयसुमनःस्नेहलेपनपञ्चामृतस्नानशुद्धस्नानाचमनीयवस्त्रयज्ञोपवीताचमनीयगन्धपुष्पतुलसीधूपदीपनैवेद्याचमनीयताम्बूलाचमनीयदक्षिणास्तवपाठाऽऽदर्शदर्शनवीजनञ्च चतुश्चरणयोः द्विः वस्तूनामभावे 'कर्पूरं वा व्रते 'सर्वाङ्गे सप्तवारं नीराजनमुदाहृतम्'-इत्युक्तनीराजनभगवदपरिस्वच्छापवर्जनेन वा सार्धत्रिहस्तान्तरालेन चतुः प्रदक्षिणा 'पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा। मनसा वचसा चैव प्रणामोऽष्टाङ्ग ईरितः'—इत्युक्ताष्टविधप्रणामपुष्पाञ्जलिमन्त्रजपहोमैः पूजां कुर्यात् ।२९-३० ।

---

१. कं मुखाम्बजे, रा० व० पु० ।

अगस्त्येनोक्तमार्गेण कुण्डेनागमवित्तमः।
जुहुयान्मूलमन्त्रेण पुंसूक्तेनाथवा बुधः॥३१

**अगस्त्येनेति**--अगस्त्यसंहितोक्तमार्गेण कृतं यत् कुण्डं तेन तस्मिन्नित्यर्थः। अधिकरणस्य करणत्वविवक्षया। ३१

अथवोपासनाग्नौ वा चरुणा हविषा तथा।
तप्तजाम्बूनदप्रख्यं दिव्याभरणभूषितम्॥३२

ध्यायेदनलमध्यस्थं होमकाले सदा बुधः।
पार्षदेभ्यो बलिं दत्त्वा होमशेषं समापयेत्॥३३

ततो जपं प्रकुर्वीत ध्यायेन्मां यतवाक् स्मरन्।
मुखवासं च ताम्बूलं दत्त्वा प्रीतिसमन्वितः॥३४

मदर्थे नृत्यगीतादिस्तुतिपाठादि कारयेत्।
प्रणमेद्दण्डवद् भूमौ हृदये मां निधाय च॥३५

शिरस्याधाय मद्दत्तं प्रसादं भावनामयम्।
पाणिभ्यां मत्पदे मूर्ध्नि गृहीत्वा भक्तिसंयुतः॥३६

रक्ष मां घोरसंसारादित्युक्त्वा प्रणमेत्सुधीः।
उद्वासयेद् यथापूर्वं प्रत्यग्ज्योतिषि संस्मरन्॥३७

**रक्षेति**--प्रत्यग्ज्योतिषि स्वहृत्पद्मस्थे हृत्पद्मादावाहितमन्तर्यामिणं संहारमुद्रया पुनस्तत्रैवोद्वासयेत् स्थापयेदित्यर्थः।३७

एवमुक्तप्रकारेण पूजयेद्विधिवद्यदि ।
इहामुत्र च संसिद्धिं प्राप्नोति मदनुग्रहात्॥३८

मद्भक्तो यदि मामेवं पूजां चैव दिने दिने।
करोति मम सारूप्यं प्राप्नोत्येव न संशयः॥३९

इदं रहस्यं परमं च पावनं,
मयैव साक्षात्कथितं सनातनम्।
पठत्यजस्रं यदि वा शृणोति यः,
स सर्वपूजाफलभाङ्‌ न संशयः॥४०

एवं परात्मा श्रीरामः क्रियायोगमनुत्तमम्।
पृष्टः प्राह स्वभक्ताय शेषांशाय महात्मने॥४१

**एवमिति**—शेषांशाय, शेषः अंशो यस्य तस्मै अत एव महात्मने।४१

पुनः प्राकृतवद्रामो मायामालम्ब्य दुःखितः।
हा सीतेति वदन्नैव निद्रां लेभे कथञ्चन॥४२

**पुनरिति**—पूजाप्रकारकथनेन विस्मृतां सीतां तत्समाप्तौ पुनः स्मरन्नाह–हा सीतेति-हा सीतेति वदन् रात्रिं व्यपनयदिति नोक्तं, कथञ्चन निद्रां नैव लेभे इत्युक्तम् तेन सुषुप्तिस्तु न जाता सीतास्मरणेन [1]तत्सुप्तमेव जातः इति व्यक्तम्। मायां मूलप्रकृतिं लङ्कां गताम् आलम्ब्य ध्यात्वा प्राकृत इव दुःखितः।४२

एतस्मिन्नन्तरे तत्र किष्किन्धायां सुबुद्धिमान्।
हनूमान्प्राह सुग्रीवमेकान्ते कपिनायकम्॥४३

**एतस्मिन्निति**—ननु श्रीरामसखित्वेन सर्वज्ञः सुग्रीवः पूर्वोपकारिणं समर्थं श्रीरामं कथं विस्मृतवानिति चेन्न 'मायां मोहकरीं तस्मिन् वितन्वन् कार्यसिद्धये' इत्युक्तेः सन्धिनी-शक्त्या पूर्वज्ञानसङ्कोचात्।४३

शृणु राजन्! प्रवक्ष्यामि तवैव हितमुत्तमम्।
रामेण ते कृतः पूर्वमुपकारो ह्यनुत्तमः॥४४
कृतघ्नवत्त्वया नूनं विस्मृतः प्रतिभाति मे।
त्वत्कृते निहतो वाली वीरस्त्रैलोक्यसम्मतः॥४५

**शृणु इति**—रामेणोपकृतः कृतघ्नवत् कृतघ्नेनैव त्वया विस्मृतः इति मे प्रतिभाति।४४-४५।

राज्ये प्रतिष्ठितोऽसि त्वं तारां प्राप्तोऽसि दुर्लभाम्।
स रामः पर्वतस्याग्रे भ्रात्रा सह वसन्सुधीः॥४६
त्वदागमनमेकाग्रमीक्षते कार्यगौरवात्।
त्वं तु वानरभावेन स्त्रीसक्तो नावबुद्ध्यसे॥४७
करोमीति प्रतिज्ञाय सीतायाः परिमार्गणम्।
न करोषि कृतघ्नस्त्वं हन्यसे वालिवद् द्रुतम्॥४८

---

१. सुप्तइव इत्युचितः पाठः प्रतीयते।

हनूमद्वचनं श्रुत्वा सुग्रीवो भयविह्वलः।
प्रत्युवाच हनूमन्तं सत्यमेव त्वयोदितम्॥४९
शीघ्रं कुरु ममाज्ञां त्वं वानराणां तरस्विनाम्।
सहस्राणि दशेदानीं प्रेषयाशु दिशो दश॥५०

**शीघ्रं कुर्विति**—प्रेषयेत्यनेन सुग्रीवस्य राज्यमदो व्यक्तः। पूर्वेशानयोर्मध्ये वैष्णवा दिक् नैर्ऋत्यप्रतीच्योर्मध्ये ब्राह्मी दिक् ताभ्यां सह पूर्वाद्यष्टौ दिशः दशसङ्ख्याकाः भवन्ति।५०

सप्तद्वीपगतान्सर्वान् वानरानानयन्तु ते।
पक्षमध्ये समायान्तु सर्वे वानरपुङ्गवाः॥५१
ये पक्षमतिवर्तन्ते ते वध्या मे न संशयः।
इत्याज्ञाप्य हनूमन्तं सुग्रीवो गृहमाविशत्॥५२
सुग्रीवाज्ञां पुरस्कृत्य हनूमान्मन्त्रिसत्तमः।
तत्क्षणे प्रेषयामास हरीन्दश दिशः सुधीः॥५३

अगणितगुणसत्त्वान्वायुवेगप्रचारा-
न्वनचरगणमुख्यान् पर्वताकाररूपान्।
पवनहितकुमारः प्रेषयामास दूता-
नतिरभसतरात्मा दानमानादितृप्तान्॥५४

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
किष्किन्धाकाण्डे चतुर्थोऽध्यायः॥४

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां किष्किन्धाकाण्डे
चतुर्थोऽध्यायः।४

⊙

---

१. रा० व० पु० न कापि पुष्पिका।

## अथ पञ्चमोऽध्यायः

**श्रीमहादेव उवाच—**

रामस्तु पर्वतस्याग्रे मणिसानौ निशामुखे।
सीताविरहजं शोकमसहन्निदमब्रवीत् ॥१

पश्य लक्ष्मण! मे सीता राक्षसेन हृता बलात्।
मृताऽमृता वा निश्चेतुं न जानेऽद्यापि भामिनीम् ॥२

**पश्येति**—भामिनीत्यनेन ममाद्याप्यन्वेषणं न कृतमिति रोषं कुर्वन्ती सा स्थितेति सूचितम् ।२

जीवतीति मम ब्रूयात्कश्चिद्वा प्रियकृत्स मे।
यदि जानामि तां साध्वीं जीवन्तीं यत्र कुत्र वा ॥३

हठादेवाहरिष्यामि सुधामिव पयोनिधेः।
प्रतिज्ञां शृणु मे भ्रातर्येन मे जनकात्मजा ॥४

नीता तं भस्मसात्कुर्यां सपुत्रबलवाहनम्।
हे सीते! चन्द्रवदने! वसन्ती राक्षसालये ॥५

दुःखार्ता मामपश्यन्ती कथं प्राणान् धरिष्यसि।
चन्द्रोऽपि भानुवद् भाति मम चन्द्राननां विना ॥६

चन्द्र! त्वं जानकीं स्पृष्ट्वा करैर्मां स्पृश शीतलैः।
सुग्रीवोऽपि दयाहीनो दुःखितं मां न पश्यति ॥७

राज्यं निष्कण्टकं प्राप्य स्त्रीभिः परिवृतो रहः।
कृतघ्नो दृश्यते व्यक्तं पानासक्तोऽतिकामुकः ॥८

नायाति शरदं पश्यन्नपि मार्गयितुं प्रियाम्।
पूर्वोपकारिणं दुष्टः कृतघ्नो विस्मृतो हि माम् ॥९

हन्मि सुग्रीवमप्येवं सपुरं सहबान्धवम्।
वाली यथा हतो मेऽद्य सुग्रीवोऽपि तथा भवेत् ॥१०

इति रुष्टं समालोक्य राघवं लक्ष्मणोऽब्रवीत्।
इदानीमेव गत्वाहं सुग्रीवं दुष्टमानसम्॥११
मामाज्ञापय हत्वा तमायास्ये राम! तेऽन्तिकम्।
इत्युक्त्वा धनुरादाय स्वयं तूणीरमेव च॥१२
गन्तुमभ्युद्यतं वीक्ष्य रामो लक्ष्मणमब्रवीत्।
न हन्तव्यस्त्वया वत्स! सुग्रीवो मे प्रियः सखा॥१३
किन्तु भीषय सुग्रीवं वालिवन्निहनिष्यसे।
इत्युक्त्वा शीघ्रमादाय सुग्रीवप्रतिभाषितम्॥१४

**गन्तुमिति**—सुग्रीवो न हन्तव्यः किन्तु वालिवत्त्वं रामेण न हनिष्यसे न, हनिष्यस एवेति सुग्रीवं विभीषय इति प्रत्युक्त्वा प्रतिभाषितं सुग्रीवदत्तोत्तरमादाय आगत्य मां श्रावयेति शेषः। मे 'प्रिय' विरहदशायामपीयमुक्तिः दयालुतातिशयं व्यनक्तीति भावः।१३-१४।

आगत्य पश्चाद्यत्कार्यं तत्करिष्याम्यसंशयम्।
तथेति लक्ष्मणोऽगच्छत्त्वरितो भीमविक्रमः॥१५

**आगत्येति**—पश्चाद्यत्कार्यं तत्करिष्यामि सीतान्वेषणं त्वहमेव करिष्यामीति भावः। एतेन सामर्थ्यातिशयः दयालुतातिशयश्च व्यक्तः।१५

किष्किन्धां प्रति कोपेन निर्दहन्निव वानरान्।
सर्वज्ञो नित्यलक्ष्मीको विज्ञानात्माऽपि राघवः॥१६
सीतामनुशुशोचार्तः प्राकृतः प्राकृतामिव।
बुद्ध्यादिसाक्षिणस्तस्य मायाकार्यातिवर्तिनः॥१७
रागादिरहितस्यास्य तत्कार्यं कथमुद्भवेत्।
ब्राह्मणोक्तमृतं कर्तुं राज्ञो दशरथस्य हि॥१८
तपसः फलदानाय जातो मानुषवेषधृक्।
मायया मोहिताः सर्वे जना अज्ञानसंयुताः॥१९
कथमेषां भवेन्मोक्ष इति विष्णुर्विचिन्तयन्।
कथां प्रथयितुं लोके सर्वलोकमलापहाम्॥२०
रामायणाभिधां रामो भूत्वा मानुषचेष्टकः।
क्रोधं मोहं च कामं च व्यवहारार्थसिद्धये॥२१

**कथमेषामिति**—रामायणाभिधां कथां प्रथयितुं विस्तारयितुं रामो मानुषचेष्टको

भूत्वा आस्ते इति शेषः। तेन ये मद्दर्शनं करिष्यन्ति ते तु संसारे तरिष्यन्त्येव। यदि रामायणं प्रकटीभवेत् तर्हि तच्छ्रवणेन चतुर्युगीनाः पुरुषा अपि तरिष्यन्तीति व्यक्तम्। तेन कारुण्यातिशयः सूचितः।२०-२१।

तत्तत्कालोचितं गृह्णन् मोहयत्यवशाः प्रजाः।
अनुरक्त इवाशेषगुणेषु गुणवर्जितः॥२२

विज्ञानमूर्तिर्विज्ञानशक्तिः साक्ष्यगुणान्वितः।
अतः कामादिभिर्नित्यमविलिप्तो यथा नभः॥२३

विन्दन्ति मुनयः केचिज्जानन्ति जनकादयः।
तद्भक्ता निर्मलात्मानः सम्यग् जानन्ति नित्यदा।
भक्तचित्तानुसारेण जायते भगवानजः॥२४

लक्ष्मणोऽपि तदा गत्वा किष्किन्धानगरान्तिकम्।
ज्याघोषमकरोत्तीव्रं भीषयन् सर्ववानरान्॥२५

तं दृष्ट्वा प्राकृतास्तत्र वानरा वप्रमूर्धनि।
चक्रुः किलकिलाशब्दं धृतपाषाणपादपाः॥२६

तान्दृष्ट्वा क्रोधताम्राक्षो वानरान् लक्ष्मणस्तदा।
निर्मूलान्कर्तुमुद्युक्तो धनुरानम्य वीर्यवान्॥२७

ततः शीघ्रं समाप्लुत्य ज्ञात्वा लक्ष्मणमागतम्॥२८

निवार्य वानरान् सर्वानङ्गदो मन्त्रिसत्तमः।
गत्वा लक्ष्मणसामीप्यं प्रणनाम स दण्डवत्॥२९

ततोऽङ्गदं परिष्वज्य लक्ष्मणः प्रियवर्धनः।
उवाच वत्स! गच्छ त्वं पितृव्याय निवेदय॥३०

मामागतं राघवेण चोदितं रौद्रमूर्तिना।
तथेति त्वरितं गत्वा सुग्रीवाय न्यवेदयत्॥३१

लक्ष्मणः क्रोधताम्राक्षः पुरद्वारि बहिःस्थितः।
तच्छ्रुत्वाऽतीवसन्त्रस्तः सुग्रीवो वानरेश्वरः॥३२

आहूय मन्त्रिणां श्रेष्ठं हनूमन्तमथाब्रवीत्।
गच्छ त्वमङ्गदेनाशु लक्ष्मणं विनयान्वितः॥३३

सान्त्वयन्कोपितं वीरं शनैरानय सादरम्।
प्रेषयित्वा हनूमन्तं तारामाह कपीश्वरः॥३४
त्वं गच्छ सान्त्वयन्ती तं लक्ष्मणं मृदुभाषितैः।
शान्तमन्तःपुरं नीत्वा पश्चाद् दर्शय मेऽनघे!॥३५
भवत्विति ततस्तारा मध्यकक्षं समाविशत्।
हनूमानङ्गदेनैव सहितो लक्ष्मणान्तिकम्॥३६
गत्वा ननाम शिरसा भक्त्या स्वागतमब्रवीत्।
एहि वीर! महाभाग! भवद्गृहमशङ्कितम्॥३७
प्रविश्य राजदारादीन् दृष्ट्वा सुग्रीवमेव च।
यदाज्ञापयसे पश्चात्तत्सर्वं करवाणि भोः!॥३८
इत्युक्त्वा लक्ष्मणं भक्त्या करे गृह्य स मारुतिः।
आनयामास नगरमध्याद्राजगृहं प्रति॥३९
पश्यंस्तत्र महासौधान् यूथपानां समन्ततः।
जगाम भवनं राज्ञः सुरेन्द्रभवनोपमम्॥४०
मध्यकक्षे गता तत्र तारा ताराधिपानना।
सर्वाभरणसम्पन्ना मदरक्तान्तलोचना॥४१
उवाच लक्ष्मणं नत्वा स्मितपूर्वाभिभाषिणी।
याहि देवर! भद्रं ते साधुस्त्वं भक्तवत्सलः॥४२
किमर्थं कोपमाकार्षीर्भक्ते भृत्ये कपीश्वरे।
बहुकालमनाश्वासं दुःखमेवानुभूतवान्॥४३
इदानीं बहुदुःखौघाद् भवद्भिरभिरक्षितः।
भवत्प्रसादात्सुग्रीवः प्राप्तसौख्यो महामतिः॥४४
कामासक्तो रघुपतेः सेवार्थं नागतो हरिः।
आगमिष्यन्ति हरयो नानादेशगताः प्रभो!॥४५
प्रेषिता दशसाहस्रा हरयो रघुसत्तम!।
आनेतुं वानरान् दिग्भ्यो महापर्वतसन्निभान्॥४६
सुग्रीवः स्वयमागत्य सर्ववानरयूथपैः।
वधयिष्यति दैत्यौघान् रावणं च हनिष्यति॥४७

**सुग्रीव इति**—दैत्यौघान् एतेन यदि दैत्याः सहायं करिष्यन्ति तदा तानपि हनिष्यतीति सूचितम् ।४७

त्वयैव सहितोऽद्यैव गन्ता वानरपुङ्गवः ।
पश्यान्तर्भवनं तत्र पुत्रदारसुहृद्वृतम् ॥४८
दृष्ट्वा सुग्रीवमभयं दत्त्वा नय सहैव ते ।
ताराया वचनं श्रुत्वा कृशक्रोधोऽथ लक्ष्मणः ॥४९
जगामान्तःपुरं यत्र सुग्रीवो वानरेश्वरः ।
रुमामालिङ्गय सुग्रीवः पर्यङ्के पर्यवस्थितः ॥५०

**जगामेति**—रुमामालिङ्गय पर्यङ्के एव स्थितः । तेन मद्यमत्तता, तेनाभयत्वं, तेन च श्रीरामदत्तराज्योऽहम् अतः कोपं न करिष्यतीति तन्निश्चयः, तेन च श्रीरामस्य भक्तदोषादर्शित्वरूपगुणे सुग्रीवस्य विश्वासातिशयो व्यज्यते ।५०

दृष्ट्वा लक्ष्मणमत्यर्थमुत्पपातातिभीतवत् ।
तं दृष्ट्वा लक्ष्मणः क्रुद्धो मदविह्वलितेक्षणम् ॥५१
सुग्रीवं प्राह दुर्वृत्त ! विस्मृतोऽसि रघूत्तमम् ।
वाली येन हतो वीरः स बाणोऽद्य प्रतीक्षते ॥५२
त्वमेव वालिनो मार्गं गमिष्यसि मया हतः ।
एवमत्यन्तपरुषं वदन्तं लक्ष्मणं तदा ॥५३
उवाच हनुमान् वीरः कथमेवं प्रभाषते ।
त्वत्तोऽधिकतरो रामे भक्तोऽयं वानराधिपः ॥५४

**उवाचेति**—रामभ्राता त्वं तदभिन्नत्वात् सर्वाधिकः अयं वानराधिपस्तु रामे तदभिन्ने त्वयि च भक्तः । अतः त्वत्तोऽधिकतरः उभयोर्भक्तत्वादिति भावः । तेन त्वत्तोऽधिकप्रिय इति, तेन त्वत्कोपः निष्फल एवेति व्यक्तः ।५४

रामकार्यार्थमनिशं जागर्ति न तु विस्मृतः ।
आगताः परितः पश्य वानराः कोटिशः प्रभो ! ॥५५

**रामकार्येति**—आगताः परितः पश्येत्यनेन रामभक्तानां सङ्कल्पस्तु सद्यः सफलो भवतीति व्यक्तम् ।५५

गमिष्यन्त्यचिरेणैव सीतायाः परिमार्गणे ।
साधयिष्यति सुग्रीवो रामकार्यमशेषतः ॥५६

श्रुत्वा हनुमतो वाक्यं सौमित्रिर्लज्जितोऽभवत्।
सुग्रीवोऽप्यर्घ्यपाद्याद्यैर्लक्ष्मणं समपूजयत्॥५७
आलिङ्ग्य प्राह रामस्य दासोऽहं तेन रक्षितः।
रामः स्वतेजसा लोकान् क्षणार्धेनैव जेष्यति॥५८
सहायमात्रमेवाहं वानरैः सहितः प्रभो!।
सौमित्रिरपि सुग्रीवं प्राह किंचिन्मयोदितम्॥५९
तत्क्षमस्व महाभाग! प्रणयाद् भाषितं मया।
गच्छामोऽद्यैव सुग्रीव! रामस्तिष्ठति कानने॥६०

**तत्क्षमस्वेति**—तत्क्षमस्वेत्यनेन श्रीरामभक्ता ईश्वरादप्युत्कृष्टा इति ध्वनितम्।६०

एक एवातिदुःखार्तो जानकीविरहात्प्रभुः।
तथेति रथमारुह्य लक्ष्मणेन समन्वितः॥६१
वानरैः सहितो राजा राममेवान्वपद्यत॥६२
भेरीमृदङ्गैर्बहुऋक्षवानरैः,
श्वेतातपत्रैर्व्यजनैश्च शोभितः।
नीलाङ्गदाद्यैर्हनुमत्प्रधानैः,
समावृतो राघवमभ्यगाद्धरिः॥६३

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
किष्किन्धाकाण्डे पञ्चमोऽध्यायः।५

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामरण्यकाण्डे
पञ्चमोऽध्यायः।५

⊙

१. रा० व० पु० न कापि पुष्पिका।

## अथ षष्ठोऽध्यायः

**श्रीमहादेव उवाच--**

दृष्ट्वा रामं समासीनं गुहाद्वारि शिलातले।
चैलाजिनधरं श्यामं जटामौलिविराजितम् ।।१
विशालनयनं शान्तं स्मितचारुमुखाम्बुजम्।
सीताविरहसंतप्तं पश्यन्तं, मृगपक्षिणः।।२
रथाद् दूरात्समुत्प्लुत्य वेगात्सुग्रीवलक्ष्मणौ।
रामस्य पादयोरग्रे पेततुर्भक्तिसंयुतौ ।।३
रामः सुग्रीवमालिङ्ग्य पृष्ट्वाऽनामयमन्तिके।
स्थापयित्वा यथान्यायं पूजयामास धर्मवित् ।।४
ततोऽब्रवीद्रघुश्रेष्ठं सुग्रीवो भक्तिनम्रधीः।
देव ! पश्य समायान्तीं वानराणां महाचमूम् ।।५
कुलाचलाद्रिसम्भूता मेरुमन्दरसन्निभाः।
नानाद्वीपसरिच्छैलवासिनः पर्वतोपमाः ।।६
असङ्ख्याताः समायान्ति हरयः कामरूपिणः।
सर्वे देवांशसम्भूताः सर्वे युद्धविशारदाः।।७
अत्र केचिद् गजबलाः केचिद् दशगजोपमाः।
गजायुतबलाः केचिदिमेऽमितबलाः प्रभो ! ।।८
केचिदञ्जनकूटाभाः केचित्कनकसन्निभाः।
केचिद्रक्तान्तवदनाः दीर्घवालास्तथापरे ।।९
शुद्धस्फटिकसङ्काशाः केचिद्राक्षससन्निभाः।
गर्जन्तः परितो यान्ति वानरा युद्धकाङ्क्षिणः।।१०
त्वदाज्ञाकारिणः सर्वे फलमूलाशनाः प्रभो ! ।
ऋक्षाणामधिपो वीरो जाम्बवान्नाम बुद्धिमान् ।।११

एष मे मन्त्रिणां श्रेष्ठः कोटिभल्लूकवृन्दपः।
हनूमानेष विख्यातो महासत्त्वपराक्रमः॥१२
वायुपुत्रोऽतितेजस्वी मन्त्री बुद्धिमतां वरः।
नलो नीलश्च गवयो गवाक्षो गन्धमादनः॥१३
शरभो मैन्दवश्चैव गजः पनस एव च।
बलीमुखो दधिमुखः सुषेणस्तार एव च॥१४
केसरी च महासत्त्वः पिता हनुमतो बली।
एते मे यूथपाः राम ! प्राधान्येन मयोदिताः॥१५
महात्मानो महावीर्याः शक्रतुल्यपराक्रमाः।
एते प्रत्येकतः कोटिकोटिवानरयूथपाः॥१६
तवाज्ञाकारिणः सर्वे सर्वे देवांशसम्भवाः।
एष वालिसुतः श्रीमानङ्गदो नाम विश्रुतः॥१७
वालितुल्यबलो वीरो राक्षसानां बलान्तकः।
एते चान्ये च बहवस्त्वदर्थे त्यक्तजीविताः॥१८
योद्धारः पर्वताग्रैश्च निपुणाः शत्रुघातने।
आज्ञापय रघुश्रेष्ठ! सर्वे ते वशवर्तिनः॥१९

**योद्धार इति**––सर्वे ते वशवर्तिनः एतेन सुग्रीवः सर्वैः सह स्वात्मानं निवेदयामासेति सूचितम्।१९

रामः सुग्रीवमालिङ्ग्य हर्षपूर्णाश्रुलोचनः।
प्राह सुग्रीव! जानासि सर्वं त्वं कार्यगौरवम्॥२०

**राम इति**––रामः सुग्रीवमालिङ्ग्येत्यनेन यदि कोऽपि श्रीरामसेवार्थमुद्युक्तमात्रो भवति (सः) स्वसदृशं करोतीति व्यक्तम्। तेन कृतज्ञतातिशयोः ध्वनितः। हर्षपूर्णाश्रुलोचनः, एतेन जानकीं प्राप्तामिवामंस्त इति ध्वनितम्।२०

मार्गणार्थं हि जानक्याः नियुङ्क्ष्व यदि रोचते।
श्रुत्वा रामस्य वचनं सुग्रीवः प्रीतिमानसः॥२१
प्रेषयामास बलिनो वानरान्वानरर्षभः।
दिक्षु सर्वासु विविधान्वानरान्प्रेष्य सत्वरम्॥२२

**प्रेषयामासेति**--दिक्षु सर्वासु विविधान्वानरान्प्रेष्येत्यनेन चौर्येण हृतत्वात्कुत्र स्थापितवानिति सन्देहो व्यक्तः।२२

दक्षिणां दिशमत्यर्थं प्रयत्नेन महाबलान्।
युवराजं जाम्बवन्तं हनूमन्तं महाबलः॥२३

नलं सुषेणं शरभं मैन्दं द्विविदमेव च।
प्रेषयामास सुग्रीवो वचनं चेदमब्रवीत्॥२४

विचिन्वन्तु प्रयत्नेन भवन्तो जानकीं शुभाम्।
मासादर्वाङ निवर्तध्वं मच्छासनपुरःसराः॥२५

सीतामदृष्ट्वा यदि वो मासादूर्ध्वं दिनं भवेत्।
तदा प्राणान्तिकं दण्डं मत्तः प्राप्स्यथ वानराः!॥२६

इति प्रस्थाप्य सुग्रीवो वानरान् भीमविक्रमान्।
रामस्य पार्श्वे श्रीरामं नत्वा चोपविवेश सः॥२७

गच्छन्तं मारुतिं दृष्ट्वा रामो वचनमब्रवीत्।
अभिज्ञानार्थमेतन्मे ह्यङ्गुलीयकमुत्तमम्॥२८

मन्नामाक्षरसंयुक्तं सीतायै दीयतां रहः।
अस्मिन्कार्ये प्रमाणं हि त्वमेव कपिसत्तम!।
जानामि सत्त्वं ते सर्वं गच्छ पन्थाः शुभस्तव॥२९

**गच्छन्तमिति**--[1]स्वनामखचितां मुद्रिकां दत्त्वा अस्मिकार्ये त्वमेव प्रमाणमित्युक्तम्। तेन चारुशीलासखीरूपेण सीतासेवायां स्थितत्वात्त्वमेव [2]तां प्राप्स्यसीति हेतुः। तेन पुरुषैः संभाषणमात्रमपि न करोतीति। तेन पातिव्रत्यधर्मातिशयः। **मन्नामेति**--मन्नामाक्षरसंयुक्तम्। एतेन [3]प्रकृतिमण्डलानन्तर्गताऽयोध्यातो आगता प्रेमा, कमला, सीता सा त्वग्नौ स्वनामबीजे स्थापिता, मूलप्रकृतिरूपा, या छाया सीता तस्याः [4]चारुशीलारूपेणाप्राकृतनित्यसाकेते रासमण्डले स्थितया [5]तस्य हनुमतः परिचितिरेव नास्तीति तत्परिचितिं स्वनामबीजस्थेयं कारयिष्यतीति हेतुर्व्यक्तः, तेन तव सत्त्वं बलं जानामि। पन्थाः शुभोऽस्तु इति तद्बलं जानन्नपि न आशीर्वादो दत्तः। तेन रावणपराक्रमातिशयो व्यक्तः।२८-२९

१. तः २. पर्यन्तो भागः रा० व० पुस्तकस्थः। ३. प्रकृतिमण्डलानन्तर्गता, इति रा०व० पुस्तके न विद्यते। ४. तः ५. पर्यन्तो भागः रा० व० पुस्तके न वर्तते।

एवं कपीनां राज्ञा ते विसृष्टाः परिमार्गणे।
सीताया अङ्गदमुखा बभ्रमुस्तत्र तत्र ह॥३०
भ्रमन्तो विन्ध्यगहने ददृशुः पर्वतोपमम्।
राक्षसं भीषणाकारं भक्षयन्तं मृगान् गजान्॥३१
रावणोऽयमिति ज्ञात्वा केचिद्वानरपुङ्गवाः।
जघ्नुः किलकिलाशब्दं मुञ्चन्तो मुष्टिभिः क्षणात्॥३२
नायं रावण इत्युक्त्वा ययुरन्यन्महद्वनम्।
तृषार्ताः सलिलं तत्र नाविन्दन् हरिपुङ्गवाः॥३३
विभ्रमन्तो महारण्ये शुष्ककण्ठोष्ठतालुकाः।
ददृशुर्गह्वरं तत्र तृणगुल्मावृतं महत्॥३४
आर्द्रपक्षान् क्रौञ्चहंसान्निःसृतान्ददृशुस्ततः।
अत्रास्ते सलिलं नूनं प्रविशामो महागुहाम्॥३५
इत्युक्त्वा हनुमानग्रे प्रविवेश तमन्वयुः।
सर्वे परस्परं धृत्वा बाहून्बाहुभिरुत्सुकाः॥३६
अन्धकारे महद्दूरं गत्वाऽपश्यन् कपीश्वराः।
[1]जलाशयान्मणिनिभतोयान्कल्पद्रुमोपमान् ॥३७
वृक्षान्पक्वफलैर्नम्रान्मधुद्रोणसमन्वितान् ।
गृहान्सर्वगुणोपेतान्मणिवस्त्रादिपूरितान् ॥३८
दिव्यभक्ष्यान्नसहितान्मानुषैः परिवर्जितान्।
विस्मितास्तत्र भवने दिव्ये कनकविष्टरे॥३९
प्रभया दीप्यमानां तु ददृशुः स्त्रियमेकलाम्।
ध्यायन्तीं चीरवसनां योगिनीं योगमास्थिताम्॥४०
प्रणेमुस्तां महाभागां भक्त्या भीत्या च वानराः।
दृष्ट्वा तान्वानरान्देवी प्राह यूयं किमागताः॥४१
कुतो वा कस्य दूता वा मत्स्थानं किं प्रधर्षथ।
तच्छ्रुत्वा हनुमानाह शृणु वक्ष्यामि देवि! ते॥४२

---

१. अद्धांशोऽयं वृत्तशैथिल्यसंयुक्तः।

अयोध्याधिपतिः श्रीमान् राजा दशरथः प्रभुः।
तस्य पुत्रो महाभागो ज्येष्ठो राम इति श्रुतः ॥४३
पितुराज्ञां पुरस्कृत्य सभार्यः सानुजो वनम्।
गतस्तत्र हृता भार्या तस्य साध्वी दुरात्मना ॥४४
रावणेन ततो रामः सुग्रीवं सानुजो ययौ।
सुग्रीवो मित्रभावेन रामस्य प्रियवल्लभाम् ॥४५
मृगयध्वमिति प्राह ततो वयमुपागताः।
ततो वयं विचिन्वन्तो जानकीं जलकाङ्क्षिणः ॥४६
प्रविष्टा गह्वरं घोरं दैवादत्र समागताः।
त्वं वा किमर्थमत्रासि का वा त्वं वद नः शुभे! ॥४७
योगिनी च तथा दृष्ट्वा वानरान् प्राह हृष्टधीः।
यथेष्टं फलमूलानि जग्ध्वा पीत्वामृतं पयः ॥४८
आगच्छत ततो वक्ष्ये मम वृत्तान्तमादितः।
तथेति भुक्त्वा पीत्वा च हृष्टास्ते सर्ववानराः ॥४९
देव्याः समीपं गत्वा ते बद्धाञ्जलिपुटाः स्थिताः।
ततः प्राह हनूमन्तं योगिनी दिव्यदर्शना ॥५०
हेमा नाम पुरा दिव्यरूपिणी विश्वकर्मणः।
पुत्री महेशं नृत्येन तोषयामास भामिनी ॥५१
तुष्टो महेशः प्रददाविदं दिव्यं पुरं महत्।
अत्र स्थिता सा सुदती वर्षाणामयुतायुतम् ॥५२
तस्या अहं सखी विष्णुतत्परा मोक्षकाङ्क्षिणी।
नाम्ना स्वयम्प्रभा दिव्यगन्धर्वतनया पुरा ॥५३
गच्छन्ती ब्रह्मलोकं सा मामाहेदं तपश्चर।
अत्रैव निवसन्ती त्वं सर्वप्राणिविवर्जिते ॥५४
त्रेतायुगे दाशरथिर्भूत्वा नारायणोऽव्ययः।
भूभारहरणार्थाय विचरिष्यति कानने ॥५५
मार्गन्तो वानरास्तस्य भार्यामायान्ति ते गुहाम्।
पूजयित्वाथ तान् नत्वा रामं स्तुत्वा प्रयत्नतः ॥५६

यातासि भवनं विष्णोर्योगिगम्यं सनातनम्।
इतोऽहं गन्तुमिच्छामि रामं द्रष्टुं त्वरान्विता॥५७
यूयं पिदध्वमक्षीणि गमिष्यथ बहिर्गुहाम्।
तथैव चक्रुस्ते वेगाद् गताः पूर्वस्थितं वनम्॥५८
साऽपि त्यक्त्वा गुहां शीघ्रं ययौ राघवसन्निधिम्।
तत्र रामं ससुग्रीवं लक्ष्मणञ्च ददर्श ह॥५९
कृत्वा प्रदक्षिणं रामं प्रणम्य बहुशः सुधीः।
आह गद्गदया वाचा रोमाञ्चिततनूरुहा॥६०
दासी तवाहं राजेन्द्र! दर्शनार्थमिहागता।
बहुवर्षसहस्राणि तप्तं मे दुश्चरं तपः।
गुहायां दर्शनार्थं ते फलितं मेऽद्य तत्तपः॥६१
अद्य हि त्वां नमस्यामि मायायाः परतः स्थितम्।
सर्वभूतेषु चालक्ष्यं बहिरन्तरवस्थितम्॥६२
योगमायाजवनिकाच्छन्नो मानुषविग्रहः।
न लक्ष्यसेऽज्ञानदृशां शैलूष इव रूपधृक्॥६३

**योगमायेति**—यस्त्वं मानुषविग्रहः नित्यविहारिवाङ्मनसगोचर- [1]प्रकाशिनी श्रीरामः सोऽद्य रूपधृक् नारायणे आविश्य रूपधृक् त्वं शैलूष [2]इति योगमायाजवनिकाच्छन्नः। अत एव अज्ञानदृशां न लक्ष्यसे। यथा नटमायाऽनभिज्ञैः स न लक्ष्यते तथा त्वमपीत्यर्थः। स्वयं स्वकृपयैव लक्ष्यसे इति भावः।६३

महाभागवतानां त्वं भक्तियोगविधित्सया।
अवतीर्णोऽसि भगवन्! कथं जानामि तामसी।
लोके जानातु यः कश्चित्तव तत्त्वं रघूत्तम!॥६४

**महाभागवतेति**—महाभागवतानां भक्तियोगविधित्सया वाङ्मनसगोचरस्य मम नामादिकं मदावेशयुतनारायणनामादिभिर्ज्ञातं स्यादित्येवं भक्तियोगं विधातुमिच्छया नारायणे आवेशेनावतीर्णं त्वां तामसी अहं कथं जानामि। एतेन तपोयोगज्ञानादिभिरगम्योऽसि। यः कश्चिल्लब्धषष्ठशरीरसखीरूपः (सः) तव तत्त्वं श्रीनित्यविहारिश्रीराम-

---

१. प्रकाशि, इत्युचितः प्रतीयते। २. इव इति समीचीनः।

रूपं जानातु, 'राम एव परं ब्रह्म राम एव परं तपः। राम एव परं तत्त्वं श्रीरामो ब्रह्मतारक' इति हनुमदुपनिषच्छ्रुतेः। [1]तामसीति पाठे स्वसतीत्वानुसन्धानम्।६४

ममैतदेव रूपं ते सदा भातु हृदालये।
राम! ते पादयुगलं दर्शितं मोक्षसाधनम्॥६५

**ममैतदिति**--[2]तपस्य ज्ञातुमशक्यत्वात् (ते) एतदेव रूपं मे हृदये भात्वित्यर्थः।६५

अदर्शनं भवार्णानां सन्मार्गपरिदर्शनम्।
धनपुत्रकलत्रादिविभूतिपरिदर्पितः ॥६६

**अदर्शनमिति**--भवार्णानां, भवार्णवानाम् वलोपः आर्षः। अदर्शनं शेषकम्।६६

अकिञ्चनधनं त्वाद्य नाभिधातुं जनोऽर्हति।
निवृत्तगुणमार्गाय निष्किञ्चनधनाय ते॥६७
नमः स्वात्माभिरामाय निर्गुणाय गुणात्मने।
कालरूपिणमीशानमादिमध्यान्तवर्जितम् ॥६८
समं चरन्तं सर्वत्र मन्ये त्वां पुरुषं परम्।
देव! ते चेष्टितं कश्चिन्न वेद नृविडम्बनम्॥६९

**नम इति**--निर्गुणाय हेयगुणरहिताय गुणात्मने अनन्तगुणकल्याणगुणविशिष्टाय सगुणनिर्गुणाङ्गिने इत्यर्थः। पुरुषं नित्यविहारिप्रकाशिश्रीराममत एव परं त्वां मन्ये तच्छक्तित्वादिति शेषः। हे देव! ते गृहीतवाङ्मनसगोचरातीतश्रीरामावेशस्य आदिनारायणस्य नृविडम्बनं मनुष्यानुकरणं चेष्टितं न कश्चिद्वेदेत्यर्थः। ६८-६९।

न तेऽस्ति कश्चिद् दयितो द्वेष्यो वा पर एव च।
त्वन्मायापिहितात्मानस्त्वां पश्यन्ति तथाविधम्॥७०

**न ते इति**--ते कश्चिद्दयितः द्वेष्यश्च नास्ति सर्वत्र पूर्णत्वात्।७०

अजस्याकर्तुरीशस्य देवतिर्यङ्नरादिषु।
जन्मकर्मादिकं यद्यत्तदत्यन्तविडम्बनम्॥७१

**अजस्येति**--अजस्य उत्पत्तिरहितस्य अयोध्यां विहाय कुत्राप्यनाविर्भूतस्य अकर्त्तुः नित्यविहारातिरिक्तक्रियाशून्यस्य ईशस्य सर्वेश्वरेश्वरस्य वाङ्मनसागोचरस्य तव देव-

---

१. अत्र तापसीति पाठे स्वसखीत्वानुसन्धानमिति पाठः, उचितः। २. तपसा-इत्युचितः।

तिर्यङ्नरादिषु यज्जन्मकर्म तदत्यन्तविडम्बनम् अत्यन्तानुकरणम्। अत्र अत्यन्तविडम्बनमित्युक्त्या 'आसीनं तमयोध्यायां सहस्रस्तम्भमण्डिते। मण्डपे रत्नसंज्ञे च जानक्या सह राघवः॥ 'मत्स्यः कूर्मो किरिर्नैको नारसिंहोऽप्यनेकधेत्यारभ्य रामं सदोपतिष्ठन्ति रामादेशे व्यवस्थिता' इत्यादि प्रामाण्यात् रामाज्ञयावतीर्णाः मत्स्यादयः नित्यरामादेशस्थितमत्स्यादीनामनुकरणम्, तेषां [1]त्वद्भिन्नत्वात् भवतस्तु अत्यन्तविडम्बनं अन्यानुकरणमिति बोध्यम्।७१

त्वामाहुरक्षरं जातं कथाश्रवणसिद्धये।
केचित्कोशलराजस्य तपसःफलसिद्धये॥७२

**त्वामाहुरिति**—नित्यकौशल्यादशरथयोर्लीनौ अदितिकश्यपौ स्तः तदभिप्रायकमिदम्।७२

कौशल्यया प्रार्थ्यमानं जातमाहुः परे जनाः।
दुष्टराक्षसभूभारहरणायार्थितो विभुः॥७३
ब्रह्मणा नररूपेण जातोऽयमिति केचन।
शृण्वन्ति गायन्ति च ये कथास्ते रघुनन्दन!॥७४
पश्यन्ति तव पादाब्जं भवार्णवसुतारणम्।
त्वन्मायागुणबद्धाहं व्यतिरिक्तं गुणाश्रयम्॥७५
कथं त्वां देव! जानीयां स्तोतुं वाऽविषयं विभुम्।
नमस्यामि रघुश्रेष्ठं बाणासनशरान्वितम्।
लक्ष्मणेन सह भ्रात्रा सुग्रीवादिभिरन्वितम्॥७६
एवं स्तुतो रघुश्रेष्ठः प्रसन्नः प्रणताघहृत्।
उवाच योगिनीं भक्तां किं ते मनसि काङ्क्षितम्॥७७

**एवमिति**—[2]यत्ते मनसि काङ्क्षितमित्यनेन 'ममैतदेव रूपं ते सदा भातु हृदालये' इति पूर्वमास्थितैतद्रूपभानादप्यधिकं प्रार्थयसीति[3] तच्चेष्टया मया ज्ञातमिति सूचितम्।७७

सा प्राह राघवं भक्त्या भक्तिं ते भक्तवत्सल!।
यत्र कुत्रापि जातायाः निश्चलां देहि मे प्रभो!॥७८

प्रसन्ना सती आह—**सेति**।८९

त्वद्भक्तेषु सदा सङ्गो भूयान्मे प्राकृतेषु न।
जिह्वा मे राम रामेति भक्त्या वदतु सर्वदा॥७९

---

१. त्वदभिन्नत्वात् रा० व० पु०। २. श्लोकानुसारेण किं ते मनसि इत्युचितः।
३. त्वच्चेष्टयेत्युचितः।

मानसं श्यामलं रूपं सीतालक्ष्मणसंयुतम्।
धनुर्बाणधरं पीतवाससं मुकुटोज्ज्वलम्॥८०

**मानसमिति**--सीतालक्ष्मणसंयुक्तं न तु सीतारहितम्। मुकुटोज्ज्वलम्-रत्नखचित-मुकुटेन-उज्ज्वलं भान्तमित्यर्थः। न तु जटामुकुटेन भान्तमिति। ८०

अङ्गदैर्नूपुरैर्मुक्ताहारैः कौस्तुभकुण्डलैः।
भान्तं स्मरतु मे राम! वरं नान्यं वृणे प्रभो!॥८१

**श्रीराम उवाच--**

भवत्वेवं महाभागे! गच्छ त्वं बदरीवनम्।
तत्रैव मां स्मरन्ती त्वं त्यक्त्वेदं भूतपञ्चकम्।
मामेव परमात्मानमचिरात्प्रतिपद्यसे॥८२

**अङ्गदैरिति**--एतैर्विशेषणैर्यदावेशं गृहीत्वागतोऽसि तद्रूपं मे मानसं स्मरत्विति विज्ञापितमिति सूचितम्। तेन प्रार्थिततापसरूपभानमनुमोदनमात्रं तेन च सापि जटादि-सहितं तापसीवेषं विहाय दिव्यसखीरूपा बभूवेति। परमात्मानं द्विभुजप्रकाशिश्रीराम-मित्यर्थः। 'परमात्मा नराकृतिरिति' स्मृतेः। परं पदमयोध्याख्यम्। 'यो यमुपासते स तदेव भवतीति' श्रुतेः।८१-८२।

श्रुत्वा रघूत्तमवचोऽमृतसारकल्पं,
गत्वा तदैव बदरीतरुखण्डयुक्तम्।
तीर्थं तदा रघुपतिं मनसा स्मरन्ती,
त्यक्त्वा कलेवरमवाप परं पदं सा॥८३

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
किष्किन्धाकाण्डे षष्ठोऽध्यायः।६

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां किष्किन्धाकाण्डे
षष्ठोऽध्यायः।६

---

१. अत्र मूलपुस्तके इयं पुष्पिका न वर्तते। रामवनप्रतौ तु 'इति ध्वनिप्रकाशिकायां षष्ठोऽध्यायः' इत्यस्ति।

## अथ सप्तमोऽध्यायः

**श्रीमहादेव उवाच—**

अथ तत्र समासीना वृक्षखण्डेषु वानराः।
चिन्तयन्तो विमुह्यन्तः सीतामार्गणकर्शिताः॥१
तत्रोवाचाङ्गदः कांश्चिद्वानरान्वानरर्षभः।
भ्रमतां गह्वरेऽस्माकं मासो नूनं गतोऽभवत्॥२
सीता नाधिगतास्माभिर्न कृतं राजशासनम्।
यदि गच्छाम किष्किन्धां सुग्रीवोऽस्मान् हनिष्यति॥३
विशेषतः शत्रुसुतं मां मिषान्निहनिष्यति।
मयि तस्य कुतो प्रीतिरहं रामेण रक्षितः॥४
इदानीं रामकार्यं मे न कृतं तन्मिषं भवेत्।
तस्य मद्धनने नूनं सुग्रीवस्य दुरात्मनः॥५
मातृकल्पां भ्रातृभार्यां पापात्मानुभवत्यसौ।
न गच्छेयमतः पार्श्वं तस्य वानरपुङ्गवाः॥६
त्यक्ष्यामि जीवितं चात्र येन केनाऽपि मृत्युना।
इत्यश्रुनयनं केचिद् दृष्ट्वा वानरपुङ्गवाः॥७
व्यथिताः साश्रुनयना युवराजमथाब्रुवन्॥८
किमर्थं तव शोकोऽत्र वयं ते प्राणरक्षकाः।
भवामो निवसामोऽत्र गुहायां भयवर्जिताः॥९
सर्वसौभाग्यसहितं पुरं देवपुरोपमम्।
शनैः परस्परं वाक्यं वदतां मारुतात्मजः॥१०
श्रुत्वाङ्गदं समालिङ्ग्य प्रोवाच नयकोविदः।
विचार्यते किमर्थं ते दुर्विचारो न युज्यते॥११
राज्ञोऽत्यन्तप्रियस्त्वं हि तारापुत्रोऽतिवल्लभः।
रामस्य लक्ष्मणात्प्रीतिस्त्वयि नित्यं प्रवर्धते॥१२

अतो न राघवाद् भीतिस्तव राज्ञो विशेषतः।
अहं तव हिते शक्तो वत्स! नान्यं विचारय॥१३
गुहावासश्च निर्भेद्यः इत्युक्तं वानरैस्तु यत्।
तदेतद्रामबाणानामभेद्यं किं जगत्त्रये॥१४

**गुहावासश्चेति**—तदेतदयुक्तमिति शेषः। यतो रामबाणानां जगत्त्रये अभेद्यं किम्। न किमपीत्यर्थः। एतेन रामः प्राकृतमनुष्यो नेति व्यज्यते।१४

ये त्वां निर्बोधयन्त्येते वानरा वानरर्षभ!।
पुत्रदारादिकं त्यक्त्वा कथं स्थास्यन्ति ते त्वया॥१५

**ये त्वामिति**—ते त्वया सह कथं स्थास्यन्तीत्यर्थः।१५

अन्यद् गुह्यतमं वक्ष्ये रहस्यं शृणु मे सुत!।
रामो न मानुषो देवः साक्षान्नारायणोऽव्ययः॥१६
सीता भगवती माया जनसम्मोहकारिणी।
लक्ष्मणो भुवनाधारः साक्षाच्छेषः फणीश्वरः॥१७

**अन्यदिति**—तर्हि किं नित्यसाकेतविहारी नेत्याह राम इति। देवः नित्यक्रीडाशीलः मानुषः मानुषाकृतिरीश्वरः, रामः साक्षान्न, किन्तु रावणवधार्थं रामावेशयुतोऽव्ययो नारायणः। इयं सीता जनसम्मोहकारिणी माया मूलप्रकृतिः भगवती नित्यैश्वर्यवती, नित्यविहारिणी सीता न नेति पूर्वेणानुषज्यते। जनसम्मोहकारिणीत्यनेन मूलप्रकृतित्वात् रावणं घातयित्वा आगमिष्यन्त्याः तस्याः उदन्तस्तु अस्माकं प्राप्स्यत्येवेति तन्निश्चयो व्यज्यते। लक्ष्मणावेशयुक्तत्वाल्लक्ष्मणेत्युक्तिः न तु स्वयं लक्ष्मणः किन्तु साक्षाच्छेषः। फणीश्वरः फणी [1]जलशायिनारायणस्तरणरूपः शेषः तस्येश्वरः जले शेषशायिनारायण इति यावत्।१६-१७।

ब्रह्मणा प्रार्थिताः सर्वे रक्षोगणविनाशने।
मायामानुषभावेन जाता लोकैकरक्षकाः॥१८

**ब्रह्मणेति**—मायया कृपया आदिनारायणस्तरणरूपा वैकुण्ठवासिनारायणक्षीरसागरवासिनारायणभूमनारायणलक्ष्मिप्रेमामूलप्रकृतिप्रभृतयः मानुषभावेन श्रीरामाद्यावेशेन लोकैकरक्षका जाताः।१८

---

१. 'जालशालि' इति मत्पुस्तके।

वयं च पार्षदाः सर्वे विष्णोर्वैकुण्ठवासिनः।
मनुष्यभावमापन्ने स्वेच्छया परमात्मनि॥१९
वयं वानररूपेण जातास्तस्यैव मायया।
वयं तु तपसा पूर्वमाराध्य जगतां पतिम्॥२०
तेनैवानुगृहीताः स्मः पार्षदत्वमुपागताः।
इदानीमपि तस्यैव सेवां कृत्वा विमायया॥२१
पुनर्वैकुण्ठमासाद्य सुखं स्थास्यामहे वयम्।
इत्यङ्गदं समाश्वास्य गताः विन्ध्यं महाचलम्॥२२

**वयमिति**—परमात्मनि नारायणे स्वेच्छया मनुष्यभावं मनुष्यस्य नित्यद्विभुजश्रीरामस्य आवेशेन भावं मनुष्यत्वमापन्ने प्राप्ते सति वैकुण्ठवासिनः विष्णोरादिनारायणस्य पार्षदा वयं सर्वे श्रीरामपार्षदावेशयुताः सन्तः तस्यैव कृपया वानररूपेण जाताः। ननु रामपार्षदावेशो युष्मासु कथं जातः तत्राह वयं त्विति-पूर्वं तपसा जगतां पतिं श्रीराममाराध्य तेनैवानुगृहीताः श्रीरामपार्षदावेशेन पार्षदत्वमुपागताः प्राप्ताः स्मः। अतः इदानीमपि विमायया निष्कपटेन तस्यैव रामावेशयुतनारायणस्य सेवां कृत्वा पुनर्वैकुण्ठमासाद्य स्थास्यामहे। 'श्रीरामपार्षदांशास्तु सुखं वैकुण्ठपञ्चकम्। [1]ख्यातं क्षीराब्धिश्चरमाह्वयं कारणं महावैकुण्ठपञ्चकं विरजापरम्। '[2]नित्यं दिव्यमनेकभोगविभवं वैकुण्ठरूपोत्तरं सत्यानन्दचिदात्मकं स्वयमभून्मूलं त्वयोध्यापुरी'त्युक्तानन्दरूपसाकेतमासाद्य स्थास्यन्तीति बोध्यम्। १९-२२।

विचिन्वन्तोऽथ शनकैर्जानकीं दक्षिणाम्बुधेः।
तीरे महेन्द्राख्यगिरेः पवित्रं पादमाययुः॥२३
दृष्ट्वा समुद्रं दुष्पारमगाधं भयवर्द्धनम्।
वानराः भयसंत्रस्ताः किं कुर्म इति वादिनः॥२४
निषेदुरुदधेस्तीरे सर्वे चिन्तासमन्विताः।
मन्त्रयामासुरन्योऽन्यमङ्गदाद्या महाबलाः॥२५

**दृष्ट्वेति**—शतयोजनविस्तीर्णसमुद्रदर्शनचिन्तया किमिति हनुमानेव दर्शनयोग्यः इत्यभिप्रेत्य सर्वशक्तिमूलभूतश्रीरामनामस्थितप्रेमासीतया सर्वेषां शक्तिराकृष्टेति व्यक्तम्।२४-२५

---

१. त० २. पर्यन्तः पाठः स्खलितपदपदांशरूपः यथास्थित एवोल्लिखितः।

भ्रमतामेव नो मासो गतोऽत्रैव गुहान्तरे।
न दृष्टो रावणो वाद्य सीता वा जनकात्मजा ॥२६

सुग्रीवस्तीक्ष्णदण्डोऽस्मान्निहन्त्येव न संशयः।
सुग्रीववधतोऽस्माकं श्रेयः प्रायोपवेशनम् ॥२७

इति निश्चित्य तत्रैव दर्भानास्तीर्य सर्वतः।
उपाविविशुस्ते सर्वे मरणे कृतनिश्चयाः ॥२८

एतस्मिन्नन्तरे तत्र महेन्द्राद्रिगुहान्तरात्।
निर्गत्य शनकैरागाद् गृध्रः पर्वतसन्निभः ॥२९

दृष्ट्वा प्रायोपवेशेन स्थितान्वानरपुङ्गवान्।
उवाच शनकैर्गृध्रः प्राप्तो भक्ष्योऽद्य मे बहुः ॥३०

एकैकशः क्रमात्सर्वान् भक्षयामि दिने दिने।
श्रुत्वा तद्गृध्रवचनं वानरा भीतमानसाः ॥३१

भक्षयिष्यति नः सर्वानसौ गृध्रो न संशयः।
रामकार्यं च नास्माभिः कृतं किञ्चिद्धरीश्वराः! ॥३२

**भक्षयिष्यतीति**—सर्वानस्मानसौ गृध्रः भक्षयिष्यति न संशयः। अत्रापि महावेगबलशालिनोऽपि पक्षहीनाद् गृध्रात् भीतिं चक्रुः। तेनापि श्रीजानक्या हृतशक्तयः इति व्यक्तम् ।३२

सुग्रीवस्यापि च हितं न कृतं स्वात्मनामपि।
वृथाऽनेन वधं प्राप्ताः गच्छामो यमसादनम् ॥३३

अहो जटायुर्धर्मात्मा रामस्यार्थे मृतः सुधीः।
मोक्षं प्राप दुरावापं योगिनामप्यरिन्दमः ॥३४

सम्पातिस्तु तदा वाक्यं श्रुत्वा वानरभाषितम्।
के वा यूयं मम भ्रातुः कर्णपीयूषसन्निभम् ॥३५

जटायुरिति नामाद्य व्याहरन्तः परस्परम्।
उच्यतां वो भयं मा भून्मत्तः प्लवगसत्तमाः! ॥३६

तमुवाचाङ्गदः श्रीमानुत्थितो गृध्रसन्निधौ।
रामो दाशरथिः श्रीमान् लक्ष्मणेन समन्वितः ॥३७

सीतया भार्यया सार्धं विचचार वनान्तरे।
तस्य सीता हृता साध्वी रावणेन दुरात्मना ।।३८
मृगयां निर्गते रामे लक्ष्मणे च हृता बलात्।
राम रामेति क्रोशन्ती श्रुत्वा गृध्रः प्रतापवान् ।।३९
जटायुर्नाम पक्षीन्द्रो युद्धं कृत्वा सुदारुणम्।
रावणेन हतो वीरो राघवार्थं महाबलः ।।४०
रामेण दग्धो रामस्य सायुज्यमगमत्क्षणात्।
रामः सुग्रीवमासाद्य सख्यं कृत्वाऽग्निसाक्षिकम् ।।४१
सुग्रीवचोदितो हत्वा बालिनं सुदुरासदम्।
राज्यं ददौ वानराणां सुग्रीवाय महाबलः ।।४२
सुग्रीवः प्रेषयामास सीतायाः परिमार्गणे।
अस्मान्वानरवृन्दान्वै महासत्त्वान्महाबलः ।।४३
मासादर्वाङ् निवर्तध्वं नो चेत्प्राणान् हरामि वः।
इत्याज्ञया भ्रमन्तोऽस्मिन्वने गह्वरमध्यगाः ।।४४
गतो मासो न जानीमः सीतां वा रावणं च वा।
मर्तुं प्रायोपविष्टाः स्मस्तीरे लवणवारिधेः ।।४५
यदि जानासि हे पक्षिन् सीतां कथय नः शुभाम्।
अङ्गदस्य वचः श्रुत्वा सम्पातिर्हृष्टमानसः ।।४६
उवाच मत्प्रियो भ्राता जटायुः प्लवगेश्वराः !।
बहुवर्षसहस्रान्ते भ्रातृवार्ता श्रुता मया ।।४७
वाक्सहायं करिष्येऽहं भवतां प्लवगेश्वराः !।
भ्रातुः सलिलदानाय नयध्वं मां जलान्तिकम्।
पश्चात्सर्वं शुभं वक्ष्ये भवतां कार्यसिद्धये ।।४८

**भ्रातुरिति**—शनैः शनैर्जगामेत्युक्तरीत्या पर्वतात्तेषां समीपमागतस्य जलान्तिकं मां-नयध्वमित्युक्त्या रामभक्तस्पर्शेनाहं कृतार्थो भविष्यामीत्याशयो व्यक्तः।४८

तथेति निन्युस्ते तीरं समुद्रस्य विहङ्गमम्।
सोऽप तत्सलिले स्नात्वा भ्रातुर्दत्त्वा जलाञ्जलिम् ।।४९

पुनः स्वस्थानमासाद्य स्थितो नीतो हरीश्वरैः।
सम्पातिः कथयामास वानरान्परिहर्षयन्॥५०
लङ्कानाम नगर्यास्ते त्रिकूटगिरिमूर्धनि।
तत्राशोकवने सीता राक्षसीभिः सुरक्षिता॥५१
समुद्रमध्ये सा लङ्का शतयोजनदूरतः।
दृश्यते मे न सन्देहः सीता च परिदृश्यते॥५२
गृध्रत्वाद् दूरदृष्टिर्मे नात्र संशयितुं क्षमम्।
शतयोजनविस्तीर्णं समुद्रं यस्तु लङ्घयेत्॥५३
स एव जानकीं दृष्ट्वा पुनरायास्यति ध्रुवम्।
अहमेव दुरात्मानं रावणं हन्तुमुत्सहे॥५४
भ्रातृहन्तारमेकाकी किन्तु पक्षविवर्जितः।
यतध्वमतियत्नेन लङ्घितुं सरितां पतिम्॥
ततो हन्ता रघुश्रेष्ठो रावणं राक्षसाधिपम्॥५५
उल्लङ्घ्य सिन्धुं शतयोजनायतं,
लङ्कां प्रविश्याथ विदेहकन्यकाम्।
दृष्ट्वा समाभाष्य च वारिधिं पुन-
स्तर्तुं समर्थः कतमो विचार्यताम्॥५६

[1]इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्धाकाण्डे सप्तमोऽध्यायः।७

⊙

[2]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां [3]व्यङ्ग्यप्रकाशिकायांकिष्किन्धाकाण्डे सप्तमोऽध्यायः।७

⊙

१. मदीयहस्तलिखितप्रतौ तु 'इति श्रीम० कि० सप्तमोऽध्यायः' इत्यस्ति। २. मूलपुस्तके रामवनपुस्तकालयस्थे पुस्तके च टीकासम्बन्धिपुष्पिका समानैव। ३. नैजे रामवनपुस्तके च 'व्यङ्ग्यप्रकाशिकायां टीकाया'मित्यंशः नास्ति।

## अथ अष्टमोऽध्यायः

**श्रीमहादेव उवाच--**

सम्पातिः कथयामास स्ववृत्तान्तं पुरा कृतम्।
अहं पुरा जटायुश्च भ्रातरौ रूढयौवनौ।।१
बलेन दर्पितावावां बलजिज्ञासया खगौ।
सूर्यमण्डलपर्यन्तं गन्तुमुत्पतितौ मदात्।।२
बहुयोजनसाहस्रं गतौ तत्र प्रतापितः।
जटायुस्तं परित्रातुं पक्षैराच्छाद्य मोहतः।।३
स्थितोऽहं रश्मिभिर्दग्धपक्षोऽस्मिन्विन्ध्यमूर्धनि।
पतितो दूरपतनान्मूर्च्छितोऽहं कपीश्वराः!।।४
दिनत्रयात्पुनः प्राणसहितो दग्धपक्षकः।
देशं वा गिरिकूटान्वा न जाने भ्रान्तमानसः।।५
शनैरुन्मील्य नयने दृष्ट्वा तत्राश्रमं शुभम्।
शनैः शनैराश्रमस्य समीपं गतवानहम्।।६
चन्द्रमा नाम मुनिराड् दृष्ट्वा मां विस्मितोऽवदत्।
सम्पाते! किमिदं तेऽद्य विरूपं केन वा कृतम्।।७
जानामि त्वामहं पूर्वमत्यन्तं बलवानसि।
दग्धौ किमर्थं ते पक्षौ कथ्यतां यदि मन्यसे।।८
ततः स्वचेष्टितं सर्वं कथयित्वाऽतिदुःखितः।
अब्रुवं मुनिशार्दूलं दह्येऽहं दाववह्निना।।९

**तत इति**--दह्येऽहं दाववह्निना-सूर्यदग्धपक्षत्वेनान्यत्र गन्तुमशक्यत्वाद् दाववह्निनाहं दह्ये।९

कथं धारयितुं शक्तो विपक्षो जीवितं प्रभो!।
इत्युक्तोऽथ मुनिर्वीक्ष्य मां दयार्द्रविलोचनः।।१०

शृणु वत्स! वचो मेऽद्य श्रुत्वा कुरु यथेप्सितम्।
देहमूलमिदं दुःखं देहः कर्मसमुद्भवः॥११

कर्म प्रवर्तते देहेऽहंबुद्ध्या पुरुषस्य हि।
अहंकारस्त्वनादिः स्यादविद्यासम्भवो जडः॥१२

चिच्छायया सदा युक्तस्तप्तायःपिण्डवत् सदा।
तेन देहस्य तादात्म्याद् देहश्चेतनवान् भवेत्॥१३

देहोऽहमिति बुद्धिःस्यादात्मनोऽहङ्कृतेर्बलात्।
तन्मूल एष संसारः सुखदुःखादिसाधकः॥१४

आत्मनो निर्विकारस्य मिथ्या तादात्म्यतः सदा।
देहोऽहं कर्मकर्त्ताहमिति सङ्कल्पपूर्वकः॥१५

जीवः करोति कर्माणि तत्फलैर्बद्ध्यतेऽवशः।
ऊर्ध्वाधो भ्रमते नित्यं पापपुण्यात्मकः स्वयम्॥१६

कृतं मयाधिकं पुण्यं यज्ञदानादि निश्चितम्।
स्वर्गं गत्वा सुखं भोक्ष्ये इति सङ्कल्पवान् भवेत्॥१७

तथैवाध्यासतस्तत्र चिरं भुक्त्वा सुखं महत्।
क्षीणपुण्यः पतत्यर्वागनिच्छन् कर्मचोदितः॥१८

पतित्वा मण्डले चेन्दोस्ततो नीहारसंयुतः।
भूमौ पतित्वा व्रीह्यादौ तत्र स्थित्वा चिरं पुनः॥१९

भूत्वा चतुर्विधं भोज्यं पुरुषैर्भुज्यते ततः।
रेतो भूत्वा पुनस्तेन ऋतौ स्त्रीयोनिसिञ्चितः॥२०

योनिरक्तेन संयुक्तं जरायुपरिवेष्टितम्।
दिनेनैकेन कललं भूत्वा रूढत्वमाप्नुयात्॥२१

**योनिरक्तेनेति**——जरायुपरिवेष्टितं जरायुना गर्भाशयेन परिवेष्टितं शुक्रशोणित सम्मेलनं कललाख्यपरिणामवत् रूढत्वं किञ्चिद्दार्ढ्यम्। २१

तत्पुनः पञ्चरात्रेण बुद्बुदाकारतामियात्।
सप्तरात्रेण तदपि मांसपेशित्वमाप्नुयात्॥२२

पक्षमात्रेण सा पेशी रुधिरेण परिप्लुता।
तस्या एवाङ्कुरोत्पत्तिः पञ्चविंशतिरात्रिषु॥२३

ग्रीवा शिरश्च स्कन्धश्च पृष्ठवंशस्तथोदरम्।
पञ्चधाङ्गानि चैवैवं जायते मासतः क्रमात्॥२४
पाणिपादौ तथा पार्श्वः कटिर्जानुस्तथैव च।
मासद्वयात्प्रजायन्ते क्रमेणैव च नान्यथा॥२५
त्रिभिर्मासैः प्रजायन्ते अङ्गानां सन्धयः क्रमात्।
सर्वाङ्गुल्यः प्रजायन्ते क्रमान्मासचतुष्टये॥२६
नासाकर्णौ च नेत्रे च जायन्ते पञ्चमासतः।
दन्तपङ्क्तिर्नखा ङ्गुल्यः पञ्चमे जायते तथा॥२७
अर्वाक्षण्मासतश्छिद्रं कर्णयोर्भवति स्फुटम्।
पायुर्मेढ्रमुपस्थं च नाभिश्चापि भवेन्नृणाम्॥२८
सप्तमे मासि रोमाणि शिरः केशास्तथैव च।
विभक्तावयवत्वञ्च सर्वं सम्पद्यतेऽष्टमे॥२९
जठरे वर्द्धते गर्भः स्त्रिया एवं विहङ्गम!।
नवमे मासि चैतन्यं जीवः प्राप्नोति सर्वशः॥३०
नाभिसूत्राल्परन्ध्रेण मातृभुक्तान्नसारतः।
वर्धते गर्भगः पिण्डो न म्रियेत स्वकर्मतः॥३१
स्मृत्वा सर्वाणि जन्मानि पूर्वकर्माणि सर्वशः।
जठरानलसंतप्तोऽयमिदं वचनमब्रवीत्॥३२
नानायोनिसहस्रेषु जायमानोऽनुभूतवान्।
पुत्रदारादिसम्बन्धं कोटिशः पशुबान्धवान्॥३३
कुटुम्बभरणासक्त्या न्यायान्यायैर्धनार्जनम्।
कृतं नाकरवं विष्णुचिन्तां स्वप्नेऽपि दुर्भगः॥३४
इदानीं तत्फलं भुञ्जे गर्भदुःखं महत्तरम्।
अशाश्वते शाश्वतवद् देहे तृष्णासमन्वितः॥३५
अकार्याण्येव कृतवान्न कृतं हितमात्मनः।
इत्येवं बहुधा दुःखमनुभूय स्वकर्मतः॥३६
कदा निष्क्रमणं मे स्याद् गर्भान्निरयसन्निभात्।
इत ऊर्ध्वं नित्यमहं विष्णुमेवानुपूजये॥३७

इत्यादि चिन्तयञ्जीवो योनियन्त्रप्रपीडितः।
जायमानोऽतिदुःखेन नरकात्पातकी यथा॥३८

पूतिव्रणान्निपतितः कृमिरेष इवापरः।
ततो बाल्यादिदुःखानि सर्व एवं विभुञ्जते॥३९

त्वया चैवानुभूतानि सर्वत्र विदितानि च।
न वर्णितानि मे गृध्र! यौवनादिषु सर्वतः॥४०

एवं देहोऽहमित्यस्मादभ्यासान्निरयादिकम्।
गर्भवासादिदुःखानि भवन्त्यभिनिवेशतः॥४१

तस्माद् देहद्वयादन्यमात्मानं प्रकृतेः परम्।
ज्ञात्वा देहादिममतां त्यक्त्वाऽत्मज्ञानवान् भवेत्॥४२

जाग्रदादिविनिर्मुक्तं सत्यज्ञानादिलक्षणम्।
शुद्धं बुद्धं सदा शान्तमात्मानमवधारयेत्॥४३

चिदात्मनि परिज्ञाते नष्टे मोहेऽज्ञसम्भवे।
देहः पततु वाऽऽरब्धकर्मवेगेन तिष्ठतु॥४४

**तस्मादिति**—देहद्वयात्स्थूलसूक्ष्मरूपात्प्रागुक्तादन्यम्, प्रकृतेः कारणशरीरात्परं ज्ञात्वा देहादिममतां च महाकारणशरीरं त्यक्त्वा, जाग्रदादिविनिर्मुक्तं जाग्रदादिभिःस्थूलसूक्ष्मकारणमहाकारणशरीराणां जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाभिर्विनिर्मुक्तं, ज्ञात्वा, आत्मवान् चिन्मात्रकेवलात्मरूपपञ्चमशरीरप्राप्तिवान् भवेत् ततः केवलात्मज्ञानानन्तरं सत्यज्ञानादिलक्षणम् अत एव शुद्धं बुद्धं सदा भासमानं शान्तं क्षोभरहितम् एकरसः, एकरसमिति यावत्। एवं भूतमात्मानम्भगवतः षष्ठशरीरमवधारयेत्, प्रार्थनया अनुसंदध्यात्। अस्मिन्नेव शरीरे चतुष्टयभाननिरसनपूर्वकं पञ्चमं केवलात्मनि भगवद्दत्तषष्ठशरीरं प्राप्य अज्ञसम्भवे मोहे नष्टे सति तेनैव भगवतः षष्ठशरीरेणैव चिदात्मनि वाङ्मनसगोचरातीतश्रीरामे ज्ञाते सति देहः पततु वा प्रारब्धकर्मवेगेन तिष्ठतु। ४२-४४।

योगिनो नहि दुःखं वा सुखं वाऽज्ञानसंभवम्।
तस्माद् देहेन सहितो यावत्प्रारब्धसंक्षयः॥४५

तावत्तिष्ठ सुखेन त्वं धृतकञ्चुकसर्पवत्।
अन्यद् वक्ष्यामि ते पक्षिन्! शृणु मे परमं हितम्॥४६

**योगिन इति**—यस्मादेवं जीवन्मुक्तस्य योगिनोऽज्ञानसंभवं दुःखं वा (सुखं) नहि तस्मात् हे गृध्र ! त्वयि यावत् प्रारब्धसंक्षयः तावद् देहेन सहितःधृतकञ्चुकः कञ्चुकसर्पवत् सुखेन तिष्ठ। षष्ठशरीरप्राप्त्या यस्य वाङ्मनसगोचरस्य प्राप्तिः स तव प्रत्यक्षो भविष्यतीत्याह **अन्यदिति**। ४५-४६।

त्रेतायुगे दाशरथिर्भूत्वा नारायणोऽव्ययः।
रावणस्य वधार्थाय दण्डकानागमिष्यति ॥४७

**त्रेतायुग इति**—त्रेतायुगे नारायणः नित्यदशरथात्मजः रामावेशेन दाशरथिर्भूत्वा।४७

सीतया भार्यया सार्धं लक्ष्मणेन समन्वितः।
तत्राश्रमे जनकजां भ्रातृभ्यां रहिते वने॥४८

रावणश्चोरवन्नीत्वा लङ्कायां स्थापयिष्यति।
तस्याः सुग्रीवनिर्देशाद्वानराः परिमार्गणे॥४९

आगमिष्यन्ति जलधेस्तीरं तत्र समागमः।
त्वया तैः कारणवशाद् भविष्यति न संशयः॥५०

तदा सीतास्थितिं तेभ्यः कथयस्व यथार्थतः।
तदैव तव पक्षौ द्वावुत्पत्स्येते पुनर्नवौ॥५१

**सम्पातिरुवाच**—

बोधयामास मां चन्द्रनामा मुनिकुलेश्वरः।
पश्यन्तु पक्षौ मे जातौ नूतनावतिकोमलौ॥५२

**बोधयामासेति**—नूतनौ पक्षौ जातौ उत्पत्स्येते एतेन मदभिलषितौ पक्षावेव, श्रीरामस्वरूपतत्त्वज्ञानोपदेशमपि कृतवानिति प्रहर्षणालङ्कारः। तेन चन्द्रमुनेः दयालुतारूपवस्तु व्यज्यते।५२

स्वस्ति वोऽस्तु गमिष्यामि सीतां द्रक्ष्यथ निश्चयम्।
यत्नं कुरुध्वं दुर्लङ्घ्यसमुद्रस्य विलङ्घने।५३

**स्वस्तीति**—सीतां द्रक्ष्यथ निश्चयमित्यनेन हनुमतः सीतावृत्तान्तं, [1]प्राप्य रामः रावणं हनिष्यत्येवेति निश्चययत्नस्य व्यज्यते। स्वस्ति वोऽस्तु गमिष्यामीत्यनेन सपक्षस्यापि गृध्रराजस्य सीतान्वेषणे तैः सह गमनाभावेन श्रीरामदर्शनोत्कण्ठातिशयो व्यक्तः।५३

---

१. प्राप्स्यामः इति मदीयपुस्तके।

यन्नामस्मृतिमात्रतोऽपरिमितं संसारवारांनिधिं,
तीर्त्वा गच्छति दुर्जनोऽपि परमं विष्णोः पदं शाश्वतम् ।
तस्यैव स्थितिकारिणस्त्रिजगतां रामस्य भक्ताः प्रिया,
यूयं किं न समुद्रमात्रतरणे शक्ताः कथं वानराः ! ॥५४

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे किष्किन्धाकाण्डेऽष्टमोऽध्यायः ।८



[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां व्यङ्ग्यप्रकाशिकायां किष्किन्धाकाण्डे अष्टमोऽध्यायः ।८



१. मूलपुस्तके रामवनपुस्तकालयस्थे च पुस्तके इति श्रीमदध्यात्म० उमा-महेश्वर० श्रीमदध्यात्मरामायणे टीकायां ध्वनिप्रकाशिकायाम्- अष्टमोऽध्यायः ।८ इत्याकारिका पुष्पिका ।

## अथ नवमोऽध्यायः

**श्रीमहादेव उवाच—**

गते विहायसा गृध्रराजे वानरपुङ्गवाः।
हर्षेण महताविष्टाः सीतादर्शनलालसाः ॥१
ऊचुः समुद्रं पश्यन्तो नक्रचक्रभयङ्करम्।
तरङ्गादिभिरुन्नद्धमाकाशमिव दुर्गमम् ॥२
परस्परमवोचन्वै कथमेतं तरामहे।
उवाच चाङ्गदस्तत्र शृणुध्वं वानरोत्तमा! ॥३
भवन्तोऽत्यन्तबलिनः शूराश्च कृतविक्रमाः।
को वात्र वारिधिं तीर्त्वा राजकार्यं करिष्यति ॥४
एतेषां वानराणां स प्राणदाता न संशयः।
अतस्तिष्ठतु मे शीघ्रं पुरतो यो महाबलः ॥५
वानराणां च सर्वेषां रामसुग्रीवयोरपि।
स एव पालको भूयान्नात्र कार्या विचारणा ॥६
इत्युक्ते युवराजेन तूष्णीं वानरसैनिकाः।
आसन्नोचुः किञ्चिदपि परस्परविलोकिनः ॥७

**अङ्गद उवाच—**

उच्यतां वै बलं सर्वैः प्रत्येकं कार्यसिद्धये।
केन वा साध्यते कार्यं जानीमस्तदनन्तरम् ॥८
अङ्गदस्य वचः श्रुत्वा प्रोचुर्वीरा बलं पृथक्।
योजनानां दशारभ्य दशोत्तरगुणं जगुः ॥९

**अङ्गदस्येति**—स्वबलवर्णनं [1]कुर्वन्नेव स्थिताः समुद्रोल्लङ्घने न समर्थाः सर्वे। अस्य हेतुरुक्त एव।९

---

१. कुर्वन्त एव इति समीचीनः।

शतादर्वाग् जाम्बवांस्तु प्राह मध्ये वनौकसाम्।
पुरा त्रिविक्रमे देवे पादं भूमानलक्षणम्।।१०
त्रिसप्तकृत्वोऽहमगां प्रदक्षिणविधानतः।
इदानीं वार्धकग्रस्तो न शक्नोमि विलङ्घितुम्।।११
अङ्गदोऽप्याह मे गन्तुं शक्यं पारं महोदधेः।
पुनर्लङ्घनसामर्थ्यं, न जानाम्यस्ति वा न वा।।१२

**अङ्गद इति**—यो गच्छति तस्यागमनेऽपि शक्तिरस्ति। अत्र पारं यास्यामि पुनरागमने मे शक्तिर्नास्तीत्युक्तिस्तु वानराणां प्रोत्साहनमात्रं न पारगमने तस्य तात्पर्यम्।१२

तमाह जाम्बवान् वीरस्त्वं राजा नो नियामकः।
न युक्तं त्वां नियोक्तुं मे त्वं समर्थोऽसि यद्यपि।।१३

**अङ्गद उवाच**

एवं चेत् पूर्ववत् सर्वे स्वप्स्यामो दर्भविष्टरे।
केनापि न कृतं कार्यं जीवितुं च न शक्यते।।१४
तमाह जाम्बवान् वीरो दर्शयिष्यामि ते सुत!।
येनास्माकं कार्यसिद्धिर्भविष्यत्यचिरेण च।।१५
इत्युक्त्वा जाम्बवान् प्राह हनूमन्तमवस्थितम्।
हनूमन्! किं रहस्तूष्णीं स्थीयते कार्यगौरवे।।१६
प्राप्तेऽज्ञनेव सामर्थ्यं दर्शयाद्य महाबलम्।
त्वं साक्षाद्वायुतनयो वायुतुल्यपराक्रमः।।१७
रामकार्यार्थमेव त्वं जनितोऽसि महात्मना।
जातमात्रेण ते पूर्वं दृष्ट्वोद्यन्तं विभावसुम्।।१८
पक्वं फलं जिघृक्ष्यामीत्युत्प्लुतं बालचेष्टया।
योजनानां पञ्चशतं पतितोऽसि ततो भुवि।।१९
अतस्त्वद्बलमाहात्म्यं को वा शक्तोऽभिवर्णितुम्।
उत्तिष्ठ कुरु रामस्य कार्यं नः पाहि सुव्रत!।।२०
श्रुत्वा जाम्बवतो वाक्यं हनूमानतिहर्षितः।
चकार नादं सिंहस्य ब्रह्माण्डं स्फोटयन्निव।।२१
बभूव पर्वताकारस्त्रिविक्रम इवापरः।

**श्रुत्वेति**—जाम्बवतो वाक्यात्स्मृतिं लब्ध्वेदं यत्कृतं तेन श्रीरामध्यानं तैलवदविच्छिन्नं कुर्वन्नेव स्थित इति, मुनिशापस्तु तत्पोषक एव।२१

**हनूमान् उवाच—**

शृणुध्वं वानराः ! सर्वे मम वाक्यं विशेषतः।
लङ्घयित्वा जलनिधिं कृत्वा लङ्कां्च भस्मसात्॥२२

**बभूवेति—**त्रिविक्रमोऽपि मया हनुमत ईश्वरत्वं व्यक्तम्।२२

रावणं सकुलं हत्वाऽऽनेष्ये जनकनन्दिनीम्।
यद्वा बद्ध्वा गले रज्वा रावणं वामपाणिना॥२३
लङ्कां सपर्वतां धृत्वा रामस्याग्रे क्षिपाम्यहम्।
यद्वा दृष्ट्वैव यास्यामि जानकीं शुभलक्षणाम्॥२४
श्रुत्वा हनुमतो वाक्यं जाम्बवानिदमब्रवीत्।
दृष्ट्वैवागच्छ भद्रं ते जीवन्तीं जानकीं शुभाम्॥२५
पश्चाद्रामेण सहितो दर्शयिष्यसि पौरुषम्।
कल्याणं भवताद् भद्र! गच्छतस्ते विहायसा॥२६
गच्छन्तं रामकार्यार्थं वायुस्त्वामनुगच्छतु।
इत्याशीर्भिः समामन्त्र्य विसृष्टः प्लवगाधिपैः॥२७
महेन्द्राद्रिशिरो गत्वा बभूवाद्भुतदर्शनः॥२८
महानगेन्द्रप्रतिमो महात्मा, सुवर्णवर्णोऽरुणचारुवक्त्रः।
महाफणीन्द्राभसुदीर्घबाहुर्वातात्मजोऽदृश्यत सर्वभूतैः॥२९

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
किष्किन्धाकाण्डे नवमोऽध्यायः।९

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां किष्किन्धाकाण्डे
नवमोऽध्यायः।९

⊙

---

१. न कापि पुष्पिका रा० व० पुस्तके।

## सुन्दरकाण्डम्

### अथ प्रथमोऽध्यायः

**श्रीमहादेव उवाच—**

शतयोजनविस्तीर्णं समुद्रं मकरालयम्।
लिलङ्घयिषुरानन्दसन्दोहो मारुतात्मजः॥१
ध्यात्वा रामं परात्मानमिदं वचनमब्रवीत्।
पश्यन्तु वानराः सर्वे गच्छन्तं मां विहायसा॥२
अमोघं रामनिर्मुक्तं महाबाणमिवाखिलाः।
पश्याम्यद्यैव रामस्य पत्नीं जनकनन्दिनीम्॥३
कृतार्थोऽहं कृतार्थोऽहं पुनः पश्यामि राघवम्।
प्राणप्रयाणसमये यस्य नाम सकृत् स्मरन्॥४

**अमोघमिति—**[1]अद्यैव जनकनन्दिनीं पश्यामि पुनरद्यैव राघवं पश्यामि यः अहं कृतार्थोऽस्मि तेन वेगाधिक्यं, तेन उत्साहाधिक्यं, तेन कार्यसिद्धिर्भविष्यत्येवेति व्यज्यते। ३-४।

नरस्तीर्त्वा भवाम्भोधिमपारं याति तत्पदम्।
किं पुनस्तस्य दूतोऽहं तदङ्गाङ्गुलिमुद्रिकः॥५

**नर इति—**तदङ्गभूता या अङ्गुलिस्तद्भूषणभूता या मुद्रिका सा अस्यास्तीत्यर्श आदिभ्योऽच्, किं पुनरित्यादिना यानि समुद्रोल्लङ्घनादीनि करिष्यमाणकर्माणि तज्जन्य-यशांसि श्रीरामं समर्पयतीति तेन नीचानुसंधानम् तेन भक्त्याधिक्यं व्यक्तम्।५

तमेव हृदये ध्यात्वा लङ्घयाम्यल्पवारिधिम्।
इत्युक्त्वा हनुमान् बाहू प्रसार्यायतवालधिः॥६

**तमेवेति—**आयतवालधिः, प्रसारितपुच्छः।६

ऋजुग्रीवोर्ध्वदृष्टिः सन्नाकुञ्चितपदद्वयः।
दक्षिणाभिमुखस्तूर्णं पुप्लुवेऽनिलविक्रमः॥७

---

१. मूलपुस्तके तत्र श्रीगणेशाय नमः, इत्यस्ति।

आकाशात्त्वरितं देवैर्वीक्ष्यमाणो जगाम सः।
दृष्ट्वाऽनिलसुतं देवा गच्छन्तं वायुवेगतः॥८
परीक्षणार्थं सत्त्वस्य वानरस्येदमब्रुवन्।
गच्छत्येष महासत्त्वो वानरो वायुविक्रमः॥९
लङ्कांप्रवेष्टुं शक्तो वा न वा जानीमहे बलम्।
एवं विचार्य नागानां मातरं सुरसाभिधाम्॥१०
अब्रवीद् देवतावृन्दः कौतूहलसमन्वितः।
गच्छ त्वं वानरेन्द्रस्य किञ्चिद्विघ्नं समाचर॥११

**अब्रवीदिति**—[1]स्त्रियं न हनिष्यतीति सुरसाप्रेषणेन देवानां हनुमतः सकाशाद् भयं व्यज्यते।११

ज्ञात्वा तस्य बलं बुद्धिं पुनरेहि त्वरान्विता।
इत्युक्ता सा ययौ शीघ्रं हनुमद्विघ्नकारणात्॥१२
आवृत्य मार्गं पुरतः स्थित्वा वानरमब्रवीत्।
एहि मे वदनं शीघ्रं प्रविशस्व महामते!॥१३
देवैस्त्वं कल्पितो भक्ष्यः क्षुधासम्पीडितात्मनः।
तामाह हनुमान् मातरहं रामस्य शासनात्॥१४
गच्छामि जानकीं द्रष्टुं पुनरागम्य सत्वरः।
रामाय कुशलं तस्याः कथयित्वा तवाननम्॥१५
निवेक्ष्ये देहि मे मार्गं सुरसायै नमोऽस्तु ते।
इत्युक्ता पुनरेवाह सुरसा क्षुधितास्म्यहम्॥१६

**निवेक्ष्ये इति**—सुरसायै नमोऽस्तु ते इत्यनेन स्वस्य सर्वज्ञता सूचिता।१६

प्रविश्य गच्छ मे वक्त्रं नो चेत्त्वां भक्षयाम्यहम्।
इत्युक्तो हनुमानाह मुखं शीघ्रं विदारय॥१७
प्रविश्य वदनं तेऽद्य गच्छामि त्वरयान्वितः।
इत्युक्त्वा योजनायामदेहो भूत्वा पुरः स्थितः॥१८

---

१. अस्य श्लोकस्य टीका रा० व० पु० न विद्यते।

दृष्ट्वा हनुमतो रूपं सुरसा पञ्चयोजनम्।
मुखं चकार हनुमान् द्विगुणं रूपमादधत्॥१९
ततश्चकार सुरसा योजनानाञ्च विंशतिम्।
वक्त्रं चकार हनुमांस्त्रिंशद्योजनसम्मितम्॥२०
ततश्चकार सुरसा पञ्चाशद्योजनायतम्।
वक्त्रं तदा हनूमांस्तु बभूवाङ्गुष्ठसन्निभः॥२१

**तत इति**—त्रिंशत्योजनसम्मितं इत्यनेन लोकः स्वपरिमितं भारं वहतीति न्यायेन त्रिंशद्योजनपरिमितायाः लङ्कायाः उत्पाटने मम शक्तिरस्तीति हनुमता सूचितम्। अङ्गुष्ठसन्निभः, तेन बुद्ध्यतिशयो व्यक्तः। २०-२१।

प्रविश्य वदनं तस्याः पुनरेत्य पुरः स्थितः।
प्रविष्टो निर्गतोऽहं ते वदनं देवि! ते नमः॥२२
एवं वदन्तं दृष्ट्वा सा हनुमन्तमथाब्रवीत्।
गच्छ साधय रामस्य कार्यं बुद्धिमतां वर! ॥२३
देवैः सम्प्रेषिताहं ते बलं जिज्ञासुभिः कपे!।
दृष्ट्वा सीतां पुनर्गत्वा रामं द्रक्ष्यसि गच्छ भोः॥२४
इत्युक्त्वा सा ययौ देवलोकं वायुसुतः पुनः।
जगाम वायुमार्गेण गरुत्मानिव पक्षिराट्॥२५
समुद्रोऽप्याह मैनाकं मणिकाञ्चनपर्वतम्।
गच्छत्येष महासत्त्वो हनूमान् मारुतात्मजः॥२६

**समुद्रोऽपीति**—समुद्रोऽपि मैनाकपर्वतं प्रत्याह। तेन श्रीरामभक्तानां जडा अपि सेवां कुर्वन्तीति [1]किमुत चेतना इति काव्यार्थापत्तिरलङ्कारो व्यक्तः।२६

रामस्य कार्यसिद्ध्यर्थं तस्य त्वं सचिवो भव।
सगरैर्वर्द्धितो यस्मात् पुराहं सागरोऽभवम्॥२७
तस्यान्वये बभूवासौ रामो दाशरथिः प्रभुः।
तस्य कार्यार्थसिद्ध्यर्थं गच्छत्येष महाकपिः॥२८
त्वमुत्तिष्ठ जलात्तूर्णं त्वयि विश्रम्य गच्छतु।
स तथेति प्रादुरभूज्जलमध्यान्महोन्नतः॥२९

---

१· कुपित इति, मदीयपुस्तके।

नानामणिमयैः शृङ्गैस्तस्योपरि नराकृतिः।
प्राह यान्तं हनूमन्तं मैनाकोऽहं महाकपे!।।३०
समुद्रेण समादिष्टस्त्वद्विश्रामाय मारुते!।
आगच्छामृतकल्पानि जग्ध्वा पक्वफलानि मे।।३१
विश्रम्यात्र क्षणं पश्चाद् गमिष्यसि यथासुखम्।
एवमुक्तोऽथ तं प्राह हनूमान् मारुतात्मजः।।३२
गच्छतो रामकार्यार्थं भक्षणं मे कथं भवेत्।
विश्रामो वा कथं मे स्याद् गन्तव्यं त्वरितं मया।।३३
इत्युक्त्वा स्पृष्टशिखरः कराग्रेण ययौ कपिः।
किञ्चिद्दूरं गतस्यास्य छायां छायाग्रहोऽग्रहीत्।।३४

**इत्युक्त्वेति**—इत्युक्त्वा स्पृष्टशिखरः—तेन मानदातृत्वं व्यक्तम्।३४

सिंहिका नाम सा घोरा जलमध्ये स्थिता सदा।
आकाशगामिनां छायामाक्रम्याकृष्य भक्षयेत्।।३५
तया गृहीतो हनुमान् चिन्तयामास वीर्यवान्।
केनेदं मे कृतं वेगरोधनं विघ्नकारिणा।।३६
दृश्यते नैव कोऽप्यत्र विस्मयो मे प्रजायते।
एवं विचिन्त्य हनुमानधो दृष्टिं प्रसारयत्।।३७
तत्र दृष्ट्वा महाकायां सिंहिकां घोररूपिणीम्।
पपात सलिले तूर्णं पद्भ्यामेवाहनद् रुषा।।३८

**तत्र दृष्ट्वेति**—पद्भ्यामेव रुषाऽहनत्। तेन यदि रामभक्तचरणस्पर्शः, तदैव मुक्तिरित्यभिप्रायेण पद्भ्यामेव तां जघानेति व्यक्तम्। तेन हनुमतो दयालुतातिशयो व्यक्तः। तेन च त्वसामान्यबुद्ध्यैव सिंहिकां हतवान् न तु स्त्रीबुद्ध्येति व्यक्तम्।३८

पुनरुत्प्लुत्य हनुमान् दक्षिणाभिमुखो ययौ।
ततो दक्षिणमासाद्य कूलं नानाफलद्रुमम्।।३९
नानापक्षिमृगाकीर्णं नानापुष्पलतावृतम्।
ततो ददर्श नगरं त्रिकूटाचलमूर्धनि।।४०
प्राकारैर्बहुभिर्युक्तम् परिखाभिश्च सर्वतः।
प्रवेक्ष्यामि कथं लङ्कामिति चिन्तापरोऽभवत्।।४१

**प्राकारैरिति**—चिन्तापरोऽभवत्तेन लङ्कातीवदुर्गमेति सूचितम् ।४१

रात्रौ वेक्ष्यामि सूक्ष्मोऽहं लङ्कां रावणपालिताम् ।
एवं विचिन्त्य तत्रैव स्थित्वा लङ्कां जगाम सः ॥४२

**रात्राविति**—रात्रावेव तत्रापि सूक्ष्मरूपो भूत्वा प्रवेक्ष्यामीत्यनेन रावणस्य सावधानता व्यक्ता ।४२

धृत्वा सूक्ष्मं वपुर्द्वारं प्रविवेश प्रतापवान् ।
तत्र लङ्कापुरी साक्षाद्राक्षसीवेषधारिणी ॥४३
प्रविशन्तं हनूमन्तं दृष्ट्वा लङ्का व्यतर्जयत् ।
कस्त्वं वानररूपेण मामनादृत्य लङ्किनीम् ॥४४
प्रविश्य चोरवद्रात्रौ किं भवान्कर्तुमिच्छति ।
इत्युक्त्वा रोषताम्राक्षी पादेनाभिजघान तम् ॥४५
हनुमानपि तां वाममुष्टिनाऽवज्ञयाऽहनत् ।
तदैव पतिता भूमौ रक्तमुद्वमती भृशम् ॥४६

**हनुमानिति**—वाममुष्टिनाऽहनदित्यत्र ब्रह्मचारिणः स्वस्य स्त्रीस्पर्शमयोग्यं मत्वा वामाङ्गस्य स्त्रीभागतया [1]तत्स्पर्शायोग्यत्वेन वाममुष्टिना तामहनदिति तात्पर्यम् । तेन सिंहिकामपि वामपादेन जघानेति व्यक्तम् ।४६

उत्थाय प्राह सा लङ्का हनूमन्तं महाबलम् ।
हनूमन् ! गच्छ भद्रं ते जिता लङ्का त्वयाऽनघ ! ॥४७
पुराऽहं ब्रह्मणा प्रोक्ता ह्यष्टाविंशतिपर्यये ।
त्रेतायुगे दाशरथी रामो नारायणोऽव्ययः ॥४८
जनिष्यते योगमाया सीता जनकवेश्मनि ।
भूभारहरणार्थाय प्रार्थितोऽयं मया क्वचित् ॥४९

**पुराहमिति**—अव्ययो नारायणो दाशरथिः—राजावेशेन दाशरथिपदवाच्यः । योगमाया सीतावेशेन जनकवेश्मनि जनिष्यते । ४८-४९ ।

सभार्यो राघवो भ्राता गमिष्यति महावनम् ।
तत्र सीतां महामायां रावणोऽपहरिष्यति ॥५०

---

१. तत्स्पर्शायोग्यत्वेन इत्युचितः ।

**सभार्य इति**—तत्र वने महामायां मूलप्रकृतिरूपां छायासीतां रावणो हरिष्यति।५०

पश्चाद्रामेण साचिव्यं सुग्रीवस्य भविष्यति।
सुग्रीवो जानकीं द्रष्टुं वानरान् प्रेषयिष्यति ॥५१

तत्रैको वानरो रात्रावागमिष्यति तेऽन्तिकम्।
त्वया च भर्त्सितः सोऽपि त्वां हनिष्यति मुष्टिना ॥५२

तेनाहता त्वं व्यथिता भविष्यसि यदानघे!।
तदैव रावणस्यान्तो भविष्यति न संशयः ॥५३

तस्मात्त्वया जिता लङ्का जितं सर्वं त्वयाऽनघ!।
रावणान्तःपुरवरे क्रीडाकाननमुत्तमम् ॥५४

तन्मध्येऽशोकवनिका दिव्यपादपसङ्कुला।
अस्ति तस्यां महावृक्षः शिंशपानाम मध्यगः ॥५५

**तन्मध्य इति**—शिंशपा इति लोके शिरसेति प्रसिद्धः।५५

तत्रास्ते जानकी घोरराक्षसीभिः सुरक्षिता।
दृष्ट्वैव गच्छ त्वरितं राघवाय निवेदय ॥५६

धन्याहमप्यद्य चिराय राघव-
स्मृतिर्ममासीद्भवपाशमोचनी।
तद्भक्तसङ्गोऽप्यतिदुर्लभो मम,
प्रसीदतां दाशरथिः सदा हृदि ॥५७

**धन्याहमिति**—धन्येत्यादिलङ्कोक्त्या सापि भक्तिमती आसीत्। तेन सर्वेषां ज्ञानिनां भक्तिमतां मोक्षाधिकारिणामपि सत्सङ्गो दुर्लभ इति सूचितं। तेन मोक्षादपि सत्सङ्गे सुखाधिक्यम्। उक्तञ्च श्रीमद्भागवते 'तुलयाम लवेनापि न स्वर्गं नापुनर्भवं। भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः॥' इति। मे हृदि दाशरथिः प्रसीदताम्। एतेन श्रीरामकृपयैव हनुमत्सङ्ग इति सूचितम्। तथा च श्रीमद्भागवते 'अथानघाङ्घ्रेस्तव कीर्तितीर्थयोरन्तर्बहिः स्नानविधूतपाप्मनाम्। भूतेष्वनुक्रोशसुसत्त्वशीलिनां स्यात्सङ्गमोऽनुग्रह एष नस्तव॥'५७

उल्लङ्घितेऽब्धौ पवनात्मजेन,
धरासुतायाश्च दशाननस्य।
पुस्फोर वामाक्षिभुजश्च तीव्रं,
रामस्य दक्षाङ्गमतीन्द्रियस्य।।५८

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
सुन्दरकाण्डे प्रथमोऽध्यायः।१

⊙

**उल्लङ्घित इति**—रावणवामाङ्गश्रीरामदक्षिणाङ्गस्फोरनेन पराजयो रावणस्य श्रीरामजय इति सूचितम्।५८

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायण[2]टीकायां
व्यङ्ग्यप्रकाशिकायां सुन्दरकाण्डे
प्रथमोऽध्यायः।१

⊙

---

१. इति सुन्दरे प्रथमः इति मात्रं पुष्पिकास्वरूपम् रा० व० पु०। २. टीकायाम् व्यङ्ग्यप्रकाशिकायाम्-इति मत्पुस्तकेऽपि न विद्यते।

## अथ द्वितीयोऽध्यायः

[1]श्रीमहादेव उवाच—

ततो जगाम हनुमान् लङ्कां परमशोभनाम्।
रात्रौ सूक्ष्मतनुर्भूत्वा बभ्राम परितः पुरीम्॥१
सीतान्वेषणकार्यार्थी प्रविवेश नृपालयम्।
तत्र सर्वप्रदेशेषु विविच्य हनुमान् कपिः॥२
अन्तःपुरं तु संशोध्य शयनागारमेव च।
कोशागारं ततो गत्वा हस्तिशालां कपीश्वरः॥३
पश्चान्नगरमध्ये तु विचार्य प्रययौ ततः।
कुम्भकर्णगृहं गत्वा सुप्तं दृष्ट्वा च निर्गतः॥४

**पश्चादिति**—कुम्भकर्णं सुप्तं दृष्ट्वा निर्भयः सन् गृहं प्रति गतः। एतेन कुम्भकर्णोऽतीव-भयानक इति सूचितम्।४

ततश्चिन्तापरो भूत्वा आगतश्चत्वरं प्रति।
नापश्यज्जानकीं स्मृत्वा ततो लङ्काभिभाषितम्॥
जगाम हनुमान् शीघ्रमशोकवनिकां शुभाम्॥५

**तत इति**—कुत्रापि जानकीं नापश्यत् ततो लङ्काभाषितं स्मृत्वेत्यनेन श्रीसीता-दर्शनाय उत्कण्ठातिशयात् पूर्वं तद्वाक्यं विस्मृतवानिति व्यक्तम्। यद्वा अशोकवाटि-कामेव सम्पातिनोक्तां तत्र रावणगृहेष्वन्वेषितवानिति।५

सुरपादपसम्बाधां रत्नसोपानवापिकाम्।
नानापक्षिमृगाकीर्णां स्वर्णप्रासादशोभिताम्॥६
फलैरानम्रशाखाग्रपादपैः परिवारिताम्।
विचिन्वन् जानकीं तत्र प्रतिवृक्षं मरुत्सुतः॥७

---

१. पुस्तकद्वयेऽपि 'श्रीमहादेव उवाच' इति नास्ति।

दर्शाभ्रलिहं तत्र चैत्यप्रासादमुत्तमम्।
दृष्ट्वा विस्मयमापन्नो मणिस्तम्भशतान्वितम्॥८

**ददर्शेति**—चैत्यप्रासादं महादेवस्थानमित्यर्थः। दृष्ट्वा विस्मयमापन्नः। भक्तराज-महादेवभक्तस्य रावणस्य शिवोपास्यश्रीरामस्य सीताहरणे बुद्धिः कथमिति विस्मये हेतुः।८

समतीत्य पुनर्गत्वा किञ्चिद्दूरं स मारुतिः।
ददर्श शिंशपावृक्षमत्यन्तनिविडच्छदम्॥९
अदृष्टातपमाकीर्णस्वर्णवर्णविहङ्गमम्।
तन्मूले राक्षसीमध्ये स्थितां जनकनन्दिनीम्॥१०
ददर्श हनुमान् वीरो देवतामिव भूतले।
एकवेणीं कृशां दीनां मलिनाम्बरधारिणीम्॥११
भूमौ शयानां शोचन्तीं राम रामेति भाषिणीम्।
त्रातारं नाधिगच्छन्तीमुपवासकृशां शुभाम्॥१२
शाखान्तच्छदमध्यस्थो ददर्श कपिकुञ्जरः।
कृतार्थोऽहं कृतार्थोऽहं दृष्ट्वा जनकनन्दिनीम्॥१३
मयैव साधितं कार्यं रामस्य परमात्मनः।
ततः किलकिलाशब्दो बभूवान्तःपुराद् बहिः॥१४

**शाखान्त इति**—मयैव श्रीरामकार्यं साधितं। श्रीरामस्य परमात्मनः कार्यं तु सिद्धमेव येन केनाप्यागतेन वानरेण साधितं स्यादेव। तत्करणेनेदानीं अहमेव कृतार्थोऽस्मीति हर्षातिशयो व्यक्तः। १३-१४।

किमेतदिति सँल्लीनो वृक्षपत्रेषु मारुतिः।
आयान्तं रावणं तत्र स्त्रीजनैः परिवारितम्॥१५
दशास्यं विंशतिभुजं नीलाञ्जनचयोपमम्।
दृष्ट्वा विस्मयमापन्नो पत्रखण्डेष्वलीयत॥१६

**किमेतदिति**—रावणं दृष्ट्वा विस्मयमापन्नः। अस्य तेजस्तु इन्द्रसहितत्रिलोक-पालनार्हः। अयं राक्षसः कथं जात इति विस्मये हेतुः। १५-१६।

रावणो राघवेणाशु मरणं मे कथं भवेत्।
सीतार्थमपि नायाति रामः किं कारणं भवेत्॥१७

इत्येवं चिन्तयन्नित्यं राममेव सदा हृदि।
तस्मिन्दिने परे रात्रौ रावणो राक्षसाधिपः ॥१८

स्वप्ने रामेण सन्दिष्टः कश्चिदागत्य वानरः।
कामरूपधरः सूक्ष्मो वृक्षाग्रस्थोऽनुपश्यति ॥१९

इति दृष्ट्वाद्भुतं स्वप्नं स्वात्मन्येवानुचिन्त्य सः।
स्वप्नः कदाचित्सत्यः स्यादेवं तत्र करोम्यहम् ॥२०

जानकीं वाक्शरैर्विद्ध्वा दुःखितां नितरामहम्।
करोमि दृष्ट्वा रामाय निवेदयतु वानरः ॥२१

इत्येवं चिन्तयन् सीतासमीपगमद् द्रुतम्।
नूपुराणां किङ्किणीनां श्रुत्वा सिञ्जितमङ्गना ॥२२

सीता भीता लीयमाना स्वात्मन्येव सुमध्यमा।
अधोमुख्यश्रुनयना स्थिता रामार्पितान्तरा ॥२३

रावणोऽपि तदा सीतामालोक्याह सुमध्यमे !।
मां दृष्ट्वा किं वृथा सुभ्रु ! स्वात्मन्येव विलीयसे ॥२४

**रावणोऽपीति**—सुभ्रु ! इत्यनेन तव भ्रूभङ्गेनैव सकुलस्य मम मोक्ष इति व्यज्यते। मे मोक्षार्थं स्वात्मनि श्रीरामे विलीयसे, तं स्मरसि। अनेन सकुलस्य मम मुक्तिदाने त्वमेव समर्थासीति व्यक्तम्। २४

रामो वनचराणां हि मध्ये तिष्ठति सानुजः।
कदाचिद् दृश्यते कैश्चित्कदाचिन्नैव दृश्यते ॥२५

इदानीं श्रीरामवृत्तान्ताश्रवणजदुःखनाशकतद्वृत्तान्तश्रवणानन्देन मह्यं मोक्षं दास्यतीति तामभिनन्दयन्नाह **राम इत्यादिना**—तेन त्वं तु तमेकाकिनं विहायागता अत्र, वानरबलयुक्तः अत्रागत्य त्वामानेष्यत्येवेत्याश्वासनं व्यक्तम्। वनचराणां मध्ये सानुजो रामः तिष्ठति कैश्चिद् भक्तैः दृश्यते, अभक्तैः कदाचिन्नैव दृश्यते इत्यर्थः। २५

मया तु बहुधा लोकाः प्रेषितास्तस्य दर्शने।
न पश्यन्ति प्रयत्नेन वीक्षमाणाः समन्ततः ॥२६

अभक्तानामदर्शनं स्पष्टमाह **मयेति**। २६

किं करिष्यसि रामेण निःस्पृहेण सदा त्वयि।
त्वया सदाऽऽलिङ्गितोऽपि समीपस्थोऽपि सर्वदा ॥२७

प्राप्तविरहाभासं निराकरोति **किमित्यादिना**—त्वयि मूलप्रकृतिरूपछायायां निःस्पृहेण रामेण किं करिष्यसि। तेन तवास्पर्शाभाव इति ध्वनितम्। ननु तत्स्पर्शाभावात्कथं जड़रूपाहं जगत्सृष्ट्यादिरूपं कार्यं करोमीति चेत्तत्राह त्वया सदाऽऽलिङ्गितो व्यापकत्वात्। अत एव समीपस्थस्तथापि त्वयि श्रीरामस्य स्पर्शो न जायते निर्विकारत्वात्। तत्सन्निधानेन जगत्सृष्ट्यादिकं करोषीति ध्वनितः 'सूर्यो यथा सर्वलोकस्य चक्षुः न लिप्यते चाक्षुषैः लोकदुःखैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः'॥ इति श्रुतेः। तेन तद्वियोगजन्यशोको न युक्तः इति ध्वनितः। २७

हृदयेऽस्य न च स्नेहस्त्वयि रामस्य जायते।
त्वत्कृतान्सर्वभोगांश्च त्वद्गुणानपि राघवः ॥२८
भुञ्जानोऽपि न जानाति कृतघ्नो निर्गुणोऽधमः।
त्वमानीता मया साध्वी दुःखशोकसमाकुला ॥२९
इदानीमपि नायाति भक्तिहीनः कथं व्रजेत्।
निःसत्त्वो निर्ममो मानी मूढः पण्डितमानवान् ॥३०

**हृदय इति**—'कर्तृत्वं करणत्वञ्च स्वभावश्चेतना धृतिः। यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षये'ति श्रुत्युक्तरीत्या त्वत्कृतान् सर्वभोगान् त्वया स्ववृत्तिद्वारोपनीतान् सर्वविषयान् तथा त्वद्गुणान्, सुखदुःखसंकल्पकामादीन् भुञ्जानोऽपि अहं भोक्ता इति न जानाति, न मन्यते। 'जहात्येनां भुक्तभोगामजोऽन्य' इति श्रुतेः। अत एव निर्गुणः कृतघ्नः स्वभक्तानां त्वत्कृतकामादीन् हन्तीति तथोक्तः। अधमः न धमति शब्दविषयो भवतीत्यधमः। न शब्दवाच्य इति यावत् 'यतो वाचो निवर्तन्ते' इति श्रुतेः साध्वी पतिव्रता दुःखशोकौ श्रुत्वा ये दुःखिता भवेयुस्ते मुक्ताः भवन्ति। 'भक्तिमज्जनोद्धारे[१] बद्धपरिकरयोर्द्वयोर्मध्ये एका त्वं स्वमुक्त्यर्थमानीता, रामस्तु इदानीमपि नायाति। ननु त्वमेव गत्वा मुक्तिं याचस्वेत्यत आह भक्तिहीन इति-भक्तिहीनः निःसत्त्वः निर्बलः निर्ममः मम स्वामी इति ममतारहितः। मानी श्रीरामः स्वयमागत्य मह्यं मुक्तिं प्रयच्छत्विति मानवान्, अत एव मूढः सर्वत्र पूर्णः श्रीराम इति ज्ञानहीनः पण्डितमानवान् सर्वज्ञा त्वं मदन्तर्गतं जानास्येव तथापि मुक्तिं प्रार्थयामीति पण्डितमानवान्। एवं भूतोऽयं जनः कथं व्रजेत् राममिति शेषः। अतस्त्वमेव मुक्तिं देहीति ध्वनितम्। २८-३०।

---

१. भविष्यज्जनोद्धारे इति रा० व० पु०।

नराधमं त्वद्विमुखं किं करिष्यसि भामिनी।
त्वय्यतीव समासक्तं मां भजस्वासुरोत्तमम् ॥३१

**नराधममिति**—न राघसे नराः ते अधमाः यस्मात् स तं नरोत्तममित्यर्थः। त्वद्विमुखं त्वदाकाङ्क्षारहितं रामम् अनागतमपि भामिनी सती त्वं किं करिष्यसीत्यनेन (न) तदुपरि कोपं विहाय कोपेन सकुलं मामेव भस्मसात्कृत्वा मुक्तिं देहीति सूचितम्। तस्मात्त्वय्यतीव संसक्तं सकुलं मां भजस्व भस्मसात्कृत्वा मुक्तिं देहीत्यर्थः। ३१

देवगन्धर्वनागानां यक्षकिन्नरयोषिताम्।
भविष्यसि नियोक्त्री त्वं यदि मां प्रतिपद्यसे ॥३२

**देवेति**—देवशब्देन स्वर्गलोकवासिनः गन्धर्वशब्देनान्तरिक्षलोकवासिनः नागशब्देन पातालवासिनः यक्षकिन्नरशब्दाभ्यां भूलोकवासिनः 'वासुदेवः पुमानेकः 'स्त्रीप्रायमितरज्जगत्' इति विष्णुपुराणोक्तेः योषिद्रूपाणां देवादीनां नियोक्त्री स्वामिनी त्वं यदि मां मुक्तिं दातुं प्रतिपद्यसे तदैव भविष्यसि अधमोद्धारिकेति शेषः।[२] त्वं त्रिलोकस्वामिनी अहं किं त्रिलोक्याः बहिः। तदुक्तमभियुक्तैः 'यदि मे न दयिष्यसे ततो दयनीयस्तव नाथ दुर्लभ' इति।३२

रावणस्य वचः श्रुत्वा सीताऽमर्षसमन्विता।
उवाचाधोमुखी भूत्वा निधाय तृणमन्तरे ॥३३

**रावणस्येति**—सीता रावणस्य वचः 'मह्यं मुक्तिं देहीत्येवं रूपं' वाक्यं श्रुत्वा अमर्षसमन्विता मुक्तिदातारं श्रीरामं विहाय जगन्मोहकारिण्याः मूलप्रकृतेर्मत्त एव मुक्तिमिच्छतीति क्रोधसमन्विता अत एवाधोमुखी भूत्वा अन्तरे मध्ये तृणं निधाय कृत्वा उवाच। तृणं निधायेत्यनेन तृणवत् लघुभूतानां बहूपदेशेऽपि विश्वासो न भवतीति सूचितम्।३३

राघवाद्विभ्यता नूनं भिक्षुरूपं धृतं त्वया।
रहिते राघवाभ्यां त्वं शुनीव हविरध्वरे ॥३४

**राघवादिति**—तदा राघवात् बिभ्यता त्वया भिक्षुरूपं धृतम्, राघवाभ्यां रहिते मां हृतवानसि। एतेन यदि एवं समक्षं मां हर्तुमुद्युक्तः स्यास्तर्हि तदैव मुक्तिं दद्यादिति। तेन त्वमेव न मुक्तिं गृहीतवानसि, मे को दोष इति।३४

---

१. तः २ पर्यन्तः पाठः रा० व० पुस्तकस्थः, मत्पुस्तके तु 'स्त्री पद्यसे तदैव भक्ति सि अधसे तदैव म' इति रूपेण स्खलितप्रायोऽस्ति।

हृतवानसि मां नीच ! तत्फलं प्राप्स्यसेऽचिरात् ।
यदा रामशराघातविदारितवपुर्भवान् ।।३५

**हृतवानसीति**—हे नीच! यदा भवान् रामशराघातैर्विदारितवपुर्भविष्यति तदाऽचिरादल्पेनैव कालेन तत्फलमाप्स्यसे।३५

ज्ञास्यसे मानुषं रामं गमिष्यसि यमान्तिकम् ।
समुद्रं शोषयित्वा वा शरैर्बद्ध्वापि वारिधिम् ।।३६

फलमेवाह **ज्ञास्यस इति**—यमान्तिकम्, यमाः विद्यन्ते येषाम्, ते यमाः योगिनः 'अर्श आद्यच्' तेषामन्तिकम्—अन्ते प्राप्यं मानुषं नित्यद्विभुजरूपं रामं ज्ञास्यसे ततः गमिष्यसि च। ननु श्रीरामो मां कथं हनिष्यति समुद्रान्तरितलङ्कायां तस्यागमनासम्भवादित्यत आह समुद्रमिति।३६

हन्तुं त्वां समरे रामो लक्ष्मणेन समन्वितः ।
आगमिष्यत्यसन्देहो द्रक्ष्यसे राक्षसाधम ! ।।३७

**हन्तुमिति**—त्वां हन्तुं हत्वा मुक्तिं दातुं रामः श्रीरामः आगमिष्यति असन्देह एव, मूलप्रकृतित्वात् मुक्तिदाने नाहं समर्था किं तु श्रीराम एवेति।३७

त्वां सपुत्रं सहबलं हत्वा नेष्यति मां पुरम् ।
श्रुत्वा रक्षःपतिः क्रुद्धो जानक्याः परुषाक्षरम् ।।३८
वाक्यं क्रोधसमाविष्टः खड्गमुद्यम्य सत्वरम् ।
हन्तुं जनकराजस्य तनयां ताम्रलोचनः ।।३९

**त्वामिति**—इदानीं सीतावचनेन निश्चितश्रीरामागमनस्वप्नदर्शनेन निश्चितसीतातर्जनं करोतीत्याह श्रुत्वेत्यादिना। ३८-३९।

मन्दोदरी निवार्याह पतिं पतिहिते रता ।
त्यजैनां मानुषीं दीनां दुःखितां कृपणां कृशाम् ।।४०
देवगन्धर्वनागानां बह्व्यः सन्ति वराङ्गनाः ।
त्वामेव वरयन्त्युच्चैर्मदमत्तविलोचनाः ।।४१
ततोऽब्रवीद् दशग्रीवो राक्षसीर्विकृताननाः
यथा मे वशगा सीता भविष्यति सकामना ।
तथा यतध्वं त्वरितं तर्जनादरणादिभिः ।।४२

**यथेति**—ततोऽब्रवीदित्यारभ्य मानुषीमित्यन्तमन्यसन्निधिवैशिष्टव्यङ्ग्येन राक्षसीः

उद्बोध्य हनूमतः बोधनं कृतम्। तेनायं तर्जनादिभिः कृशां सीतां निरीक्ष्य यथावद्रामं-
निवेद्य तं शीघ्रमानेष्यतीति हेतुः। तेन मुक्त्यर्थं रावणस्य त्वरातिशयो व्यक्तः।४२

द्विमासाभ्यन्तरे सीता यदि मे वशगा भवेत्।
तदा सर्वसुखोपेता राज्यं भोक्ष्यति सा मया॥४३
यदि मासद्वयादूर्ध्वं मच्छय्यां नाभिनन्दति।
तदा मे प्रातराशाय हत्वा कुरुत मानुषीम्॥४४
इत्युक्त्वा प्रययौ स्त्रीभी रावणोऽन्तःपुरालयम्।
राक्षस्यो जानकीमेत्य भीषयन्त्यः स्वतर्जनैः॥४५
तत्रैका जानकीमाह यौवनं ते वृथा गतम्।
रावणेन समासाद्य सफलं तु भविष्यति॥४६
अपरा चाह कोपेन किं विलम्बेन जानकीम्।
इदानीं छिद्यतामङ्गं विभज्य च पृथक् पृथक्॥४७
अन्या तु खड्गमुद्यम्य जानकीं हन्तुमुद्यता।
अन्या करालवदना विदीर्यास्यमभीषयत्॥४८
एवं तां भीषयन्तीस्ता राक्षसीर्विकृताननाः।
निवार्य त्रिजटा वृद्धा राक्षसी वाक्यमब्रवीत्॥४९
शृणुध्वं दुष्टराक्षस्यो मद्वाक्यं वो हितं भवेत्॥५०
न भीषयध्वं रुदतीं नमस्कुरुत जानकीम्।
इदानीमेव मे स्वप्ने रामः कमललोचनः॥५१
आरुह्यैरावतं शुभ्रं लक्ष्मणेन समागतः।
दग्ध्वा लङ्कापुरीं सर्वां हत्वा रावणमाहवे॥५२
आरोप्य जानकीं स्वाङ्के स्थितो दृष्टोऽगमूर्धनि।
रावणो गोमयह्रदे तैलाभ्यक्तो दिगम्बरः॥५३
अगाहत्पुत्रपौत्रैश्च कृत्वा वदनमालिकाम्।
विभीषणस्तु रामस्य सन्निधौ हृष्टमानसः॥५४
सेवां करोति रामस्य पादयोर्भक्तिसंयुतः।
सर्वथा रावणं रामो हत्वा सकुलमञ्जसा॥५५
विभीषणायाधिपत्यं दत्त्वा सीतां शुभाननाम्।
अङ्के निधाय स्वपुरीं गमिष्यति न संशयः॥५६

त्रिजटायाः वचः श्रुत्वा भीतास्ताः राक्षसस्त्रियः।
तूष्णीमासंस्तत्र तत्र निद्रावशमुपागताः ॥५७

**त्रिजटाया इति**—निद्रावशमुपागताः [1]अत्र तद्रक्षणे नियुक्तानां सर्वासां युगपन्निद्राऽसंभवेऽपि निद्राप्राप्तिः श्रीसीतामाययेति [2]बोध्यम्।५७

तर्जिता राक्षसीभिः सा सीता भीतातिविह्वला।
त्रातारं नाधिगच्छन्ती दुःखेन परिमूर्च्छिता ॥५८
अश्रुभिः पूर्णनयना चिन्तयन्तीदमब्रवीत्।
प्रभाते भक्षयिष्यन्ति राक्षस्यो मां न संशयः ॥५९
इदानीमेव मरणं केनोपायेन मे भवेत्।
एवं सुदुःखेन परिप्लुता सा,
विमुक्तकण्ठं रुदती चिराय।
आलम्ब्य शाखां कृतनिश्चया मृतौ
न जानती कञ्चिदुपायमङ्गना ॥६०

[3]इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दरकाण्डे द्वितीयोऽध्यायः।२

⊙

**एवमिति**—दुःखेन परिप्लुता मृतौ कृतनिश्चयेति, ममेदृशीं दशां दृष्ट्वा सत्वरं श्रीराममानयत्विति हनुमतो वञ्चनार्था इयं तस्याश्चेष्टेति बोध्यम्। ६०

[4]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां सुन्दरकाण्डे
द्वितीयोऽध्यायः। २

⊙

---

१. अतद्रक्षणे इति मत्पुस्तके। २. मूलपुस्तके वो इत्यस्याग्रे 'ध्यम्' इति न विद्यते। ३. इति श्रीमदध्यातो सुन्दरकाण्डे द्वितीयोऽध्यायः। २ रा० व० पु०। ४. इति द्वितीयोऽध्यायः २। एतादृशः पाठः रा० व० पु०।

## अथ तृतीयोऽध्यायः

उद्‌बन्धनेन वा मोक्ष्ये शरीरं राघवं विना।
जीवितेन फलं किं स्यान्मम रक्षोऽधिमध्यतः ॥१

**उद्‌बन्धनेनेत्यादि** ।१

दीर्घा वेणी ममात्यर्थमुद्‌बन्धाय भविष्यति।
एवं निश्चितबुद्धिं तां मरणायाथ जानकीम् ॥२
विलोक्य हनुमान्किञ्चिद्विचार्यैतदभाषत।
शनैः शनैः सूक्ष्मरूपो जानक्याः श्रोत्रगं वचः ॥३

**विलोक्येति**—किञ्चिद् विचार्य, अयं वचनावसर इति विचार्य ।३

इक्ष्वाकुवंशसम्भूतो राजा दशरथो महान्।
अयोध्याधिपतिस्तस्य चत्वारो लोकविश्रुताः ॥४
पुत्राः देवसमाः सर्वे लक्षणैरुपलक्षिताः।
रामश्च लक्ष्मणश्चैव भरतश्चैव शत्रुहा ॥५
ज्येष्ठो रामः पितुर्वाक्याद् दण्डकारण्यमागतः।
लक्ष्मणेन सह भ्रात्रा सीतया भार्यया सह ॥६
उवास गौतमी तीरे पञ्चवट्यां महामनाः।
तेन नीता महाभागा सीता जनकनन्दिनी ॥७
रहिते रामचन्द्रेऽथ रावणेन दुरात्मना।
ततो रामोऽतिदुःखार्त्तो मार्गमाणोऽथ जानकीम् ॥८
जटायुषं पक्षिराजमपश्यत् पतितं भुवि।
तस्मै दत्त्वा दिवं शीघ्रं ऋष्यमूकमुपागमत् ॥९
सुग्रीवेण कृता मैत्री रामस्य विदितात्मनः।
तद् भार्याहारिणं हत्वा बालिनं रघुनन्दनः ॥१०
राज्येऽभिषिच्य सुग्रीवं मित्रकार्यं चकार सः।
सुग्रीवस्तु समानीय वानरान् वानरप्रभुः ॥११

प्रेषयामास परितो वानरान् परिमार्गणे।
सीतायास्तत्र चैकोऽहं सुग्रीवसचिवो हरिः ॥१२
सम्पातिवचनाच्छीघ्रमुल्लङ्घ्य शतयोजनम्।
समुद्रं नगरीं लङ्कां विचिन्वञ्जानकीं शुभाम् ॥१३
शनैरशोकवनिकां विचिन्वन् शिंशपातरुम्।
अद्राक्षं जानकीमत्र शोचन्तीं दुःखसंयुताम् ॥१४
रामस्य महिषीं देवीं कृतकृत्योऽहमागतः।
इत्युक्त्वोपररामाथ मारुतिर्बुद्धिमत्तरः ॥१५
सीता क्रमेण तत्सर्वं श्रुत्वा विस्मयमाययौ।
किमिदं मे श्रुतं व्योम्नि वायुना समुदीरितम् ॥१६
स्वप्नो वा मे मनोभ्रान्तिर्यदि वा सत्यमेव तत्।
निद्रा मे नास्ति दुःखेन जानाम्येतत्कुतो भ्रमः ॥१७
येन मे कर्णपीयूषं वचनं समुदीरितम्।
स दृश्यतां महाभागः प्रियवादी ममाग्रतः ॥१८
श्रुत्वा तज्जानकीवाक्यं हनुमान् पत्रखण्डतः।
अवतीर्य शनैः सीतापुरतः समवस्थितः ॥१९
कलविङ्कप्रमाणाङ्गो रक्तास्यः पीतवानरः।
ननाम शनकैः सीतां प्राञ्जलिः पुरतः स्थितः ॥२०

**कलविङ्क इति**—कलविङ्कः चटकः प्राञ्जलिः सन्ननाम। न तु मुद्रिकां दत्तवान्। तेन यदि मुद्रिकया परिचितिं करोमि तर्हि मे दौत्यं किम्। [1]मुद्रिकामदृश्यैव यदि परिचितिं करोमि तदा दौत्यं फलितमिति। तेन दौत्ये गर्वातिशयो व्यक्तः।२०

दृष्ट्वा तं जानकी भीता रावणोऽयमुपागतः।
मां मोहयितुमायातो मायया वानराकृतिः ॥२१
इत्येवं चिन्तयित्वा सा तूष्णीमासीदधोमुखी।
पुनरप्याह तां सीतां देवि! यत्त्वं विशङ्कसे ॥२२

---

१. अदृश्य इत्यपाणिनीयः, अप्रदर्श्य इत्युचितः।

नाहं तथाविधो मातस्त्यज शङ्कां मयि स्थिताम् ।
दासोऽहं कौशलेन्द्रस्य रामस्य परमात्मनः ॥२३

सचिवोऽहं हरीन्द्रस्य सुग्रीवस्य शुभप्रदे ! ।
वायोः पुत्रोऽहमखिलप्राणभूतस्य शोभने ! ॥२४

तच्छ्रुत्वा जानकी प्राह हनुमन्तं कृताञ्जलिम् ।
वानराणां मनुष्याणां सङ्गतिर्घटते कथम् ॥२५

यथा त्वं रामचन्द्रस्य दासोऽहमिति भाषसे ।
तामाह मारुतिः प्रीतो जानकीं दूरतः स्थितः ॥२६

ऋष्यमूकमगाद्रामः शबर्या नोदितः सुधीः ।
सुग्रीवो ऋष्यमूकस्थो दृष्टवान् रामलक्ष्मणौ ॥२७

भीतो मां प्रेषयामास ज्ञातुं रामस्य हृद्गतम् ।
ब्रह्मचारिवपुर्धृत्वा गतोऽहं रामसन्निधिम् ॥२८

ज्ञात्वा रामस्य सद्भावं स्कन्धोपरि निधाय तौ ।
नीत्वा सुग्रीवसामीप्यं सख्यं चाकरवं तयोः ॥२९

**ज्ञात्वेति**—अकवरम्-कारितवानित्यर्थः, अन्तर्भावितण्यर्थः ।२९

सुग्रीवस्य हृता भार्या वालिना तं रघूत्तमः ।
जघानैकेन बाणेन ततो राज्येऽभ्यषेचयत् ॥३०

सुग्रीवं वानराणां स प्रेषयामास वानरान् ॥३१

दिग्भ्यो महाबलान् वीरान् भवत्याः परिमार्गणे ।
गच्छन्तं राघवो दृष्ट्वा मामभाषत सादरम् ॥३२

त्वयि कार्यमशेषं मे स्थितं मारुतनन्दन !
ब्रूहि मे कुशलं सर्वं सीतायै लक्ष्मणस्य च ॥३३

अङ्गुलीयकमेतन्मे परिज्ञानार्थमुत्तमम् ।
सीतायै दीयतां साधु मन्नामाक्षरमुद्रितम् ॥३४

इत्युक्त्वा प्रददौ मह्यं कराग्रादङगुलीयकम् ।
प्रयत्नेन मया नीतं देवि ! पश्याङ्गुलीयकम् ॥३५

इत्युक्त्वा प्रददौ देव्यै मुद्रिकां मारुतात्मजः।
नमस्कृत्वा स्थितो दूराद् बद्धाञ्जलिपुटो हरिः॥३६
दृष्ट्वा सीता प्रमुदिता रामनामाङ्किता तदा।
मुद्रिकां शिरसा धृत्वा स्रवदानन्दनेत्रजा॥३७

**दृष्ट्वेति**—श्रीरामनामाङ्कितमुद्रां प्राप्य स्रवन्ति आनन्दनेत्रजान्यश्रूणि यस्याः सा। तेन तत्प्राप्तौ श्रीरामप्राप्तिरेवामंस्तेति। तेन नामनामिनोरभेदो व्यक्तः। मुद्रास्थ-रामनामस्थितप्रेमासीतया छायासीतायाः परिचितिः कारितेति व्यक्तम्।३७

कपे! मे प्राणदाता त्वं बुद्धिमानसि राघवे।
भक्तोऽसि प्रियकारी च विश्वासोऽस्ति तवैव हि॥३८

**कपे इति**—हे कपे! त्वं मे प्राणदाता, मत्प्राणभूतप्रेमासीताश्रयरामनामाङ्कित-मुद्रादानादिति भावः। राघवे प्रियकारिभक्तोऽसि, अत एव तवैव विश्वासोऽस्ति। एतेन राज्ञीसमीपे सखीनामधिकार इति, तेन चारुशीलादिरूपेण रासे स्थितिरिति सूचितम्।३८

नो चेन्मत्सन्निधिं चान्यं पुरुषं प्रेषयेत्कथम्।
हनूमन्! दृष्टमखिलं मम दुःखादिकं त्वया॥३९

एतदेव द्रढयति **नो चेदित्यादिना**।३९

सर्वं कथय रामाय यथा मे जायते दया।
मासद्वयावधिप्राणा स्थास्यन्ति मम सत्तम!॥४०
नागमिष्यति चेद्रामो भक्षयिष्यति मां खलः।
अतः शीघ्रं कपीन्द्रेण सुग्रीवेण समन्वितः॥४१
वानरानीकपैः सार्धं हत्वा रावणमाहवे।
सपुत्रं सबलं रामो यदि मां मोचयेत्प्रभुः॥४२
तत्तस्य सदृशं वीर्यं वीरवर्णपवर्णितम्।
यथा मां तारयेद्रामो हत्वा शीघ्रं दशाननम्॥४३

**तत्तस्येति**—तत्तदा वीरैः वर्णपैर्ब्राह्मणैश्च वर्णितं तस्य वीर्यं सदृशं भवेत्, यथा वर्णितं भवेदन्यथा विपरीतमेवेत्यर्थः।४३

तथा यतस्व हनुमन्! वाचा धर्ममवाप्नुहि।
हनुमानपि तामाह देवि! दृष्टो यथा मया॥४४

रामः सलक्ष्मणः शीघ्रमागमिष्यति सायुधः।
सुग्रीवेण ससैन्येन हत्वा दशमुखं बलात् ।।४५
समानेष्यति देवि! त्वामयोध्यां नात्र संशयः।
तमाह जानकी रामः कथं वारिधिमाततम् ।।४६
तीर्त्वाऽयास्यत्यमेयात्मा वानरानीकपैः सह।
हनूमानाह मे स्कन्धावारुह्य पुरुषर्षभौ ।।४७
आयास्यतः ससैन्यश्च सुग्रीवो वानरेश्वरः।
विहायसा क्षणेनैव तीर्त्वा वारिधिमाततम् ।।४८
निर्दहिष्यति रक्षौघांस्त्वत्कृते नात्र संशयः।
अनुज्ञां देहि मे देवि! गच्छामि त्वरयान्वितः।।४९
द्रष्टुं रामं सह भ्रात्रा त्वरयामि तवान्तिकम्।
देवि! किञ्चिदभिज्ञानं देहि मे येन राघव.।।५०
विश्वसेत् स प्रयत्नेन ततो गन्ता समुत्सुकः।
ततः किञ्चिद्विचार्याथ सीता कमललोचना।।५१

**विश्वसेदिति**—किञ्चिद्विचार्य मत्पाणिग्रहणकाले जनकेन दशरथाय दत्त इति, एतद्दाने दशरथजनकयोः स्मरणमित्यतो चूडामणिर्दातव्य इति विचार्य।५१

विमुच्य केशपाशान्ते स्थितं चूडामणिं ददौ।
अनेन विश्वसेद्रामस्त्वां कपीन्द्र! सलक्ष्मणः।
अभिज्ञानार्थमन्यच्च वदामि तव सुव्रत! ।।५२

**विमुच्येति**—चूडामणिं ददौ, एतेन दुःखसागरे मग्नायाः मे चूडैवावशिष्टेति तां गृहीत्वा [1]त्वतो मुद्धारेति प्रार्थना व्यक्ता। यद्वा दुःखसागरे मग्नस्य [2]रावणस्याविहिता, भक्तिरूपचूडावशिष्टेति तामङ्गीकृत्य तमुद्धरस्वेति सूचितम्।५२

चित्रकूटगिरौ पूर्वमेकदा रहसि स्थितः।
मदङ्के शिर आधाय निद्राति रघुनन्दनः।।५३

---

१. वाक्यांशः अस्पष्टः, प्रसङ्गेन 'ततो मामुद्धरे' इति प्रतीयते। २. रावणस्य विहिता भक्तिचूडावशिष्टेति मत्पुस्तके।

ऐन्द्रः काकस्तदागत्य नखैस्तुण्डेन चासकृत्।
मत्पादाङ्गुष्ठमारक्तं विददारामिषाशया ॥५४

ततो रामः प्रबुद्ध्याथ दृष्ट्वा पादं कृतव्रणम्।
केन भद्रे! कृतं चैतद्विप्रियं मे दुरात्मना ॥५५

इत्युक्त्वा पुरतोऽपश्यद्वायसं मां पुनः पुनः।
अभिद्रवन्तं रक्तास्यनखतुण्डं चुकोप ह ॥५६

तृणमेकं समादाय दिव्यास्त्रेणाभियोज्य तत्।
चिक्षेप लीलया रामो वायसोपरि तज्ज्वलत् ॥५७

अभ्यद्रवद् वायसं स भीतो लोकान् भ्रमन् पुनः।
इन्द्रब्रह्मादिभिश्चापि न शक्यो रक्षितुं तदा ॥५८

**अभ्यद्रवदिति**—एतत् सर्ववृत्तान्तेन मच्चरणे [1]चुचुघातं कुर्वतो महापराधिन इन्द्रपुत्रस्यापराधमविगणय्य तं पालितवानसि। अयं मुक्त्यभिलाषी मन्मातुरुत्सङ्गे मां[2] स्थाप्य मातृवन्मामानीतवानतः कथमस्यापराधं गणयन् मुक्तिं दातुं विलम्बसे इति सूचितम् ।५८

रामस्य पादयोरग्रेऽपतद् भीत्या दयानिधेः।
शरणागतमालोक्य रामस्तमिदमब्रवीत् ॥५९

अमोघमेतदस्त्रं मे दत्त्वैकाक्षमितो व्रज।
सव्यं दत्त्वा गतः काक एवं पौरुषवानपि ॥६०

उपेक्षते किमर्थं मामिदानीं सोऽपि राघवः।
हनूमानपि तामाह श्रुत्वा सीतानुभाषितम् ॥६१

काकवृत्तान्तनिवेदनेनेदं सूचितम्, रमावैकुण्ठवासिनारायणः भागवतापराधिनं दुर्वाससं न रक्षितवान्। अयं तु प्रेमासीतापराधिनो काकस्य रक्षां बाणाङ्कितं कृत्वा कृतवान्। अन्यजन्मोपार्जितापराधास्तु भस्मीभूता एवाद्यापि पुनरेवं मा करोत्विति रक्षां कृतवान्। तेन शरणागतवात्सल्यातिशयो व्यक्तः तदेवाह **उपेक्षते इत्यादिना** ।६१

देवि! त्वां यदि जानाति स्थितामत्र रघूत्तमः।
करिष्यति क्षणाद्भस्म लङ्कां राक्षसमण्डिताम् ॥६२

---

१. चञ्चुघातम् इत्युचितः पाठः। २. स्थाप्य इति प्रयोगश्चिन्त्यः।

जानकी प्राह तं वत्स ! कथं त्वं योत्स्यसेऽसुरैः।
अतिसूक्ष्मवपुः सर्वे वानराश्च भवादृशाः॥६३

श्रुत्वा तद्वचनं देव्यै पूर्वरूपमदर्शयत्।
मेरुमन्दरसङ्काशं रक्षोगणविभीषणम्॥६४

दृष्ट्वा सीता हनूमन्तं महापर्वतसन्निभम्।
हर्षेण महताविष्टा प्राह तं कपिकुञ्जरम्॥६५

समर्थोऽसि महासत्त्व ! द्रक्ष्यन्ति त्वां महाबलम्।
राक्षस्यस्ते शुभः पन्था गच्छ रामान्तिकं द्रुतम्॥६६

बुभुक्षितः कपिः प्राह दर्शनात् पारणं मम।
भविष्यति फलैः सर्वैस्तव दृष्टौ स्थितैर्हि मे॥६७

**बुभुक्षित इति**—फलादि मूलादि वा दातुमशक्तं[1] जानकीं प्रत्ययुक्तमपि क्षुधानिवेदनं कृतम्, तेन मद्बलं श्रीजानकी ज्ञातुमिच्छतीत्यभिप्रेत्य क्षुधामिषेण श्रीरामानाज्ञापित-वाटिकोत्पाटनलङ्कादहने—आज्ञां प्रार्थितवानिति व्यक्तम्।६७

तथेत्युक्तः स जानक्या भक्षयित्वा फलं कपिः।
ततः प्रस्थापितो गच्छञ्जानकीं प्रणिपत्य सः।
किञ्चिद् दूरमथो गत्वा स्वात्मन्येवानुचिन्तयत्॥६८

कार्यार्थमागतो दूतः स्वामिकार्याविरोधतः।
अन्यत्किञ्चिदसम्पाद्य गच्छत्यधम एव सः॥६९

अतोऽहं किञ्चिदन्यच्च कृत्वा दृष्ट्वाथ रावणम्।
सम्भाष्य च ततो रामदर्शनार्थं व्रजाम्यहम्॥७०

**अतोऽहमिति**—अन्यत्किञ्चिदित्यनेन युद्धादिकं, तेन बलेनास्य बलस्य सेनायाः परिमाणञ्च ज्ञातं भविष्यतीति व्यक्तम्। रावणं दृष्ट्वेत्यनेन तत्समीपं गत्वा श्रीराम-वैभवश्रवणात् ये केचन शुद्धात्मानस्ते भेदं प्राप्नुयुस्तदा ममोत्तमदूतता ख्यातिं यास्यतीति व्यज्यते।७०

इति निश्चित्य मनसा वृक्षखण्डान्महाबलः।
उत्पाट्याशोकवनिकां निर्वृक्षामकरोत्क्षणात्॥७१

---

१. 'अशक्तामिति' साधीयान् पाठः।

इतीति—उत्पाट्येति। वृक्षानुत्पाटितवानेतेन तेषां जानक्याः विरहोद्दीपकत्वाद्-दुःखकारकत्वं व्यज्यते। लङ्कादाहो भविष्यति तत्र वृक्षसंसर्गेण सीताश्रयो वृक्षः मा दह्यादित्याशङ्कया वृक्षानुत्पाटितवानिति हेतुर्व्यक्तः।७१

सीताश्रयनगं त्यक्त्वा वनं शून्यं चकार सः।
उत्पाटयन्तं विपिनं दृष्ट्वा राक्षसयोषितः॥७२
अपृच्छञ्जानकीं कोऽसौ वानराकृतिरुद्भटः॥७३

**जानक्युवाच—**

भवत्य एव जानन्तु मायां राक्षसनिर्मिताम्।
नाहमेनं विजानामि दुःखशोकसमाकुला॥७४

**भवत्य इति**—नानारूपकल्पनाविषयिणीं कौटिल्यादिरूपां राक्षसनिर्मितां मायां भवत्य एव जानन्तु अहं न जानामि। एनमहं विजानामि वानरमिति शेषः। तेन नानारूपकरो राक्षसश्चेत्तर्हि भवत्य एव जानन्तु अहन्तु वानरमेव जानामीति भावः।७४

इत्युक्तास्त्वरितं गत्वा राक्षस्यो भयपीडिताः।
हनूमता कृतं सर्वं रावणाय न्यवेदयन्॥७५
देव! कश्चिन्महासत्त्वो वानराकृतिदेहभृत्।
सीतया सह संभाष्य ह्यशोकवनिकां क्षणात्॥
उत्पाट्य चैत्यप्रासादं बभञ्जामितविक्रमः॥७६
प्रासादरक्षिणः सर्वान् हत्वा तत्रैव तस्थिवान्।
तच्छ्रुत्वा तूर्णमुत्थाय वनभङ्गं महाप्रियम्॥७७

**प्रासादरक्षिण इति**—वनभङ्गं महाप्रियमित्यनेन मत्स्वप्नः सत्यो जात इत्यतः श्रीरामः शीघ्रमागत्य सकुलं मां निहत्य मोक्षं दास्यतीति रावणस्य हर्षातिशयो ध्वन्यते।७७

किङ्करान् प्रेषयामास नियुतं राक्षसाधिपः।
निर्भग्नचैत्यप्रासादप्रथमान्तरसंस्थितः॥७८

**किङ्करानिति**—नियुतं दशकोटयः। निर्भग्नो यः चैत्यप्रासादस्तस्य प्रथमं यदन्तरं प्रथमा या भूमिस्तत्र संस्थितः।७८

हनूमान् पर्वताकारो लोहस्तम्भकृतायुधः।
किञ्चिल्लाङ्गूलचलनो रक्तास्यो भीषणाकृतिः॥७९

आयान्तं तं महासङ्घं राक्षसानां ददर्श सः।
चकार सिंहनादं च श्रुत्वा ते मुमुहुर्भृशम् ॥८०

हनूमन्तमथो दृष्ट्वा राक्षसा भीषणाकृतिम्।
निर्जघ्नुर्विविधास्त्रौघैः सर्वराक्षसघातिनम् ॥८१

तत उत्थाय हनुमान् मुद्‌गरेण समन्ततः।
निष्पिपेष क्षणादेव मशकानिव यूथपः ॥८२

निहतान् किङ्करान् श्रुत्वा रावणः क्रोधमूर्च्छितः।
पञ्च सेनापतींस्तत्र प्रेषयामास दुर्मदान् ॥८३

हनूमानपि तान् सर्वाँल्लोहस्तम्भेन चाहनत्।
ततः क्रुद्धो मन्त्रिसुतान् प्रेषयामास सप्त सः ॥८४

**हनूमानपीति**—मन्त्रिसुतान् सप्त प्रेषयामासेत्यनेन सप्तलोकविजयिन इति सूचितम्। तेन रावणस्य सर्वलोकविजयित्वञ्च (व्यज्यते)।८४

आगतानपि तान् सर्वान् पूर्ववद्वानरेश्वरः।
क्षणान्निःशेषतो हत्वा लोहस्तम्भेन मारुतिः ॥८५

पूर्वस्थानमुपाश्रित्य प्रतीक्षन् राक्षसान् स्थितः।
रावणोऽपि हतान् दृष्ट्वा सप्त तान् मन्त्रिणो वरान् ॥८६

**रावण उवाच—**

अक्षयं शीघ्रमेहि त्वं वानरस्य वधाय च।
अयुतं राक्षसानाञ्च गृहीत्वा वनमध्यगम् ॥
वानरं बन्धयित्वा तं समानय ममान्तिकम् ॥८७

ततो जगाम बलवान् कुमारोऽक्षः प्रतापवान्।
तमुत्पपात हनुमान् दृष्ट्वाऽकाशे समुद्‌गरः ॥८८

गगनात्त्वरितो मूर्द्धिन मुद्‌गरेण व्यताडयत्।
हत्वा तमक्षं निःशेषं बलं सर्वं चकार सः ॥८९

ततः श्रुत्वा कुमारस्य वधं राक्षसपुङ्गवः।
क्रोधेन महताविष्ट इन्द्रजेतारमब्रवीत् ॥९०

पुत्र! गच्छाम्यहं तत्र यत्रास्ते पुत्रहा रिपुः।
हत्वा तमथवा बद्ध्वा आनयिष्यामि तेऽन्तिकम् ॥९१

इन्द्रजित् पितरं प्राह त्यज शोकं महामते!।
मयि स्थिते किमर्थं त्वं भाषसे दुःखितं वचः ॥९२

बद्ध्वाऽऽनेष्ये द्रुतं तात! वानरं ब्रह्मपाशतः।
इत्युक्त्वा रथमारुह्य राक्षसैर्बहुभिर्वृतः ॥९३

**बद्ध्वेति**—ब्रह्मपाशत इत्यादिना श्रीहनुमतोऽजेतृत्वम् तेन श्रीरामस्य तद्भक्तानाञ्च ब्रह्मण्यताऽतिशयो व्यज्यते।९३

जगाम वायुपुत्रस्य समीपं वीरविक्रमः।
ततोऽतिगर्जितं श्रुत्वा स्तम्भमुद्यम्य वीर्यवान् ॥९४

उत्पपात नभोदेशे गरुत्मानिव मारुतिः।
ततो भ्रमन्तं नभसि हनूमन्तं शिलीमुखैः ॥९५

विद्ध्वा तस्य शिरोभागमिषुभिश्चाष्टभिः पुनः।
हृदयं पादयुगलं षड्भिरेकेन बालधिम् ॥९६

भेदयित्वा ततो घोरं सिंहनादमथाकरोत्।
ततोऽतिहर्षाद्धनुमान् स्तम्भमुद्यम्य वीर्यवान् ॥९७

जघान सारथिं साश्वं रथं चाचूर्णयत् क्षणात्।
ततोऽन्यं रथमादाय मेघनादो महाबलः ॥९८

शीघ्रं ब्रह्मास्त्रमादाय बद्ध्वा वानरपुङ्गवम्।
निनाय [1]निकटे राज्ञो रावणस्य महाबलः ॥९९

यस्य नाम सततं जपन्ति ये-
ऽज्ञानकर्मकृतबन्धनं क्षणात्।
सद्य एव परिमुच्य तत्पदं,
यान्ति कोटिरविभासुरं शिवम् ॥१००

---

१. निकटम् इति समीचीनः।

तस्यैव रामस्य पदाम्बुजं सदा,
हृत्पद्ममध्ये सुनिधाय मारुतिः।
सदैव निर्मुक्तसमस्तबन्धनः,
किं तस्य पाशैरितरैश्च बन्धनैः ॥१०१

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
सुन्दरकाण्डे तृतीयोऽध्यायः।३

**यस्येति**—यस्येति द्वाभ्यां श्रीहनुमतो बन्धनाभावेऽपि श्रीरामकार्यार्थमुपहासजनकत्वं बन्धनमप्यङ्गीकृत्य तत्र गत इति व्यज्यते। तेन जगदुपदेशकर्तृत्वञ्च। तेन च हनुमतः आचार्यत्वम्। १००-१०१।

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां सुन्दरकाण्डे
तृतीयोऽध्यायः।३

⊙

---

१. इति तृतीयोऽध्यायः इति रा० व० पु०।

## अथ चतुर्थोऽध्यायः

शम्भुरुवाच—

यान्तं कपीन्द्रं धृतपाशबन्धनं,
विलोकयन्तं नगरं विभीतवत्।
अताडयन् मुष्टितलैः सुकोपनाः,
पौराः समन्तादनुयान्त ईक्षितुम्॥१

ब्रह्मास्त्रमेनं क्षणमात्रसङ्गमं,
कृत्वा गतं ब्रह्मवरेण सत्वरम्।
ज्ञात्वा हनूमानपि वल्गुरज्जुभि-
र्धृतो ययौ कार्यविशेषगौरवात्॥२

सभान्तरस्थस्य च रावणस्य तं,
पुरो निधायाह बलारिजित्तदा।
बद्धो मया ब्रह्मवरेण वानरः,
समागतोऽनेन हता महासुराः॥३

सभान्तरस्थस्येति—ब्रह्मवरेण बद्ध इत्यनेन हनुमन्तं बद्धुं मम शक्तिर्नासीत्। किन्तु ब्रह्मवरं स्वीकृत्य स्वयमेव बद्धोऽभूदिति। [1][तेन च ब्रह्मवरेण ब्रह्मास्त्रबन्धात् स्वयमेव मुक्तोऽभूदिति व्यक्तम्]।३

यद्युक्तमत्राऽऽर्य विचार्य मन्त्रिभि-
र्विधीयतामेष न लौकिको हरिः।
ततो विलोक्याह स रावणेश्वरः,
प्रहस्तमग्रे स्थितमञ्जनाद्रिभम्॥४

यद्युक्तमिति—न लौकिक इत्यनेन इन्द्रजितः सीता[2]विषयकमत्कृततर्जनं श्रुत्वा सकुलस्य मम मोक्षाय शीघ्रं श्रीराममानयत्विति रावणाऽभिप्रायाभिज्ञत्वं व्यज्यते।४

---

१. [ ] एतत् कोष्ठान्तर्गतांशः रा० व० पु० नास्ति। २. विषयकृत इति मत्पुस्तके।

प्रहस्त ! पृच्छैनमसौ किमागतः,
किमत्र कार्यं कुत एव वानरः।
वनं किमर्थं सकलं विनाशितं,
हताः किमर्थं मम राक्षसा बलात् ॥५

ततः प्रहस्तो हनुमन्तमादरा-
त्पप्रच्छ केन प्रहितोऽसि वानर ! ।
भयञ्च ते मास्तु विमोक्ष्यसे मया,
सत्यं वदस्वाखिलराजसन्निधौ ॥६

ततोऽतिहर्षात्पवनात्मजो रिपुं,
निरीक्ष्य लोकत्रयकण्टकासुरम्।
वक्तुं प्रचक्रे रघुनाथसत्कथां,
क्रमेण रामं मनसा स्मरन् मुहुः ॥७

**तत इति**—प्रहस्तमनादृत्य रावणं प्रत्युक्तवानेतेन श्रीहनूमतो निर्भयत्वं, तेन निर्बन्धनत्वञ्च गम्यते ।७

शृणु स्फुटं देवगणाद्यमित्र हे !,
रामस्य दूतोऽहमशेषहृत्स्थितेः।
यस्याखिलेशस्य हृताऽधुना त्वया,
भार्या स्वनाशाय शुनेव सद्धविः ॥८

**शृण्विति**—देवगणाद्यमित्रेति-ये देवास्त्वया जितास्तेषां दूतो नाहमस्मीति भावः। **अशेषहृत्स्थितेः**—अशेषाणां जीवेश्वरमायाकालादीनां हृदये स्थितस्य। तेन यदि मां जिघांसिष्यसे तर्हि नाहं हन्तुं शक्यः सर्वत्र पूर्णत्वात् स रक्षिष्यत्येवेति सूचितम् ।८

स राघवोऽभ्येत्य मतङ्गपर्वतं,
सुग्रीवमैत्रीमनलस्य सन्निधौ।
कृत्वैकबाणेन निहत्य वालिनं,
सुग्रीवमेवाधिपतिं चकार ॥९

ननु सर्वत्र व्यापकश्चेत्तर्हि मां निहत्य श्रीजानकीं कथं नानीतवान्, त्वां किमर्थं प्रेषितवानिति चेत्तत्राह **स राघव इति**—रंघते सर्वत्र गच्छतीति रघुः, रघुरेव राघवः। तेन तस्य लीलाकरस्वभावत्वं व्यज्यते। तेन मत्प्रेषणमपि लीलैव। तेन लीलां कृत्वा त्वां हनिष्य-

त्येवेति, तेन च तत्कीर्तनश्रवणाभ्यां बहवो जीवास्तरिष्यन्तीति हेतुः सूचितः। एकबाणेन त्वज्जयिनमिति शेषः। [1]तेन वालिवत्त्वामपि हनिष्यति इति व्यक्तम्।[2] वालिनं निहत्य सुग्रीवमधिपं चकारेत्यनेन इतो गत्वा यः कोऽपि रामं शरणं गच्छेत्, रावणं निहत्य श्रीरामः तस्मै लङ्काधिपत्यं दास्यत्येवेति व्यज्यते, तेन भेदः सूचितः।९

स वानराणामधिपो महाबली,
महाबलैर्वानरयूथकोटिभिः।
रामेण सार्धं सह लक्ष्मणेन भोः!,
प्रवर्षणेऽमर्षयुतोऽवतिष्ठते ॥ १०

**स इति**—वानरयूथकोटिभिः सह अमर्षयुतः क्रोधयुतोऽवतिष्ठत इत्यनेन न त्वमेवैकः मार्यसे किन्तु ससैन्यः सकुल इति सूचितम्।१०

सञ्चोदितास्तेन महाहरीश्वरा,
धरासुतां मार्गयितुं दिशो दश।
तत्राहमेकः पवनात्मजः कपिः,
सीतां विचिन्वञ्छनकैः समागतः॥११

**सञ्चोदिता इति**—तत्राहमेक इति-यथाऽहमस्मि तथैव सर्वे इति, तेन भयजनकत्वमिति व्यज्यते। शनकैः सीतां समागत इत्यनेन एतत्समुद्रलङ्घने न मद्वेगः। तेन यदि वेगं कुर्याम् तर्ह्यस्माकं सप्त समुद्रा अपि [3]गोष्पदादप्यल्पा इति सूचितम्। तेन यथाहं समुद्रमतरं तथा सर्वेऽपि तरिष्यन्तीति। तेन च सुग्रीवादिभिः सहागत्य ससैन्यं त्वां हनिष्यत्येवेति।११

दृष्ट्वा मया पद्मपलाशलोचना,
सीता कपित्वाद्विपिनं विनाशितम्।
दृष्ट्वा ततोऽहं रभसा समागतान्,
मां हन्तुकामान् धृतचापसायकान्॥१२

**दृष्ट्वेति**—दृष्ट्वेत्यनेन यदि गोपायितुमिच्छसि तर्हि नेयं गोपितुं शक्येति सूचितम्।१२

---

१. तः २. पर्यंतभागः रा० व० पु० नास्ति। ३. गोष्पदादत्यल्पा, इति मत्पुस्तके।

मया हतास्ते परिरक्षितं वपुः,
प्रियो हि देहोऽखिलदेहिनां प्रभो!।
ब्रह्मास्त्रपाशेन निबध्य मां ततः,
समागमन् मेघनिनादनामकः॥१३

**मयेति**—श्रीरामस्य प्रतिभटोऽयमिति ज्ञात्वा प्रभो! इति रावणस्य सम्बुद्धिः। तेन श्रीरामे बहुमानो व्यक्तः।१३

स्पृष्ट्वैव मां ब्रह्मवरप्रभावत-
स्त्यक्त्वा गतं सर्वमवैमि रावण!।
तथाप्यहं बद्ध इवागतो हितं,
प्रवक्तुकामः करुणारसार्द्रधीः॥१४

**स्पृष्ट्वैवेति**—त्यक्त्वा गतं ब्रह्मास्त्रमिति शेषः। करुणारसार्द्रधीरित्यनेन त्वं रामेण सार्धं योद्धुमनर्होऽसीति व्यज्यते। तेन श्रीरामशरणमन्तरा तव [1]जीवमं न सेत्स्यतीति तव दीनतां ज्ञात्वा मच्चित्तं दयार्द्रीभूतं भवति। श्रीरामस्तु करुणासागरत्वात्त्वयि सुतरां कृपां करिष्यत्येवेति ध्वन्यते। इदानीमेव सपरिकरस्य तव तच्छरणगमनमुचितमिति सूचितम्।१४

विचार्य लोकस्य विवेकतो गतिं,
न राक्षसीं बुद्धिमुपैहि रावण!।
दैवीं गतिं संसृतिमोक्षहेतुकीं,
समाश्रयात्यन्तहिताय देहिनः॥१५

**विचार्येति**—[2]विहितां भक्तिं त्यक्त्वाऽविहितां भक्तिमाश्रयेति सूचितम्। तेनाविहितभक्तौ सकुलस्य नाशानन्तरं मुक्तिः। विहितायां जीवन्मुक्तता।१५

त्वं ब्राह्मणो ह्युत्तमवंशसम्भवः,
पौलस्त्यपुत्रोऽसि कुबेरबान्धवः।
देहात्मबुद्ध्याऽपि च पश्य राक्षसो,
नास्यात्मबुद्ध्या किमु राक्षसो नहि॥१६

---

१. उभयपुस्तके समानः पाठः। 'जीवनं न' इत्युचितः प्रतीयते। २. विहितां भक्तिं त्यक्त्वा रा० व० पु० नास्ति।

ननु विहितायां ममानधिकार इति चेत्तत्राह, **त्वं ब्राह्मण इत्यादिपदेन**। ब्रह्म जानातीति ब्राह्मण इति व्युत्पत्तेः ब्रह्मज्ञस्य त्वं पुत्रोऽसीत्यतस्तव विहितभक्त्यधिकारोऽस्ति। त्वमपि श्रीरामं ज्ञात्वा भज, येन त्वयि ब्राह्मणता स्यादित्युक्त्वा उपदेशमाह।१६

शरीरबुद्धीन्द्रियदुःखसन्तति-
　　र्न ते न च त्वं तव निर्विकारतः।
अज्ञानहेतोश्च तथैव सन्तते-
　　रसत्वमस्याः स्वपतो हि दृश्यवत्॥१७

**शरीरेति**—शरीरबुद्धीन्द्रियदुःखसन्ततिः शरीरबुद्धीन्द्रियेभ्यो या दुःखसन्ततिः आधिव्याधिरूपा ते-तव न, तेषां चित्तधर्मत्वात्। त्वं च चित्तं नेति शेषः। तव निर्विकारतः विकाराभावात्। च पुनः अज्ञानहेतोः अस्याः सन्ततेः दुःखसन्ततेः अथ [1]असत्त्वं मिथ्यात्वं तत्र दृष्टान्तः स्वपतः पुरुषस्य दृश्यवत् दृश्य [2]इव।१७

इदन्तु सत्यं तव नास्ति विक्रिया,
　　विकारहेतुर्न च तेऽद्वयत्वतः।
यथा नभः सर्वगतं न लिप्यते,
　　तथा भवान् देहगतोऽपि सूक्ष्मकः।
देहेन्द्रियप्राणशरीरसङ्गतः,
　　स्वात्मेति बुद्ध्याखिलबन्धभाग्भवेत्॥१८

**इदमिति**—शरीरादिभ्यस्त्वं भिन्न इति यत् तदिदं सत्यं, त्वं राक्षसो नेत्यर्थः। तत्र हेतुः तव विक्रिया जन्मादिविकारः न। अतः विकारहेतुः मूलाज्ञानं, ब्रह्माऽहमस्मीत्येवं रूपश्च न। कुतः अद्वयत्वतः अः श्रीरामः द्वयं द्वितीयः स्वामित्वेन यस्य सः, तस्य भावः तस्माद्[3]भगवद्भक्तत्वात्। तत्र दृष्टान्तः यथा सर्वगतोऽपि नभः रज आदिविकारैर्न लिप्यते, तथा सूक्ष्मकः जीवः सर्वशरीरव्याप्तोऽपि शरीरधर्मैर्न लिप्यते। ननु तर्हि मुक्तबद्धसंसारिव्यवस्था किं नास्त्येवास्तीत्याह—देहेत्यादि देहेन्द्रियप्राणशरीरप्रसङ्गतः तद्विवेकाग्रहात् तेषु स्वात्मेति बुद्ध्याऽखिलबन्धभाग्भवेत्।१८

---

१. सत्त्वम्, मम पुस्तके। २. एवम्, मम पुस्तके। ३. भक्तत्वात् मम पुस्तके।

चिन्मात्रमेवाहमजोऽहमक्षरो,
ह्यानन्दभावोऽहमिति प्रमुच्यते।
देहोऽप्यनात्मा पृथिवीविकारजो,
न प्राण आत्मानिल एष एव सः॥१९

एवं संसारिव्यवस्थामुक्त्वा बद्धमुक्तव्यवस्थामाह—**चिन्मात्रमिति**- एवं देहात्मनोः पृथग्भावनया यदा केवलात्मरूपे तिष्ठति तदा भगवद्दत्तषष्ठशरीरेण श्रीरामं पश्यतीति।१९

मनोऽप्यहङ्कारविकार एव नो,
न चापि बुद्धिः प्रकृतेर्विकारजा।
आत्मा चिदानन्दमयोऽविकारवा-
न्देहादिसङ्घाद् व्यतिरिक्त ईश्वरः॥२०
निरञ्जनो मुक्त उपाधितः सदा,
ज्ञात्वैवमात्मानमितो विमुच्यते।
अतोऽहमात्यन्तिकमोक्षसाधनं,
वक्ष्ये शृणुष्वावहितो महामते! ॥२१

**मन इति**—इदानीमद्वयत्वत इत्यनेनोपन्यस्तं जीवेश्वरयोः स्वरूपं दर्शयन् स्वस्वरूपज्ञानपूर्वकं ईश्वरज्ञानाज्जीवस्य मुक्तिमाह—आत्मेति, आत्मा जीवः आनन्दमयः अतः अविकारवान् अत्र हेतुः देहादिसंघात् व्यतिरिक्तः ईश्वरस्तु उपाधितः सदा मुक्तः अतो निरञ्जनः, मायासम्बन्धरहितः। एवमात्मानमीश्वरं रामं ज्ञात्वा इतः संसाराद्विमुच्यते।२०-२१।

विष्णोर्हि भक्तिः सुविशोधनं धिय-
स्ततो भवेज्ज्ञानमतीव निर्मलम्।
विशुद्धतत्त्वानुभवो भवेत्ततः,
सम्यग्विदित्वा परमं पदं व्रजेत्॥२२

तदेव मुक्तिसाधनमाह **विष्णोरिति**—विष्णोः सगुणा भक्तिः, धियोऽन्तःकरणस्य विशोधनं ततोऽतीवनिर्मलज्ञानं ब्रह्मरूपप्राप्तिः ततो विशुद्धतत्त्वस्य श्रीरामस्यानुभवः तत्सम्यग्विदित्वा प्रेम्णा ज्ञात्वा परमं पदं साकेतं व्रजेत्। उक्तञ्च गीतासु 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्॥ भक्त्या

मामभिजानाति यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर-मि'तिः।२२

अतो भजस्वाऽद्य हरिं रमापतिं,
रामं पुराणं प्रकृतेः परं विभुम्।
विसृज्य मौर्ख्यं हृदि शत्रुभावनां,
भजस्व रामं शरणागतप्रियम्।
सीतां पुरस्कृत्य सपुत्रबान्धवो,
रामं नमस्कृत्य विमुच्यसे भयात्।।२३

तदेव कथयति **अत इति**–रमापतिं रामं रामावेशाधिष्ठानमादिनारायणं भजस्व, शरणागतप्रियं राममावेशिनं नित्यद्विभुजं च भजस्व। शरणागतप्रियमितिपदेन साप-राधमपि त्वां कदापि न त्यक्ष्यतीति सूचितम्। सीतां पुरस्कृत्येत्यनेन सीतैव श्रीरामं प्रापयतीति सूचितम्।२३

रामं परात्मानमभावयञ्जनो,
भक्त्या हृदिस्थं सुखरूपमद्वयम्।
कथं परं तीरमवाप्नुयाज्जनो,
भवाम्बुधेर्दुःखतरङ्गमालिनः।।२४

**राममिति**—जनः परात्मानं परेषामीश्वराणामात्मानम् अन्तर्यामिनम्। तमी-श्वराणां परमं महेश्वरमिति, 'विष्ण्वाद्युत्तमदेहेषु प्रविष्टो देवताऽभवत्। मर्त्याद्यधम-देहेषु स्थितो भजति देवता।।' इत्यादि श्रुतेः। हृदिस्थमित्यनेन सौलभ्यगुण उक्तः। सुखरूपम् आनन्दस्वरूपम् रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति। अद्वयं समाभ्य-धिकशून्यमकारणं कारणाधिपो न चास्य कश्चिज्जनिता नचाधिपः, न तस्य कार्यं करणञ्च विद्यते, न तत्समश्चाभ्यधिकश्च दृश्यते इति श्रुतेः। एवम्भूतं रामं भक्त्या 'सा परानुरक्तिरीश्वरे' इत्यादि शाण्डिल्यसूत्रप्रतिपादितपरया भक्त्याऽभावयन् भावनामकुर्वन् दुःखतरङ्गमालिनो भवाम्बुधेस्तीरं कथमवाप्नुयात्, न कथमपीत्यर्थः। तेन श्रीरामः सर्वेषामीश्वरादीनामुपास्य एवेति व्यक्तम्। तेन शिवादयोऽपि ते साहाय्यं न करिष्य-न्तीति ध्वन्यते।२४

नो चेत्त्वमज्ञानमयेन वह्निना,
ज्वलन्तमात्मानमरक्षिताऽरिवत्।
नयस्यधोऽधः स्वकृतैश्च पातकै-
र्विमोक्षशङ्का न च ते भविष्यति।।२५

**नो चेदिति**—अधोऽधः आत्मानं नयसि नेष्यसि। अबोध इति पाठे नरकमिति शेषः [1]अधोऽधः नरकान्नरकं गमिष्यसि। तेन मदुक्तमङ्गीकरिष्यसि चेत्तव मुक्तिर्भविष्यतीति व्यज्यते[2]। नो चेदित्यादिना श्रीराम एव तव मित्रमिति प्रतीयते।२५

श्रुत्वाऽमृतास्वादसमानभाषितं,
तद्वायुसूनोर्दशकन्धरोऽसुरः।
अमृष्यमाणोऽतिरुषा कपीश्वरं,
जगाद रक्तान्तविलोचनो ज्वलन्॥२६

**श्रुत्वेति**—तद्वायुसूनोः अमृतास्वादसमानभाषितं दशकन्धरः श्रुत्वा कपीश्वरं जगाद। दशकन्धर इत्यत्र विंशतिकर्णकसादरश्रवणेन परिकराङ्कुरालङ्कारो व्यक्तः। तेन हनुमद्वचस्तस्यान्तःकरणे अतीवप्रियमभूदिति व्यक्तम्। कृतकबोधप्रकाशकत्वेन अहमेव मुक्तो न भविष्यामि किन्तु एभिः पापिष्ठैः राक्षसैः सह। तेन आत्माश्रितानां मोक्षेच्छा सूचिता।२६

कथं ममाग्रे विलपस्यभीतवत्,
प्लवङ्गमानामधमोऽसि दुष्टधीः।
क एष रामः कतमो वनेचरो,
निहन्मि सुग्रीवयुतं नराधमम्॥२७
त्वां चाद्य हत्वा जनकात्मजां ततो,
निहन्मि रामं सह लक्ष्मणं ततः।
सुग्रीवमग्रे बलिनं कपीश्वरं,
सवानरं हन्म्यचिरेण वानर!।
श्रुत्वा दशग्रीववचः स मारुति-
र्विवृद्धकोपेन दहन्निवासुरम्॥२८
न मे समा रावणकोटयोऽधम!,
रामस्य दासोऽहमपारविक्रमः।
श्रुत्वातिकोपेन हनूमतो वचो,
दशाननो राक्षसमेकमब्रवीत्॥२९

**न मे इति**—रे अधम! नीच! रावणकोटयः मे समाः न, तत्र हेतुः रामस्याहं दासः अतः अपारविक्रमः इति हनुमतो वचः श्रुत्वा अतिकोपेनोपलक्षितः दशाननः एकं राक्षस-

---

१. तः २. पर्यन्तभागः रा० व० पु० नास्ति।

मब्रवीत् वक्ष्यमाणमिति शेषः। रामस्य दासोऽहमित्यनेन रावणकोटयः मे समाः न इत्युक्तेऽपि अपारविक्रम इत्यनेन तव तु गणनैव नास्ति ('न कालस्य न शक्रस्य न विष्णोर्वितथस्य च। कर्माणि यानि श्रूयन्ते तानि युद्धे हनूमत' इत्यादिना) ब्रह्मविष्णुमहेशादिभ्योऽप्यधिकपराक्रमोऽहम्। तेन श्रीरामः [२]सर्वेश्वरेश्वर इति। तेन तद्दास्यं कुर्याश्चेत्तर्हि त्वमपि मत्तुल्यो भविष्यतीति सूचितम्।२९

पार्श्वे स्थितं मारय खण्डशः कपिं,
पश्यन्तु सर्वेऽसुरमित्रबान्धवाः।
निवारयामास ततो विभीषणो,
महासुरं सायुधमुद्यतं वधे॥
राजन्! वधार्हो न भवेत् कथञ्चन,
प्रतापयुक्तः परराजवानरः।३०

**पार्श्वे इति**—कपिं मारयेत्यनेन मम तु अविहितैवेष्टा अतस्तां न त्यक्ष्यामि, परन्तु अनेनोपदिष्टा परमोत्तमा विहितभक्तिः केभ्यो रोचते किन्नो वेति जिज्ञासा व्यक्ता। विभीषणो निवारितवानिति, तेन रावणायोपदिष्टां विहितभक्तिं विभीषणः स्वीचकारेत्यसङ्गत्यलङ्कारो व्यक्तः। परेषामीश्वराणां राजा श्रीरामः तस्य वानरः न वधार्हो भवेत्। कुतः प्रतापयुक्तः, एतेन तव तु श्रीरामहस्तेनैव मरणमभीष्टम्, तद्धननसमये अयं त्वामेव हन्याच्चेत्तर्हि त्वदभीष्टविघात एव स्यादिति व्यज्यते। प्रतापयुक्तै इति पाठे कालादिभिरपि वधार्हो न भवेत्।३०

[३](रामाय त्वं यमुद्दिश्य वधाय समुपस्थितः।)
हतेऽस्मिन् वानरे दूते वार्तां को वा निवेदयेत्॥३१
अतो वधसमं किञ्चिदन्यच्चिन्तय वानरे।
सचिह्नो गच्छतु हरिर्यद्दृष्ट्वाऽऽयास्यति द्रुतम्॥३२
रामः सुग्रीवसहितस्ततो युद्धं भवेत्तव।
विभीषणवचः श्रुत्वा रावणोऽप्येतदब्रवीत्॥३३

यदि श्रीरामपरत्वे तव सन्देहः स्यात्तर्हि परीक्षार्थमन्यत् किञ्चिन्निरूपयेत्याह अत इति द्वाभ्याम्।३२-३३।

---

१. ( ) कोष्ठगोऽयमंशो नावलोक्यते रा० व० पु०। २. सर्वेश्वर इति मत्पुस्तके।
३. ( ) एतत् कोष्ठान्तर्गतश्लोकांशः मदीये रा० व० पुस्तके च नास्ति।

वानराणां हि लाङ्गूले महामानो भवेत्किल।
अतो वस्त्रादिभिः पुच्छं वेष्टयित्वा प्रयत्नतः॥३४

**वानराणामिति**—वस्त्रादिभिः पुच्छं वेष्टयित्वा वह्निना योजयेति। तेन ईश्वरेश्वरश्रीरामदूतश्चेत्तर्हि तव वह्निरेव दग्धुं न शक्ष्यति। प्राकृतश्रीरामदूतो भवेत्तर्हि धक्ष्यत्येवेति परीक्षा कर्तव्येति सूचितम्।३४

वह्निना योजयित्वैनं भ्रामयित्वा पुरेऽभितः।
विसर्जयत पश्यन्तु सर्वे वानरयूथपाः॥३५

**वह्निनेति**—भ्रामयित्वा पुरेऽभित इत्यनेन लङ्कादिदृक्षोः श्रीहनुमतोऽभिप्रायं विभीषणो महाभागवतः ज्ञातवानिति ध्वनितम्। सर्वे वानरयूथपा इति, दग्धपुच्छमेनं पश्यन्तु। दृष्ट्वा स्वतस्ततोऽपि यत्नायिता भवेयुरिति भावः।३५

तथेति शणपट्टैश्च वस्त्रैरन्यैरनेकशः।
तैलाक्तैर्वेष्टयामासुर्लाङ्गूलं मारुतेर्दृढम्॥३६
पुच्छाग्रे किञ्चिदनलं दीपयित्वाऽथ राक्षसाः।
रज्जुभिः सुदृढं बद्ध्वा धृत्वा तं बलिनोऽसुराः॥३७
समन्ताद् भ्रामयामासुश्चोरोऽयमिति वादिनः।
तूर्यघोषैर्घोषयन्तस्ताडयन्तो मुहुर्मुहुः॥३८
हनूमताऽपि तत्सर्वं सोढं किञ्चिच्चिकीर्षुणा।
गत्वा तु पश्चिमद्वारसमीपं तत्र मारुतिः॥३९

**हनूमतेति**—पश्चिमद्वारात्प्रथमं पूर्वद्वारपर्यन्तं गत्वा पुनः पश्चिमद्वारसमीपं गत्वेत्यर्थः।३९

सूक्ष्मो बभूव बन्धेभ्यो निःसृतः पुनरप्यसौ।
बभूव पर्वताकारस्तत उत्प्लुत्य गोपुरम्॥४०
तत्रैकं स्तम्भमादाय हत्वा तान् रक्षिणः क्षणात्।
विकार्य कार्यशेषं स प्रासादाग्राद् गृहाद् गृहम्॥४१
उत्प्लुत्योत्प्लुत्य सन्दीप्तपुच्छेन महता कपिः।
ददाह लङ्कामखिलां साट्टप्रासादतोरणाम्॥४२

**उत्प्लुत्येति**—अखिलां लङ्कां ददाहेत्यनेन यत्र हनुमान्न जगाम तमपि देशं पवनसहायत्वादग्निर्ददाहेति व्यज्यते। तेन समुद्रप्रेरणया मैनाकः उत्प्लुत्य सेवामकार्षीत्।

तेन पृथिवीजलतत्त्वे पूर्वमेव सेवां कृतवन्तौ, लङ्कादाहे अग्निपवनौ आकाश अवकाश प्रदानेन सेवां कृतवान्। एवं पञ्चानामपि जडतत्त्वानां सेवाकारित्वम्। तेन चेतनाः सेवां कुर्वन्तीति किमु वक्तव्यमिति काव्यार्थापत्तिरलङ्कारो व्यक्तः।४२

हा तात! पुत्र! नाथेति क्रन्दमानाः समन्ततः।
व्याप्ताः प्रासादशिखरेऽप्यारूढा दैत्ययोषितः॥४३

देवता इव दृश्यन्ते पतन्त्यः पावकेऽखिलाः।
विभीषणगृहं त्यक्त्वा सर्वं भस्मीकृतं पुरम्॥४४

**देवतेति**——विभीषणगृहं त्यक्त्वा, तेन विभीषणोऽपि श्रीरामभक्त इति व्यक्तम्। [1]सर्वं भस्मीकृतमेतेन सुवर्णस्य द्रवीभावयोग्यत्वेऽपि भस्मभवनेन अग्निः सहायमात्रः हनुमत्क्रोधाग्निरेव तां ददाहेति व्यक्तम्।४४

तत उत्प्लुत्य जलधौ हनूमान् मारुतात्मजः।
लाङ्गूलं मज्जयित्वान्तः स्वस्थचित्तो बभूव ह॥४५

**तत इति**——स्वस्थचित्तो बभूवेत्यनेन लाङ्गूलमज्जनान्तरं सर्वलङ्कादाहाज्जानकी कथं रक्षिता भवेदित्युद्विज्य निर्दग्धलोममपि स्वपुच्छं दृष्ट्वा, यत्प्रभावान्मत्पुच्छमप्यग्निर्न ददाह, तां दग्धुं कथमग्निः शक्तः इति हेतुर्व्यक्तः।४५

वायोः प्रियसखित्वाच्च सीतया प्रार्थितोऽनलः।
न ददाह हरेः पुच्छं बभूवात्यन्तशीतलः॥४६

यन्नामसंस्मरणधूतसमस्तपापा-
स्तापत्रयानलमपीह तरन्ति सद्यः।
तस्यैव किं रघुवरस्य विशिष्टदूतः,
सन्तप्यते कथमसौ प्रकृतानलेन॥४७

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे सुन्दरकाण्डे चतुर्थोऽध्यायः।४

⊙

[2]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां व्यङ्ग्यप्रकाशिकायां सुन्दरकाण्डे चतुर्थोऽध्यायः।४

●

१. सर्वे भस्मीकृततमे, इति मम पुस्तके। २. इति चतुर्थोऽध्यायः इति रा० व० पु०।

## अथ पञ्चमोऽध्यायः

**श्रीमहादेव उवाच**—

ततः सीता नमस्कृत्य हनूमानब्रवीद्वचः।
आज्ञापयतु मां देवि! भवती रामसन्निधिम्॥१

**ततः इति**—ततः सीतां नमस्कृत्येत्यनेन एतादृशेऽनले श्रीहनुमान् कुशलमुक्तोऽस्तु वा न वेति जानकी शङ्कां नो कुर्यादिति विचार्य तत्समीपं गत इति हेतुर्व्यक्तः। तेन मयि वात्सल्यातिशयेन स्वकीयैश्वर्यं विस्मृत्य शोचिष्यतीति हनुमदाशयो गम्यते।१

गच्छामि रामस्त्वां द्रष्टुमागमिष्यति सानुजः।
इत्युक्त्वा त्रिःपरिक्रम्य जानकीं मारुतात्मजः॥२

**गच्छामीति**—त्रिः परिक्रम्येति प्रदक्षिणचतुष्टयं त्रिरावृत्य कृत्वेत्यर्थः।२

प्रणम्य प्रस्थितो गन्तुमिदं वचनमब्रवीत्।
देवि! गच्छामि भद्रं ते तूर्णं द्रक्ष्यसि राघवम्॥३

**प्रणम्येति**—भद्रं कल्याणं कर्तुमिति शेषः। तेनातिशीघ्रमेव श्रीराममानेष्यामीति-व्यक्तम्।३

लक्ष्मणञ्च ससुग्रीवं वानरायुतकोटिभिः।
ततः प्राह हनूमन्तं जानकी दुःखकर्षिता॥४
त्वां दृष्ट्वा विस्मृतं दुःखमिदानीं त्वं गमिष्यसि।
इतः परं कथं वर्ते रामवार्ताश्रुतिं विना॥५

**मारुतिरुवाच**—

यद्येवं देवि! मे स्कन्धमारोह क्षणमात्रतः।
रामेण योजयिष्यामि मन्यसे यदि जानकि!॥६

**सीतोवाच**—

रामः सागरमाशोष्य बद्ध्वा वा शरपञ्जरैः।
आगत्य वानरैः सार्धं हत्वा रावणमाहवे॥७

मां नयेद्यदि रामस्य कीर्तिर्भवति शाश्वती।
अतो गच्छ कथञ्चापि प्राणान् सन्धारयाम्यहम् ॥८

**राम इति**--सागरमाशोष्य वानरैः सार्द्धमागत्य आहवे रावणं हत्वा मां यदि नयेत्तर्हि रामस्य कीर्तिर्भवेदित्यनेन यावत् सकुलस्य रावणस्य मुक्तिं दास्यति तावदितोऽहं न गमिष्यामीति रामं प्रति प्रार्थना [1]व्यक्ता। तेन यद्येतादृशी लीला स्यात्तर्हि, तां श्रुत्वा पठित्वा च चतुर्युगीना जीवाः संसारं तरेयुरिति तदाशयो व्यक्तः। तेन स्वेच्छयैवाहम्--अत्रागता न तु रावणेनानीता। तेन तस्याः अधमोद्धारकत्वम्, तस्याः विरहातिशयं दृष्ट्वा सीता कथं जीविष्यतीति हनुमतो दुःखापहारकत्वञ्च व्यक्तम्।७-८।

इति प्रस्थापितो वीरः सीतया प्रणिपत्य ताम्।
जगाम पर्वतस्याग्रे गन्तुं पारं महोदधेः॥९
तत्र गत्वा महासत्त्वः पादाभ्यां पीडयन् गिरिम्।
जगाम वायुवेगेन पर्वतश्च महीतले॥१०
ततो महीसमानत्वं त्रिंशद्योजनमूर्च्छितः।
मारुतिर्गगनान्तःस्थो महाशब्दं चकार सः॥११

**तत इति**--यस्माद्गिरेरुत्प्लुतो हनुमान् स गिरिः महीसमानत्वं जगामेत्यनेन स्वबलातिशयं रावणस्य दर्शितवानिति व्यज्यते। तेन चेष्टया नाहं प्राकृतो वानरः किमुत श्रीराम इति हेतुर्व्यक्तः। यद्वा महीसमानत्वं पर्वतः जगाम इत्यनेन रामसेवानिवेशयोग्यकरणेच्छा व्यक्ता।११

तं श्रुत्वा वानराः सर्वे ज्ञात्वा मारुतिमागतम्।
हर्षेण महताविष्टा शब्दं चक्रुर्महास्वनम्॥१२
शब्देनैव विजानीमः कृतकार्यः समागतः।
हनूमानेष पश्यध्वं वानरा। वानरर्षभम्॥१३
एवं ब्रुवत्सु वीरेषु वानरेषु स मारुतिः।
अवतीर्य गिरेर्मूर्ध्नि वानरानिदमब्रवीत्॥१४
दृष्टा सीता मया लङ्का धर्षिता च सकानना।
सम्भाषितो दशग्रीवस्ततोऽहं पुनरागतः॥१५

**दृष्टेति**--सीता न दृष्टा मृता वेति शङ्का मा भूदित्यतः पूर्वं दृष्टेत्युक्त्वा तान् हर्षयामासेति भावः तेन हनुमतः सौहार्दम्।१५

---

१. मूले तु 'व्यक्तम्' इत्यस्ति।

इदानीमेव गच्छामो रामसुग्रीवसन्निधिम् ।
इत्युक्त्वा वानराः सर्वे हर्षेणालिङ्गय मारुतिम् ॥१६
केचिच्चुचुम्बुः लाङ्गूलं ननृतुः केचिदुत्सुकाः ।
हनूमता समेतास्ते जग्मुः प्रस्रवणं गिरिम् ॥१७
गच्छन्तो ददृशुर्वीरा वनं सुग्रीवरक्षितम् ।
मधुसंज्ञं तदा प्राहुरङ्गदं वानरर्षभाः ॥१८
क्षुधिताः स्मो वयं वीर ! देह्यनुज्ञां महामते ! ।
भक्षयामः फलान्यद्य पिबामोऽमृतवन्मधु ॥१९
सन्तुष्टा राघवं द्रष्टुं गच्छामोऽद्यैव सानुजम् ॥२०

**अङ्गद उवाच—**

हनूमान् कृतकार्योऽयं पिबतैतत् प्रसादतः ।
जक्षध्वं फलमूलानि त्वरितं हरिसत्तमाः ! ॥२१
ततः प्रविश्य हरयः पातुमारेभिरे मधु ।
रक्षिणस्ताननादृत्य दधिवक्त्रेण नोदिताः ॥२२
पिबतस्ताडयामासुर्वानरान् वानरर्षभाः ।
ततस्तान् मुष्टिभिः पादैश्चूर्णयित्वा पपुर्मधु ॥२३

**तत इति**—मधु पातुमारेभिरे, इत्यनया चेष्टया वानरांस्ताडयामासुरित्यनया चेष्टया च सुग्रीवं प्रति कार्यत्वं निवेदितवन्त इत्यवगम्यते ।२२-२३

ततो दधिमुखः क्रुद्धः सुग्रीवस्य स मातुलः ।
जगाम रक्षिभिः सार्धं यत्र राजा कपीश्वरः ॥२४

**तत इति**—सुग्रीवस्य ऋक्षरजस एव मातृपितृत्वे मातुल इत्युक्तिः कथमिति चेन्न, वालिसुग्रीवोत्पत्त्यनन्तरं ब्रह्माज्ञया ऋक्षरजाः किष्किन्धामागत्य दधिमुखभगिनीं परिणीतवानिति मातुलपदेनैवावगमात् ।२४

गत्वा तमब्रवीद् देव ! चिरकालाभिरक्षितम् ।
नष्टं मधुवनं तेऽद्य कुमारेण हनूमता ॥२५
श्रुत्वा दधिमुखेनोक्तं सुग्रीवो हृष्टमानसः ।
दृष्ट्वाऽऽगतो न सन्देहः सीतां पवननन्दनः ॥२६

नो चेन्मधुवनं द्रष्टुं समर्थः को भवेन्मम।
तत्रापि वायुपुत्रेण कृतं कर्म न संशयः।।२७

**नो चेदिति**——हनुमता कार्यं कृतमित्यनेन सुग्रीवस्य मेधातिशयः सूच्यते।२७

श्रुत्वा सुग्रीववचनं हृष्टो रामस्तमब्रवीत्।
किमुच्यते त्वया राजन्! वचः सीता कथान्वितम्।।२८
सुग्रीवस्त्वब्रवीद्वाक्यं देव! दृष्टावनीसुता।
हनुमत्प्रमुखा सर्वे प्रविष्टा मधुकाननम्।।२९
भक्षयन्ति स्म सकलं ताडयन्ति स्म रक्षिणः।
अकृत्वा देवकार्यं ते द्रष्टुं मधुवनं मम।।३०
न समर्थास्ततो देवी दृष्टा सीतेति निश्चितम्।
रक्षिणो! वो भयं मास्तु गत्वा ब्रूत ममाज्ञया।।३१
वानरानङ्गदमुखानानयध्वं ममान्तिकम्।
श्रुत्वा सुग्रीववचनं गत्वा ते वायुवेगतः।।३२
हनुमत्प्रमुखानूचुर्गच्छतेश्वरशासनात्।
द्रष्टुमिच्छति सुग्रीवः सरामो लक्ष्मणान्वितः।।३३
युष्मानतीव हृष्टास्ते त्वरयन्ति महाबलाः।
तथेत्यम्बरमासाद्य ययुस्ते वानरोत्तमाः।।३४
हनूमन्तं पुरस्कृत्य युवराजं तथाङ्गदम्।
रामसुग्रीवयोरग्रे निपेतुर्भुवि सत्वरम्।।३५
हनूमान् राघवं प्राह दृष्टा सीता निरामया।
साष्टाङ्गं प्रणिपत्याग्रे रामं पश्चाद्धरीश्वरम्।।३६

**हनूमानिति**——जानकी दृष्टा न वेति सन्दिह्य शरीरं नो त्यजेदिति आकाशान्निपतन्नेव दृष्टा सीता निरामयेत्युक्तवान्। तेन श्रीरामस्य विरहातिशयो ध्वनितः।३६

कुशलं प्राह राजेन्द्र! जानकी त्वां शुचान्विता।
अशोकवनिकामध्ये शिंशपामूलमास्थिता।।३७
राक्षसीभिःपरिवृता निराहारा कृशा प्रभो!।
हा राम! राम! रामेति शोचन्ती मलिनाम्बरा।।३८

**राक्षसीभिरिति**——राक्षसीभिरित्यादि दशभिः तां प्रथमं विश्वास्य पश्चादङ्गुलीयकं

दत्तमित्यनेन स्वस्य [1]दौत्यकौशल्यं द्योतितम्। तेन च भवद्दत्ताङ्गुलीयकशक्त्यैव मम बुद्धिकौशल्यं समुद्रोल्लङ्घनादिकं च जातमिति व्यज्यते।३८

एकवेणी मया दृष्टा शनैराश्वासिता शुभा।
वृक्षशाखान्तरे स्थित्वा सूक्ष्मरूपेण ते कथाम्॥३९
जन्मारभ्य तवात्यर्थं दण्डकागमनं तथा।
दशाननेन हरणं जानक्याः रहिते त्वयि॥४०
सुग्रीवेण यथा मैत्री कृत्वा वालिनिबर्हणम्।
मार्गणार्थं च वैदेह्याः सुग्रीवेण विसर्जिताः॥४१
महाबलाः महासत्त्वा हरयो जितकाशिनः।
गताः सर्वत्र सर्वे वै तत्रैकोऽहमिहागतः॥४२
अहं सुग्रीवसचिवो दासोऽहं राघवस्य हि।
दृष्टा यज्जानकी भाग्यात् प्रयासः फलितोऽद्य मे॥४३
इत्युदीरितमाकर्ण्य सीता विस्फारितेक्षणा।
केन वा कर्णपीयूषं श्रावितं मे शुभाक्षरम्॥४४
यदि सत्यं तदायातु मद्दर्शनपथं तु सः।
ततोऽहं वानराकारः सूक्ष्मरूपेण जानकीम्॥४५
प्रणम्य प्राञ्जलिर्भूत्वा दूरादेव स्थितः प्रभो!।
पृष्टोऽहं सीतया कस्त्वमित्यादि बहुविस्तरम्॥४६
मया सर्वं क्रमेणैव विज्ञापितमरिन्दम!।
पश्चान्मयार्पितं देव्यै भवद्दत्ताङ्गुलीयकम्॥४७
तेन मामतिविश्वस्ता वचनञ्चेदमब्रवीत्।
यथा दृष्टाऽस्मि हनुमन्! पीड्यमाना दिवानिशम्॥४८
राक्षसीनां तर्जनैस्तत् सर्वं कथय राघवम्।
मयोक्तं देवि! रामोऽपि त्वच्चिन्तापरिनिष्ठितः॥४९
परिशोचत्यहोरात्रं त्वद्वार्तां नाधिगम्य सः।
इदानीमेव गत्वाहं स्थितिं रामाय ते ब्रुवे॥५०

---

१. दौत्यल्यम् मत्पुस्तके।

रामः श्रवणमात्रेण सुग्रीवेण सलक्ष्मणः।
वानरानीकपैः सार्धमागमिष्यति तेऽन्तिकम् ।।५१
रावणं सकुलं हत्वा नेष्यति त्वां स्वकं पुरम्।
अभिज्ञां देहि मे देवि! यथा मां विश्वसेद्विभुः ।।५२
इत्युक्ता सा शिरोरत्नं चूडापाशस्थितं प्रियम्।
दत्त्वा काकेन यद्वृत्तं चित्रकूटगिरौ पुरा ।।५३
तदप्याहाश्रुपूर्णाक्षी कुशलं ब्रूहि राघवम्।
लक्ष्मणं ब्रूहि मे किञ्चिद् दुरुक्तं भाषितं पुरा ।।५४
तत्क्षमस्वाज्ञभावेन भाषितं कुलनन्दन!।
तारयेन्मां यथा रामस्तथा कुरु कृपान्वितः ।।५५
इत्युक्त्वा रुदती सीता दुःखेन महतावृता।
मयाप्याश्वासिता राम! वदता सर्वमेव ते ।।५६

[1]'वदता सर्वमेव ते' इत्यनेन तथा 'यद्येवं देवि! मे स्कन्धमारोहे'त्यादि—स्वप्रश्नोत्तररूपं 'मां नयेद्यदि रामस्य कीर्तिर्भवति शाश्वती'ति सीतासन्देशं (मारु)ति (:) नोक्तवान्। तेन सीतायास्तदुक्तानङ्गीकारे गमनासमर्थत्वेन सीताकृशतातिशयः रावणालये न यमाधिकारः स्वौद्धत्यञ्च (व्यज्येत) एतेन सीताया मदुक्तानङ्गीकारनिवेदने रामस्य दुःखा(ति) शयो भविष्यतीति हेतुः व्यक्तः। स्वौद्धत्यकथने लज्जालुत्वञ्च व्यक्तम्।

ततः प्रस्थापितो राम! त्वत्समीपमिहागतः।
तदा गमनवेलायामशोकवनिकां प्रियाम् ।।५७
उत्पाट्य राक्षसांस्तत्र बहून् हत्वा क्षणादहम्।
रावणस्य सुतं हत्वा रावणेनाभिभाष्य च ।।५८

**उत्पाट्येति**—बहून् राक्षसान् रावणस्य सुतञ्च हत्वेत्यादिना यदि मयैवैतत् कार्यं कृतं तदा भवता सर्वं सुकरमेवेति काव्यार्थापत्तिरलङ्कारो व्यक्तः। तेन शीघ्रमेव गत्वा रावणं निहत्य जानकीमानयेति व्यज्यते।५८

---

१. 'वदता सर्वमेव ते, इत्यारभ्य लज्जालुत्वञ्च व्यक्तम् इति पर्यन्तो भागः मदीये रामवनपुस्तके च 'रावणं सकुलं हत्वा' ५२ संख्यकश्लोकस्यानन्तरमासीत्, किन्तु तत्राप्रासङ्गिकत्वादत्र प्रदत्तः। नायमंशः कस्यापि श्लोकस्य व्याख्यात्मकः। पाठकानां सौकर्याय अस्मिन्नध्याये समागतश्लोकानामंशान् समुद्धृत्य प्रसङ्गप्रतिपादनपरः टीकाकारेण प्रकटीकृतः स्वविचारः। त्रुटितप्रायोऽयमंशः यथामति संस्कृतः।

लङ्कामशेषतो दग्ध्वा पुनरप्यगमं क्षणात् ।
श्रुत्वा हनूमतो वाक्यं रामोऽत्यन्तप्रहृष्टधीः ॥५९

**लङ्कामिति**—अत्यन्तप्रहृष्टधीरित्यनेन हनुमदनुक्तमपि रावणस्य स्वमुक्तिप्रार्थनां श्रीरामो ज्ञातवानिति व्यज्यते। अशेषतो लङ्कां दग्ध्वेत्यनेन लङ्कां प्रदहतो मम रोमापि न दग्धं, तेन च भवता सार्धं लङ्कां गत्वा रावणेन सह युद्धं करिष्यतामपि वानराणां रोमापि न स्खलिष्यतीति व्यक्तम् ।५९

हनूमंस्ते कृतं कार्यं देवैरपि सुदुष्करम् ।
उपकारं न पश्यामि तव प्रत्युपकारिणः ॥६०

**हनूमन्निति**—उपकारं न पश्यामीत्यनेन श्रीरामस्य कृतज्ञतातिशयो व्यक्तः ।६०

इदानीं ते प्रयच्छामि सर्वस्वं मम मारुते ! ।
इत्यालिङ्ग्य समाकृष्य गाढं वानरपुङ्गवम् ॥६१

**इदानीमिति**—समाकृष्येत्यनेन दास्ये स्थितमपि हनुमन्तं बलात् संश्लिष्य स्वसमानं चकारेति व्यज्यते। तेन श्रीरामस्यौदार्यातिशयो ध्वनितः ।६१

सार्द्रनेत्रो रघुश्रेष्ठः परां प्रीतिमवाप सः ।
हनूमन्तमुवाचेदं राघवो भक्तवत्सलः ॥६२
परिरम्भो हि मे लोके दुर्लभः परमात्मनः ।
अतस्त्वं मम भक्तोऽसि प्रियोऽसि हरिपुङ्गव ! ॥६३

**परिरम्भ इति**—मम भक्तोऽसीत्यनेन त्वदभीष्टं दास्यं मत्समानैश्वर्येऽपि (न) हीयताम् इत्याश्वासो व्यक्तः ।६३

यत्पादपद्मयुगलं तुलसीदलाद्यैः,
सम्पूज्य विष्णुपदवीमतुलां प्रयाति ।
तेनैव किं पुनरसौ परिरब्धमूर्त्ती,
रामेण वायुतनयः कृतपुण्यपुञ्जः ॥६४

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
सुन्दरकाण्डे पञ्चमोऽध्यायः ।५

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां सुन्दरकाण्डे
पञ्चमोऽध्यायः ।५

⊙

१. 'इति ध्वनिप्रकाशिकायां पंचमोऽध्यायः' इति रा० व० पु०।

# युद्धकाण्डम्

## अथ प्रथमोऽध्यायः

यथावद् भाषितं वाक्यं श्रुत्वा रामो हनूमतः।
उवाचानन्तरं वाक्यं हर्षेण महता वृतः॥ १

सुग्रीवपराक्रमं द्रष्टुं समुद्रतरणस्य दुःशक्यत्वमाह **यथावदित्यादिना**।१

कार्यं कृतं हनुमता देवैरपि सुदुष्करम्।
मनसापि यदन्येन स्मर्तुं शक्यं न भूतले॥२
शतयोजनविस्तीर्णं लङ्घयेत् कः पयोनिधिम्।
लङ्कां च राक्षसैर्गुप्तां को वा धर्षयितुं क्षमः॥३
भृत्यकार्यं हनुमता कृतं सर्वमशेषतः।
सुग्रीवसदृशो लोके न भूतो न भविष्यति॥४
अहं च रघुवंशश्च लक्ष्मणश्च कपीश्वरः।
जानक्या दर्शनेनाद्य रक्षिताः स्मो हनूमता॥५
सर्वथा सुकृतं कार्यं जानक्याः परिमार्गणम्।
समुद्रं मनसा स्मृत्वा सीदतीव मनो मम॥६
कथं नक्रझषाकीर्णं समुद्रं शतयोजनम्।
लङ्घयित्वा रिपुं हन्यां कथं द्रक्ष्यामि जानकीम्॥७
श्रुत्वा तु रामवचनं सुग्रीवः प्राह राघवम्।
समुद्रं लङ्घयिष्यामो महानक्रझषाकुलम्॥८
लङ्काञ्च विधमिष्यामो हनिष्यामोऽद्य रावणम्।
चिन्तां त्यज रघुश्रेष्ठ! चिन्ता कार्यविनाशिनी॥९

**लङ्कामिति**---रघुश्रेष्ठेत्यनेन रघुवंशोद्भवसगरात्मजकर्तृकखननेन वर्द्धितोऽयं समुद्रस्त्वन्तु रघुवंशजेषु सर्वेष्वपि श्रेष्ठ इति समुद्रतरणे तव शङ्कैव नास्तीति ध्वनिः।९

एतान् पश्य महासत्त्वान् शूरान् वानरपुङ्गवान्।
त्वत्प्रियार्थं समुद्युक्तान् प्रवेष्टुमपि पावकम् ॥१०

समुद्रतरणे बुद्धिं कुरुष्व प्रथमन्ततः।
दृष्ट्वा लङ्कां दशग्रीवो हत इत्येव मन्महे ॥११

नहि पश्याम्यहं कञ्चित् त्रिषु लोकेषु राघवः।
गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥१२

सर्वथा नो जयो राम! भविष्यति न संशयः।
निमित्तानि च पश्यामि तथाभूतानि सर्वशः ॥१३

सुग्रीववचनं श्रुत्वा भक्तिवीर्यसमन्वितम्।
अङ्गीकृत्याब्रवीद्रामो हनूमन्तं पुरःस्थितम् ॥१४

**सुग्रीवेति**—भक्तिः परानुरागः, वीर्यं रावणमपि कक्षीकृतवतो वालिनो हननसामर्थ्यञ्च ताभ्यां समन्वितम्।१४

येन केन प्रकारेण लङ्घयामो महार्णवम्।
लङ्कास्वरूपं मे ब्रूहि दुःसाध्यं देवदानवैः ॥१५

ज्ञात्वा तस्य प्रतीकारं करिष्यामि कपीश्वर!।
श्रुत्वा रामस्य वचनं हनूमान्विनयान्वितः ॥१६

उवाच प्राञ्जलिर्देव! यथादृष्टं ब्रवीमि ते।
लङ्का दिव्यपुरी देव! त्रिकूटशिखरे स्थिता ॥१७

स्वर्णप्राकारसहिता स्वर्णाट्टालकसंयुता।
परिखाभिः परिवृता पूर्णाभिर्निर्मलोदकैः ॥१८

नानोपवनशोभाढ्या दिव्यवापीभिरावृता।
गृहैर्विचित्रशोभाढ्यैर्मणिस्तम्भमयैः शुभैः ॥१९

पश्चिमद्वारमासाद्य गजवाहाः सहस्रशः।
उत्तरे द्वारि तिष्ठन्ति साश्ववाहाः सपत्तयः ॥२०

तिष्ठन्त्यर्बुदसङ्ख्याकाः प्राच्यामपि तथैव च।
रथिनो राक्षसा वीरा द्वारं दक्षिणमास्थिताः ॥२१

मध्यकक्षेऽप्यसङ्ख्याताः गजाश्वरथपत्तयः ।
रक्षयन्ति सदा लङ्कां नानास्त्रकुशलाः प्रभो ! ॥२२

सङ्क्रमैर्विविधैर्लङ्का शतघ्नीभिश्च संयुता ।
एवं स्थितेऽपि देवेश ! शृणु मे तत्र चेष्टितम् ॥२३

**सङ्क्रमैरिति**--सङ्क्रमा आगन्तुकशत्रुहननार्थं निर्मिताः परिखातो बहिः स्थानविशेषाः शतघ्नीभिः 'तोप' इति लोकप्रसिद्धाभिः गुल्मोपरि स्थापिताभिः ।२३

दशाननबलौघस्य चतुर्थांशो मया हतः ।
दग्धा लङ्कापुरी स्वर्णप्रासादो धर्षितो मया ॥२४

**दशाननेति**--चतुर्थांशो मया हत इत्यनेन एकाकिनो ममैतत्कृतत्वादवशिष्टकार्यं भवता सुगममेवेति भावः ।२४

शतघ्न्यः सङ्क्रमाश्चैव नाशिता मे रघूत्तम ! ।
देव ! त्वद्दर्शनादेव लङ्का भस्मीकृता भवेत् ॥२५

प्रस्थानं कुरु देवेश ! गच्छामो लवणाम्बुधेः ।
तीरं सह महावीरैर्वानरौघैः समन्ततः ॥२६

श्रुत्वा हनुमतो वाक्यमुवाच रघुनन्दनः ।
सुग्रीव ! सैनिकान् सर्वान् प्रस्थानायाभिनोदय ॥२७

इदानीमेव विजयो मुहूर्त्तः परिवर्तते ।
अस्मिन्मुहूर्ते गत्वाहं लङ्कां राक्षससङ्कुलाम् ॥२८

सप्राकारां सुदुर्धर्षां नाशयामि सरावणाम् ।
आनेष्यामि च सीतां मे दक्षिणाक्षि स्फुरत्यधः ॥२९

प्रयातु वाहिनी सर्वा वानराणां तरस्विनाम् ।
रक्षन्तु यूथपाः सेनामग्रे पृष्ठे च पार्श्वयोः ॥३०

हनूमन्तमथारुह्य गच्छाम्यग्रेऽङ्गदं ततः ।
आरुह्य लक्ष्मणो यातु सुग्रीव! त्वं मया सह ॥३१

गजो गवाक्षो गवयो मैन्दो द्विविद एव च।
नलो नीलः सुषेणश्च जाम्बवांश्च तथापरे॥३२

सर्वे गच्छन्तु सर्वत्र सेनायाः शत्रुघातिनः।
इत्याज्ञाप्य हरीन् रामः प्रतस्थे सह लक्ष्मणः॥३३

सुग्रीवसहितो हर्षात् सेनामध्यगतो विभुः।
वारणेन्द्रनिभाः सर्वे वानराः कामरूपिणः॥३४

क्ष्वेलन्तः परिगर्जन्तो जग्मुस्ते दक्षिणां दिशम्।
भक्षयन्तो ययुः सर्वे फलानि च मधूनि च॥३५

ब्रुवन्तो राघवस्याग्रे हनिष्यामोऽद्य रावणम्।
एवं ते वानरश्रेष्ठाः गच्छन्त्यतुलविक्रमाः॥३६

हरिभ्यामुह्यमानौ तौ शुशुभाते रघूत्तमौ।
नक्षत्रैः सेवितौ यद्वच्चन्द्रसूर्याविवाम्बरे॥३७

आवृत्य पृथिवीं कृत्स्नां जगाम महती चमूः।
प्रस्फोटयन्तः पुच्छाग्रानुद्वहन्तश्च पादपान्॥३८

आवृत्येति--पुच्छाग्रस्फोटनपादपोद्वहनेन सर्वेषां युद्धोत्साहो व्यक्तः। तेन च विजयः।३८

शैलानारोहयन्तश्च जग्मुर्मारुतवेगतः।
असङ्ख्याताश्च सर्वत्र वानराः परिपूरिताः॥३९

हृष्टास्ते जग्मुरत्यर्थं रामेण परिपालिताः।
गता चमूर्दिवारात्रं क्वचिन्नासज्जत क्षणम्॥४०

काननानि विचित्राणि पश्यन्मलयसह्ययोः।
ते सह्यं समतिक्रम्य मलयं च तथा गिरिम्॥४१

आययुश्चानुपूर्व्येण समुद्रं भीमनिःस्वनम्।
अवतीर्य हनूमन्तं शुभं सुग्रीवसंयुतः॥४२

सलिलाभ्याशमासाद्य रामो वचनमब्रवीत्।
आगताःस्मो वयं सर्वे समुद्रं मकरालयम्॥४३

इतो गन्तुमशक्यं नो निरुपायेन वानराः! ।
अत्र सेनानिवेशोऽस्तु मन्त्रयामोऽस्य तारणे ॥४४

श्रुत्वा रामस्य वचनं सुग्रीवः सागरान्तिके ।
सेनां न्यवेशयत् क्षिप्रं रक्षितः कपिकुञ्जरैः ॥४५

ते पश्यन्तो विषेदुस्तं सागरं भीमदर्शनम् ।
महोन्नततरङ्गाढ्यै भीमनक्रभयङ्करम् ॥४६

अगाधं गगनाकारं सागरं वीक्ष्य दुःखिताः ।
तरिष्यामः कथं घोरं सागरं वरुणालयम् ॥४७

हन्तव्योऽस्माभिरद्यैव रावणो राक्षसाधमः ।
इति चिन्ताकुलाः सर्वे रामपार्श्वे व्यवस्थिताः ॥४८

रामः सीतामनुस्मृत्य दुःखेन महतावृतः ।
विलप्य जानकीं सीतां बहुधा कार्यमानुषः ॥४९

**राम इति**——कार्यमानुष इत्यनेन मानुषनाट्येन विलापं कृतवांस्तेन तस्य वानरबल-बुद्धिदिदृक्षा व्यक्ता ।४९

अद्वितीयश्चिदात्मैकः परमात्मा सनातनः ।
यस्तु जानाति रामस्य स्वरूपं तत्त्वतो जनः ॥५०

तं न स्पृशति दुःखादि किमुतानन्दमव्ययम् ।
दुःखहर्षभयक्रोधलोभमोहमदादयः ॥५१

अज्ञानलिङ्गान्येतानि कुतः सन्ति चिदात्मनि ।
देहाभिमानिनो दुःखं नादेहस्य चिदात्मनः ॥५२

**अज्ञानेति**——मानुष्यनाश्यमनुक्त्वा भवतोऽप्यस्य अदेहस्य प्राकृतदेहरहितस्य दिव्य-शरीरस्येत्यर्थः ।५२

सम्प्रसादे द्वयाभावात् सुखमात्रं हि दृश्यते ।
बुद्ध्याद्यभावात् संशुद्धिर्दुःखं तत्र न दृश्यते ॥
अतो दुःखादिकं सर्वं बुद्धेरेव न संशयः ॥५३

रामः परात्मा पुरुषः पुराणो,
नित्योदितो नित्यसुखो निरीहः।
तथाऽपि मायागुणसङ्गतोऽसौ,
सुखीव दुःखीव विभाव्यतेऽबुधैः ॥५४

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे प्रथमोऽध्यायः ।१

**राम इति**—मायागुणसङ्गतोः मायागुणसङ्गाद्धेतोर्येऽबुधास्तैः दुःखीव विभाव्यते न तु बुधैरित्यर्थः ।५४

⊙

इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां व्यंग्यप्रकाशिकायां [1]युद्धकाण्डे प्रथमोऽध्यायः ।१

⊙

---

१. मातृकायान्तु किष्किन्धाकाण्डे इत्यस्ति । सा प्रतिलिपिकारस्य भ्रान्तिः ।

## अथ द्वितीयोऽध्यायः

**श्रीमहादेव उवाच—**

लङ्कायां रावणो दृष्ट्वा कृतं कर्म हनूमता।
दुष्करं दैवतैर्वाऽपि ह्रिया किञ्चिदवाङ्मुखः ॥१
आहूय मन्त्रिणः सर्वानिदं वचनमब्रवीत्।
हनूमता कृतं कर्म भवद्भिर्दृष्टमेव तत् ॥२
प्रविश्य लङ्कां दुर्द्धर्षां दृष्ट्वा सीतां दुरासदाम्।
हत्वा च राक्षसान् वीरानक्षं मन्दोदरीसुतम् ॥३
दग्ध्वा लङ्कामशेषेण लङ्घयित्वा च सागरम्।
युष्मान् सर्वानतिक्रम्य स्वस्थोऽगात् पुनरेव सः ॥४
किं कर्तव्यमितोऽस्माभिर्यूयं मन्त्रविशारदाः।
मन्त्रयध्वं प्रयत्नेन यत्कृतं मे हितं भवेत् ॥५
रावणस्य वचः श्रुत्वा राक्षसास्तमथाब्रुवन्।
देव! शङ्का कुतो रामात्तव लोकजितो रणे ॥६
इन्द्रस्तु बद्ध्वा निक्षिप्तः पुत्रेण तव पत्तने।
जित्वा कुबेरमानीय पुष्पकं भुज्यते त्वया ॥७
यमो जितः कालदण्डाद् भयं नाभूत्तव प्रभो!।
वरुणो हुङ्कृतेनैव जितः सर्वेऽपि राक्षसाः ॥८
मयो महासुरो भीत्या कन्यां दत्त्वा स्वयं तव।
त्वद्वशे वर्तते किमुतान्येद्यापि महासुराः ॥९
हनूमद्धर्षणं यत्तु तदवज्ञाकृतं च नः।
वानरोऽयं किमस्माकमस्मिन् पौरुषदर्शने ॥१०
इत्युपेक्षितमस्माभिर्धर्षणं तेन किं भवेत्।
वयं प्रमत्ताः किं तेन वञ्चिताः स्मो हनूमता ॥११

जानीमो यदि तं सर्वे कथं जीवन् गमिष्यति।
आज्ञापय जगत्कृत्स्नमवानरममानुषम्॥१२

**जानीम इति**––गमिष्यति गतः स्यादित्यर्थः।१२

कृत्वा यास्यामहे सर्वे प्रत्येकं वा नियोजय।
कुम्भकर्णस्तदा प्राह रावणं राक्षसेश्वरम्॥१३

**कृत्वेति**––कुम्भकर्णस्तदा प्राहेत्यादिसार्द्धचतुर्भिः कुम्भकर्णोऽपि विहितभक्त्यधिकारीति सूचितम्।१३

आरब्धं यत्त्वया कर्म स्वात्मनाशाय केवलम्।
न दृष्टोऽसि तदा भाग्यात्त्वं रामेण महात्मना॥१४
यदि पश्यति रामस्त्वां जीवन्नाऽऽयासि रावण!।
रामो न मानुषो देवः साक्षान्नारायणोऽव्ययः॥१५
सीता भगवती लक्ष्मी रामपत्नी यशस्विनी।
राक्षसानां विनाशाय त्वया नीता सुमध्यमा॥१६
विषपिण्डमिवागीर्य महामीनो यथा तथा।
आनीता जानकी पश्चात्त्वया किं वा भविष्यति॥१७

**यदि पश्यतीति**––देवः नित्यक्रीडाशीलो मानुषः नित्यद्विभुजः रामो न किन्तु तदावेशयुक्तः साक्षान्नारायणः। भगवती नित्यैश्वर्यवती नित्यविहारिणी रामपत्नी सीता न यशस्विनी पातिव्रत्य[1] प्रधावती प्रेमा लक्ष्मीरपि न किन्तु राक्षसानां विनाशाय त्वया सुमध्यमा शोभनः मध्यमः रजोगुणो यस्याः सा मूलप्रकृतिरानीता।१५-१७।

यद्यप्यनुचितं कर्म त्वया कृतमजानता।
सर्वं समं करिष्यामि स्वस्थचित्तो भव प्रभो!॥१८

विहितभक्त्यधिकारी अपि कुम्भकर्णः मदुक्तं रावणस्य न रोचते इति तच्चेष्टया रावणमविहितभक्तिमङ्गीकुर्वाणमालक्ष्य तदनुसारेणाविहितभक्तिमङ्गीकृत्याह **यद्यपीति**––तेन रावणमेव गुरुममंस्तेति व्यक्तम्। सर्वं समं करिष्यामीत्यनेन त्वया सह अहमपि युद्धे प्राणान् त्यक्ष्यामीति व्यक्तम्।१८

---

१. प्रभावती इत्युचितः।

कुम्भकर्णवचः श्रुत्वा वाक्यमिन्द्रजिदब्रवीत्।
देहि देव! ममानुज्ञां हत्वा रामं सलक्ष्मणम्।
सुग्रीवं वानरांश्चैव पुनर्यास्यामि तेऽन्तिकम्॥१९

तत्रागतो भागवतप्रधानो,
विभीषणो बुद्धिमतां वरिष्ठः।
श्रीरामपादद्वय एकतानः,
प्रणम्य देवारिमुपोपविष्टः॥२०

विलोक्य कुम्भश्रवणादिदैत्यान्,
मत्तप्रमत्तानतिविस्मयेन।
विलोक्य कामातुरमप्रमत्तो,
दशाननं प्राह विशुद्धबुद्धिः॥२१

न कुम्भकर्णेन्द्रजितौ च राजं-
स्तथा महापार्श्वमहोदरौ तौ।
निकुम्भकुम्भौ च तथातिकायः,
स्थातुं न शक्ताः युधि राघवस्य॥२२

सीताभिधानेन महाग्रहेण,
ग्रस्तोऽसि राजन्! न च ते विमोक्षः।
तामेव सत्कृत्य महाधनेन,
दत्त्वाऽभिरामाय सुखी भव त्वम्॥२३

**सीतेति**—महाधनेन तामेव सत्कृत्येत्यनेन यथा श्रीरामानन्यां श्रीजानकीं जनकः श्रीरामाय दत्तवांस्तथा त्वमपि समर्पयेति दृष्टान्तालङ्कारो व्यज्यते। तेन च या गतिः वैदेहेन आजन्मना विज्ञानेन सम्पादिता तां गतिं त्वमद्यैव प्राप्स्यस्यसीति सूचितम्।२३

यावन्न रामस्य शिताः शिलीमुखा,
लङ्कामभिव्याप्य शिरांसि रक्षसाम्।
छिन्दन्ति तावद् रघुनायकस्य भो!,
तां जानकीं त्वं प्रतिदातुमर्हसि॥२४

यावन्नगाभाः कपयो महाबला,
हरीन्द्रतुल्या नखदंष्ट्रयोधिनः।
लङ्कां समाक्रम्य विनाशयन्ति ते,
तावद्द्रुतं देहि रघूत्तमाय ताम्॥२५

जीवन्न रामेण विमोक्ष्यसे त्वं,
गुप्तः सुरेन्द्रैरपि शङ्करेण।
न देवराजाङ्कगतो न मृत्योः,
पाताललोकानपि संप्रविष्टः॥२६

**जीवन्नेति**—सुरेन्द्रैरिति बहुवचनेन अनेकब्रह्माण्डस्थेन्द्रशङ्करब्रह्मभिस्ते रक्षा न भविष्यतीति तेन श्रीरामस्य सर्वेश्वरत्वं व्यक्तम्।२६

शुभं हितं पवित्रं च विभीषणवचः खलः।
प्रतिजग्राह नैवासौ म्रियमाण इवौषधम्॥२७

**शुभमिति**—शुभं 'दत्त्वाभिरामाय सुखी भवेति' मोक्षसूचकेन शुभम्। तामेव सत्कृत्येति जनकदृष्टान्तोपन्यासेन पापनिवर्तकत्वात् पवित्रम्, 'यावन्न रामस्य शिताः शिलीमुखा' इत्याद्युपदेशेन हितजनकं विभीषणवचः खलः न प्रतिजग्राह।२७

कालेन नोदितो दैत्यो विभीषणमथाब्रवीत्।
मद्दत्तभोगैः पुष्टाङ्गो मत्समीपे वसन्नपि॥२८
प्रतीपमाचरत्येष ममैव हितकारिणः।
मित्रभावेन शत्रुर्मे जातो नास्त्यत्र संशयः॥२९
अनार्येण कृतघ्नेन संगतिर्मे न युज्यते।
विनाशमभिकाङ्क्षन्ति ज्ञातीनां ज्ञातयः सदा॥३०
योऽन्यस्त्वेवं विधं ब्रूयाद्वाक्यमेतन्निशाचरः।
हन्मि तस्मिन् क्षणेनैव धिक् त्वां रक्षः कुलाधमम्॥३१

**योऽन्यः इति**—योऽन्य एवं विधं वाक्यं ब्रूयात् तं तस्मिन्नेव क्षणे हन्मि। रक्षः कुलाधमं रक्षः कुलम् अधमं यस्मात् तं रक्षः कुलश्रेष्ठं त्वान्नैव धिग् वयं तु राक्षसाधमाः त्वं तु भागवतोत्तम अतस्तत्रैव गच्छेति कूटं वदतोऽपि तस्य यथार्थभाषितं व्यक्तम्। तेन च स्ववशस्थापनार्थं विभीषणं निष्कासितवामिति व्यज्यते।३१

रावणेनैवमुक्तः सन् परुषं स विभीषणः।
उत्पपात सभामध्याद् गदापाणिर्महाबलः ॥३२

**रावणेनेति**—रावणेन एवं परुषं पूर्वोक्तं कूटरूपं उक्तः विभीषण उत्पपात, एतेनैव हन्मीति वचनेनैव मां हतवानेवेति अत्यन्ततिरस्कृतवाच्याङ्गेन विभीषणस्याशयो व्यक्तः।३२

चतुर्भिर्मन्त्रिभिः सार्द्धं गगनस्थोऽब्रवीद्वचः॥३३

**चतुर्भिरिति**—गगनस्थोऽब्रवीद् वच इत्यनेन रावणोद्यतखड्गप्रहारचरणप्रहारवञ्चनार्थमाकाशे स्थित इति व्यक्तम्।३३

क्रोधेन महताविष्टो रावणं दशकन्धरम्।
मा विनाशमुपैहि त्वं प्रियवादिनमेव माम्॥३४
धिक्करोषि तथापि त्वं ज्येष्ठो भ्राता पितुःसमः।
कालो राघवरूपेण जातो दशरथालये॥३५

**धिगिति**—सः ते कालः संहारको नारायणः राघवरूपेण दशरथालये जातः।३५

काली सीताभिधानेन जाता जनकनन्दिनी।
तावुभावागतावत्र भूमेर्भारापनुत्तये॥३६

**कालीति**—सीताभिधानेन जाता या जनकनन्दिनी सा काली तत्सहकारिणी संहारकर्त्री मूलप्रकृतिः। तावेवात्रागतौ 'भूमेर्भारापनुत्तये' तत्प्रेरितस्त्वं मम हितं न शृणोषि वचनमिति शेषः। तेन तद्धस्तमरणेन त्वं मुक्तिं वाञ्छसीति मया ज्ञातमिति व्यक्तम्।३६

श्रीरामः प्रकृतेः साक्षात् पुरस्तात् सर्वदा स्थितः॥३७

**श्रीराम इति**—प्रकृतेः परः श्रीरामः सर्वदा साक्षादयोध्यायां स्थितः, 'अयोध्यां च परित्यज्य स क्वचिन्नैव गच्छती'त्युक्तेः। तेन अहं तदावेशयुतनारायणसेवोत्सुकः विहितभक्तस्तमेव शरणं गच्छामि इति व्यज्यते। तेन तदानुकूल्यमेव ममेष्टम् प्रातिकूल्यं न रोचते।[१] तेन च श्रीरामप्रापकत्वात् कोपवचनमपि हितोपदेश एवेति त्वं मम गुरुतुल्यः विपरीतश्चेचद्गुर्वादिर्न भवेदिति,[२] अतो गुरुतुल्यस्य तव प्रतिषेधः कृतः। उक्तं च श्रीभागवते 'गुरुर्न स स्यात् सुजनो न स स्यात् पिता न स स्याज्जननी न सा स्यात्।[३] दैवं न तत् स्यान्नपतिश्च स स्यान्न मोचयेद् यः समुपेतमृत्युमिति'।३७

१. तः २. पर्यन्तः नास्ति रा० व० पु०। २. तः ३. पर्यन्तः मत्पुस्तके नास्ति।

बहिरन्तश्च भूतानां समः सर्वत्र संस्थितः।
नामरूपादिभेदेन तत्तन्मय इवामलः ॥३८

ननु अयोध्यायां रासमण्डले विद्यमानः कथं त्वां रक्षिष्यतीत्याशङ्कां परिहरन् तस्य सर्वेश्वरैक्यरूपतामाह **बहिरन्तश्चेत्यादि**-भूतानामन्तर्बहिः सर्वत्र स्थितः न तु न्यूनाधिकभावेनेत्यर्थः। तेन नारायणादीनामपि तद्रूपत्वात् कालतोऽपि रक्षां करिष्यत्येवेति विश्वासो ध्वन्यते। नामरूपेण चतुर्भुजादिरूपेण तत्तन्मय इव, वस्तुतस्तु कालनारायणादीनामष्टभुजचतुर्भुजादिरूपं तद्व्यतिरिक्तं न किन्तु तस्यैवेति।३८

यथा नानाप्रकारेषु वृक्षेष्वेको महानलः।
तत्तदाकृतिभेदेन भिद्यतेऽज्ञानचक्षुषाम् ॥३९

एकस्यानेकरूपत्वं दृष्टान्तेन साधयति **यथेत्यारभ्य–कालरूपी स भगवानित्यन्तेन**-स एव श्रीरामः कालादिरूपेण नानेश्वररूपो दृश्यते। तेन वास्तवरूपस्तु तत्रैव स्थित इति व्यज्यते।३९

पञ्चकोशादिभेदेन तत्तन्मय इवाबभौ।
नीलपीतादियोगेन निर्मलः स्फटिको यथा ॥४०
स एष नित्यमुक्तोऽपि स्वमायागुणबिम्बितः।
कालः प्रधानं पुरुषोऽव्यक्तं चेति चतुर्विधम् ॥४१
प्रधानपुरुषाभ्यां स जगत्कृत्स्नं सृजत्यजः।
कालरूपेण कलनां जगतः कुरुतेऽव्ययः॥
कालरूपी स भगवान् रामरूपेण मायया ॥४२
ब्रह्मणा प्रार्थितो देवस्त्वद्वधार्थमिहागतः।
तदन्यथा कथं कुर्यात् सत्यसंकल्प ईश्वरः ॥४३

**प्रधानेति**—कलनां संहारं कालरूपी संहारप्रधानः स भगवान् नारायणः मायया कृपया रामरूपेण रामावेशेन[1] [ब्रह्मणा प्रार्थितः त्वद्वधार्थमागतः ननु सर्वाणि रूपाणि तस्यैव चेत् श्रीरामावेशं गृहीत्वा कुत आगत इति चेत्तत्राह ब्रह्मणा इत्यादि-चतुर्भुजादिरूपैस्तवावध्यत्वात् नित्यायोध्याविहारिमानुषेण वध्यत्वात् तस्य च नित्यविहारित्वेनात्रागमनासंभवात् त्वद्वधार्थं] ब्रह्मणा प्रार्थितो देव आदिनारायणो रामावेशं गृहीत्वा अत्रागतः त्वां हनिष्यत्येवेत्यत्र हेतुः। सत्यसंकल्प ईश्वरः कथमन्यथा कुर्यात्। तेन परमोत्तमोपदेशानङ्गीकारेऽयमेव हेतुः।४२-४३।

१. तः [ ] एवं कोष्ठकान्तर्गतः भागः रा० व० पुस्तकस्थः।

हनिष्यति त्वां रामस्तु सपुत्रबलवाहनम्।
हन्यमानं न शक्नोमि द्रष्टुं रामेण रावण! ॥४४

**हनिष्यतीति**—सपुत्रबलवाहनं त्वां[1] हनिष्यत्येवेति तत्प्रातिकूल्यानुवर्तिनस्तव मुखावलोकनमपि न कर्तव्यमिति दर्शितम्।४४

त्वां राक्षसकुलं कृत्स्नं ततो गच्छामि राघवम्।
मयि याते सुखी भूत्वा रमस्व भुवनेऽचिरम्॥४५

**त्वामिति**—अतएव राघवं प्रति गच्छामि श्रीराममेव रक्षकत्वेन वृतवानिति तेन गोप्तृत्ववरणं सूचितम्।४५

विभीषणो रावणवाक्यतःक्षणा-
द्विसृज्य सर्वं सपरिच्छदं गृहम्।
जगाम रामस्य पदारविन्दयोः,
सेवाभिकाङ्क्षी परिपूर्णमानसः॥४६

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे द्वितीयोऽध्यायः।२

**विभीषण इति**—विभीषणः रावणवाक्यतः इतो याहीत्येवंरूपात् क्षणादेव सर्वं सपरिच्छदं गृहं विसृज्य रामपदारविन्दयोः सेवाभिकाङ्क्षी सन् तत्र जगामेत्यर्थः। 'इतो याहीति' रावणवाक्यादित्यस्य वाच्यार्थः किं विभीषणेनेति, राक्षसदृष्ट्या सूचितः, व्यंग्यार्थस्तु विभीषणद्वारैव यास्यामीत्याशयः। तेन वैष्णवसम्बन्धिनः पशुपक्षिणोऽपि परमं पदं यान्ति किमुत एतदग्रजस्य मम परमपदप्राप्तिरिति काव्यार्थापत्तिरलङ्कारो व्यक्तः। 'पशुः पक्षी मनुष्यो वा ये च वैष्णवसंश्रयाः। तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदमित्युक्तेः'। क्षणात् सर्वं विसृज्येत्यनेन गमनात्पूर्वमेवात्मसमर्पणं कृतवानिति आत्मनिक्षेपो ध्वन्यते।४६

⊙

[2]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
द्वितीयोऽध्यायः।२

⊙

---

१. हनिष्येवेति मत्पुस्तके। २. इति युद्धकाण्डे ध्वनिप्रकाशिकायां द्वितीयोऽध्यायः।
२ इति रा० व० पु०।

## अथ तृतीयोऽध्यायः

**श्रीमहादेव उवाच—**

विभीषणो महाभागश्चतुर्भिर्मन्त्रिभिः सह।
आगत्य गगने राममसम्मुखे समवस्थितः॥१

**विभीषण इति**—'विभीषणो महाभाग' इति शिवोक्त्या अविहितभक्त्या रावणोऽपि भाग्यवानिति सूच्यते।१

उच्चैरुवाच भोः स्वामिन्! राम! राजीवलोचन!।
रावणस्यानुजोऽहं ते दारहर्तुर्विभीषणः॥२
नाम्ना भ्रात्रा निरस्तोऽहं त्वामेव शरणं गतः।
हितमुक्तं मया देव! तस्य चाविदितात्मनः॥३

**उच्चैरिति**—हे राम! हे राजीवलोचन! राजीवलोचनेति पदेन त्वद्दृष्टिगोचरमात्रेणैव मम तापत्रयं निरस्तमिति [1]सूचितम्। शरणं रक्षकं त्वामेव गतः प्राप्तोऽस्मि। एवेत्यनेन उपायान्तरशून्यत्वं दर्शितम्। त्वद्दारहर्तू रावणस्याहमनुजः अत एव नीचादपि नीचः नाम्ना विभीषणः भ्रात्रा निरस्तस्त्वामेव शरणं गतः। एतेन कार्पण्यम्-'आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा। आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः।' एतत् षड्विधशरणागतिं विभीषणः कृतवान्।२-३।

सीतां रामाय वैदेहीं प्रेषयेति पुनः पुनः।
उक्तोऽपि न शृणोत्येष कालपाशवशं गतः॥४
हन्तुं मां खड्गमादाय प्राद्रवद्राक्षसाधमः।
ततोऽचिरेण सचिवैश्चतुर्भिःसहितो भयात्॥५
त्वामेव भवमोक्षाय मुमुक्षुः शरणं गतः।
विभीषणवचः श्रुत्वा सुग्रीवो वाक्यमब्रवीत्॥६

---

१. सूचितम्। शरणम् रा० व० पुस्तकस्थः पाठः।

विश्वासार्हो न ते राम ! मायावी राक्षसाधमः।
सीताहर्तुर्विशेषेण रावणस्यानुजो बली॥७
मन्त्रिभिः, सायुधैरस्मान् विवरे निहनिष्यति।
तदाज्ञापय मे देव ! वानरैर्हन्यतामयम्।
ममैवं भाति ते राम ! बुद्धया किं निश्चितं वद॥८

**त्वामेवेति**——श्रुत्वेत्यादि ममैवं भातीत्यन्तेन श्रीरामस्य शरणागतपालकत्वधर्मख्यापनेच्छा व्यज्यते। तेन च सुग्रीवस्य दयालुतातिशयः। तेन च परमभागवतत्वम्।६-८।

श्रुत्वा सुग्रीववचनं रामः सस्मितमब्रवीत्॥९

**श्रुत्वेति**——सस्मितं वाक्यमब्रवीदित्यनेन सुग्रीवान्तःकरणाभिप्रायाभिज्ञत्वं व्यक्तम्।९

यदीच्छामि कपिश्रेष्ठ ! लोकान् सर्वान् सहेश्वरान्।
निमिषार्धेन संहन्यां सृजामि निमिषार्धतः॥१०

**यदीच्छामीति**——हे कपिश्रेष्ठ ! यदीच्छामि तर्हि निमिषार्धेन सहेश्वरान् सर्वाल्लोकान् संहन्याम्। निमिषार्धेन सृजामि च पालयामि चेत्यप्यागतम्। यतोऽहं निमिषार्धेन सृष्ट्यादिकं कर्तुं समर्थः अतो मम अघटितघटनापटीयस्त्वम्।१०

अतो मयाऽभयं दत्तं शीघ्रमानय राक्षसम्।
सकृदेव प्रपन्नाय तवास्मीति च याचते॥११

**अतो मयेति**——मयाऽभयं दत्तमिति भूतार्थक्रियया रावणविषयकहनुमदुपदेशस्वीकारकाले एवाभयं दत्तमिति व्यक्तम्। तेन च त्वत्प्रेषितहनुमदागमनसमये एव तुभ्यमभयं दत्तं, सख्यं तु पश्चात्कृतम्। तत् त्वं न किं जानासीति काकुर्व्यज्यते। शीघ्रमानयेत्यनेन 'जानन्नप्यजानन्निव मा वद, तेन हास्यं मा कुरु। तेन च सख्यरसो व्यज्यते। सकृदेवेत्यादिना रावणस्यापि मुखाद् भ्रमादपि श्रीरामं प्रपन्नोऽस्मीति निःसृतं चेत्तदा तमपि रक्षिष्ये किमुत एनमिति काव्यार्थापत्तिरलङ्कारो व्यक्तः। तेन च शरणागतपालकत्वातिशयः। तेन च तस्य सर्वसख्यश्रेष्ठत्वं व्यक्तम्।११

---

१. जानन्निव मामवदत्तेन इति मत्पुस्तके।

अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम।
रामस्य वचनं श्रुत्वा सुग्रीवो हृष्टमानसः॥१२

**अभयमिति**—सुग्रीवो हृष्टमानस इत्यनेन श्रीरामस्य शरणागतपालकत्वधर्मख्यापनार्थमेव सुग्रीवस्य विभीषणप्रतिरोधोक्तिः सूच्यते।१२

विभीषणमथाऽऽनाय्य दर्शयामास राघवम्।
विभीषणस्तु साष्टाङ्गं प्रणिपत्य रघूत्तमम्।
हर्षगद्गदया वाचा भक्त्या च परयाऽन्वितः॥१३
रामं श्यामं विशालाक्षं प्रसन्नमुखपङ्कजम्।
धनुर्बाणधरं शान्तं लक्ष्मणेन समन्वितम्॥१४

**विभीषण उवाच**—

कृताञ्जलिपुटो भूत्वा स्तोतुं समुपचक्रमे॥१५
नमस्ते राम! राजेन्द्र! नमः सीतामनोरम!।
नमस्ते चण्डकोदण्ड! नमस्ते भक्तवत्सल! ॥१६

**नमस्त इति**—हे राम! सर्वत्र रमणशील! एतेन सीता समीपेऽपि रामोऽस्ति। तेनैव सीता जीवतीति व्यक्तम्। अत एव सीतामनोरम! सीतायाः मनसि रमते, तन्मनः स्वस्मिन् रमयतीति वा तत्सम्बुद्धौ, आवेशितनित्यविहारिस्तुतिः। चण्डकोदण्डेत्यनेन नारायणस्तुतिः। एतेन शिवसंहितोक्तरीत्या साकेतपश्चिमद्वारस्थनित्यविभीषणावेशस्य नारायणाधिष्ठितनित्यविहारिरामावेशस्य ज्ञानमस्तीति व्यक्तम्।१६

नमोऽनन्ताय शान्ताय समायामिततेजसे।
सुग्रीवमित्राय च ते रघूणां पतये नमः॥१७

**नम इति**—अनन्ताय अपरिच्छिन्नाय अत एव शान्ताय समाय नित्यविहारिणी सीतावेशाराधितप्रेमालक्ष्मसहिताय इति नारायणस्तुतिः। अमितं ब्रह्मतेजो यस्य तस्म 'यस्य पादनखज्योतिः पूर्णब्रह्मैककारणमिति, स्मृतेः। सुग्रीवमित्राय तत्सहचराय, रघूणां पतये रङ्घन्ते लोकाल्लोकान्तरं गच्छन्तीति रघवो जीवोपास्याय इति नित्यविहारिस्तुतिः।१७

जगदुत्पत्तिनाशानां कारणाय महात्मने।
त्रैलोक्यगुरवेऽनादिगृहस्थाय नमो नमः॥१८

**जगदिति**—अनादिगृहस्थायेत्यनेन सदाऽयोध्यायामेव रासं कुर्वन् स्थितोऽसि न ततोऽन्यत्र तव गमनमिति। तेन नारायणे आवेशेन प्रविश्य आगतोऽसीति व्यज्यते।१८

त्वमादिर्जगतां राम! त्वमेव स्थितिकारणम्।
त्वमन्ते निधनस्थाने स्वेच्छाचारस्त्वमेव हि॥१९

आवेशावेशिनोरैक्याभिप्रायेण **त्वमादिरित्याद्युक्तिः**।१९

चराचराणां भूतानां बहिरन्तश्च राघव!।
व्याप्यव्यापकरूपेण भवान् भाति जगन्मयः॥२०

**चराचराणामिति**—व्याप्यव्यापकभावेन व्याप्यमचिच्छरीरं व्यापकं चिच्छरीरं तद्भावेन चिदचिद्विग्रहत्वेन भवान् जगन्मयः भाति।२०

त्वन्मायया हृतज्ञाना नष्टात्मानो विचेतसः।
गतागतं प्रपद्यन्ते पापपुण्यवशात् सदा॥२१
तावत् सत्यं जगद् भाति शुक्तिका रजतं यथा।
यावन्न ज्ञायते ज्ञानचेतसाऽनन्यगामिना॥२२

**तावदिति**—यावदनन्यगामिना त्वदेकविषयेण ज्ञानचेतसा ज्ञानैकाकारचेतसा चिदचिद्विग्रहो भवान् न ज्ञायते यावत्तव चिदचिद्विग्रहस्य ज्ञानं न जायते इति यावत् तावत् जगत् सत्यं भाति चिदचिद्विग्रहत्वेन ज्ञाने जाते तद्रूपेण सत्यं भाति; सरित्समुद्रादिरूपेण मिथ्येत्यर्थः यथा शुक्तिकारजतं, यावत् शुक्तिकात्वेन शुक्तिकाज्ञानं न जायते तावत् रजतज्ञानं सत्यं, शुक्तिकात्वेन ज्ञाने जाते तु रजतज्ञानं मिथ्येत्यर्थः।२२

त्वदज्ञानात्सदा युक्ताः पुत्रदारगृहादिषु।
रमन्ते विषयान् सर्वानन्ते दुःखप्रदान् विभो!॥२३

**त्वदिति**—त्वदज्ञानात् चिदचिद्विग्रहस्य तवाज्ञानात् पुत्रदारगृहादिषु सदा युक्ताः तत्रैव सत्यत्वाभिमानेन लीनचित्ताः सन्तः अन्ते अवसाने दुःखप्रदान् सर्वान् विषयान् रमन्ते प्रीत्या भुञ्जते इत्यन्वयः।२३

त्वमिन्द्रोऽग्निर्यमो रक्षो वरुणश्च तथाऽनिलः।
कुबेरश्च तथा रुद्रस्त्वमेव पुरुषोत्तम!॥२४

त्वमणोरप्यणीयांश्च स्थूलात्स्थूलतरः प्रभो!।
त्वं पिता सर्वलोकानां माता धाता त्वमेव हि॥२५

तदेवं चिदचिद्विग्रहाज्ञानेनानर्थक्यमुक्त्वा इदानीम् चिद्विग्रहविज्ञानार्थं विभक्तमनुवदति **त्वमित्यादिना**।२४-२५।

आदिमध्यान्तरहितः परिपूर्णोऽच्युतोऽव्ययः।
त्वं पाणिपादरहितश्चक्षुः श्रोत्रविवर्जितः॥२६
श्रोता द्रष्टा ग्रहीता च जवनस्त्वं खरान्तकः।
कोशेभ्यो व्यतिरिक्तस्त्वं निर्गुणो निरुपाश्रयः॥२७

**आदिमध्यान्तेति**—त्वं पाणिपादचक्षुःश्रोत्ररहितः श्रोता द्रष्टा ग्रहीता चासि। तेन सगुणनिर्गुणोभयधर्मविशिष्टत्वेन सगुणनिर्गुणाङ्गी त्वमेवेति ध्वन्यते। उक्तञ्च श्रीभागवते 'त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो! वदन्ति नीहारगुणादविक्रियात्। त्वयीश्वरे ब्रह्मणि नो विरुद्ध्यते त्वदाश्रयत्वादुपचर्य्यते गुणैः'।२६-२७।

निर्विकल्पो निर्विकारो निराहारो निरीश्वरः।
षड्भावरहितोऽनादिः पुरुषः प्रकृतेः परः॥२८

**निर्विकल्प इति**—निर्विकल्पकः विकल्पो देहदेहिविभागः ततो रहितः निर्विकारः नित्यविहाररूपेण जगदुत्पत्यादिविकारशून्यः अत एव षड्भावरहितः जन्मादिषड्-भावशून्यः। तत्र हेतुः निराकारः प्राकृताकाररहितः निरीश्वरः नियामकान्तररहितः। तत्र हेतुः प्रकृतेः परः अतोऽनादिः।२८

मायया गृह्यमाणस्त्वं मनुष्य इव भाव्यसे।
ज्ञात्वा त्वां निर्गुणमजं वैष्णवा मोक्षगामिनः॥२९

**माययेति**—जीवानामुद्धाराय कोटिसूर्यप्रकाशादप्यधिक [1]प्रकाशं प्रकाशब्रह्म तिरोधाय मायया कृपया गृह्यमाणस्त्वं दयार्द्रचित्तत्वात् मनुष्य इव भाव्यसे। वाङ्मनसगोचरोऽपि त्वं सर्वदृष्टिगोचरो भवसीत्यर्थः, गृहीतमनुष्यावतार इत्यर्थः। गृहीतमनुष्यावतारमपि त्वां अजं निर्गुणं ज्ञात्वा वैष्णवा मोक्षगामिनो भवन्तीत्यर्थः।२९

---

१. प्रकाशम् इति रा० व० पुस्तकस्थः।

अहं त्वत्पादसद्भक्तिनिःश्रेणीं प्राप्य राघव ! ।
इच्छामि ज्ञानयोगाख्यं सौधमारोढुमीश्वर ! ॥३०

तदेवाह **अहमिति**—त्वत्पादयोः सद्भक्तिः सगुणात्मिका सैव निःश्रेणी तां प्राप्य ज्ञानयोगाख्यं, ज्ञानं त्वत्सम्बन्धि तदेव योगः उपायो यस्य सः, स एव आख्या यस्य सः ज्ञानयोगाख्यः प्रेमापरपर्यायः। सौधं सुधायाः समूहो सौधः तं रसज्ञानं त्वत्सम्बन्धियोगः तत्प्राप्तिश्च यस्मिन्साकेते सः ज्ञानयोगः स आख्या ख्यातिर्यस्य तं सौधमारोढुमिच्छामि। उक्तञ्च गीतासु 'भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति' ।३०

नमः सीतापते ! राम ! नमः कारुणिकोत्तम ! ।
रावणारे ! नमस्तुभ्यं त्राहि मां भवसागरात् ॥३१

**नम इति**—रावणारे ! इत्यनेन लीलाया अनादित्वं व्यक्तम्। तेन च अनादितोऽहं त्वच्छरणागतः त्वं च मे रक्षकः। तेन च लङ्काधिपत्यं मह्यं दास्यत्येवेति व्यञ्जितम् ।३१

ततः प्रसन्नः प्रोवाच श्रीरामो भक्तवत्सलः ।
वरं वृणीष्व भद्रं ते वाञ्छितं वरदोऽस्म्यहम् ॥३२

**विभीषण उवाच—**

धन्योऽस्मि कृतकृत्योऽस्मि कृतकार्योऽस्मि राघव ! ।
त्वत्पाददर्शनादेव विमुक्तोऽस्मि न संशयः ॥३३

**धन्य इति**—धन्योऽस्मीत्यादिना मम अवाञ्छितमपि लङ्काधिपत्यं दास्यस्येवेति सूचितम्। तेन च लङ्काराज्यप्रदानेन भवसागरे मां मा बधानेति, मदभीष्टं तु [1][तव भक्तिरेवेति, तेन (तां)] न दास्यसि किन्तु अनादिलीलानुसारेण ममावाञ्छितमपि लङ्काराज्यं दास्यस्यतो नाहं किमपि वृणे इति व्यक्तः। कृतकृत्यत्वं सर्वधर्मजनकधर्मकृत्त्वम् अत एव धन्यत्वं भगवद्दर्शनस्य सर्वधर्मरूपत्वमिति भावः। कृतकार्यत्वं च धातूनामनेकार्थत्वात् प्राप्यत्वं प्राप्यञ्च ।३३

नास्ति मत्सदृशो धन्यो नास्ति मत्सदृशः शुचिः ।
नास्ति मत्सदृशो लोके राम ! त्वन्मूर्तिदर्शनात् ॥३४

---

१. [  ] एतत् कोष्ठान्तर्गतः भागः न विद्यते रा० व० पु०।

कर्मबन्धविनाशाय तज्ज्ञानं भक्तिलक्षणम्।
त्वद्ध्यानं परमार्थं च देहि मे रघुनन्दन! ॥३५

**कर्मबन्धेति**--कर्मबन्धविनाशाय भक्तिलक्षणं भक्तिः सगुणा लक्षणं यस्य तत् सगुणभक्तिसाधनमिति यावत् तज्ज्ञानं देहि, तत्फलं च परमार्थं त्वद्ध्यानं, नित्यरासविहारिश्रीसीतारामस्य ध्यानं च देहीति अन्वयः। एतेन रसरूपां निर्गुणां भक्तिं देहीति व्यक्तम्।३५

न याचे राम! राजेन्द्र! सुखं विषयसंभवम्।
त्वत्पादकमले सक्तो भक्तिरेव सदास्तु मे॥३६
ओमित्युक्त्वा पुनः प्रीतो रामः प्रोवाच राक्षसम्।
शृणु वक्ष्यामि ते भद्र! रहस्यं मम निश्चितम्॥३७
मद्भक्तानां प्रशान्तानां योगिनां वीतरागिणाम्।
हृदये सीतया नित्यं वसाम्यत्र न संशयः॥३८
तस्मात्त्वं सर्वदा शान्तः सर्वकल्मषवर्जितः।
मां ध्यात्वा मोक्ष्यसे नित्यं घोरसंसारसागरात्॥३९
स्तोत्रमेतत् पठेद्यस्तु लिखेद्वा शृणुयादपि।
मत्प्रीतये ममाभीष्टं सारूप्यं समवाप्नुयात्॥४०

**स्तोत्रमिति**--एतत्स्तोत्रं यः पठेच्छृणुयाल्लिखेद्वा सपदि स मम सारूप्यं प्राप्नुयात्।४०

इत्युक्त्वा लक्ष्मणं प्राह श्रीरामो भक्तभक्तिमान्।
पश्यन्त्विदानीमेवैष मम सन्दर्शने फलम्।
लङ्काराज्येऽभिषेक्ष्यामि जलमानय सागरात्॥४१

**इत्युक्त्वेति**--हे हे लक्ष्मण! सागराज्जलमानय एनं विभीषणं लङ्काधिपत्ये अभिषेक्ष्यामि एषः सर्वजनः मत्सन्दर्शने फलं पश्यत्विति भक्तभक्तिमान् रामः लक्ष्मणं प्राह। तेन यथाहं राजा तथैनमप्यबाधितं लङ्काराजं[1] करोमीति तात्पर्यम्। इदानीं सर्वजनः पश्यत्वित्यनेन यदि रावणोऽपि मच्छरणमागच्छेत्तर्हि तमपि सम्प्रत्येव[2] लङ्कैश्वर्यादधिकै-

---

१. अत्र 'लङ्काराजानम्' इति मू० पा० चिन्त्यः। २. लङ्कासमानैश्वर्यम् इति रा० व० पु०।

श्वयंवन्तं कुर्यामीति सूचितम्। लक्ष्मण! जलमानय, इत्यनेन लक्ष्मणः सङ्कोचाद्राज्यं न प्रत्याख्यातीति सूचितम्। तेन विभीषणस्य परमभागवतत्वम्।४१

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी।
यावन्मम कथालोके तावद्राज्यं करोत्वसौ।।४२

**यावदिति**—यावच्चन्द्रसूर्यादयः तिष्ठन्तु तावदसौ राज्यं करोत्वित्येवमुक्त न तु तिष्ठेत्युक्तम्! तेनैकरूपेण लङ्काराज्यपालनेऽपि एकरूपेण शिवसंहितोक्तरीत्या साकेत-पश्चिमद्वारे विद्यत एवेति सूचितम्।४२

इत्युक्त्वा लक्ष्मणेनाम्बु ह्यानाय्य कलशेन तम्।।४३
लङ्काराज्याधिपत्यार्थमभिषेकं रमापतिः।
कारयामास सचिवैर्लक्ष्मणेन विशेषतः।।४४
साधु साध्विति ते सर्वे वानरास्तुष्टुवुर्भृशम्।
सुग्रीवोऽपि परिष्वज्य विभीषणमथाब्रवीत्।।४५

**लङ्केति**—सचिवैः चतुर्भिर्विभीषणसचिवैः। राज्याभिषेकसमये ब्राह्मणक्षत्रिय-वैश्यशूद्राणां सचिवत्वेनापेक्षितत्वात् तैः सहाभिषेकं कारयामास। साधु साध्वित्यनेन वानराणां हर्षातिशयः, तेन च निर्मत्सरता, तेन च तेषां साधीयस्त्वं।४४-४५

विभीषण! वयं सर्वे रामस्य परमात्मनः।
किङ्करास्तत्र मुख्यस्त्वं भक्त्या रामपरिग्रहात्।
रावणस्य विनाशे त्वं साहाय्यं कर्तुमर्हसि।।४६

**विभीषणेति**—परमात्मत्वेन सहायानपेक्षिता सूचिता।४६

**विभीषण उवाच—**

अहं कियान् सहायत्वे रामस्य परमात्मनः।
किन्तु दास्यं करिष्येऽहं शक्त्या भक्त्या त्वमायया।।४७

**अहमिति**—अहं कियानित्यादिश्लोकस्यायं भावः श्रीरामः विभीषणं सखायं कृतवान्। विभीषणो दास्यमेव स्वीकृतवानिति।४७

दशग्रीवेण सन्दिष्टः शुको नाम महासुरः।
संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत्।।४८

त्वामाह रावणो राजा भ्रातरं राक्षसाधिपः।
महाकुलप्रसूतस्त्वं राजासि वनचारिणाम्॥४९
मम भ्रातृसमानस्त्वं तव नास्त्यर्थविप्लवः।
अहं यदहरं भार्यां राजपुत्रस्य किं तव॥५०
किष्किन्धां याहि हरिभिर्लङ्का शक्या न दैवतैः।
प्राप्तुं किं मानवैरल्पसारैर्वानरयूथपैः॥५१
तं प्रापयन्तं वचनं तूर्णमुत्प्लुत्य वानराः।
प्रापद्यन्त तदा क्षिप्रं निहन्तुं दृढमुष्टिभिः॥५२
वानरैर्हन्यमानस्तु शुको राममथाब्रवीत्।
न दूतान् घ्नन्ति राजेन्द्र! वानरान् वारय प्रभो!॥५३
रामः श्रुत्वा वदा वाक्यं शुकस्य परिदेवितम्।
मा वधिष्टेति रामस्तान् वारयामास वानरान्॥५४
पुनरम्बरमासाद्य शुकः सुग्रीवमब्रवीत्।
ब्रूहि राजन्! दशग्रीवं किं वक्ष्यामि व्रजाम्यहम्॥५५

**सुग्रीव उवाच—**

यथा वाली मम भ्राता तथा त्वं राक्षसाधम!।
हन्तव्यस्त्वं मया यत्नात् सपुत्रबलवाहनः॥५६

**यथेति**—यथा वालीति व्यङ्ग्योक्तिः यथा जायापहारित्वात् स मे वध्यस्तथा स्वामिभार्यापहारित्वात्त्वमपि वध्य इति भावः।५६

ब्रूहि मे रामचन्द्रस्य भार्यां हृत्वा क्व यास्यसि।
ततो रामाज्ञया धृत्वा शुकं बद्ध्वान्वरक्षयत्॥५७

**ब्रूहीति**—क्व यास्यसीत्यनेन ब्रह्मरुद्रादीनां शरणं गतवतोऽपि ते रक्षा न भविष्यतीति। तेन श्रीरामपराक्रमातिशयो व्यक्तः।५७

शार्दूलोऽपि ततः पूर्वं दृष्ट्वा कपिबलं महत्।
यथावत् कथयामास रावणाय स राक्षसः॥५८

**शार्दूल इति**—बद्ध्वान्वरक्षयदित्यस्यायमाशयः, क्व यास्यसीत्यनेन सूचितं सुग्रीवोक्तं

श्रीरामबलवैभवं समुद्रतरणे [1]सांत्विरीक्ष्यैव यथावत्कथयितुं पुनर्याति। भेदं कर्तुमागतोऽयं सेतुबन्धने पञ्चदिनान्तरालेन भेदमपि करोतु इत्यप्याशयः। शार्दूलः दर्शनमात्रे नियुक्तो न तु सुग्रीवभेदने इति तस्याग्रहणम्।५८

दीर्घचिन्तापरो भूत्वा निःश्वसन्नास मन्दिरे।
ततः समुद्रमावेक्ष्य रामो रक्तान्तलोचनः॥५९

**दीर्घचिन्ता पर इति**—कपिबलस्यातिमहत्त्वश्रवणमात्रेण दीर्घचिन्तापरत्वं रावणस्येत्यनेन कश्चिद्वानरो मां मा हन्यादिति सन्देहः सूचितः।५९

पश्य लक्ष्मण! दुष्टोऽसौ वारिधिर्मामुपागतम्।
नाभिनन्दति दुष्टात्मा दर्शनार्थं ममानघ!॥६०
जानाति मानुषोऽयं मे किं करिष्यति वानरैः।
अद्य पश्य महाबाहो! शोषयिष्यामि वारिधिम्॥६१
पादेनैव गमिष्यन्ति वानरा विगतज्वराः।
इत्युक्त्वा क्रोधताम्राक्ष आरोपितधनुर्धरः॥६२
तूणीराद् बाणमादाय कालाग्निसदृशप्रभम्।
सन्धाय चापमाकृष्य रामो वाक्यमथाब्रवीत्॥६३
पश्यन्तु सर्वभूतानि रामस्य शरविक्रमम्।
इदानीं भस्मसात्कुर्यां समुद्रं सरितां पतिम्॥६४

**पश्यन्त्विति**—मम शरविक्रमं पश्यन्त्विति वक्तव्ये श्रीरामस्य शरविक्रमं पश्यन्त्वित्युक्त्या नित्यायोध्याविहारिश्रीरामस्य शक्तिधारकत्वं व्यज्यते।६४

एवं ब्रुवति रामे तु सशैलवनकानना।
चचाल वसुधा द्यौश्च दिशश्च तमसावृताः॥६५
चुक्षुभे सागरो वेलां भयाद् योजनमत्यगात्।
तिमिनक्रझषाः मीनाः प्रतप्ताः परितत्रसुः॥६६

---

१. रा० व० पुस्तकेऽपि 'संत्विरीक्ष्यैव' इत्यस्ति। प्रसंगानुसारेण शक्तिं निरीक्ष्यैवेति उचितः प्रतीयते।

एतस्मिन्नन्तरे साक्षात् सागरो दिव्यरूपधृक्।
दिव्याभरणसम्पन्नः स्वभासा भासयन् दिशः ॥६७
स्वान्तःस्थदिव्यरत्नानि कराभ्यां परिगृह्य सः।
पादयोः पुरतः क्षिप्त्वा रामस्योपायनं बहु ॥६८

**एतस्मिन्निति**—दिव्यरूपधृगित्यनेन श्रीरामबाणानुसन्धानमात्रेण [1]जाड्यं गतमिति, तेन समुद्राभिमानिदेवतैवागतेति, गम्यते।६७-६८।

दण्डवत् प्रणिपत्याह रामं रक्तान्तलोचनम्।
त्राहि त्राहि जगन्नाथ! राम! त्रैलोक्यरक्षक! ॥६९
जडोऽहं राम! ते सृष्टः सृजता निखिलं जगत्।
स्वभावमन्यथाकर्तुं कः शक्तो देवनिर्मितम् ॥७०
स्थूलानि पञ्चभूतानि जडान्येव स्वभावतः।
सृष्टानि भवतैतानि त्वदाज्ञां लङ्घयन्ति न ॥७१
तामसादहमो राम! भूतानि प्रभवन्ति हि।
कारणानुगमात्तेषां जडत्वं तामसं स्वतः ॥७२
निर्गुणस्त्वं निराकारो यदा मायागुणान् प्रभो! ।
लीलयाङ्गीकरोषि त्वं तदा वैराजनामवान् ॥७३

**निर्गुण इति**—निर्गुणनिराकारस्य मायागुणाङ्गीकारो न युक्तोऽतो निर्गुणः निराकारः प्राकृतगुणाकाररहितः दिव्यगुणाकारसंयुक्त इत्यर्थः।७३

गुणात्मनो विराजश्च सत्वाद् देवा बभूविरे।
रजोगुणात् प्रजेशाद्याः मन्योर्भूतपतिस्तव ॥७४
त्वामहं मायया छन्नं लीलया मानुषाकृतिम्।
जडबुद्धिर्जडो मूर्खः कथं जानामि निर्गुणम्।
दण्ड एव हि मूर्खाणां सन्मार्गप्रापकः प्रभो! ॥७५

**जडबुद्धिरिति**—एतावत्समुद्रोक्त्या श्रीरामस्य सर्वेश्वरत्वेन सर्वशासकत्वं व्यक्तम्। 'भीषास्माद्वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमे

---

१. तज्जाड्यम् रा० व० पु०।

इति श्रुतेः। तेन [1]त्वदाज्ञोल्लङ्घनानुल्लङ्घनेऽपि [2]उभयथा भयप्राप्तिरेव दृश्यते इति सूचितम्।७५

भूतानाममरश्रेष्ठ! पशूनां लकुडो यथा।
शरणं ते व्रजामीश! शरण्यं भक्तवत्सल!।
अभयं देहि मे राम! लङ्कामार्गं ददामि ते।।७६

**भूतानामिति**—अभयं देहि तदा लङ्कामार्गं ददामीत्यनेन मार्गं दातुं मे सामर्थ्यमेव नास्तीति व्यक्तम्। यद्वा मार्गदाने रावणाद्बिभेमीति सूचितम्।७६

**श्रीराम उवाच**—

अमोघोऽयं महाबाणः कस्मिन् देशे निपात्यताम्।
लक्ष्यं दर्शय मे शीघ्रं बाणस्यामोघपातिनः।।७७
रामस्य वचनं श्रुत्वा करे दृष्ट्वा महाशरम्।
महोदधिर्महातेजा राघवं वाक्यमब्रवीत्।।७८
रामोत्तरप्रदेशे तु द्रुमकुल्य इति श्रुतः।
प्रदेशस्तत्र बहवः पापात्मानो दिवानिशम्।।७९
बाधन्ते मां रघुश्रेष्ठ! तत्र ते पात्यतां शरः।
रामेण सृष्टो बाणस्तु क्षणादाभीरमण्डलम्।
हत्वा पुनः समागत्य तूणीरे पूर्ववत् स्थितः।।८०

**रामेणेति**—अकृतरामापराधमपि आभीरमण्डलं हत्वा पुनस्तूणीरे पूर्ववत् स्थितः। तेन स्वापराधे कञ्चित्कालं विलम्बमपि करोति भक्तापराधिनं तु शीघ्रमेव भस्मीकरोतीति सूचितम्।८०

ततोऽब्रवीद्रघुश्रेष्ठं सागरो विनयान्वितः।।८१
नलः सेतुं करोत्वस्मिन् जले मे विश्वकर्मणः।
सुतो धीमान् समर्थोऽस्मिन् कार्ये लब्धवरो हरिः।।८२
कीर्तिं जानन्तु ते लोकाः सर्वलोकमलापहाम्।
इत्युक्त्वा राघवं नत्वा ययौ सिन्धुरदृश्यताम्।।८३

---

१. त्वद्दत्तप्रापकाज्ञालङ्घनानुल्लङ्घने रा० व० पु०। २. उभयप्राप्तिरेव मत्पुस्तके।

**कीर्तिमिति**—लोकाः ते कीर्तिं जानन्तु। तेन शरेण सेतुं कृत्वा शोषयित्वा वा मां पाहीति विज्ञप्तिः सूचिता। शरैः सेतुकरणे चिरस्थायी सेतुर्न स्यात्। मच्छोषणे तु त्वत्पूर्वजानां कीर्तिर्नश्येदिति विज्ञप्तौ हेतुर्व्यक्तः।८३

ततो रामस्तु सुग्रीवलक्ष्मणाभ्यां समन्वितः।
नलमाज्ञापयच्छीघ्रं वानरैः सेतुबन्धने।।८४

ततोऽतिहृष्टः प्लवगेन्द्रयूथपै-
र्महानगेन्द्रप्रतिमैर्युतो नलः।
बबन्ध सेतुं शतयोजनायतं,
सुविस्तृतं पर्वतपादपैर्दृढम्।।८५

इति श्रीबृहद्ब्रह्माण्डपुराणे अध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे तृतीयोऽध्यायः।३

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
तृतीयोऽध्यायः।३

⊙

---

१. इति ध्वनिप्रकाशिकायां ततीयोऽध्यायः। रा० व० पु०।

## अथ चतुर्थोऽध्यायः

**श्रीमहादेव उवाच--**

सेतुमारभमाणस्तु तत्र रामेश्वरं शिवम्।
संस्थाप्य पूजयित्वाह रामो लोकहिताय च॥१

**सेतुमिति**--रामेश्वरशिवस्थापने रावणस्य शिवभक्तत्वात्तं हन्तुमतिसादरमाज्ञां याचितवानिति; तेन च सर्वहितकर्तृत्वमीश्वराणां मानदातृत्वं चेति रामस्य गुणद्वयं व्यक्तम्।१

प्रणमेत् सेतुबन्धं यो दृष्ट्वा रामेश्वरं शिवम्।
ब्रह्महत्यादिपापेभ्यो मुच्यते मदनुग्रहात्॥२
सेतुबन्धे नरः स्नात्वा दृष्ट्वा रामेश्वरं हरम्।
सङ्कल्पनियतो भूत्वा गत्वा वाराणसीं नरः॥३
आनीय गङ्गासलिलं रामेशमभिषिच्य च।
समुद्रे क्षिप्ततद्भारो ब्रह्म प्राप्नोत्यसंशयम्॥४

**प्रणमेदिति**--नरः सेतुबन्धे स्नात्वा रामेश्वरं हरं दृष्ट्वा संकल्पनियतः मध्ये कार्यान्तरमकुर्वन्निति यावत् वाराणसीं गत्वा ततः गङ्गासलिलमानीय तेन गङ्गासलिलेन रामेश्वरमभिषिच्य समुद्रे क्षिप्ततद्भारः जलानयनपात्रादिभारः नरः असंशयं यथा तथा ब्रह्म 'अयोध्या च परब्रह्म सरयूः सगुणः पुमानि' त्युक्त्याऽयोध्याख्यं परं पदं प्राप्नोति।२-४।

कृतानि प्रथमेनाह्ना योजनानि चतुर्दश।
द्वितीयेन तथा चाह्ना योजनानि तु विंशतिः॥५
तृतीयेन तथा चाह्ना योजनान्येकविंशतिः।
चतुर्थेन तथा चाह्ना द्वाविंशतिरिति श्रुतम्॥६
पञ्चमेन त्रयोविंशद्योजनानि समन्ततः।
बबन्ध सागरे सेतुं नलो वानरसत्तमः॥७

**पञ्चमेनेति**—सागरे सेतुं बबन्ध। उभयकूलभूमिं [1]ततलभूमिं चाभिव्याप्येति शेषः।७

तेनैव जग्मुः कपयो योजनानां शतं द्रुतम्।
असङ्ख्याताः सुबेलाद्रिं रुरुधुः प्लवगोत्तमाः।।८
आरुह्य मारुतिं रामो लक्ष्मणोऽप्यङ्गदं तथा।
दिदृक्षू राघवो लङ्कामारुरोहाचलं महत्।।९

**आरुह्येति**—महदिति [2]क्लीवत्वमार्षम्।९

दृष्ट्वा लङ्कां सुविस्तीर्णां नानाचित्रध्वजाकुलाम्।
चित्रप्रासादसम्बाधां स्वर्णप्राकारतोरणाम्।।१०
परिखाभिः शतघ्नीभिः सङ्क्रमैश्च विराजिताम्।
प्रासादोपरि विस्तीर्णप्रदेशे दशकन्धरः।।११
मन्त्रिभिः सहितो वीरैः किरीटदशकोज्ज्वलः।
नीलाद्रिशिखराकारः कालमेघसमप्रभः।।१२
रत्नदण्डैः सितच्छत्रैरनेकैः परिशोभितः।
एतस्मिन्नन्तरे बद्धो मुक्तो रामेण वै शुकः।।१३
वानरैस्ताडितः सम्यक् दशाननमुपागतः।
प्रहसन् रावणः प्राह पीडितः किं परैः शुक! ।।१४
तच्छ्रुत्वा रावणवचः शुको वाक्यमथाब्रवीत्।
सागरस्योत्तरे तीरेऽब्रुवं ते वचनं यथा।।१५
तत उत्प्लुत्य कपयो गृहीत्वा मां क्षणात्ततः।
मुष्टिभिर्नखदन्तैश्च हन्तुं लोप्तुं प्रचक्रमुः।
ततो रामस्य रक्षेति क्रोशन्तं रघुपुङ्गवः।।१६
विसृज्यतामिति प्राह विसृष्टोऽहं कपीश्वरैः।
ततोऽहमागतो भीत्या दृष्ट्वा तद्वानरं बलम्।।१७
राक्षसानां बलौघस्य वानरेन्द्रबलस्य च।
नैतयोर्विद्यते सन्धिर्देवदानवयोरिव ।।१८

---

१. तलभूमिमित्युचितः पाठः। २. क्तवत्त्वमिति मदीयपुस्तके।

पुरप्राकारमायान्ति क्षिप्रमेकतरं कुरु ।
सीतां वास्मै प्रयच्छाशु युद्धं वा दीयतां प्रभो ! ॥१९

त्वामाह रामस्त्वं ब्रूहि रावणं मद्वचः शुक ! ।
यद्बलं त्वं समाश्रित्य सीतां मे हृतवानसि ॥२०

तद्दर्शय यथाकामं ससैन्यः सह बान्धवः ।
श्वःकाले नगरीं लङ्कां सप्राकारां सतोरणाम् ॥२१

**तद्दर्शयेति**—तद्बलं यथाकामं दर्शय । तेनाविहितां भक्तिमवलम्बितवतस्ते कपटाद्युपायेन मां हन्तुं यद्यद्विधास्यति तत्र दोषो ममाज्ञया नास्तीति प्रसूचितम् ।२१

राक्षसं च बलं पश्य शरैर्विध्वंसितं मया ।
घोररोषमहं मोक्ष्ये बलं धारय रावण ! ॥२२

इत्युक्त्वोपरराामाथ रामः कमललोचनः ।
एकस्थानगताः यत्र चत्वारः पुरुषर्षभाः ॥२३

श्रीरामो लक्ष्मणश्चैव सुग्रीवश्च विभीषणः ।
एत एव समर्थास्ते लङ्कां नाशयितुं प्रभो ॥ ! २४

उत्पाट्य भस्मीकरणे सर्वे तिष्ठन्ति वानराः ।
तस्य यादृग्बलं दृष्टं रूपं प्रहरणानि च ॥२५

**उत्पाट्येति**—भस्मीकरणे समुद्रस्थवाडवाग्निप्रक्षेपगेनेति शेषः ।२५

वधिष्यति पुरं सर्वमेकस्तिष्ठन्तु ते त्रयः ।
पश्य वानरसेनां त्वमसङ्ख्यातां प्रपूरिताम् ॥२६

गर्जन्ति वानरास्तत्र पश्य पर्वतसन्निभाः ।
न शक्यास्ते गणयितुं प्राधान्येन ब्रवीमि ते ॥२७

एष योऽभिमुखो लङ्कां नदंस्तिष्ठति वानरः ।
यूथपानां सहस्राणां शतेन परिवारितः ॥२८

सुग्रीवसेनाधिपतिर्नीलो नामाग्निनन्दनः ।
एष पर्वतशृङ्गाभः पद्मकिञ्जल्कसन्निभः ॥२९

स्फोटयत्यभिसंरब्धो लाङ्गूलं च पुनः पुनः।
युवराजोऽङ्गदो नाम वालिपुत्रोऽतिवीर्यवान् ॥३०
येन दृष्टा जनकजा रामस्यातीववल्लभा।
हनूमानेष विख्यातो हतो येन तवात्मजः ॥३१
श्वेतो रजतसङ्काशो महाबुद्धिपराक्रमः।
तूर्णं सुग्रीवमागम्य पुनर्गच्छति वानरः ॥३२
यस्त्वेष सिंहसङ्काशः पश्यत्यतुलविक्रमः।
रम्भो नाम महासत्त्वो लङ्कां नाशयितुं क्षमः ॥३३
एष पश्यति वै लङ्कां दिधक्षन्निव वानरः।
शरभो नाम राजेन्द्र! कोटियूथपनायकः ॥३४
पनसश्च महावीर्यो मैन्दश्च द्विविदस्तथा।
नलश्च सेतुकर्ताऽसौ विश्वकर्मसुतो बली ॥३५
वानराणां वर्णने वा सङ्ख्याने वा क ईश्वरः।
शूराः सर्वे महाकायाः सर्वे युद्धाभिकाङ्क्षिणः ॥३६
शक्ताः सर्वे चूर्णयितुं लङ्कां रक्षोगणैः सह।
एतेषां बलसङ्ख्यानं प्रत्येकं वच्मि ते शृणु ॥३७
एषां कोटिसहस्राणि नव पञ्च च सप्त च।
तथा शंखसहस्राणि तथार्बुदशतानि च ॥३८
सुग्रीवसचिवानां ते बलमेतत् प्रकीर्तितम्।
अन्येषां तु बलं नाहं वक्तुं शक्तोऽस्मि रावण! ॥३९

**सुग्रीवेति**—येषां नामान्युक्तानि तेषु नीलः सेनाधिपतिः अङ्गदो युवराजः मन्त्रिणस्त्वष्टावेव, तद्बलमेतत्प्रकीर्तितम्। अन्येषामसङ्ख्यातत्वान्न वक्तुं शक्तोऽस्मीत्यर्थः।३९

रामो न मानुषः साक्षादादिनारायणः परः।
सीता साक्षाज्जगद्धातुश्चिच्छक्तिर्जगदात्मिका ॥४०

**राम इति**—जगद्धातू रामावेशयुतनारायणस्य सीतावेशयुता चिच्छक्तिः प्रेमा जगदात्मिका मूलप्रकृतिश्च।४०

ताभ्यामेव समुत्पन्नं जगत् स्थावरजङ्गमम्।
तस्माद्रामश्च सीता च जगतस्तस्थुषश्च तौ ॥४१
पितरौ पृथिवीपाल! तयोर्वैरी कथं भवेत्।
अजानता त्वया नीता जगन्मातैव जानकी ॥४२
क्षणनाशिनि संसारे शरीरे क्षणभङ्गुरे।
पञ्चभूतात्मके राजंश्चतुर्विंशतितत्त्वके ॥४३
मलमांसास्थिदुर्गन्धभूयिष्ठेऽहङ्कृतालये।
कैवास्था व्यतिरिक्तस्य काये तव जडात्मके ॥४४
यत्कृते ब्रह्महत्यादिपातकानि कृतानि ते।
भोगभोक्ता तु यो देहः स देहोऽत्र पतिष्यति ॥४५
पुण्यपापे समायातो जीवेन सुखदुःखयोः।
कारणे देहयोगादिनाऽऽत्मनः कुरुतोऽनिशम् ॥४६

**पुण्यपाप इति**—सुखदुःखयोः कारणे पुण्यपापे जीवेन सह समायातः, समायास्यत इत्यर्थ आर्षः। ते च पुण्यपापे देहयोगादिना आत्मनः सुखदुःखे कुरुतः न तु स्वतस्ते आत्मन इत्यर्थः।४६

यावद्देहोऽस्मि कर्त्ताऽस्मीत्यात्माऽहंकुरुतेऽवशः।
अध्यासात्तावदेव स्याज्जन्मनाशादिसम्भवः ॥४७
तस्मात्त्वं त्यज देहादावभिमानं महामते!।
आत्मातिनिर्मलः शुद्धो विज्ञानात्माऽचलोऽव्ययः ॥४८
स्वाज्ञानवशतो बन्धं प्रतिपद्य विमुह्यति।
तस्मात्त्वं शुद्धभावेन ज्ञात्वाऽऽत्मानं सदा स्मर ॥४९
विरतिं भज सर्वत्र पुत्रदारगृहादिषु।
निरयेष्वपि भोगः स्याच्छ्वशूकरतनावपि ॥५०
देहं लब्ध्वा विवेकाढ्यं द्विजत्वं च विशेषतः।
तत्रापि भारते वर्षे कर्मभूमौ सुदुर्लभम् ॥५१
को विद्वानात्मसात्कृत्वा देहभोगानुगो भवेत्।
अतस्त्वं ब्राह्मणो भूत्वा पौलस्त्यतनयश्च सन् ॥५२

अज्ञानीव सदा भोगाननुधावसि किं मुधा।
इतः परं वा त्यक्त्वा त्वं सर्वसङ्गं समाश्रय॥५३
राममेव परात्मानं भक्तिभावेन सर्वदा।
सीतां समर्प्य रामाय तत्पादानुचरो भव॥५४
विमुक्तः सर्वपापेभ्यो विष्णुलोकं प्रयास्यसि।
नो चेद् गमिष्यसेऽधोऽधः पुनरावृत्तिवर्जितः।
अङ्गीकुरुष्व मद्वाक्यं हितमेव वदामि ते॥५५
सत्सङ्गतिं कुरु भजस्व हरिं शरण्यं,
श्रीराघवं मरकतोपलकान्तिकान्तम्।
सीतासमेतमनिशं धृतचापबाणं,
सुग्रीवलक्ष्मणविभीषणसेविताङ्घ्रिम्॥५६

इति श्रीबृहद्ब्रह्माण्डपुराणे अध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे चतुर्थोऽध्यायः।४

⊙

**सत्सङ्गतिमिति**—सुग्रीवलक्ष्मणविभीषणसेविताङ्घ्रिमित्यनेन यदि श्रीरामं शरणं गच्छेस्तर्हि विभीषणवत्त्वमपि तन्मध्ये दिव्यैश्वर्यवत्त्वेन गणनीयो भविष्यसीति सूचितम्। इत्थं समस्तशुकोक्त्या श्रीरामदर्शनेन तदन्तःकरणशुद्धिर्जातेति व्यक्तम्।५६

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
चतुर्थोऽध्यायः।४

⊙

---

१. इति ध्वनिप्रकाशिकायां युद्धकाण्डे चतुर्थोऽध्यायः। रा० व० पु०।

## अथ पञ्चमोऽध्यायः

**श्रीमहादेव उवाच--**

श्रुत्वा शुकमुखोद्गीतं वाक्यमज्ञाननाशनम्।
रावणः क्रोधताम्राक्षो दहन्निव तमब्रवीत्॥१

अनुजीव्य सुदुर्बुद्धे ! गुरुवद् भाषसे कथम्।
शासिताहं त्रिजगतां त्वं मां शिक्षन्न लज्जसे॥२

विहितां भक्तिमसहमानो रावणः क्रुद्ध आह **अनुजीव्येत्यादि**।२

इदानीमेव हन्मि त्वां किन्तु पूर्वकृतं तव।
स्मरामि तेन रक्षामि त्वां यद्यपि वधोचितः॥३

अतो गच्छ विमूढ ! त्वमेवं श्रोतुं न मे क्षमम्।
महाप्रसाद इत्युक्त्वा वेपमानो गृहं ययौ॥४

**अत इति**--गृहं वैषाणसाश्रममित्यर्थः।४

शुकोऽपि ब्राह्मणः पूर्वं ब्राह्मिष्ठो ब्रह्मवित्तमः।
वानप्रस्थविधानेन वने तिष्ठन् स्वकर्मकृत्॥५

अमुमर्थमितिहासेनाह--**शुकोऽपीति**।५

देवानामभिवृद्ध्यर्थं विनाशाय सुरद्विषाम्।
चकार यज्ञविततिमविच्छिन्नां महामतिः॥६

राक्षसानां विरोधोऽभूच्छुको देवहितोद्यतः।
वज्रद्रंष्ट्र इति ख्यातस्तत्रैको राक्षसो महान्॥७

अन्तरं प्रेप्सुरातिष्ठच्छुकापकरणोद्यतः।
कदाचिदागतोऽगस्त्यस्तस्याश्रमपदं मुनेः॥८

तेन सम्पूजितोऽगस्त्यो भोजनार्थं निमन्त्रितः।
गते स्नातुं मुनौ कुम्भसम्भवे प्राप्य चान्तरम् ॥९

अगस्त्यरूपधृक् सोऽपि राक्षसः शुकमब्रवीत्।
यदि दास्यसि मे ब्रह्मन्! भोजनं देहि सामिषम् ॥१०

बहुकालं न भुक्तं मे मांसं छागाङ्गसम्भवम्।
तथेति कारयामास मांसभोज्यं सुविस्तरम् ॥११

उपविष्टे मुनौ भोक्तुं राक्षसोऽतीवसुन्दरम्।
शुकभार्यावपुर्धृत्वा तां चान्तर्मोहयन् खलः ॥१२

नरमांसं ददौ तस्मै सुपक्वं बहुविस्तरम्।
दत्त्वैवान्तर्दधे रक्षस्ततो दृष्ट्वा चुकोप सः ॥१३

अमेध्यं मानुषं मांसमगस्त्यः शुकमब्रवीत्।
अभक्ष्यं मानुषं मांसं दत्तवानसि दुर्मते! ॥१४

मह्यं त्वं राक्षसो भूत्वा तिष्ठ त्वं मानुषाशनः।
इति शप्तः पुरो भीत्या प्राहागस्त्यं मुने! त्वया ॥१५

इदानीं भाषितं मेऽद्य मांसं देहीति विस्तरम्।
तथैव दत्तं मे देव! किं मे शापं प्रदास्यसि ॥१६

श्रुत्वा शुकस्य वचनं मुहूर्तं ध्यानमास्थितः।
ज्ञात्वा रक्षः कृतं सर्वं ततः प्राह शुकं सुधीः ॥१७

तवापकारिणा सर्वं राक्षसेन कृतं त्विदम्।
अविचार्यैव मे दत्तः शापस्ते मुनिसत्तम! ॥१८

तथापि मे वचोऽमोघमेवमेव भविष्यति।
राक्षसं वपुरास्थाय रावणस्य सहायकृत् ॥१९

तिष्ठ तावद्यदा रामो दशाननवधाय हि।
आगमिष्यति लङ्कायाः समीपं वानरैः सह ॥२०

प्रेषितो रावणेन त्वं चारो भूत्वा रघूत्तमम्।
दृष्ट्वा शापाद्विनिर्मुक्तो बोधयित्वा च रावणम् ॥२१

तत्त्वज्ञानं ततो मुक्तः परं पदमवाप्स्यसि।
इत्युक्तोऽगस्त्यमुनिना शुको ब्राह्मणसत्तमः ॥२२

**तत्त्वज्ञानमिति**—परं पदमवाप्स्यसीत्यनेन श्रीरामभक्तदत्तशापोऽपि अन्यस्य वरादधिकं गम्यते।२२

बभूव राक्षसः सद्यो रावणं प्राप्य संस्थितः।
इदानीं चाररूपेण दृष्ट्वा रामं सहानुजम् ॥२३
रावणं तत्त्वविज्ञानं बोधयित्वा पुनर्द्रुतम्।
पूर्ववद्ब्राह्मणो भूत्वा स्थितो वैखानसैः सह ॥२४
ततः समागमद्वृद्धो माल्यवान् राक्षसो महान्।
बुद्धिमान् नीतिनिपुणो राज्ञो मातुःप्रियः पिता ॥२५

**तत इति**—राज्ञो मातुः पिता, राज्ञः [1]पितामह इत्यर्थः। प्रियश्च।२५

प्राह तं राक्षसं वीरं प्रशान्तेनान्तरात्मना।
शृणु राजन्! वचो मेऽद्य श्रुत्वा कुरु यथेप्सितम् ॥२६
यदा प्रविष्टा नगरीं जानकी रामवल्लभा।
तदादि पुर्यां दृश्यन्ते निमित्तानि दशानन! ॥२७
घोराणि नाशहेतूनि तानि मे वदतः शृणु।
खरस्तनितनिर्घोषा मेघा अतिभयङ्कराः ॥२८

**घोराणीति**—खरं कठोरं स्तनितं निर्घोषः सवज्रपातः शब्दश्च येषां ते।२८

शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वदा।
रुदन्ति देवलिङ्गानि स्विद्यन्ति प्रचलन्ति च ॥२९
कालिकापाण्डुरैर्दन्तैः प्रहसत्यग्रतः स्थितः।
खरा गोषु प्रजायन्ते मूषकाः नकुलैः सह ॥३०
मार्जारेण तु युध्यन्ति पन्नगा गरुडेन तु।
करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ॥३१
कालो गृहाणि सर्वेषां काले काले त्ववेक्षते।
एतान्यन्यानि दृश्यन्ते निमित्तान्युद्भवन्ति च ॥३२

---

१. मातामह इति समीचीनः।

अतः कुलस्य रक्षार्थं शान्तिं कुरु दशानन! ।
सीतां सत्कृत्य सधनां रामायाशु प्रयच्छ भोः! ॥३३
रामं नारायणं विद्धि विद्वेषं त्यज राघवे ।
यत्पादपोतमाश्रित्य ज्ञानिनो भवसागरम् ॥३४

**राममिति**--रामं नारायणमावेशेन विद्धि ।३४

तरन्ति भक्तिपूतान्तास्ततो रामो न मानुषः ।
भजस्व भक्तिभावेन रामं सर्वहृदालयम् ॥३५
यद्यपि त्वं दुराचारो भक्त्या पूतो भविष्यसि ।
मद्वाक्यं कुरु राजेन्द्र! कुलकौशलहेतवे ॥३६
तत्तु माल्यवतो वाक्यं हितमुक्तं दशाननः ।
न मर्षयति दुष्टात्मा कालस्य वशमागतः ॥३७

**तदिति**—दशाननः तत् माल्यवतो वाक्यं हितमपि न मर्षयति, तत्र हेतुः दुष्टात्मा विहितात् दुष्टा या अविहिता भक्तिस्तस्यामात्मा मनो यस्य सः । अत एव कालस्य वशं गत इत्यनेन जीवनात् सकुलस्य मम रामबाणैर्मरणमेव हितमिति तस्य निश्चयो व्यज्यते ।३७

मानवं कृपणं राममेकं शाखामृगाश्रयम् ।
समर्थं मन्यसे केन हीनं पित्रा मुनिप्रियम् ॥३८

स्पष्टार्थे अमर्षं दर्शयति **मानवमिति**–एतेन त्रैलोक्यविजयिनो मम किमपि कर्तुं न शक्त इति सूचितम् । अक्षरार्थस्तु मानवं मानवाकृतिरीश्वर इत्युक्तनित्यद्विभुज ईश्वरेश्वरेश्वर श्रीरामावेशयुतं अतः कृपणं परमसमर्थं कृपूसामर्थ्ये इत्यस्माल्ल्युट् संज्ञापूर्वकत्वाद्-गुणाभावः । एकं समाभ्यधिकरहितं रामं सर्वेषां रमयितारं सर्वेषु च रमणशीलं । शाखामृगाश्रयं शाखाः वेदशाखाः मार्गतीति शाखामृगो ब्रह्मा, तस्याश्रयस्तं । पित्रा हीनं अनादित्वात् । मुनिप्रियं मुनयो मननशीलाः भक्तास्तेषां प्रियः ते प्रियाः यस्येति वा । एवं भूतः त्वं शीघ्रं मन्मुक्तिदाने विहिताविहितयोर्मध्ये केनोपायेन त्वं समर्थं मन्यसे । यद् वा केन शीघ्रं मत्सुखदाने समर्थं न मन्यसे, अतो मूढोऽसीति भावः ।३८

रामेण प्रेषितो नूनं भाषसे त्वमनर्गलम् ।
गच्छ वृद्धोऽसि बन्धुस्त्वं सोढं सर्वं त्वयोदितम् ॥३९

**रामेणेति**—गच्छेत्यनेन विहितभक्त्या मुक्तिं प्रतीक्षस्व अहमविहितभक्त्या शीघ्रमेव मुक्तिं स्वीकरोमीति व्यक्तम् । रामेण त्वं प्रेषितोऽसीति नूनं निश्चितं यतोऽनर्गलं शीघ्र-

मुक्तिदात्रीमविहितां विहायातिक्लेशसाध्यं विहिताश्रयणरूपं भाषसे। वृद्धोऽसि, वृद्धत्वात्तव बुद्धिर्नष्टेति त्वदुक्तं सर्वं सोढं क्षान्तम्।३९

इतो मत्कर्णपदवीं दहत्येतद्वचस्तव।
इत्युक्त्वा सर्वसचिवैः सहितः प्रस्थितस्तदा।।४०

**इत इति**––इतः त्वद्वक्त्रान्निःसृतमविहितात्यागपूर्वकं विहिताश्रयणरूपं तव एतद्वचः मे कर्णपदवीं दहति। एतेन एतादृशविभीषणवाक्यश्रवणादेव सः निष्कासित इति व्यज्यते।४०

प्रासादाग्रे समासीनः पश्यन् वानरसैनिकान्।
युद्धायायोजयत् सर्वराक्षसान् समुपस्थितान्।।४१
रामोऽपि धनुरादाय लक्ष्मणेन समाहृतम्।
दृष्ट्वा रावणमासीनं कोपेन कलुषीकृतः।।४२
किरीटिनं समासीनं मन्त्रिभिः परिवेष्टितम्।
शशाङ्कार्धनिभेनैव बाणेनैकेन राघवः।।४३
श्वेतच्छत्रसहस्राणि किरीटदशकं तथा।
चिच्छेद निमिषार्धेन तदद्भुतमिवाभवत्।।४४

**श्वेतच्छत्रेति**––श्वेतच्छत्रसहस्राणि चिच्छेदेत्यनेन सहस्रदैत्यदानवनागयक्षराक्षस-गन्धर्वाणां राजभिः सेवितः स्थित इत्यवगम्यते। तेन रावणस्य त्रैलोक्यनायकत्वम्। अत्र तेषां छत्रच्छेदनेन यदि रावणं विहाय स्वान् लोकान्न [1]गच्छेयुस्तर्हि युष्मानपि निहन्यामिति शिक्षितमिति व्यज्यते। युद्धावसरे तेषामवर्णनात् ते रावणं विहाय गता इति गम्यते।४४

लज्जितो रावणस्तूर्णं विवेश भवनं स्वकम्।
आहूय राक्षसान् सर्वान् प्रहस्तप्रमुखान् खलः।।४५
वानरैः सह युद्धाय नोदयामास सत्त्वरः।
ततो भेरीमृदङ्गाद्यैः पणवानकगोमुखैः।।४६
महिषोष्ट्रैः खरैः सिंहैर्द्वीपिभिः कृतवाहनाः।
खड्गशूलधनुःपाशयष्टितोमरशक्तिभिः।।४७
लक्षिताः सर्वतो लङ्कां प्रतिद्वारमुपाययुः।
तत्पूर्वमेव रामेण नोदिता वानरर्षभाः।।४८

---

१. गच्छे युष्मानमपि इति मत्पुस्तके।

उद्यम्य गिरिशृङ्गाणि शिखराणि महान्ति च।
तरूंश्चोत्पाट्य विविधान् युद्धाय हरियूथपाः ॥४९

प्रेक्षमाणा रावणस्य तान्यनीकानि भागशः।
राघवप्रियकामार्थं लङ्कामारुरुहुस्तदा ॥५०

ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च प्लवङ्गमाः।
ततः सहस्रयूथाश्च कोटियूथाश्च यूथपाः ॥५१

कोटीशतयुताश्चान्ये रुरुधुर्नगरं भृशम्।
अप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥५२

रामो जयत्यतिबलो लक्ष्मणश्च महाबलः।
राजा जयति सुग्रीवो राघवेणानुपालितः ॥५३

इत्येवं घोषयन्तश्च समं युयुधिरेऽरिभिः।
हनुमानङ्गदश्चैव कुमुदो नील एव च ॥५४

नलश्च शरभश्चैव मैन्दो द्विविद एव च।
जाम्बवान् दधिवक्त्रश्च केशरी तार एव च ॥५५

अन्ये च बलिनः सर्वे यूथपाश्च प्लवङ्गमाः।
द्वाराण्युत्प्लुत्य लङ्कायाः सर्वतो रुरुहुर्भृशम्।
तदा वृक्षैर्महाकायाः पर्वताग्रैश्च वानराः ॥५६

**द्वाराणीति**—द्वाराणि नगरबहिःस्थकोटद्वाराण्युत्प्लुत्येत्यर्थः ।५६

निजघ्नुस्तानि रक्षांसि नखैर्दन्तैश्च वेगिताः।
राक्षसाश्च तदा भीमा द्वारेभ्यः सर्वतो रुषा ॥५७

निर्गत्य भिन्दिपालैश्च खड्गैः शूलैः परश्वधैः।
निजघ्नुर्वानरानीकं महाकाया महाबलाः ॥५८

राक्षसांश्च तथा जघ्नुर्वानरा जितकाशिनः।
तथा बभूव समरो मांसशोणितकर्दमः ॥५९

रक्षसां वानराणाञ्च सम्बभूवाद्भुतोपमः।
ते हयैश्च गजैश्चैव रथैः काञ्चनसन्निभैः ॥६०

रक्षो[1]व्याघ्रा युयुधिरे नादयन्तो दिशो दश।
राक्षसाश्च कपीन्द्राश्च परस्परजयैषिणः ॥६१

---

१. व्याघ्राय युयुधुः मत्पुस्तके।

राक्षसान् वानरा जघ्नुर्वानरांश्चैव राक्षसाः।
रामेण विष्णुना दृष्टा हरयो दिविजांशजाः॥६२

बभूवुर्बलिनो हृष्टास्तदा पीतामृता इव।
सीताभिमर्षपापेन रावणेनाभिपालितान्॥६३

हतश्रीकान् हतबलान् राक्षसान् जघ्नुरोजसा।
चतुर्थांशावशेषेण निहतं राक्षसं बलम्॥६४

स्वसैन्यं निहतं दृष्ट्वा मेघनादोऽथ दुष्टधीः।
ब्रह्मदत्तवरः श्रीमानन्तर्धानं गतोऽसुरः॥६५

सर्वास्त्रकुशलो व्योम्नि ब्रह्मास्त्रेण समन्ततः।
नानाविधानि शस्त्राणि वानरानीकमर्दयन्॥६६

ववर्ष शरजालानि तदद्भुतमिवाभवत्।
रामोऽपि मानयन् ब्राह्ममस्त्रमस्त्रविदां वरः॥६७

क्षणं तूष्णीमुवासाथ ददर्श पतितं बलम्।
वानराणां रघुश्रेष्ठश्चुकोपानलसन्निभः॥६८

चापमानय सौमित्रे! ब्रह्मास्त्रेणासुरं क्षणात्।
भस्मीकरोमि मे पश्य बलमद्य रघूत्तम!॥६९

मेघनादोऽपि तच्छ्रुत्वा रामवाक्यमतन्द्रितः।
तूर्णं जगाम नगरं मायया मायिकोऽसुरः॥७०

**मेघनाद इति**—श्रीरामवचनं श्रुत्वा नगरं गतः। एतेन मेघनादस्यापि श्रीरामावेशयुतनारायणज्ञानं जातमिति व्यक्तम्।७०

पतितं वानरानीकं दृष्ट्वा रामोऽतिदुःखितः।
उवाच मारुतिं शीघ्रं गत्वा क्षीरमहोदधिम्॥७१

**पतितमिति**—वानरानीकं पतितं दृष्ट्वेत्यनेन सर्वमनीकं हत्वा गतः। तत्र श्रीरामलक्ष्मणहनुमन्तः त्रय एवावशिष्टा इति सूचितम्।७१

तत्र द्रोणगिरिर्नाम दिव्यौषधिसमुद्भवः।
तमानय द्रुतं गत्वा संजीवय महामते!॥७२

वानरौघान् महासत्त्वान् कीर्तिस्ते सुस्थिरा भवेत्।
आज्ञा प्रमाणमित्युक्त्वा जगामानिलनन्दनः ॥७३
आनीय च गिरिं सर्वान् वानरान् वानरर्षभः।
जीवयित्वा पुनस्तत्र स्थापयित्वा ययौ द्रुतम् ॥७४
पूर्ववद् भैरवं नादं वानराणां बलौघतः।
श्रुत्वा विस्मयमापन्नो रावणो वाक्यमब्रवीत् ॥७५
राघवो मे महान् शत्रुः प्राप्तो देवविनिर्मितः।
हन्तुं तं समरे शीघ्रं गच्छन्तु मम यूथपाः ॥७६

**राघव इति**—राघवः देवविनिर्मितः मम महान् शत्रुरिति रावणोक्त्या देवाः विष्णुचक्रनिपातैश्च शतशो देवसंयुगे' इत्युक्तरीत्या नारायणावध्यं मां ज्ञात्वा श्रीनित्यविहारिरामावेशाधिष्ठितनारायणं संप्रार्थ्य मद्धननार्थमानीतवन्त इति व्यक्तम्। तेन मुक्तिद्वारमुद्घाटितकपाटमिव व्यज्यते।७६

मन्त्रिणो बान्धवाः शूराः ये च मत्प्रियकाङ्क्षिणः।
सर्वे गच्छन्तु युद्धाय त्वरितं मम शासनात् ॥७७
ये न गच्छन्ति युद्धाय भीरवः प्राणविप्लवात्।
तान् हनिष्याम्यहं सर्वान् मच्छासनपराङ्मुखान् ॥७८
तच्छ्रुत्वा भयसंत्रस्ता निर्जग्मू रणकोविदाः।
अतिकायः प्रहस्तश्च महानादमहोदरौ ॥७९
देवशत्रुर्निकुम्भश्च देवान्तकनरान्तकौ।
अपरे बलिनः सर्वे ययुर्युद्धाय वानरैः ॥८०
एते चान्ये च बहवः शूराः शतसहस्रशः।
प्रविश्य वानरं सैन्यं ममन्थुर्बलदर्पिताः ॥८१
भुशुण्डैर्भिन्दिपालैश्च बाणैः खड्गैः परश्वधैः।
अन्यैश्च विविधैरस्त्रैर्निजघ्नुर्हरियूथपान् ॥८२
ते पादपैः पर्वताग्रैर्नखैर्दंष्ट्रैश्च मुष्टिभिः।
प्राणैर्विमोचयामासुः सर्वराक्षसयूथपान् ॥८३
रामेण निहताः केचित् सुग्रीवेण तथाऽपरे।
हनूमता चाङ्गदेन लक्ष्मणेन महात्मना।
यूथपैर्वानराणां ते निहताः सर्वराक्षसाः ॥८४

**रामेणेति**—रामेण निहताः केचिदित्यादिश्लोकेन रावणप्रेषितप्रथमसैन्येनैवं द्वन्द्व-युद्धमागतं कुम्भः सुग्रीवेण अतिकायो लक्ष्मणेन प्रहस्तो नीलेन निकुम्भो हनुमता इन्द्रजिदङ्ग-देन नरान्तकश्च तेनैव देवान्तको हनुमता नलेन महोदरश्च युयुधुः इति। अवशिष्टा राक्षसा रामेण युयुधुः। एतेन श्रीरामसैन्याद्रावणसैन्यस्याधिक्यं द्योतितम्।८४

रामतेजः समाविश्य वानरा बलिनोऽभवन्।
रामशक्तिविहीनानामेवं शक्तिः कुतो भवेत्॥८५

सर्वेश्वरः सर्वमयो विधाता,
मायामनुष्यत्वविडम्बनेन।
सदा चिदानन्दमयोऽपि रामो,
युद्धादिलीलां वितनोति मायाम्॥८६

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे पञ्चमोऽध्यायः।५

⊙

**सर्वेश्वर इति**—सदा चिदानन्दमयोऽपि श्रीरामः मायया कृपया मनुष्यत्वानुकरणेन युद्धादिलीलारूपां विस्तारयति प्रकटीकरोतीति यावत्। तेन एतल्लीलाश्रवणमननाभ्यां बहवः संतरिष्यन्तीति रामस्याशयो व्यज्यते। तेन श्रीरामस्य सर्वजीवोपरि कारुण्यातिशयः सूचितः।८६

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
पञ्चमोऽध्यायः।५

⊙

---

१. इति युद्धकाण्डे पञ्चमोऽध्यायः। ५ इति रा० व० पु०।

## अथ षष्ठोऽध्यायः

**श्रीमहादेव उवाच—**

श्रुत्वा युद्धे बलं नष्टमतिकायमुखं महत्।
रावणो दुःखसन्तप्तः क्रोधेन महता वृतः ॥१

**श्रुत्वेति**—।१

निधायेन्द्रजितं लङ्कारक्षणार्थं महाद्युतिः।
स्वयं जगाम युद्धाय रामेण सह राक्षसैः ॥२
दिव्यं स्यन्दनमारुह्य सर्वशस्त्रास्त्रसंयुतम्।
राममेवाभिदुद्राव राक्षसेन्द्रो महाबलः ॥३

**दिव्यमिति**—राक्षसेन्द्रः राममेवाभिदुद्राव।३

वानरान् बहुशो हत्वा बाणैराशीविषोपमैः।
पातयामास सुग्रीवप्रमुखान् यूथनायकान् ॥४

**वानरानिति**—सुग्रीवप्रमुखान् यूथनायकान् पातयामासेत्यनेन रावणाभिद्रवणकाले सुग्रीवादयः श्रीरामाग्रे आगम्य रावणेन युयुधुरिति गम्यते। तेन श्रीरामोपरि तेषां सौहार्दातिशयो व्यक्तः।४

गदापाणिं महासत्त्वं तत्र दृष्ट्वा विभीषणम्।
उत्ससर्ज महाशक्तिं मयदत्तां विभीषणे ॥५
तामापतन्तीमालोक्य विभीषणविघातिनीम्।
दत्ताभयोऽयं रामेण वधार्हो नायमासुरः ॥६
इत्युक्त्वा लक्ष्मणो भीमं चापमादाय वीर्यवान्।
विभीषणस्य पुरतः स्थितोऽकम्प इवाचलः ॥७

**इत्युक्त्वेति**—श्रीरामेण दत्ताभयोऽयमतो न वधार्हः अतः मच्छरीरभङ्गो भवतु वेद् भवतु श्रीरामस्य प्रतिज्ञाभङ्गो मा भूयादिति चापमादाय स्थितः। एतेन लक्ष्मणस्य श्रीरामे परमप्रीत्यतिशयो व्यक्तः। विभीषणाग्रे चापमादाय स्थितः। एतेन मयदत्तां

शक्तिं न निवारितवानिति व्यक्तम्। तेन चापोऽपि श्रीरामभक्त एवेति। तेन च तद् भक्तप्रियत्वम्। विभीषणाग्रेऽचल इवाकम्पः स्थितः। तेन श्रीलक्ष्मणस्य शौर्यातिशयो व्यज्यते।७

सा शक्तिर्लक्ष्मणतनुं विवेशामोघशक्तितः।
यावन्त्यः शक्तयो लोके मायायाः सम्भवन्ति हि॥८
तासामाधारभूतस्य लक्ष्मणस्य महात्मनः।
मायाशक्त्या भवेत् किं वा शेषांशस्य हरेस्तनोः॥९

**तासामिति**—शेषोंऽशो यस्य तस्य हरेः क्षीरसागरवासिनारायणरूपलक्ष्मणस्य सम्बन्धिन्याः तनोः मायाशक्त्या किं भवेन्न किमपीत्यर्थः।९

तथापि मानुषं भावमापन्नस्तदनुव्रतः।
मूर्च्छितः पतितो भूमौ तमादातुं दशाननः॥१०

**तथापीति**—लक्ष्मणावेशेन मानुषभावं[1] मानुषनासम्।१०

हस्तैस्तोलयितुं शक्तो न बभूवातिविस्मितः।
सर्वस्य जगतः सारं विराजं परमेश्वरम्॥११
कथं लोकाश्रयं विष्णुं तोलयेल्लघुराक्षसः।
ग्रहीतुकामं सौमित्रिं रावणं वीक्ष्य मारुतिः॥१२

**हस्तैरिति**—विराजं विराजभिमानिनं संकर्षणं लोकाश्रयं लोकाधारं शेषं परमेश्वरं क्षीरसागरवासिनारायणं विष्णुं शेषसंकर्षणक्षीरसागरवासिनारायणेषु व्यापनशीलम् अर्थात् लक्ष्मणवेशाधिष्ठितं शेषसङ्कर्षणयुतक्षीरसागरवासिनारायणं कथं तोलयेत् न कथमपीत्यर्थः। एतेन सदाशिवः ये शेषावतारं लक्ष्मणं वदन्ति तेषां मुखाच्छादनं करोतीति व्यक्तम्।११-१२

आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना।
तेन मुष्टिप्रहारेण जानुभ्यामपतद् भुवि॥१३

**आजघानेति**—तोलितकैलाशोऽपि महाबलशाली रावणः हनुमदेकमुष्टिप्रहारेणैव मूर्च्छितो भुव्यपतदित्यनेन श्रीहनुमतः पराक्रमातिशयः सूचितः।१३

आस्यैश्च नेत्रश्रवणैरुद्वमन् रुधिरं बहु।
विघूर्णमाननयनो रथोपस्थ उपाविशत्॥१४

---

१. अस्पष्टार्थः, मानुषनाट्यम् इत्युचितः।

अथ लक्ष्मणमादाय हनूमान् रावणार्दितम्।
आनयद्रामसामीप्यं बाहुभ्यां परिगृह्य तम्॥१५
हनूमतः सुहृत्त्वेन भक्त्या च परमेश्वरः।
लघुत्वमगमद्देवो गुरूणां गुरुरप्यजः॥१६

**हनूमत इति**—हनुमत्सुहृत्त्वेन भक्त्या च परमेश्वरो गुरूणां गरिष्ठानां गुरुः गरिष्ठः यस्यांशशेषस्य एकफणायां, भूमण्डलं सर्षपवत् स्थितम्—एवं भूतो अंशी लक्ष्मणो लघुत्वमगमदित्यनेन केवलं शक्तिसाफल्यं कर्तुं निमीलितनेत्रः न तु मूर्च्छितः तेन तद्भक्तवचनसत्यकारकत्वव्रतधारकत्वमिति व्यज्यते।१६

सा शक्तिरपि तं त्यक्त्वा ज्ञात्वा नारायणांशजम्।
रावणस्य रथं प्रागाद्रावणोऽपि शनैस्ततः॥१७

**सा शक्तिरिति**—नारायणांशजम्-नारायणे अंशेन आवेशेन जायते प्रादुर्भवतीति नारायणांशजम् आवेशेन नित्यविहारिलक्ष्मणशक्तिं ज्ञात्वा रावणस्य रथं प्रागात्। तेन रामभक्तेन ब्रह्मणा मयाय, रामभक्तमयेन अविहितभक्त्यधिकारिणे रावणाय दत्तशक्तेरपि चैतन्यं सूचितम्।१७

संज्ञामवाप्य जग्राह बाणासनमथो रुषा।
राममेवाभिदुद्राव दृष्ट्वा रामोऽपि तं क्रुधा॥१८

**संज्ञामिति**—रावणः लक्ष्मणप्रमुखान् सर्वान् जित्वा राममेवाभिदुद्रावेत्यनेन रावणस्य पराक्रमातिशयो व्यज्यते।१८

आरुह्य जगतां नाथो हनूमन्तं महाबलम्।
रथस्थं रावणं दृष्ट्वा अभिदुद्राव राघवः॥१९
ज्याशब्दमकरोत्तीव्रं वज्रनिष्पेषनिष्ठुरम्।
रामो गम्भीरया वाचा राक्षसेन्द्रमुवाच ह॥२०
राक्षसाधम! तिष्ठाद्य क्व गमिष्यसि मे पुरः।
कृत्वापराधमेवं मे सर्वत्र समदर्शिनः॥२१

**राक्षसाधमेति**—राक्षसाः अधमाः यस्मात् तत्सम्बुद्धौ राक्षसाधम! मेऽपराधमविहितभक्त्यङ्गीकाररूपं कृत्वा क्व यास्यसि-ते मुक्तिं करोम्येवेति सूचितम्। ममाग्रे तिष्ठ-एतेन अविहितावलम्बेन ते शिवलोकगमनशक्तिः। सर्वत्र समदर्शिन इत्यनेन विहिताभक्तौ नाग्रहः किन्तु सम्मुखागमनमात्रे सर्वेषां मुक्तिप्रदोऽहमिति सूचितम्।२१

येन बाणेन निहताः राक्षसास्ते जनालये।
तेनैव त्वां हनिष्यामि तिष्ठाद्य मम गोचरे॥२२

समदर्शित्वमेवाह—**येनेत्यादिना**।२२

श्रीरामस्य वचः श्रुत्वा रावणो मारुतात्मजम्।
वहन्तं राघवं सङ्ख्ये शरैस्तीक्ष्णैरताडयत्॥२३

**श्रीरामस्येति**—मारुतात्मजमताडयत् न तु रामम्। एतेन श्रीरामः स्वापराधं न स्मरति, भक्तापराधे शीघ्रं मुक्तिं दास्यतीति रावणास्याशयो व्यक्तः।२३

हतस्यापि शरैस्तीक्ष्णैर्वायुसूनोः स्वतेजसा।
व्यवर्धत पुनस्तेजो ननर्द च महाकपिः॥२४
ततो दृष्ट्वा हनूमन्तं सव्रणं रघुसत्तमः।
क्रोधमाहारयामास कालरुद्र इवापरः॥२५
साश्वं रथं ध्वजं सूतं शस्त्रौघं धनुरञ्जसा।
छत्रं पताकां तरसा चिच्छेद शितसायकैः॥२६

**साश्वमिति**—चिच्छेदेत्यादि। श्रीरामः स्वेन सार्धं युद्धं न कारयित्वा शीघ्रमेवाजयदित्यनेन नाहं मनुष्योऽस्मीति दर्शितवान्। तेन च सपरिकरस्य ते शीघ्रमेव मुक्तिं दास्यामीत्याश्वासनं द्योतितम्।२६

ततो महाशरेणाऽऽशु रावणं रघुसत्तमः।
विव्याध वज्रकल्पेन पाकारिरिव पर्वतम्॥२७
रामबाणहतो वीरश्चचाल च मुमोह च।
हस्तान्निपतितश्चापस्तं समीक्ष्य रघूत्तमः॥२८

**रामबाणेति**—यैः बाणैः खरादयो मृतास्तैः रावणः मुमोहैव न तु मृतः। तेन रावणस्य महासत्त्वत्वं ध्वनितम्।२८

अर्धचन्द्रेण चिच्छेद तत्किरीटं रविप्रभम्।
अनुजानामि गच्छ त्वमिदानीं बाणपीडितः॥२९

**अर्धचन्द्रेणेति**—इदानीं गच्छेति श्रीरामोक्त्या स्वसैन्यपरिवारेभ्यो मुक्तिं दापयित्वा पश्चात्त्वमपि मुक्तिं गृहाणेति व्यक्तम्।२९

प्रविश्य लङ्कामाश्वास्य श्वः पश्यसि बलं मम।
रामबाणेन संविद्धो हतदर्पोऽथ रावणः॥३०

महत्या लज्जया युक्तो लङ्कां प्राविशदातुरः।
रामोऽपि लक्ष्मणं दृष्ट्वा मूर्च्छितं पतितं भुवि॥३१

मानुषत्वमुपाश्रित्य लीलयानुशुशोच ह।
ततः प्राह हनूमन्तं वत्स! जीवय लक्ष्मणम्॥३२

महौषधीः समानीय पूर्ववद् वानरानपि।
तथेति राघवेणोक्तो जगामाशु महाकपिः॥३३

हनूमान् वायुवेगेन क्षणात्तीर्त्वा महोदधिम्।
एतस्मिन्नन्तरे चाराः रावणाय न्यवेदयन्॥३४

रामेण प्रेषितो देव! हनूमान् क्षीरसागरम्।
गतो नेतुं लक्ष्मणस्य जीवनार्थं महौषधीः॥३५

श्रुत्वा तच्चारवचनं राजा चिन्तापरोऽभवत्।
जगाम रात्रावेकाकी कालनेमिगृहं क्षणात्॥३६

गृहं गतं समालोक्य रावणं विस्मयान्वितः।
अर्घ्यादिकं ततः कृत्वा रावणस्याग्रतः स्थितः॥३७

किं ते करोमि राजेन्द्र! किमागमनकारणम्।
कालनेमिमुवाचेदं रावणो दुःखपीडितः॥३८

ममापि कालवशतः कष्टमेतदुपस्थितम्।
मया शक्त्या हतो वीरो लक्ष्मणः पतितो भुवि॥३९

तं जीवयितुमानेतुमोषधीर्हनुमान् गतः।
यथा तस्य भवेद्विघ्नस्तथा कुरु महामते!॥४०

मायया मुनिवेषेण मोहयस्व महाकपिम्।
कालात्ययो यथा भूयात्तथा कृत्वैहि मन्दिरम्॥४१

रावणस्य वचः श्रुत्वा कालनेमिरुवाच तम्।
रावणेश ! वचो मेऽद्य शृणु धारय तत्त्वतः ॥४२

प्रियं ते करवाण्येव न प्राणान् धारयाम्यहम्।
मारीचस्य यथाऽरण्ये पुराऽभून्मृगरूपिणः ॥४३

तथैव मे न सन्देहो भविष्यति दशानन !।
हताः पुत्राश्च पौत्राश्च बान्धवाः राक्षसाश्च ते ॥४४

घातयित्वाऽसुरकुलं जीवितेनाऽपि किं तव।
राज्येन वा सीतया वा किं देहेन जडात्मना ॥४५

सीतां प्रयच्छ रामाय राज्यं देहि विभीषणे।
वनं याहि महाबाहो! रम्यं मुनिगणाश्रयम् ॥४६

स्नात्वा प्रातः शुभजले कृत्वा सन्ध्यादिकाः क्रियाः।
तत एकान्तमाश्रित्य सुखासनपरिग्रहः ॥४७

विसृज्य सर्वतः सङ्गमितरान्विषयान् बहिः।
बहिः प्रवृत्ताक्षगणं शनैः प्रत्यक् प्रवाहय ॥४८

प्रकृतेर्भिन्नमात्मानं विचारय सदानघ !।
चराचरं जगत्कृत्स्नं देहबुद्धीन्द्रियादिकम् ॥४९

आब्रह्मस्तम्बपर्यन्तं दृश्यते श्रूयते च यत्।
सैषा प्रकृतिरित्युक्ता सैव मायेति कीर्तिता ॥५०

सर्गस्थितिविनाशानां जगद्वृक्षस्य कारणम्।
लोहितश्वेतकृष्णादि प्रजाः सृजति सर्वदा ॥५१

कामक्रोधादिपुत्राद्यान् हिंसा तृष्णादिकन्यकाः।
मोहयन्त्यनिशं देवमात्मानं स्वैर्गुणैर्विभुम् ॥५२

कर्तृत्वभोक्तृत्वमुखान् स्वगुणानात्मनीश्वरे।
आरोप्य स्ववशं कृत्वा तेन क्रीडति सर्वदा ॥५३

**कर्तृत्वेति**—कर्तृत्वभोक्तृत्वप्रमुखान् स्वगुणान् ईश्वरे देहेन्द्रियाधिष्ठातरि आत्मनि जीवे आरोप्य तं जीवं स्ववशं कृत्वा तेन जीवात्मना सह माया क्रीडति ।५३

शुद्धोऽप्यात्मा यया युक्तः पश्यतीव सदा बहिः ।
विस्मृत्य च स्वमात्मानं मायागुणविमोहितः ॥५४

**शुद्ध इति**—स्वतः शुद्धोऽप्यात्मा यया मायया युक्तः सन् स्वमात्मानं अन्तर्यामिनं च विस्मृत्य बहिः बाह्यविषयान् सदा पश्यतीव पश्यत्येव, तत्र हेतुः मायागुणविमोहितः ।५४

यदा सद्गुरुणा युक्तो बोध्यते बोधरूपिणा ।
निवृत्तिदृष्टिरात्मानं पश्यत्येव तदा स्फुटम् ॥५५

जीवन्मुक्तस्तदा देही मुच्यते प्राकृतैर्गुणैः ।
त्वमप्येवं सदात्मानं विचार्य नियतेन्द्रियः ॥५६

प्रकृतेरन्यमात्मानं ज्ञात्वा मुक्तो भविष्यसि ।
ध्यातुं यद्यसमर्थोऽसि सगुणं देवमाश्रय ॥५७

[1]हृत्यग्रकर्णिके स्वर्णपीठे मणिगणाञ्चिते ।
मृदुश्लक्ष्णतरे तत्र जानक्या सह संस्थितम् ॥५८

वीरासनं विशालाक्षं विद्युत्पुञ्जनिभाम्बरम् ।
किरीटहारकेयूरकौस्तुभादिभिरन्वितम् ॥५९

नूपुरैः कटकैर्भान्तं तथैव वनमालया ।
लक्ष्मणेन धनुर्द्वन्द्वकरेण परिसेवितम् ॥६०

एवं ध्यात्वा सदात्मानं रामं सर्वहृदि स्थितम् ।
भक्त्या परमया युक्तो मुच्यते नात्र संशयः ॥६१

श्रृणु वै चरितं तस्य भक्तैर्नित्यमनन्यधीः ।
एवं चेत् कृतपूर्वाणि पापानि च महान्त्यपि ।
क्षणादेव विनश्यन्ति यथाग्नेस्तूलराशयः ॥६२

---

१. मदीयपुस्तके रा० व० पुस्तकेऽपि 'हृत्यग्रकर्णिके' इत्यस्ति। प्रचलितपाठस्तु 'हृत्पद्मकर्णिके' इति। अयमेव समीचीनः।

भजस्व रामं परिपूर्णमेकं,
विहाय वैरं निजभक्तियुक्तः।
हृदा सदा भावितभावरूप-
मनामरूपं पुरुषं पुराणम्॥६३

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे षष्ठोऽध्यायः।

⊙

**भजस्वेति**—अनामरूपमवाङ्मनसगोचरं भावितं स्फुरितं भावेन प्रेम्णा रूपं नित्यविहारि [1]स्वरूपं यस्य तम्।६३

[2]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
षष्ठोऽध्यायः।६

⊙

---

१. स्वरूपं यस्य तम् इति रा० व० पुस्तके न विद्यते। २. इति श्रीयुद्धकाण्डे ध्वनिप्रकाशिकायां षष्ठोऽध्यायः इति। रा० व० पु०।

## अथ सप्तमोऽध्यायः

**श्रीमहादेव उवाच—**

कालनेमिवचः श्रुत्वा रावणोऽमृतसन्निभम् ।
जज्वाल क्रोधताम्राक्षः सर्पिरद्भिरिवाग्निमत् ।।१

**कालनेमीत्यादि** ।१

निहन्मि त्वां दुरात्मानं मच्छासनपराङ्मुखम् ।
परैः किञ्चिद् गृहीत्वा त्वं भाषसे रामकिङ्करः ।।२

**निहन्मीति**—दुरात्मानमित्यनेन निर्गुणसगुणस्वरूपं वदन्नपि निर्गुणसगुणाभ्यां परं श्रीरामं न जानासीति सूचितम् ।२

कालनेमिरुवाचेदं रावणं देव! किं क्रुधा ।
न रोचते मे वचनं यदि गत्वा करोमि तत् ।।३

**कालनेमिरिति**—यदि मे वचो न रोचते तदा गत्वा त्वदाज्ञप्तमेव करोमीत्यनेन हनुमद्धस्तादेव मद्धननं श्रेयः न तु रावणादिति व्यज्यते ।३

इत्युक्त्वा प्रययौ शीघ्रं कालनेमिर्महासुरः ।
नोदितो रावणेनैव हनूमद्विघ्नकारणात् ।।४
स गत्वा हिमवत्पार्श्वे तपोवनमकल्पयत् ।
तत्र शिष्यैः परिवृतो मुनिवेषधरः खलः ।।५

**स गत्वेति**—तपोवनमकल्पयदेतेन यत्र सरसि धान्यमालीति ख्याता मकरी भूत्वा आसीत् तत्रैव तपोवनं मायया रचयामासेति बोध्यते ।५

गच्छतो मार्गमासाद्य वायुसूनोर्महात्मनः ।
ततो गत्वा ददर्शाथ हनूमानाश्रमं शुभम् ।।६
चिन्तयामास मनसा श्रीमान् पवननन्दनः ।
पुरा न दृष्टमेतन्मे मुनिमण्डलमुत्तमम् ।।७

मार्गो विभ्रंशितो वा मे भ्रमो वा चित्तसम्भवः ।
यद्वाविश्याश्रमपदं दृष्ट्वा मुनिमशेषतः ॥८
पीत्वा जलं ततो यामि द्रोणाचलमनुत्तमम् ।
इत्युक्त्वा प्रविवेशाथ सर्वतो योजनायतम् ॥९
आश्रमं कदलीशालखर्जूरपनसादिभिः ।
समावृतं पक्वफलैर्नम्रशाखैश्च पादपैः ॥१०
वैरभावविनिर्मुक्तं शुद्धं निर्मललक्षणम् ।
तस्मिन् महाश्रमे रम्ये कालनेमिः स राक्षसः ॥११
इन्द्रयोगं समास्थाय चकार शिवपूजनम् ।
हनूमानभिवाद्याह गौरवेण महासुरम् ॥१२

**इन्द्रयोगमिति**—इन्द्रयोगः कपटम् ।१२

भगवन् ! रामदूतोऽहं हनूमान्नाम नामतः ।
रामकार्येण महता क्षीराब्धिं गन्तुमुद्यतः ॥१३
तृषा मां बाधते ब्रह्मन्नुदकं कुत्र विद्यते ।
यथेच्छं पातुमिच्छामि कथ्यतां मे मुनीश्वर ! ॥१४
तच्छ्रुत्वा मारुतेर्वाक्यं कालनेमिस्तमब्रवीत् ।
कमण्डलुगतं तोयं मम त्वं पातुमर्हसि ॥१५
भुङ्क्ष्व चेमानि पक्वानि फलानि तदनन्तरम् ।
निवसस्व सुखेनात्र निद्रामेहि त्वरास्तु मा ॥१६

**भुङ्क्ष्वेति**—गमने त्वरा मास्तु ।१६

भूतं भव्यं भविष्यं च जानामि तपसा स्वयम् ।
उत्थितो लक्ष्मणः सर्वे वानराः रामवीक्षिताः ॥१७
तच्छ्रुत्वा हनुमानाह कमण्डलुजलेन मे ।
न शाम्यत्यधिका तृष्णा ततो दर्शय मे जलम् ॥१८
तथेत्याज्ञापयामास बटुं मायाविकल्पितम् ।
बटो ! दर्शय विस्तीर्णं वायुसूनोर्जलाशयम् ॥१९

**तथेति**—मायाविकल्पितं स्वमायया कल्पितं बटुं शिष्यं ।१९

निमील्य चाक्षिणी तोयं पीत्वा गच्छ ममान्तिकम्।
[1]उपदेश्यामि ते मन्त्रं येन द्रक्ष्यसि चौषधीः ॥२०
तथेति दर्शितं शीघ्रं बटुना सलिलाशयम्।
प्रविश्य हनुमांस्तोयमपिबन्मीलितेक्षणः ॥२१

**तथेतीति**—पूर्वसिद्धसलिलाशयदर्शनेन सरोऽभ्यन्तरवर्तिनी मकरी एव हनुमन्तं भक्षयिष्यतीति तस्याशयो व्यज्यते।२१

ततश्चागत्य मकरी महाकाया महाकपिम्।
अग्रसत्तं महावेगात् मारुतिं घोररूपिणी ॥२२
ततो ददर्श हनुमान् ग्रसन्तीं मकरीं रुषा।
दारयामास हस्ताभ्यां वदनं सा ममार ह ॥२३
ततोऽन्तरिक्षे ददृशे दिव्यरूपधराङ्गना।
धान्यमालीति विख्याता हनूमन्तमथाब्रवीत् ॥२४
त्वत्प्रसादादहं शापाद्विमुक्तऽस्मि कपीश्वर!।
शप्ताहं मुनिना पूर्वमप्सरा कारणान्तरे ॥२५

**त्वदिति**—शापान्मोक्तुं मकरी श्रीहनुमच्चरणमेव गृहीतवतीति व्यङ्ग्यम्। [[2]तेन च तस्याः पूर्वं ज्ञानमासीदिति]।२५

आश्रमे यस्तु ते दृष्टः कालनेमिर्महासुरः।
रावणप्रहितो मार्गे विघ्नं कर्तुं तवानघ! ॥२६
मुनिवेषधरो नासौ मुनिर्विप्रविहिंसकः।
जहि दुष्टं गच्छ शीघ्रं द्रोणाचलमनुत्तमम् ॥२७
गच्छाम्यहं ब्रह्मलोकं त्वत्स्पर्शाद्धतकल्मषा।
इत्युक्त्वा सा ययौ स्वर्गं हनूमानप्यथाश्रमम् ॥२८

**गच्छाम्यहमिति**—ब्रह्मलोकमयोध्याख्यं [3]'यथायथोपासते तदेव भवतीति' श्रुतेः 'न ह्यन्योपासकोऽन्यं प्राप्नोती'ति श्रुतेः। स्वर्गः स्वरिति स्वर्गं गीयते, स्वर्गः साकेतस्तं [4](देवानां

---

१. उपदेक्ष्यामि इत्युचितः। २. [ ] एतत् कोष्ठान्तर्गतोंऽशः रा० व० पुस्तके नैवास्ति। ३. 'यथायथोपासते तदेव भवतीति श्रुतेः' इत्यंशः रा० व० पु० न दृश्यते। ४. ( ) कोष्ठान्तर्गतभागः रा० व० पु० न विद्यते।

पूरयोध्या यस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषा प्रतपत' इति श्रुतेश्च) शापमोचनानन्तरमप्सरोरूपप्राप्तियोगत्वेऽपि रामभक्तचरणस्पर्शात् श्रीरामलोकप्राप्तिरिति भावः। एतादृशार्थास्वीकारे ब्रह्मलोकपदं स्वर्गपदं च परस्परमनन्वितं स्यात्।२८

आगतं तं समालोक्य कालनेमिरभाषत।
किं विलम्बेन महता तव वानरसत्तम! ॥२९
गृहाण मत्तो मन्त्रांस्त्वं देहि मे गुरुदक्षिणाम्।
इत्युक्तो हनुमान्मुष्टिं दृढं बद्ध्वाह राक्षसम् ॥३०
गृहाण दक्षिणामेतामित्युक्त्वा निजघान तम्।
विसृज्य मुनिवेषं स कालनेमिर्महासुरः ॥३१

**गृहाणेति**—गृहाण दक्षिणामेतामित्यनेन ममेष्टं मन्त्रं नेदानीं त्वं जानासि मद्धस्तहननात् यदा श्रीरामलोकप्राप्तिः तदा ममाभीष्टं मन्त्रं ज्ञास्यसीति सूचितम्। दृढं मुष्टिं बद्ध्वाऽपि मुनिवेषो न हिंसार्ह इति अल्पबलेन तं निजघान। तेन मुनिवेषोऽपि न हन्तव्यः तेन च ब्रह्मण्यतातिशयो व्यक्तः।३१

युयुधे वायुपुत्रेण नानामायाविधानतः।
महामायिकदूतोऽसौ हनूमान्मायिनां रिपुः ॥३२
जघान मुष्टिना शीर्ष्णि भग्नमूर्धा ममार सः।
ततः क्षीरनिधिं गत्वा दृष्ट्वा द्रोणं महागिरिम् ॥३३
अदृष्ट्वा चौषधीस्तत्र गिरिमुत्पाट्य सत्वरः।
गृहीत्वा वायुवेगेन गत्वा रामस्य सन्निधिम् ॥३४

**अदृष्ट्वेति**—तत्र ओषधीरदृष्ट्वेत्यनेन देवाः स्वमाययाऽऽच्छादितवन्त इति। तेन च श्रीहनुमान्सपर्वता ओषधीर्गृहीत्वा गच्छत्विति तत्तदंशानां देवानां तत्तदंशिवानरसेवा व्यक्ता।३४

उवाच हनुमान् राममानीतोऽयं महागिरिः।
यद्युक्तं कुरु देवेश! विलम्बो नात्र युज्यते ॥३५
श्रुत्वा हनुमतो वाक्यं रामः सन्तुष्टमानसः।
गृहीत्वा चौषधीः शीघ्रं सुषेणेन महामतिः ॥३६
चिकित्सां कारयामास लक्ष्मणाय महात्मने।
ततः सुप्तोत्थित इव बुद्ध्वा प्रोवाच लक्ष्मणः ॥३७

तिष्ठ तिष्ठ क्व गन्तासि हन्मीदानीं दशानन ! ।
इति ब्रुवन्तमालोक्य मूर्ध्न्यवघ्राय राघवः ॥३८
मारुतिं प्राह वत्साद्य त्वत्प्रसादान्महाकपे ! ।
निरामयं प्रपश्यामि लक्ष्मणं भ्रातरं मम ॥३९

**मारुतिमिति**––लक्ष्मणं निरामयं पश्यामीत्यनेन श्रीरामस्य कृतज्ञतातिशयः ।३९

इत्युक्त्वा वानरैः सार्धं सुग्रीवेण समन्वितः ।
विभीषणमतेनैव युद्धाय समवस्थितः ॥४०
पाषाणैः पादपैश्चैव पर्वताग्रैश्च वानराः ।
युद्धायाभिमुखा भूत्वा ययुः सर्वे युयुत्सवः ॥४१

**पाषाणैरिति**––सर्वे युयुत्सवो ययुरित्यनेन गिर्यौषधिपवनस्पर्शेनैव जीवितवन्त इति गम्यते ।४१

रावणो विव्यथे रामबाणैर्विद्धो महासुरः ।
मातङ्ग इव सिंहेन गरुडेनेव पन्नगः ॥४२
अभिभूतोऽगमद्राजा रामेण परमात्मना ।
सिंहासने समाविश्य राक्षसानिदमब्रवीत् ॥४३
मानुषेणैव मे मृत्युमाह पूर्वं पितामहः ।
मानुषो हि न मां हन्तुं शक्तोऽस्ति भुवि कश्चन ॥४४

**मानुषेणैवेति**––मानुषेणैव मे मृत्युं पूर्वं पितामह आह। मानुषः प्राकृतमानुषः कश्चन मां हन्तुं न शक्तः नित्यविहारिणो गमनासम्भवः ।४४

ततो नारायणः साक्षान्मानुषोऽभून्न संशयः ।
रामो दाशरथिर्भूत्वा मां हन्तुं समुपस्थितः ॥४५

**तत इति**––साक्षादादिनारायणः दशरथगृहेऽवतीर्य मानुषोऽभूत्। नित्यद्विभुजरामावेशेन ततः दाशरथी रामो भूत्वा मां हन्तुं समुपस्थितः प्राप्त इत्यर्थः। तेन देवदनुजेश्वरेषु कोऽपि भवेत्तर्हि तं जेतुं शक्नोम्येवेति दाशरथिर्भूत्वायमागतः, अतो मां हत्वा मुक्तिं दास्यत्येवेति ध्वन्यते ।४५

अनरण्येन यत्पूर्वं शप्तोऽहं राक्षसेश्वराः ।
उत्पत्स्यतेऽथ मद्वंशे परमात्मा सनातनः ॥४६

तेन त्वं पुत्रपौत्रैश्च बान्धवैश्च समन्वितः।
हनिष्यसे न सन्देह इत्युक्त्वा मां दिवं गतः ॥४७

स एव रामः सञ्जातो मदर्थे मां हनिष्यति।
कुम्भकर्णस्तु मूढात्मा सदा निद्रावशं गतः ॥४८

**स एवेति**—स एव सनातनः परमात्मा रामः सञ्जातः नारायणे आवेशेनाविर्भूतः। कुम्भकर्णस्तु दुष्टात्मा इत्यनेन मुक्तिदातरि श्रीरामे सन्निहितेऽपि मुक्तिमनादृत्य स्वपितीति मौढ्ये हेतुः ध्वन्यते।४८

तं विबोध्य महासत्त्वमानयन्तु ममान्तिकम् ॥४९

**तं विबोध्येति**—तं विबोध्य ममान्तिकमानयन्तु इत्यनेन ब्रह्मोक्तेः मद्वधस्तु भविष्यत्येव, कुम्भकर्णः तं जेष्यतीति तस्याशयो व्यक्तः। अन्तरार्थे कुम्भकर्णोऽपि विमुक्तिं प्राप्नुयादिति तस्येच्छा व्यक्ता। तेन च तस्य सौभ्रात्रं व्यक्तम्।४९

इत्युक्तास्ते महाकायास्तूर्णं गत्वा तु यत्नतः।
विबोध्य कुम्भश्रवणं निन्यू रावणसन्निधिम्।
नमस्कृत्य स राजानमासनोपरि संस्थितः ॥५०

**इत्युक्ता इति**—महाकायाः यत्नतः विबोध्य कुम्भश्रवणं निन्युरित्यनेन वाल्मीकीयोक्तजागरणप्रकारः सूचितः।५०

तमाह रावणो राजा भ्रातरं दीनया गिरा।
कुम्भकर्ण! निबोध त्वं महत्कष्टमुपस्थितम् ॥५१

रामेण निहताः शूराः पुत्रपौत्राश्च बान्धवाः।
किं कर्तव्यमिदानीं मे मृत्युकाल उपस्थिते ॥५२

एष दाशरथी रामः सुग्रीवसहितो बली।
समुद्रं सबलस्तीर्त्वा मूलं नः परिकृन्तति ॥५३

ये राक्षसाः मुख्यतमास्ते हता वानरैर्युधि।
वानराणां क्षयं युद्धे न पश्यामि कदाचन ॥५४

नाशयस्व महाबाहो! यदर्थं परिबोधितः।
भ्रातुरर्थे महासत्त्व! कुरु कर्म सुदुष्करम् ॥५५

श्रुत्वा तद्राक्षसेन्द्रस्य वचनं परिदेवितम्।
कुम्भकर्णो जहासोच्चैर्वचनं चेदमब्रवीत् ॥५६
पुरा मन्त्रविचारे ते गदितं यन्मया नृप!।
तदद्य त्वामुपगतं फलं पापस्य कर्मणः ॥५७
पूर्वमेव मया प्रोक्तो रामो नारायणः परः।
सीता च योगमायेति बोधितोऽपि न बुध्यसे ॥५८
एकदाहं वने सानौ विशालायां स्थितो निशि।
दृष्टो मया मुनिः साक्षान्नारदो दिव्यदर्शनः ॥५९
तमब्रुवं महाभाग! कुतो गन्तासि मे वद।
इत्युक्तो नारदः प्राह देवानां मन्त्रणे स्थितः ॥६०
तत्रोत्पन्नमुदन्तं ते वक्ष्यामि शृणु तत्त्वतः।
युवाभ्यां पीडिता देवाः सर्वे विष्णुमुपागताः ॥६१
ऊचुस्ते देवदेवेशं स्तुत्वा भक्त्या समाहिताः।
जहि रावणमक्षोभ्यं देव! त्रैलोक्यकण्टकम् ॥६२
मानुषेण मृतिस्तस्य कल्पिता ब्रह्मणा पुरा।
अतस्त्वं मानुषो भूत्वा जहि रावणकण्टकम् ॥६३

**मानुषेणेति**—मानुषेण मानुषद्विभुजप्रकाशिश्रीरामेणेत्यर्थः। अतस्त्वं मानुषो भूत्वा रामावेशं गृहीत्वा रावणरूपं कण्टकं जहि। तेन तच्छक्तिमगृहीत्वा त्वमपि तं हन्तुं न शक्नोसीति ध्वनितम्।६३

तथेत्याह महाविष्णुः सत्यसङ्कल्प ईश्वरः।
जातो रघुकुले देवो राम इत्यभिविश्रुतः ॥६४
स हनिष्यति वः सर्वानित्युक्त्वा प्रययौ मुनिः।
अतो जानीहि रामं त्वं परं ब्रह्म सनातनम् ॥६५

**स हनिष्यतीति**—रामं सनातनं परं ब्रह्म जानीहि।६५

त्यज वैरं भजस्वाद्य मायामानुषविग्रहम्।
भजतो भक्तिभावेन प्रसीदति रघूत्तमः ॥६६

**त्यजेति**—अतो वैरं त्यज अद्यापि भज मायया सर्वजीवोपरि कृपया मानुषविग्रहम्। तेन वाङ्मनसागोचरो रामः सर्वोद्धारार्थं प्रकटीभूतः, अतः अद्यापि तच्छरणं गच्छेस्तर्हि

रक्षिष्यत्येवेति व्यक्तम्। भक्तिभावेन भजतो जनान् राघवः प्रसीदतीत्यनेन अविहित-भक्त्या सकुलस्य मुक्तिमिच्छोस्तवापराधं न गणयिष्यतीति। तेन च विहितभक्त्यापि शीघ्रं मुक्तिं ददातीति सूचितम्।६६

भक्तिर्जनित्री ज्ञानस्य भक्तिर्मोक्षप्रदायिनी।
भक्तिहीनेन यत्किञ्चित्कृतं सर्वमसत्समम्॥६७

**भक्तिरिति**—भक्तिः सगुणा ज्ञानस्य जनित्री, ज्ञानविज्ञानोत्पादिकेत्यर्थः। ज्ञानसाध्या भक्तिः अनुरागात्मिका मोक्षप्रदायिनी। यत्किञ्चित् भक्तिहीनेन कृतं तत्सर्वमसत्तुल्यं फलाजनकमित्यर्थः। एतेन अविहिता न युक्तेति व्यक्तम्।६७

अवताराः सन्ति बहवो विष्णोर्लीलानुकारिणः।
तेषां सहस्रसदृशो रामो ज्ञानमयः शिवः॥६८

**अवतारा इति**—प्रतिब्रह्माण्डे यो यो विष्णुस्तस्य विष्णोः लीलानुकारिणः बहवोऽवताराः सन्ति, प्रतिब्रह्माण्डे इति शेषः। तेषां विष्णूनां सहस्रैः सदृशो रामः स नित्यविहारि-रामः इदानीं ज्ञानमयः शिवः आदिनारायण आवेशेन तत्र प्रविष्टत्वात्। तेन तन्नामसहस्र-सदृशं तस्यैकं नामाप्यस्तीति व्यज्यते। '[1]एवं धामलीलारूपाणि ज्ञेयानि। 'वैकुण्ठपञ्चकं ख्यातं क्षीराब्धिश्चरमाह्वयं, कारणं च महावैकुण्ठं पञ्चकं विरजापरम्। नित्यं दिव्यमनेक-भोगविभवं वैकुण्ठरूपोत्तरम्। सत्यानन्दचिदात्मकं स्वयमभूत् मूलं त्वयोध्यापुरी॥' इति 'एकैकमक्षरं पुंसां महापातकनाशनमित्यादिस्मृतेः। [2]मुक्तिप्रदविष्णुसहस्रनामान्युक्त्वा पार्वतीं प्रति श्रीशिववाक्यं [3]पाये 'राम रामेति रामेति रमे रामे मनोरमे। सहस्रनामभिस्तुल्यं श्रीरामनाम वरानने।' इति। तेन च मुक्तिप्रदनारायणसहस्रनामसमं रामेति संश्राव्य सकुलस्य मुक्तिं स्वीकुरु, किं तदर्थमविहितभक्तिप्रमाणेनेति व्यक्तम्।६८

रामं भजन्ति निपुणा मनसा वचसाऽनिशम्।
अनायासेन संसारं तीर्त्वा यान्ति हरेः पदम्॥६९

**राममिति**—अनायासेनेति।६९

---

१. धाम मत्पुस्तके नास्ति। २. मुक्तिप्रद रा० व० पुस्तके। ३. पाये इत्यस्पष्टः। पाद्मे इति प्रतीयते।

ये राममेव सततं भुवि शुद्धसत्त्वा,
ध्यायन्ति तस्य चरितानि पठन्ति सन्तः।
मुक्तास्त एव भवभोगमहाहिपाशैः,
सीतापतेः पदमनन्तसुखं प्रयान्ति ॥७०

इति श्रीबृहद्ब्रह्माण्डपुराणे अध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे सप्तमोऽध्यायः ।७

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे सप्तमोऽध्यायः ।७

⊙



१. न कापि पुष्पिका रा० व० पु०।

## अथ अष्टमोऽध्यायः

**श्रीमहादेव उवाच**

कुम्भकर्णवचः श्रुत्वा भृकुटीविकटाननः।
दशग्रीवो जगादेदमासनादुत्पतन्निव ॥१

कुम्भकर्णेति।१

त्वमानीतो न मे ज्ञानबोधनाय सुबुद्धिमान्।
मया कृतं समीकृत्य युध्यस्व यदि रोचते॥२

**त्वमिति**—मया ज्ञानबोधनाय त्वं नानीत इत्युक्त्वा तदुक्तां विहितभक्तिं जानाम्येव तेन चा ग्राह्याऽविहिता गृहीतैवं तां न त्यक्ष्ये इति। तेन अविहितभक्त्यधिकारिण एव मुक्तिदाने श्रीरामस्य अतीव यशो भवतीति सूचितम्। तेन यः स्वामीच्छानुसारेण करोति स भक्तः उत तदीच्छाप्रातिकूल्येन करोतीति सः भक्तः इति विचारय इति व्यक्तम्। तेन त्वमेवापूर्वमुक्तवान् 'त्वद्वधार्थं सत्यसङ्कल्प ईश्वर आगत' इति। अत मद्धननार्थमागतस्य (सत्य) सङ्कल्पस्य स्वामिन इच्छानुसारेण अहमेव विहितां भक्तिं करोमीति त्वं तु अविहितां करोषीति व्यञ्जितम। तेन च स्वस्य तत्सुखसुखित्वम्। तेन च कुम्भकर्णविभीषणाभ्यां रावणस्याधिक्यं व्यक्तम्। २

नो चेद् गच्छ सुखस्पर्शनिद्रा त्वां बाधतेऽधुना।
रावणस्य वचः श्रुत्वा कुम्भकर्णो महाबलः॥३
रुष्टोऽयमिति विज्ञाय तूर्णं युद्धाय निर्ययौ।
स लङ्घयित्वा प्राकारं महापर्वतसन्निभः॥४

**रुष्ट इति**—तूर्णमिति। तूर्णोत्थानचेष्टया, यद्येवं ते रुचिस्तर्हि अविहिताजन्यां मुक्तिं त्वत्तोऽग्रे ग्रहीष्ये (इति) हेतुर्व्यक्तः।४

निर्ययौ नगरात्तूर्णं भीषयन् हरिसैनिकान्।
स ननाद महानादं समुद्रमभिनादयन्॥५
वानरान्कालयामास बाहुभ्यां भक्षयन् रुषा।
कुम्भकर्णं तदा दृष्ट्वा सपक्षमिव पर्वतम्॥६

दुद्रुवुर्वानराः सर्वे कालान्तकमिवाखिलाः।
भ्रमन्तं हरिवाहिन्यां मुद्गरेण महाबलम् ॥७
कालयन्तं हरीन् वेगाद् भक्षयन्तं समन्ततः।
चूर्णयन्तं मुद्गरेण पाणिपादैरनेकधा ॥८
कुम्भकर्णं तदा दृष्ट्वा गदापाणिर्विभीषणः।
ननाम चरणौ तस्य भ्रातुर्ज्येष्ठस्य बुद्धिमान् ॥९

**कुम्भकर्णमिति**--(बुद्धिमान्) सर्वावस्थाभिज्ञः तेन च त्वदविहितभक्ति—(अ) भिज्ञः।९

विभीषणोऽहं भ्रातर्मे दयां कुरु महामते!।
रावणस्तु मया भ्रातर्बहुधा परिबोधितः ॥१०
सीतां देहीति रामाय रामः साक्षाज्जनार्दनः।
न शृणोति स्म मां हन्तुं खड्गमुद्यम्य चोक्तवान् ॥११

**सीतामिति**--जनार्दनः दुष्टजनान् अर्दयतीति तथा। अनेन भयं दर्शितम्।११

धिक् त्वां गच्छेति मां हत्वा पदा पापिभिरावृतः।
चतुर्भिर्मन्त्रिभिः सार्धं रामं शरणमागतः ॥१२
तच्छ्रुत्वा कुम्भकर्णोऽपि ज्ञात्वा भ्रातरमागतम्।
समालिङ्ग्य च वत्स! त्वं जीव रामपदाश्रयः ॥१३
कुलसंरक्षणार्थाय राक्षसानां हिताय च।
महाभागवतोऽसि त्वं पुरा मे नारदाच्छ्रुतम् ॥१४

**कुलसंरक्षणेति**—कुलसंरक्षणार्थाय राक्षसानां हिताय च त्वं जीवेत्यनेन रावणोऽपि स्ववंशस्थापनार्थं त्वां निष्कासितवानित्यवगम्यते। तेन रावणपरलोकप्रतिबन्धिनीदोषदृष्टिर्महाभागवते न त्वया कार्येति प्रार्थना व्यज्यते।१४

गच्छ तात! मयेदानीं दृश्यते न च किञ्चन।
मदीयो वा परो वापि मदमत्तविलोचनः ॥१५
इत्युक्तोऽश्रुमुखो भ्रातुश्चरणावभिवन्द्य सः।
रामपार्श्वमुपागत्य चिन्तापर उपस्थितः ॥१६

**इत्युक्त इति**--एतादृशः सुहृत् भ्राता विहिताधिकारी कुम्भकर्णः अविहितावलम्बनेन न पश्यतीति चिन्तापरः।१६

कुम्भकर्णोऽपि हस्ताभ्यां पादाभ्यां पेषयन्हरीन्।
चचार वानरीं सेनां कालयन् गन्धहस्तिवत् ॥१७
दृष्ट्वा तं राघवः क्रुद्धो वायव्यं शस्त्रमादरात्।
चिक्षेप कुम्भकर्णाय तेन चिच्छेद रक्षसः ॥१८
समुद्गरं दक्षहस्तं तेन घोरं ननाद सः।
स हस्तः पतितो भूमावनेकानर्दयन् कपीन् ॥१९
पर्यन्तमाश्रिताः सर्वे वानराः भयवेपिताः ॥२०
रामराक्षसयोर्युद्धं पश्यन्तः पर्यवस्थिताः ॥२१

**रामेति**––पर्यवस्थिताः युद्धभूमध्ये स्थिताः तद्धस्तपातभयात् तत्प्रान्तमास्थिताः ।२१

कुम्भकर्णश्छिन्नहस्तः शालमुद्यम्य वेगतः।
समरे राघवं हन्तुं दुद्राव तमथोऽच्छिनत् ॥२२
शालेन सहितं वामहस्तमैन्द्रेण राघवः।
छिन्नबाहुमथायान्तं नर्दन्तं वीक्ष्य राघवः ॥२३
द्वावर्द्धचन्द्रौ निशितावादायास्य पदद्वयम्।
चिच्छेद पतितौ पादौ लङ्काद्वारि महास्वनौ ॥२४
निकृत्तपाणिपादोऽपि कुम्भकर्णोऽतिभीषणः।
वडवामुखवद्वक्त्रं व्यादाय रघुनन्दनम् ॥२५
अभिदुद्राव निनदन् राहुश्चन्द्रमसं यथा।
अपूरयच्छिताग्रैश्च सायकैस्तद्रघूत्तमः ॥२६
शरपूरितवक्त्रोऽसौ चुक्रोशातिभयङ्करः।
अथसूर्यप्रतीकाशमैन्द्रं शरमनुत्तमम् ॥२७
वज्राशनिसमं रामश्चिक्षेपासुरमृत्यवे।
स तत्पर्वतसङ्काशं स्फुरत्कुण्डलदंष्ट्रकम् ॥२८
चकर्त रक्षोऽधिपतेः शिरो वृत्रमिवाशनिः।
तच्छिरः पतितं लङ्काद्वारि कायो महोदधौ ॥२९

**चकर्तेति**––एतच्छिरः शरीरपातेन कपिसैन्यनाशो माभूदिति शिरो लङ्काद्वारि पातितम्, कायःसमुद्रे पातितः। तेन श्रीरामस्य वैदग्ध्यमिति व्यज्यते। तेन च कुम्भकर्णकायस्य दीर्घातिशयः।२९

शिरोऽस्य [1]रोधयद् द्वारं कायो नक्राद्यचूर्णयत्।
ततो देवाः सऋषयो गन्धर्वाः पन्नगाः खगाः ॥३०
सिद्धा यक्षा गुह्यकाश्च अप्सरोभिश्च राघवम्।
ईडिरे कुसुमासारैर्वर्षन्तश्चाभिनन्दिताः ॥३१
आजगाम तदा रामं द्रष्टुं देवमुनीश्वरः।
नारदो गगनात्तूर्णं स्वभासा भासयन् दिशः ॥३२
राममिन्दीवरश्याममुदाराङ्गं धनुर्धरम्।
ईषत्ताम्रविशालाक्षमैन्द्रास्त्रान्वितबाहुकम् ॥३३
दयार्द्रदृष्ट्या पश्यन्तं वानरान् शरपीडितान्।
दृष्ट्वा गद्गदया वाचा भक्त्या स्तोतुं प्रचक्रमे ॥३४

**नारद उवाच**

देवदेव ! जगन्नाथ ! परमात्मन् ! सनातन ! ।
नारायणाखिलाधार ! विश्वसाक्षिन् ! नमोऽस्तु ते ॥३५
विशुद्धज्ञानरूपोऽपि त्वं लोकानतिवञ्चयन्।
मायया मनुजाकारो सुखदुःखादिमानिव ॥३६

**विशुद्धज्ञानरूपोऽपीति**—अपिशब्दात् विशुद्धज्ञानगुणः मनुजाकारः नित्यद्विभुजो वाङ्मनसागोचरस्त्वं किं मायया लोकानतिवञ्चयन् प्रतारयन् सुखदुःखादिमानिव प्रतिभासीति काकुः। किन्तु कृपया तेषामुद्धाराय वाङ्मनसगोचरो भूत्वा सुखदुःखादिमानिव भासीत्यर्थः। एतेन दयालुतातिशयो व्यक्तः।३६

त्वं मायया गुह्यमानः सर्वेषां हृदि संस्थितः।
स्वयं ज्योतिःस्वभावस्त्वं व्यक्त एवामलात्मनाम् ॥३७

**त्वमिति**—मायया कृपया गुह्यमान [2]आच्छाद्यमानः कृपया पूर्ण इत्यर्थः। अत एव सर्वेषां हृदि संस्थितः अन्तर्यामिरूपेण; तत्रापि स्वयं ज्योतिःस्वभाव एवम्भूतस्त्वम् अमलात्मनां भक्तानां व्यक्तः। सर्वेषां हृदि स्थित इत्यनेन [3]दोषभोक्तृत्वरूपो दोषादर्शित्वरूपश्च वात्सल्यगुणो व्यक्तः।३७

---

१. प्रयोगोऽयमार्षः। २. आच्छाद्यमानः मत्पुस्तके न वर्तते। ३. दोष इति रा० व० पुस्तके नास्ति।

उन्मीलयन् सृजस्येतन्नेत्रे राम! जगत्त्रयम्।
उपसंह्रियते सर्वं त्वया चक्षुर्निमीलनात् ॥३८

**उन्मीलयन्निति**--हे राम! नित्यविहारिन्! नेत्रे उन्मीलयन् जगत्त्रयं सृजसि चक्षुर्निमीलनात् त्वया सर्वमुपसंह्रियते। नित्यविहारिणस्तव स्वाभाविक [1]नेत्रोन्मेषनिमेषाभ्यां ब्रह्मणा सह जगदुत्पद्यते नश्यति चेत्यर्थः।३८

यस्मिन् सर्वमिदं भाति यतश्चैतच्चराचरम्।
यस्मान्न किञ्चिल्लोकेऽस्मिन् तस्मै ते ब्रह्मणे नमः ॥३९

**यस्मिन्निति**--यस्मिंश्चिदचिद्रूपे त्वयि इदं जगद् भाति, यतश्चिदचिद्रूपात्त्वत्तः एतच्चराचरमुत्पद्यते। यस्मात् चिदचिद्रूपाद् भवतोऽतिरिक्तं न तस्मै ब्रह्मणे नमः। प्रकाशप्रकाशिनोरभेदविवक्षयेयमुक्तिः।३९

प्रकृतिं पुरुषं कालं व्यक्ताव्यक्तस्वरूपिणम्।
यं जानन्ति मुनिश्रेष्ठास्तस्मै रामाय ते नमः ॥४०

**प्रकृतिमिति**--मुनिश्रेष्ठाः तत्तदुपासकाः तत्र शक्ताः त्वां प्रकृतिं जानन्ति सांख्याः पुरुषं त्वां जानन्ति ज्योतिर्विदः कालं निमेषादिवत्सरान्तस्वरूपं त्वां जानन्ति, अनुमितेश्वरोपासकाः नैयायिकाः व्यक्तस्वरूपिणं त्वां जानन्ति केवलनिर्गुणोपासकाः अव्यक्तरूपिणं त्वां जानन्ति तस्मै रामाय आवेशिरूपाय नित्यविहारिरामाय नमः।४०

विकाररहितं शुद्धं ज्ञानरूपं श्रुतिर्जगौ।
त्वां सर्वजगदाकारमूर्तिं चाप्याह सा श्रुतिः ॥४१

नन्वेकस्य व्यक्ताव्यक्तत्वे कथं तत्राह **विकाररहितमिति**--विकाररहितम्-अतः शुद्धं ज्ञानरूपं श्रुतिर्जगौ, सर्वजगदा[2]कारमूर्तिं विराटरूपं च त्वा आह। एतेन व्यक्ताव्यक्तौ त्वद्रूपौ तयोरङ्गी त्वमिति व्यक्तम्।४१

विरोधो दृश्यते देव! वैदिको वेदवादिनाम्।
निश्चयं नाधिगच्छन्ति त्वत्प्रसादं विना बुधाः ॥४२

**विरोध इति**--हे देव! वेदवादिनां वैदिको विरोधः व्यक्ताव्यक्तयोरङ्गिणः वाङ्मनसागोचरस्य चाक्षुषप्रत्यक्षासम्भवरूपः दृश्यते। त्वत्प्रसादं विना बुधाः अपि निश्चयं व्यक्ताव्यक्तयोरङ्गी त्वमेव आदिनारायणे आवेशेनावतीर्ण इत्येवं रूपं नाधिगच्छन्ति न जानन्ति।४२

---

१. नेत्र इति मत्पुस्तके न विद्यते। २. धार इति मदीये पुस्तके।

मायया क्रीडतो देव! न विरोधो मनागपि।
रश्मिजालं रवेर्यद्वद् दृश्यते जलवद् भ्रमात्।
भ्रान्तिज्ञानात्तथा राम! त्वयि सर्वं प्रकल्पते ।।४३

त्वत्प्रसादेन यथा जानन्ति तदाह **माययेति**--वाङ्मनसागोचरस्य ते मायया जीवोपरि कृपया नारायणे आवेशेनावतीर्य क्रीडतस्तव सर्वचाक्षुषप्रत्यक्षरूपो विरोधः मनागपि न। एतेन ये इदानीं विद्यमानास्ते मद्दर्शनस्पर्शनाभ्यां जीवन्मुक्ता एव, ये भविष्यन्तिस्ते मल्लीलाश्रवणादिना मुक्ताः भविष्यन्तीति तत्प्रत्यक्षे हेतुर्व्यक्तः। यद्वत् रवेः रश्मिजालं भ्रमादज्ञानात् जलवत् प्रकल्पते तथा हे राम! भ्रान्तिज्ञानात् त्वयि सर्वं मायिकरूपं प्रकल्पते। वस्तुतस्तु स एव वाङ्मनसागोचरदिव्यानन्तकल्याणगुणको नित्यद्विभुजादिरूपस्त्वमितीत्यर्थः। मायिकत्वकल्पने दोषमाह बृहद्वामनपुराणे 'यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः। स सर्वस्माद् बहिः कार्यः श्रौतस्मार्तबहिष्कृतः। मुखं तस्यावलोक्याशु सचैलं स्नानमाचरेत्'। इति।४३

मनसोऽविषयो देव! रूपं ते निर्गुणं परम् ।।४४

तदेवाह **मनस इति**--हे देव! इदं ते रूपं निर्गुणं ब्रह्मस्वरूपं ततः परं च प्रकाशित्वात् अत एव मनसोऽविषय इति। मनस इति वाचोऽप्युपलक्षणम्।४४

कथं दृश्यं भवेद् देव! दृश्याभावे भजेत् कथम्।
अतस्तवावतारेषु रूपाणि निपुणा भुवि।
भजन्ति बुद्धिसम्पन्नास्तरन्त्येव भवार्णवम् ।।४५

**कथं दृश्यमिति**--एवं भूतं वाङ्मनसागोचरं ते रूपं कथं दृश्यं भवेत्। चक्षुरादिविषयः कथं भवेत। दृश्याभावे कथं भजेत् सेवेत। अतः अवाङ्मनसगोचरस्य तव ज्ञानासम्भवात् तवावतारेषु त्वत्सम्बन्धिषु रमावैकुण्ठवासिनारायणक्षीरसागरवासिनारायणभूमानारायणेषु भरतलक्ष्मणशत्रुघ्नावेशेनावतीर्णेषु रूपाणि ये बुद्धिसम्पन्ना निपुणाः भजन्ति ते एव भवार्णवं तरन्ति; आदिनारायणे आवेशेन प्रविष्टस्य ते भजनात् संसारं तरन्तीति किमु वक्तव्यमिति काव्यार्थापत्तिरलङ्कारो व्यक्तः। तेन च वाङ्मनसागोचरस्य ते नारायणे आवेशेन वाङ्मनसगोचरभवने सर्वजीवोद्धारेच्छैव हेतुरिति व्यक्तम्।४५

कामक्रोधादयस्तत्र बहवः परिपन्थिनः ।।४६
भीषयन्ति सदा चेतो मार्जारा मूषकं यथा।
त्वन्नाम स्मरतां नित्यं त्वद्रूपमपि मानसे ।।४७

त्वत्पूजानिरतानां ते कथामृतपरात्मनाम्।
त्वद्भक्तसङ्गिनां राम! संसारो गोष्पदायते ॥४८

**कामेति**—त्वन्नाम स्मरतामित्यारम्य संसारो गोष्पदायते इत्यन्तेन एतत्त्वदवतार-नामरूपादिना वाङ्मनसागोचरस्य ते नामरूपादिकं स्वयं स्फुरतीति व्यक्तम्। उक्तञ्च 'नाम चिन्तामणी रामो नित्यचैतन्यविग्रहः। नित्यशुद्धो नित्यबुद्धो न भिन्नं नामनामिनोः॥ अतः श्रीरामनामादि न भवेत् ग्राह्यमिन्द्रियैः। स्फुरति स्वयमेवैतज्जिह्वादौ श्रवणे मुखे'।इति।४६-४८।

अतस्ते सगुणं रूपं ध्यात्वाहं सर्वदा हृदि।
मुक्तश्चरामि लोकेषु पूज्योऽहं सर्वदैवतैः ॥४९

**अत इति**—अतः सर्वदैवतैः पूज्योऽहं मुक्तः सन् लोकेषु च चरामीत्यनेन सगुणैतत्त्व-दवताररूपध्यानेन वाङ्मनसागोचरं ते रूपं मे स्फुरितमिति। तेन च यदुक्तं तत्सर्वं परीक्षा-पूर्वमिति तेन च यदुक्तं सर्वं सत्यमेवेति व्यक्तम्।४९

राम! त्वया महत्कार्यं कृतं देवहितेच्छया।
कुम्भकर्णवधेनाद्य भूभारोऽयं गतः! प्रभो! ॥५०
श्वो हनिष्यति सौमित्रिरिन्द्रजेतारमाहवे।
हनिष्यसेऽथ राम! त्वं परश्वो दशकन्धरम् ॥५१

'**स्वप्न इति**—इदं तद्वधस्यासन्नकालताद्योतकम्। वाल्मीक्यग्निवेश्योक्त्या च दिनत्रयेणेन्द्रिजितो वधप्रतीतेः। अग्रेऽत्रापि वक्ष्यति। अहोरात्रैस्त्रिभिर्वीरः कथंचिद्विनि-पातित इति। एवं परश्व इत्यपि अग्निवेश्यरामायणे अष्टादशाहानि रामरावणयोर्द्वन्द्व-युद्धस्योक्तेः इति भट्टाः। वयन्तु कल्पान्तरीणमिदं शिवोक्तं रामायणमिति ब्रूमः। यद्वा श्व इति मेघनादवधारम्भं कृत्वा किञ्चित्कालेन हनिष्यति। अथ तद्वधानन्तरं परश्वः, वधोत्तरदिने इति रावणवधारम्भं कृत्वा किञ्चित्कालेन हनिष्यसि। तद्वधानन्तरं परश्व इति दिनद्वयान्तरालेन मकराक्षादीनां वधः सूचितः।५१

पश्यामि सर्वं देवेश! सिद्धैः सह नभोगतः।
अनुगृह्णीष्व मां देव! गमिष्यामि सुरालयम् ॥५२
इत्युक्त्वा राममामन्त्र्य नारदो भगवानृषिः।
ययौ देवैः पूज्यमानो ब्रह्मलोकमकल्मषम् ॥५३

---

१. श्व इति समीचीनः।

भ्रातरं निहतं श्रुत्वा कुम्भकर्णं महाबलम्।
रावणः शोकसन्तप्तो रामेणाक्लिष्टकर्मणा ॥५४
मूर्च्छितः पतितो भूमावुत्थाय विललाप ह।
पितृव्यं निहतं श्रुत्वा पितरं चातिविह्वलम् ॥५५
इन्द्रजित् प्राह शोकार्तं त्यज शोकं महामते!।
मयि जीवति राजेन्द्र! मेघनादे महाबले ॥५६
दुःखस्यावसरः कुत्र देवान्तक! महामते!।
व्येतु ते दुःखमखिलं स्वस्थो भव महीपते! ॥५७
सर्वं समीकरिष्यामि हनिष्यामि च वै रिपून्।
गत्वा निकुम्भिलां सद्यस्तर्पयित्वा हुताशनम् ॥५८
लब्ध्वा रथादिकं तस्मादजेयोऽहं भवाम्यरेः।
इत्युक्त्वा त्वरितं गत्वा निर्दिष्टं हवनस्थलम् ॥५९
रक्तमाल्याम्बरधरो रक्तगन्धानुलेपनः।
निकुम्भिलास्थले मौनी हवनायोपचक्रमे ॥६०
विभीषणोऽथ तच्छ्रुत्वा मेघनादस्य चेष्टितम्।
प्राह रामाय सकलं होमारम्भं दुरात्मनः ॥६१
समाप्यते चेद्धोमोऽयं मेघनादस्य दुर्मतेः।
तदाऽजेयो भवेद्राम! मेघनादः सुरासुरैः ॥६२

**समाप्यत इति**––होमः समाप्यते चेत्तदा सुरैरसुरैरजेयो भवेत्। ब्रह्मणस्तथा वरप्रदानादिति भावः।६२

अतः शीघ्रं लक्ष्मणेन घातयिष्यामि रावणिम्।
आज्ञापय मया सार्धं लक्ष्मणं बलिनां वरम्।
हनिष्यति न संदेहो मेघनादं तवानुजः ॥६३

**श्रीराम उवाच**

अहमेवागमिष्यामि हन्तुमिन्द्रजितं रिपुम्।
आग्नेयेन महास्त्रेण सर्वराक्षसघातिना ॥६४

**अहमेवेति**––अहमेवेत्यनेन सर्वज्ञश्रीरामस्य लक्ष्मणोपरि स्नेहाधिक्यं व्यज्यते।६४

विभीषणोऽपि तं प्राह नासावन्यैर्निहन्यते।
यस्ते द्वादशवर्षाणि निद्राहारविवर्जितः ॥६५

**विभीषण इति**—यस्तु द्वादशवर्षाणि निद्राहारविवर्जित इत्यनेन चित्रकूटनिर्गमानन्तरं न भुक्तम्। तेन वर्षद्वयात्मकचित्रकूटवासे भोजनादिकं कृतमिति।६५

तेनैव मृत्युर्निर्दिष्टो ब्रह्मणाऽस्य दुरात्मनः।
लक्ष्मणस्तु अयोध्याया निर्गम्यायात्त्वया सह॥६६

**तेनैवेति**—अयोध्यातो निर्गम्य इत्यत्र साकेतस्य ध्यानस्फुरितदक्षिणद्वारत्वेन चित्रकूटस्य अयोध्यापदेन निर्देशः।६६

तदादि निद्राहारादीन्न जानाति रघूत्तम!।
सेवार्थं तव राजेन्द्र! ज्ञातं सर्वमिदं मया॥६७
हनिष्यति न सन्देहः शेषः साक्षाद्धराधरः॥६८

**हनिष्यतीति**—लक्ष्मणः [1]हनिष्यत्येव। तत्र हेतुः साक्षाद् धराधरः। धराधर इति पदेन धरणितनयानिमित्तं [2]हनिष्यत्येवेति परिकरालङ्कारो व्यक्तः।६८

त्वमेव साक्षाज्जगतामधीशो, नारायणो लक्ष्मण एव शेषः।
युवां धराभारनिवारणार्थं, जातौ जगन्नाटकसूत्रधारौ॥६९

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे अष्टमोऽध्यायः।८

तदेव स्पष्टप्रतिपत्तये आह **त्वमेवेति**—जनतामधीशः नारायणः तदावेशयुक्तत्वात्त्वमेव। एषः क्षीरसागरवासिनारायणः संकर्षणः लक्ष्मणावेशयुक्तत्वात् लक्ष्मणः। सोऽपि तत्त्वैक्यात् जगद्रूपं यन्नाटकं तस्य सूत्रधारौ। यथा नाटके मारिषादीनां सूत्रधारको मुख्यस्तथा जगन्निर्माणरूपनाटके कारणब्रह्मविष्णुमहेशादीनां मुख्यकारणौ साक्षात्त्वमेव। तेन लक्ष्मणागमनेन त्वद्गमनं जातमेवेति सूचितम्।६९

⊙

[3]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
अष्टमोऽध्यायः ८

⊙

---

१. तः २. पर्यन्तो भागः रा० व० पुस्तकस्थः। ३. इति युद्धकाण्डे ध्वनिप्रकाशिकायामष्टमोऽध्यायः। ८। इति रा० व० पु०।

## अथ नवमोऽध्यायः

**श्रीमहादेव उवाच**

विभीषणवचः श्रुत्वा रामो वाक्यमथाब्रवीत्।
जानामि तस्य रौद्रस्य मायां कृत्स्नां विभीषण! ॥१

**विभीषणेति** ।१

स हि ब्रह्मास्त्रविच्छूरो मायावी च महाबलः।
जानामि लक्ष्मणस्यापि स्वरूपं मम सेवनम् ॥२

**स हीति**—मम सेवनं निद्राभोजनाद्यभावरूपम् ।२

ज्ञात्वैवासमहं तूष्णीं भविष्यत्कार्यगौरवात्।
इत्युक्त्वा लक्ष्मणं प्राह रामो ज्ञानवतां वरः ॥३

**ज्ञात्वैवेति**—पूर्वं वनवाससमयेऽहं तस्य निद्राहारादिराहित्यं ज्ञात्वापि भविष्यतः कार्यस्येन्द्रजिद्वधरूपस्य गौरवात् तूष्णीम् आसम्। अयम्भावः लक्ष्मणो निद्राभोजनयोर्नाज्ञप्तः इति। ज्ञानवतां वरः इत्यनेन लक्ष्मणविरहासहिष्णुरपि ज्ञानेन तद्धैर्यमवलम्बितवानिति व्यक्तम् ।३

गच्छ लक्ष्मण! सैन्येन महता जहि रावणिम्।
हनुमत्प्रमुखैः सर्वैर्यूथपैः सह लक्ष्मण! ॥४

**गच्छेति**—आवेशावेशिनोः पार्थक्याभिप्रायेण लक्ष्मण! इति द्विः सम्बुद्धिः ।४

जाम्बवानृक्षराजोऽयं सह सैन्येन संवृतः।
विभीषणश्च सचिवैः सह त्वामभियास्यति ॥५
अभिज्ञस्तस्य देशस्य जानाति विवराणि सः।
रामस्य वचनं श्रुत्वा लक्ष्मणः सविभीषणः ॥६
जग्राह कार्मुकश्रेष्ठमन्यद् भीमपराक्रमः।
रामपादाम्बुजं स्पृश्य हृष्टः सौमित्रिरब्रवीत् ॥७
अद्य मत्कार्मुकान्मुक्ताः शरा निर्भिद्य रावणिम्।
गमिष्यन्ति हि पातालं स्नातुं भोगवतीजले ॥८

**अद्येति**—अद्य मत्कार्मुकादित्यादिलक्ष्मणोक्त्या तस्योत्साहो व्यज्यते। तेन विजयश्च तस्य धीरोद्धतत्वञ्च।८

एवमुक्त्वा स सौमित्रिः परिक्रम्य प्रणम्य तम्।
इन्द्रजिन्निधनाकाङ्क्षी ययौ त्वरितविक्रमः॥९

**एवमिति**—त्रिः परिक्रम्येति कायिकवाचिकमानसिकाभिप्रायेण बोध्यम्।९

वानरैर्बहुसाहस्रैर्हनूमान् पृष्ठतोऽन्वगात्।
विभीषणश्च सहितो मन्त्रिभिः त्वरितं ययौ॥१०
जाम्बवत्प्रमुखा ऋक्षाः सौमित्रिं त्वरयाऽन्वगुः।
गत्वा निकुम्भिलादेशं लक्ष्मणो वानरैः सह॥११
अपश्यद् बलसङ्घातं दूराद्राक्षससङ्कुलम्।
धनुरायम्य सौमित्रिर्यत्तोऽभूद् भूरिविक्रमः॥१२
अङ्गदेन च वीरेण जाम्बवान् राक्षसाधिपः।
तदा विभीषणः प्राह सौमित्रिं पश्य राक्षसान्॥१३
यदेतद्राक्षसानीकं मेघश्यामं विलोक्यते।
अस्यानीकस्य महतो भेदने यत्नवान् भव॥१४

**यदेतदिति**—मेघश्याममिति लुप्तोपमालङ्कारेण वानरसेनाया तद्भेदने वायोरुपमा व्यक्ता।१४

राक्षसेन्द्रसुतोऽप्यस्मिन् भिन्ने दृश्यो भविष्यति।
अभिद्रवाशु यावद्वै नैतत्कर्म समाप्यते॥१५
जहि वीर! दुरात्मानं हिंसापरमधार्मिकम्।
विभीषणवचः श्रुत्वा लक्ष्मणः शुभलक्षणः॥१६

**जहि वीरेति**—हिंसापरमधार्मिकमित्यनेन ब्राह्मणत्वमस्मात् गतं वधशङ्कां मा कार्षीरिति ध्वन्यते। तेन च ब्राह्मणं ज्ञात्वा एनं कदाचिन्न हन्यादिति शङ्का सूचिता। तेन च लक्ष्मणस्य ब्रह्मण्यता विभीषणस्य रामानन्यता च व्यक्ता।१६

ववर्ष शरवर्षाणि राक्षसेन्द्रसुतं प्रति।
पाषाणैः पर्वताग्रैश्च वृक्षैश्च हरियूथपाः॥१७
निर्जघ्नुः सर्वतो दैत्यान् तेऽपि वानरयूथपान्।
परश्वधैः शितैर्बाणैरसिभिर्यष्टितोमरैः॥१८

निर्जघ्नुर्वानरानीकं तदा शब्दो महानभूत् ।
स सम्प्रहारस्तुमुलः संजज्ञे हरिरक्षसाम् ॥१९
इन्द्रजित् स्वबलं सर्वं मर्द्यमानं विलोक्य सः ।
निकुम्भिलां च होमं च त्यक्त्वा शीघ्रं विनिर्गतः ॥२०
रथमारुह्य सधनुः क्रोधेन महताऽगमत् ।
समाह्वयित्वा सौमित्रिं युद्धाय रणमूर्धनि ॥२१
सौमित्रे ! मेघनादोऽहं मया जीवन्न मोक्ष्यसे ।
तत्र दृष्ट्वा पितृव्यं स प्राह निष्ठुरभाषणम् ॥२२
इहैव जातः संवृद्धः साक्षाद् भ्राता पितुर्मम ।
यस्त्वं स्वजनमुत्सृत्य परभृत्यत्वमागतः ॥२३
कथं द्रुह्यसि पुत्राय पापीयानसि दुर्मतिः ।
इत्युक्त्वा लक्ष्मणं दृष्ट्वा हनुमत्पृष्ठतः स्थितम् ॥२४

**कथमिति**—हनुमत्पृष्ठतः हनुमत्पृष्ठे स्थितम् ।२४

उद्यदायुधनिस्त्रिंशै रथे महति संस्थितः ।
महाप्रमाणमुद्यम्य घोरं विस्फारयन् धनुः ॥२५
अद्य वो मामका बाणाः प्राणान् पास्यन्ति वानराः ।
ततः शरं दाशरथिः सन्धायामित्रकर्षणः ॥२६
ससर्ज राक्षसेन्द्राय क्रुद्धः सर्प इव श्वसन् ।
इन्द्रजिद्रक्तनयनो लक्ष्मणं समुदैक्षत ॥२७
शक्राशनिसमस्पर्शैर्लक्ष्मणेनाहतः शरैः ।
मुहूर्त्तमभवन्मूढः पुनः प्रत्याहृतेन्द्रियः ॥२८
ददर्शावस्थितं वीरं वीरो दशरथात्मजम् ।
सोऽभिचक्राम सौमित्रिं क्रोधसंरक्तलोचनः ॥२९
शरान् धनुषि सन्धाय लक्ष्मणञ्चेदमब्रवीत् ।
यदि ते प्रथमे युद्धे न दृष्टो मे पराक्रमः ॥३०

**शरानिति**—यदि प्रथमे युद्धे मे पराक्रमो न दृष्टः अदृश्यत्वात्तर्हीदानीं प्रकटीभूय युद्धं कुर्वतो मे पराक्रमं पश्येत्यर्थः। एतेन नाद्याहमदृश्यो भवेयमिति ध्वनितम्। तेन च तस्य वीरत्वम् ।३०

अथ त्वां दर्शयिष्यामि तिष्ठेदानीं व्यवस्थितः।
इत्युक्त्वा सप्तभिर्बाणैरभिविव्याध लक्ष्मणम् ॥३१
दशभिश्च हनूमन्तं तीक्ष्णधारैः शरोत्तमैः।
ततः शरशतेनैव सम्प्रयुक्तेन वीर्यवान् ॥३२
क्रोधाद् द्विगुणसंरब्धो निर्बिभेद विभीषणम्।
लक्ष्मणोऽपि तदा शत्रुं शरवर्षैरवाकिरत् ॥३३
तस्य बाणैः सुसंविद्धं कवचं काञ्चनप्रभम्।
व्यशीर्यत रथोपस्थे तिलशः पतितं भुवि ॥३४
ततः शरसहस्रेण सङ्क्रुद्धो रावणात्मजः।
बिभेद समरे वीरं लक्ष्मणं भीमविक्रमम् ॥३५
व्यशीर्यतापतद् दिव्यं कवचं लक्ष्मणस्य च।
कृतप्रतिकृताऽन्योऽन्यं बभूवतुरभिद्रुतौ ॥३६

**व्यशीर्यतेति**—दिव्यमपि लक्ष्मणस्य कवचं तद्बाणैर्व्यशीर्यतेत्यनेन दिव्यलीलाप्रकरणेन प्रतिभटत्वात् तद्बाणस्यापि दिव्यता व्यक्ता।३६

अभीक्ष्णं निःश्वसन्तौ तौ युध्येतां तुमुलं पुनः।
शरसंकृत्तसर्वाङ्गौ सर्वतो रुधिरोक्षितौ ॥३७
सुदीर्घकालं तौ वीरावन्योऽन्यं निशितैः शरैः।
अयुध्येतां महासत्त्वौ जयाजयविवर्जितौ ॥३८
एतस्मिन्नन्तरे वीरो लक्ष्मणः पञ्चभिः शरैः।
रावणेः सारथिं साश्वं रथं च समचूर्णयत् ॥३९
चिच्छेद कार्मुकं तस्य दर्शयन् हस्तलाघवम्।
सोऽन्यत्तु कार्मुकं भद्रं सज्यं चक्रे त्वरान्वितः ॥४०

**चिच्छेदेति**—'सोऽन्यत्कार्मुकं भद्रं सज्यं चक्रे' इत्यत्र कार्मुकानामाधारभूतरथचूर्णनात् पुनर्धनुर्ग्रहणासम्भवेन ससैन्यं लक्ष्मणं बाणैरापूर्य लङ्कातो रथादिकमादाय समागत इति व्यज्यते। तेन च तस्य पराक्रमातिशयः [1]लाघवं च। विस्तरस्तु वाल्मीकीये।४०

---

१. 'लाघवं च' रा० व० पुस्तके न।

तच्चापमपि चिच्छेद लक्ष्मणस्त्रिभिराशुगैः ।
तमेवं छिन्नधन्वानं विव्याधानेकसायकैः ॥४१
पुनरन्यत्समादाय कार्मुकं भीमविक्रमः ।
इन्द्रजिल्लक्ष्मणं वाणैः शतैरादित्यसन्निभैः ॥४२
विभेद वानरान् सर्वान् बाणैरापूरयन् दिशः ।
तत ऐन्द्रं समादाय लक्ष्मणो रावणिं प्रति ॥४३
सन्धायाकृष्य कर्णान्तं कार्मुकं दृढनिष्ठुरम् ।
उवाच लक्ष्मणो वीरः स्मरन् रामपदाम्बुजम् ॥४४
धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि ।
त्रिलोक्यामप्रतिद्वन्द्वस्तदेनं जहि रावणिम् ॥४५

**धर्मात्मेति**—यदि दाशरथी रामः इत्यादिना इन्द्रजितो रावणेरैन्द्रास्त्रेण वधो न भविष्यतीति शपथे हेतुर्व्यज्यते। तेन च एवं स्वकर्तृत्वं विहाय श्रीरामो भजनीय इति जगदुपदेशः कृत इति व्यक्तम्। तेन च तस्याचार्य्यत्वं व्यक्तम्। एवं सत्यपीन्द्रास्त्रेण हननादिन्द्राय मानदानं व्यज्यते।४५

इत्युक्त्वा बाणमाकर्णाद्विकृष्य तमजिह्मगम् ।
लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ॥४६
स शरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ।
प्रमथ्येन्द्रजितं कायात्पातयामास भूतले ॥४७

**स शर इति**—स शर इत्यादिना सशपथं तच्छरेणैव तच्छिरश्छेदनात् श्रीरामसदृशः कोऽपि नास्तीति दर्शितम्। तेन च इन्द्रजिद्वधकीर्तिं लक्ष्मणः श्रीरामे समर्पितवानिति व्यक्तम्।४७

ततः प्रमुदिता देवाः कीर्तयन्तो रघूत्तमम् ।
ववर्षुः पुष्पवर्षाणि स्तुवन्तश्च मुहुर्मुहुः ॥४८
जहर्ष शक्रो भगवान् सहदेवैर्महर्षिभिः ।
आकाशेऽपि च देवानां शुशुभे दुन्दुभिस्वनः ॥४९

**जहर्षेति**—भगवानित्यनेन इन्द्रजिद्वधादेवात्मानं स्वैश्वर्यवन्तममंस्तेति सूचितम्। देवदुन्दुभिवादेन देवाः रावणं मृतप्रायं ज्ञात्वा निर्भयाः बभूवुरिति सूचितम्।४९

विमलं गगनं चासीत् स्थिराभूद्विश्वधारिणी।
निहतं रावणिं दृष्ट्वा जयजल्पसमन्वितः ॥५०

**विमलमिति**—स्थिराभूद्विश्वधारिणीत्यनेन यदा यदा '[1]भेदे नादे गर्जतिवांस्तदा तदा चराचरसहिता पृथ्वी चकम्प इति ध्वनितम्। तेन च मेघनादपराक्रमातिशयः, तेन च लक्ष्मणस्याप्रतिद्वन्द्वपराक्रमः ध्वन्यते।५०

गतश्रमः स सौमित्रिः शङ्खमापूरयद्रणे।
सिंहनादं ततः कृत्वा ज्याशब्दमकरोद्विभुः ॥५१

**गतश्रम इति**—शङ्खमापूरयद्रणे इत्यनेन तत्र शङ्खाभावेऽपि रामकार्यकरणरूपं इन्द्रजिद्वधजन्यहर्षातिशयेन लीलां विस्मृत्य आविर्भूतशङ्खचक्रयुतचतुर्भुजरूप इति व्यक्तम्। लक्ष्मणस्य शङ्खादिध्वनिना रामसमीपवर्तिनः सुग्रीवादयो वानराः संहृष्टाः गतश्रमाश्च बभूवुः। गतश्रमाः इत्यनेन रावणोऽपि मृत एवेति रामो जानकीं प्राप्त एवेति चामन्यन्त इति व्यज्यते।५१

तेन नादेन संहृष्टा वानराश्च गतश्रमाः।
वानरेन्द्रैश्च सहितं स्तुवद्भिर्हृष्टमानसैः ॥५२
लक्ष्मणः परितुष्टात्मा ददर्शाभ्येत्य राघवम्।
हनुमद्राक्षसाभ्यां च सहितो विनयान्वितः ॥५३
ववन्दे भ्रातरं रामं ज्येष्ठं नारायणं विभुम्।
त्वत्प्रसादाद्रघुश्रेष्ठ ! हतो रावणिराहवे ॥५४

**ववन्द इति**—ज्येष्ठं नारायणमित्थं च लक्ष्मणः लक्ष्मणाविष्टः शेषशायी नारायणो भ्रातरं श्रीरामं नित्यविहारिरामावेशं ज्येष्ठं नारायणम् आदिनारायणं ववन्दे। एतेन परिकराङ्कुरयथासङ्ख्याऽलङ्कारयोः सङ्करः सूचितः।५४

श्रुत्वा तल्लक्ष्मणाद् भक्त्या तमालिङ्ग्य रघूत्तमः।
मूर्ध्न्यवघ्राय मुदितः सस्नेहमिदमब्रवीत् ॥५५
साधु लक्ष्मण ! तुष्टोऽस्मि कर्म ते दुष्कृतं कृतम्।
मेघनादस्य निधने जितं सर्वमरिन्दम ! ॥५६

---

१. 'भेदनादो गर्जति' रा० व० पुस्तके। मेघनादो गर्जितवान् इति समीचीनः प्रतीयते।

अहोरात्रैस्त्रिभिर्वीरः कथञ्चिद्विनिपातितः।
निःसपत्नः कृतोऽस्म्यद्य निर्यास्यति हि रावणः॥५७

**अहोरात्रैरिति**—निःसपत्न इत्यनेन रावणोऽपि त्वयैव हत इति व्यज्यते। तेन यथेन्द्रजिद्वधरूपं यशः श्रीरामे समर्पितं तथा श्रीरामेणापि [1]रावणवधरूपा कीर्तिर्लक्ष्मणे समर्पितेत्यवगम्यते।५७

पुत्रशोकान्मया योद्धुं तं हनिष्यामि रावणम्।
मेघनादं हतं श्रुत्वा लक्ष्मणेन महाबलम्॥५८
रावणः पतितो भूमौ मूर्च्छितः पुनरुत्थितः।
विललापातिदीनात्मा पुत्रशोकेन रावणः॥५९
पुत्रस्य गुणकर्माणि संस्मरन् पर्यदेवयत्।
अद्य देवगणाः सर्वे लोकपाला महर्षयः॥६०
हतमिन्द्रजितं ज्ञात्वा सुखं स्वप्स्यन्ति निर्भयाः।
इत्यादि बहुशः पुत्रलालसो विललाप ह॥६१
ततः परमसंक्रुद्धो रावणो राक्षसाधिपः।
उवाच राक्षसान् सर्वान्निनाशयिषुराहवे॥६२
स पुत्रवधसन्तप्तः शूरः क्रोधवशं गतः।
संवीक्ष्य रावणो बुद्ध्या हन्तुं सीतां प्रदुद्रुवे॥६३
खड्गपाणिमुपायान्तं क्रुद्धं दृष्ट्वा दशाननम्।
राक्षसीमध्यगा सीता भयशोकाकुलाऽभवत्॥६४

**स पुत्रवधेति**—खड्गं गृहीत्वा हन्तुं सीतां प्रदुद्रुवे इत्यनेन सीताहननव्याजेन सीतामाचार्यं कृत्वा सकुलस्य मोक्षेच्छोर्मम कुलस्य मुक्तिर्जाता, अतो मुक्त्यर्थं मामाज्ञापयेति रावणस्य प्रख्यापनेच्छा व्यक्ता। खड्गपाणिः तेन रामो मत्कुलाय मुक्तिं दत्तवान्। त्वं तु मत्खड्गेन मच्छिरः छित्त्वा मुक्तं कुर्विति प्रार्थना कृतेति व्यक्ता। तेन तस्य दशमहाविद्यासु मध्ये श्रीशक्त्युपासना व्यक्ता। सीता भयशोकाकुलाऽभवत् मूलप्रकृतेर्मत्तो मुक्तिमिच्छोर्मुक्तिं कथं द्रक्ष्यामीति भयशोकाभ्याम् आकुलाऽभवत्। तेन च पुत्रशोकेन तस्य युद्ध उत्साहो व्यक्तः।६३-६४।

एतस्मिन्नन्तरे तस्य सचिवो बुद्धिमान् शुचिः।
सुपार्श्वो नाम मेधावी रावणं वाक्यमब्रवीत्॥६५

**एतस्मिन्निति**—एतस्मिन्नन्तरे मूलप्रकृतिमुक्त्यनङ्गीकाररावणमुक्त्यभिलाषरूपेऽवसरे सुपार्श्वो रावणं वाक्यमब्रवीदिति योजना। सचिव इत्यनेन सनकाद्युपदेशकालेऽपि सह-

---

१. रावण इति शब्दः मदीयपुस्तके न वरीवर्ति।

चरत्वम्, मेधावीत्यनेन तदुपदिष्टार्थधारकत्वम्, बुद्धिमानित्यनेन तत्कालोचितज्ञानवत्त्वम्, शुचिरित्यनेन तामसस्वभावराहित्यम्।६५

ननु नाम दशग्रीव! साक्षाद् वैश्रवणानुजः।
वेदविद्याव्रतस्नातः स्वकर्मपरिनिष्ठितः॥६६

**ननु नामेति**—वैश्रवणानुज इत्यनेन ब्राह्मणत्वम्, तेन च ब्रह्म जानातीति ब्राह्मण इति व्युत्पत्त्या परब्रह्मश्रीरामज्ञानं तवास्तीति सूचितम्। वेदविद्याव्रतस्नात इत्यनेन कुत्रापि वेदे प्रकृतेः मोक्षोऽस्तीति प्रतिपादनं नास्ति, किन्तु मायात्यागादेव मोक्षः तच्च वेदज्ञेन त्वया ज्ञातमेवेति सूचितम्। स्वकर्मपरिनिष्ठितः स्वकर्मणि विहिताऽरूपे परिनिष्ठितः रामहस्तान्मोक्षार्थमिति भावः अनेकगुणसम्पन्न इत्यनेन युद्धेनापि रामं प्रसाद्य मुक्तिमादातुं समर्थः।६६

अनेकगुणसम्पन्नः कथं स्त्रीवधमिच्छसि।
अस्माभिः सहितो युद्धे हत्वा रामञ्च लक्ष्मणम्।
प्राप्स्यसे जानकीं शीघ्रमित्युक्तः स न्यवर्तत॥६७

**अनेकेति**—कथमिति मुक्त्यर्थं स्त्रीवधं स्त्रियः मूलप्रकृतेः सकाशाद् वधं कथमिच्छसि तस्मादस्माभिः सह युद्धे रामं लक्ष्मणं च हत्वा प्राप्य अर्थात् ततो वधं प्राप्य शुभां नित्यविहारिणीं श्रीजानकीं प्राप्स्यसे तद्वासे सखीरूपेणेत्यर्थः एतया मायया किम्।६७

ततो दुरात्मा सुहृदा निवेदितं, वचः सुधर्म्यं प्रतिगृह्य रावणः।
गृहं जगामाशु शुचा विमूढधीः, पुनः सभां च प्रययौ सुहृद्वृतः॥६८

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे नवमोऽध्यायः॥९

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
नवमोऽध्यायः।९

⊙

---

१. इति नवमः रा०वा० पु०।

## अथ दशमोऽध्यायः

**श्रीमहादेव उवाच**

स विचार्य सभामध्ये राक्षसैः सह मन्त्रिभिः।
निर्ययौ येऽवशिष्टास्तैः राक्षसैः सह राघवम् ॥१
शलभः शलभैर्युक्तः प्रज्वलन्तमिवानलम्।
ततो रामेण निहताः सर्वे ते राक्षसा युधि ॥२
स्वयं रामेण निहतस्तीक्ष्णवाणेन वक्षसि।
व्यथितस्त्वरितं लङ्कां प्रविवेश दशाननः ॥३
दृष्ट्वा रामस्य बहुशः पौरुषं चाप्यमानुषम्।
रावणो मारुतेश्चैव शीघ्रं शुक्रान्तिकं ययौ ॥४
नमस्कृत्य दशग्रीवः शुक्रं प्राञ्जलिरब्रवीत्।
भगवन्! राघवेणैवं लङ्का राक्षसयूथपैः ॥५
विनाशिता महादैत्या निहता पुत्रबान्धवाः।
कथं मे दुःखसन्दोहस्त्वयि तिष्ठति सद्गुरौ ॥६
इति विज्ञापितो दैत्यगुरुः प्राह दशाननम्।
होमं कुरु प्रयत्नेन रहसि त्वं दशानन! ॥७
यदि विघ्नो न चेद्धोमे तर्हि होमानलोत्थितः ॥८
महान् रथश्च वाहाश्च चापतूणीरसायकाः।
सम्भविष्यन्ति तैर्युक्तस्त्वमजेयो भविष्यसि ॥९
गृहाण मन्त्रान्मद्दत्तान् गच्छ होमं कुरु द्रुतम्।
इत्युक्तस्त्वरितं गत्वा रावणो राक्षसाधिपः ॥१०
गुहां पातालसदृशीं मन्दिरे स्वे चकार ह।
लङ्काद्वारकपाटादि बध्वा सर्वत्र यत्नतः ॥११
होमद्रव्याणि सम्पाद्य यान्युक्तान्याभिचारिके।
गुहां प्रविश्य चैकान्ते मौनी होमं प्रचक्रमे ॥१२

उत्थितं धूममालोक्य महान्तं रावणानुजः।
रामाय दर्शयामास होमधूमं भयाकुलः॥१३
पश्य राम! दशग्रीवो होमं कर्तुं समारभत्।
यदि होमः समाप्तः स्यात्तदाऽजेयो भविष्यति॥१४
अतो विघ्नाय होमस्य प्रेषयाशु हरीश्वरान्।
तथेति रामः सुग्रीवसमेतेनाङ्गदं[1] कपिम्॥१५

अत इति—सुग्रीवसमेत इति। सुग्रीवस्तु श्रीरामसन्निधावेव तस्थाविति भावः।१५

हनुमत्प्रमुखान् वीरानादिदेश महाबलान्।
प्राकारं लङ्घयित्वा ते गत्वा रावणमन्दिरम्॥१६
दशकोट्यः प्लवङ्गानां गत्वा मन्दिररक्षकान्।
चूर्णयामासुरश्वांश्च गजांश्च न्यहनन् क्षणात्॥१७
ततश्च सरमा नाम प्रभाते हस्तसंज्ञया।
विभीषणस्य भार्या सा होमस्थानमसूचयत्॥१८
गुहापिधानपाषाणमङ्गदः पादघट्टनैः।
चूर्णयित्वा महासत्त्वो प्रविवेश महागुहाम्॥१९
दृष्ट्वा दशाननं तत्र मीलिताक्षं दृढासनम्।
ततोऽङ्गदाज्ञया सर्वे वानराः विविशुर्द्रुतम्॥२०
तत्र कोलाहलं चक्रुस्ताडयन्तश्च सेवकान्।
सम्भारांश्चिक्षिपुस्तत्र होमकुण्डे समन्ततः॥२१
श्रुवमाच्छिद्य हस्ताच्च रावणस्य बलाद्रुषा।
तेनैव संजघानाशु हनुमान् प्लवगाग्रणीः॥२२
घ्नन्ति दन्तैश्च काष्ठैश्च वानरास्तमितस्ततः।
न जहौ रावणो ध्यानं हतोऽपि विजिगीषया॥२३
प्रविश्यान्तःपुरे वेश्मन्यङ्गदो वेगवत्तरः।
समानयत्केशबन्धे धृत्वा मन्दोदरीं शुभाम्॥२४

**प्रविश्येति**—लङ्कां दहतो हनुमतः, राजपत्नीकेशग्रहणकञ्चुकस्पर्शननग्ननिरीक्षणादि-पापं कुर्वतोऽङ्गदस्य च पापस्पर्शेन रामभक्तानां विधिनिषेधराहित्यं सूचितम्। उक्त-

---

१. सम्मतेन इत्युचितः।

ञ्चागस्त्यसंहितायाम्, 'यथा विधिनिषेधौ हि मुक्तं नैवोपसर्पतः। तथा न स्पृशतो रामोपासकं विधिपूर्वकम्।' ननु महाभागवतैर्हनुमदादिभिर्गर्हितं कथं कृतमिति चेन्न महाबलसत्त्वशालिरावणस्य ध्यानत्यागस्य चानन्यथाशक्यत्वाद् गर्ह्येणापि कर्मणा स्वामिकार्यस्य कर्तव्यत्वात्।२४

रावणस्यैव पुरतो विलपन्तीमनाथवत्।
विददाराङ्गदस्तस्याः कञ्चुकं रत्नभूषितम्॥२५
मुक्ता वियुक्ताः पतिताः समन्ताद्रत्नसञ्चयैः।
श्रोणीसूत्रं निपतितं त्रुटितं रत्नचित्रितम्॥२६
कटिप्रदेशाद्विस्रस्ता नीवी तस्यैव पश्यतः।
भूषणानि च सर्वाणि पतितानि समन्ततः॥२७
देवगन्धर्वकन्याश्च नीता हृष्टैः प्लवङ्गमैः।
मन्दोदरी रुरोदाथ रावणस्याग्रतो भृशम्॥२८
क्रोशन्ती करुणं दीना जगाद दशकन्धरम्।
निर्लज्जोऽसि परैरेवं केशपाशो विकृष्यते॥२९
भार्या तवैव पुरतः किं जुहोषि न लज्जसे।
हन्यते पश्यतो यस्य भार्या पापैश्च शत्रुभिः॥३०

**भार्येति**—तवैव पुरतः इत्यस्य त्वं चौर्येण तस्य भार्यां हृतवान् अयं रामदासस्तवाग्रे मामाकर्षतीति भावः।३०

मन्तव्यं तेन तत्रैव जीवितान्मरणं वरम्।
हा! मेघनाद! ते माता क्लिश्यते बत वानरैः॥३१
त्वयि जीवति मयि दुःखमीदृशं च कथं भवेत्।
भार्या लज्जा च सन्त्यक्ता भर्त्रा मे जीविताशया॥३२
श्रुत्वा तद्देवितं राजा मन्दोदर्या दशाननः।
उत्तस्थौ खड्गमादाय त्यज देवीमिति ब्रुवन्॥३३

**श्रुत्वेति**—मन्दोदर्याः देवितं दैन्यमेव श्रुत्वा उत्तस्थौ। तेन पूर्वं हनुमत्प्रमुखैर्महाबलैः हन्यमानोऽपि तमगणय्य स्थितत्वात्तस्य बलातिशयः [1]धैर्यातिशयः दुर्जयत्वञ्च सूचितम्।३३

जघानाङ्गदमव्यग्रः कटिदेशे दशाननः।
तदोत्सृज्य ययुः सर्वे विध्वंस्य हवनं महत्॥३४

---

१. धैर्यातिशयः रा० व० पु० नास्ति।

रामपार्श्वमुपागम्य तस्थुः सर्वे प्रहर्षिताः ।
रावणस्तु ततो भार्यामुवाच परिसान्त्वयन् ॥३५

दैवाधीनमिदं भद्रे! जीवता किं न दृश्यते ।
त्यज शोकं विशालाक्षि! ज्ञानमालम्ब्य निश्चितम् ॥३६

अज्ञानप्रभवः शोकः शोको ज्ञानविनाशकृत् ।
अज्ञानप्रभवाऽहंधीः शरीरादिष्वनात्मसु ॥३७

तन्मूलः पुत्रदारादिसम्बन्धः संसृतिस्ततः ।
हर्षशोकभयक्रोधलोभमोहस्पृहादयः ॥३८

अज्ञानप्रभवा ह्येते जन्ममृत्युजरादयः ।
आत्मा तु केवलः शुद्धो व्यतिरिक्तो ह्यलेपकः ॥३९

आनन्दरूपो ज्ञानात्मा सर्वभावविवर्जितः ।
न संयोगो वियोगो वा विद्यते केनचित्सतः ॥४०

एवं ज्ञात्वा स्वमात्मानं त्यज शोकमनिन्दिते! ।
इदानीमेव गच्छामि हत्वा रामं सलक्ष्मणम् ॥४१

आगमिष्यामि नो चेन्मां दारयिष्यति सायकैः ।
श्रीरामो वज्रकल्पैश्च ततो गच्छामि तत्पदम् ॥४२

तदा त्वया मे कर्त्तव्या क्रिया मच्छासनात्प्रिये! ।
सीतां हत्वा मया सार्धं त्वं प्रवेक्ष्यसि पावकम् ॥४३

**तदेति**—सीतां हत्वा तत्समीपं गत्वा तद्दर्शनेन निष्पापया त्वया मच्छासनात् मे क्रिया सपिण्डीकरणान्ता कर्तव्या। नो चेन्मद्गतिमिच्छसि तर्हि मया सार्धं पावकं प्रवेक्ष्यसि। एतेन यां गतिमहं गमिष्यामि तां त्वमपि गमिष्यसीति सूचितम्। यद्वा यदि रामो देवमनुष्यादिष्वन्यतमश्चेत्तर्हि अहमेव तं हनिष्यामीति। यदि च रामो वाङ्मनसगोचरातीतश्रीराम एव नारायणे आवेशेन गतः तर्हि वज्रकल्पैर्बाणैर्मां दारयिष्यति, तदाहं तत्पदं गमिष्यामि। तदा हे प्रिये! मच्छासनात् मे क्रिया सपिण्डीकरणान्ता कर्तव्या। तदनन्तरं मदुपदिष्टज्ञानेन सीतां मूलप्रकृतिरूपां मायां हत्वा निरस्य त्यक्त्वा मया सार्धं पावकं पवित्रकर्त्तारं विभीषणं मच्छासनात् प्रवेक्ष्यसि। मच्छासनादित्यनेन परपुरुषसंसर्गजन्यपापमपि तव न भविष्यतीति परमभागवतेन विभीषणेन सार्धं त्वमपि जीवन्मुक्ता

[1]भविष्यतीति सूचितम्। हन् हिंसागत्योरितिधातोर्गत्यर्थभावे रावणोक्तपूर्वापरविरोधापत्तिः स्यात्।४३

एवं श्रुत्वा वचस्तस्य रावणस्यातिदुःखिता।
उवाच नाथ! मे वाक्यं शृणु सत्यं तथा कुरु॥४४

शक्यो न राघवो जेतुं त्वया चान्यैः कदाचन।
रामो देववरः साक्षात्प्रधानपुरुषेश्वरः॥४५

मत्स्यो भूत्वा पुराकल्पे मनुं वैवस्वतं प्रभुः।
ररक्ष सकलापद्भ्यो राघवो भक्तवत्सलः॥४६

रामः कूर्मोऽभवत्पूर्वं लक्षयोजनविस्तृतः।
समुद्रमथने पृष्ठे दधार कनकाचलम्॥४७

हिरण्याक्षोऽतिदुर्वृत्तो हतोऽनेन महात्मना।
क्रोडरूपेण वपुषा क्षोणीमुद्धरता क्वचित्॥४८

त्रिलोककण्टकं दैत्यं हिरण्यकशिपुं पुरा।
हतवान्नारसिंहेन वपुषा रघुनन्दनः॥४९

विक्रमैस्त्रिभिरेवासौ बलिं बद्ध्वा जगत्त्रयम्।
आक्रम्यादात्सुरेन्द्राय भृत्याय रघुसत्तमः॥५०

राक्षसाः क्षत्रियाकारा जाताः भूमेर्भरावहाः।
तान् हत्वा बहुशो रामो भुवं जित्वा ह्यदान्मुनेः॥५१

**मत्स्य इति**–मत्स्यो भूत्वेत्यारभ्य भुवं जित्वाह्यदान्मुनेरित्यन्तेन विभूतिरुक्ता।४६-५१।

स एव साम्प्रतं जातो रघुवंशे परात्परः।
भवदर्थे रघुश्रेष्ठो मानुषत्वमुपागतः॥५२

**स एवेति**—यो रघुनन्दनः मत्स्याद्यवतारे आवेशेन तत्तत्कार्यं कृतवान् मानुषत्वमुपागतः सनातनमानुषत्वविशिष्टः स परात्परः श्रीरामः त्वद्वधार्थं आदिनारायणे आवेशेन प्रविश्य रघुवंशे जात आविर्भूतः, अन्येभ्यस्ते मृत्योरभावादिति भावः।५२

---

१. भविष्यसि इत्युचितः।

तस्य भार्या किमर्थं वा हृता सीता वनाद् बलात्।
मम पुत्रविनाशार्थं स्वस्यापि निधनाय च ॥५३

इतः परं वा वैदेहीं प्रेषयस्व रघूत्तमे।
विभीषणाय राज्यं तु दत्त्वा गच्छामहे वनम् ॥५४

मन्दोदरीवचः श्रुत्वा रावणो वाक्यमब्रवीत्।
कथं भद्रे! रणे पुत्रान् भ्रातॄन् राक्षसमण्डलम् ॥५५

घातयित्वा राघवेण जीवामि वनगोचरः।
रामेण सह योत्स्यामि रामबाणैः सुशीघ्रगैः ॥५६
विदार्यमाणो यास्यामि तद्विष्णोः परमं पदम्।

जानामि राघवं विष्णुं लक्ष्मीं जानामि जानकीम् ॥
ज्ञात्वैव जानकी सीता मया नीता वनाद् बलात् ॥५७

**जानामीति**—योऽयं मद्वधार्थमागतः तं विष्णुं राघवं गृहीततत्तदावेशं जानामि। येयं मया नीता तां जानकीं लक्ष्मीं जानामि न मे सन्देहः इत्यर्थः। प्रेमालक्ष्मीतो निर्गतत्वात्।५७

रामेण निधनं प्राप्य यास्यामीति परं पदम्।
विमुच्य त्वां तु संसाराद् गमिष्यामि सह प्रिये! ॥५८

**रामेणेति**—हे प्रिये! मृतैः सपुत्रबान्धवैः सह परं पदं यास्यामीत्यर्थः। एतेनाविहितामवलम्बितवतो मे विहिता न रोचते इति ध्वनिः।५८

परानन्दमयी शुद्धा सेव्यते या मुमुक्षुभिः।
तां गतिं तु गमिष्यामि हतो रामेण संयुगे ॥५९

**परेति**—परा सर्वोत्कृष्टा आनन्दमयी तृणगुल्मलतादीनामपि आनन्दरूपत्वेन आनन्दप्रचुरा शुद्धा विकाररहिता एकरसा इति यावत्। एवं भूत्वा या गतिः साकेतरूपा चिन्त्यते तां गतिं साकेतरूपां प्राप्स्यामि।५९

प्रक्षाल्य कल्मषाणीह मुक्तिं यास्यामि दुर्लभाम् ॥६०

क्लेशादिपञ्चकतरङ्गयुगं भ्रमाढ्यं,
दाराप्तजाप्तधनबन्धुझषाभियुक्तम् ।
और्वानलाभनिजरोषमनङ्गजालं,
संसारसागरमतीत्य हरिं व्रजामि ॥६१

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे दशमोऽध्यायः ।१०

⊙

**क्लेशादीति**—हरिं व्रजामीत्यनेन स एव मे क्लेशान् [1]हनिष्यति, न तपश्चरणादयो मत्क्लेशहरणे समर्था इति ध्वनिः। विदार्यमाणो यास्यामि तद्विष्णोः परमं पदमित्यारभ्य संसारसागरमतीत्य हरिं व्रजामीत्यन्तेन अस्मदुक्तपरोक्षार्थप्रतिपादनमेव सम्यक्। ये तु पूर्वापरवाक्यानुसन्धानानभिज्ञाः अपरोक्षार्थप्रतिपादनं मन्वते तेषामज्ञानत्वं [2]स्पष्टमेवेति व्यक्तम् ।६१

[3]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
दशमोऽध्यायः ।१०

⊙

---

१. हरिष्यति, रा० व० पु०। २. स्पष्टतया व्यक्तम्, रा० व० पु०। ३. इति युद्धकाण्डे दशमोऽध्यायः रा० व० पु०। मत्पुस्तकेऽपि इति श्रीमदध्यात्मरामायणटीकायां ध्वनिप्रकाशिकायां युद्धकाण्डे दशमोऽध्यायः ।१०, इत्याकारा पुष्पिका।

## अथ एकादशोऽध्यायः

**श्रीमहादेव उवाच**

इत्युक्त्वा वचनप्रेम्णा राज्ञीं मन्दोदरीं तदा।
रावणः प्रययौ योद्धुं रामेण सह संयुगे ॥१
दृढं स्यन्दनमास्थाय वृतो घोरैर्निशाचरैः।
चक्रैः षोडशभिर्युक्तं सवरूथं सकूबरम् ॥२
पिशाचवदनैर्घोरैः खरैर्युक्तं भयावहम्।
सर्वास्त्रशस्त्रसहितं सर्वोपस्करसंयुतम् ॥३
निश्चक्रामाथ सहसा रावणो भीषणाकृतिः।
आयान्तं रावणं दृष्ट्वा भीषणं रणकर्कशम् ॥४
सन्त्रस्ताऽभूत्तदा सेना वानरी रामपालिता।
हनूमानथ चोत्प्लुत्य रावणं योद्धुमाययौ ॥५

**सन्त्रस्तेति**—सन्त्रस्ताभूत्तदा सेनेत्यनेन रावणस्य पराक्रमातिशयः। हनूमानथ चोत्प्लुत्येत्यनेन पूर्वं युद्धं विहाय हवने स्थितः अतः श्रुवमाच्छिद्य नाहं बलेन त्वां [1]हतवानस्मि [2]इदानीं मे बलं पश्येति हेतुर्व्यक्तस्तेन हनुमतो बलातिशयो व्यक्तः।५

आगत्य हनुमान् रक्षो वक्षस्यतुलविक्रमः ॥६
मुष्टिबन्धं दृढं बद्ध्वा ताडयामास वेगतः।
तेन मुष्टिप्रहारेण जानुभ्यामपतद्रथे ॥७
मूर्च्छितोऽथ मुहूर्त्तेन रावणः पुनरुत्थितः।
उवाच च हनूमन्तं शूरोऽसि मम सम्मतः ॥८
हनूमानाह तं धिङ् मां यस्त्वं जीवसि रावण!।
त्वं तावन्मुष्टिना वक्षो मम ताडय रावण! ॥९

---

१. मदीयपुस्तकस्थः हताऽस्मि इति पाठः चिन्त्यः। २. इदानीमेव इति मत्पुस्तके।

पश्चान्मया हतः प्राणान् मोक्ष्यसे नात्र संशयः।
तथेति मुष्टिना वक्षो रावणेनापि ताडितः॥१०
विघूर्णमाननयनः किञ्चित्कश्मलमाययौ।
संज्ञामवाप्य कपिराड् रावणं हन्तुमुद्यतः॥११
ततोऽन्यत्र गतो भीत्या रावणो राक्षसाधिपः।
हनूमानङ्गदश्चैव नलो नीलस्तथैव च॥१२

**तत इति**—स्वं हन्तुमुद्यतं हनूमन्तं त्यक्त्वाऽन्यत्र गतः, तेन श्रीरामेण मे मृतिरित्यत्र वाध एव स्यादिति हेतुर्व्यक्तः। तेन हनूमतः बलातिशयश्च।१२

चत्वारः समवेत्याग्रे दृष्ट्वा राक्षसपुङ्गवान्।
अग्निवर्णं तथा सर्परोमाणं खड्गरोमकम्॥१३
तथा वृश्चिकरोमाणं निर्जघ्नुः क्रमशोऽसुरान्।
चत्वारश्चतुरो हत्वा राक्षसान्भीमविक्रमान्॥१४
सिंहनादं पृथक् कृत्वा रामपार्श्वमुपागताः।
ततः क्रुद्धो दशग्रीवः सन्दश्य दशनच्छदम्॥१५
विवृत्य नयने क्रूरो राममेवान्वधावत।
दशग्रीवो रथस्थस्तु रामं वज्रोपमैः शरैः॥१६
आजघान महाघोरैर्धाराभिरिव तोयदः।
रामस्य पुरतः सर्वान् वानरानपि विव्यथे॥१७
ततः पावकसङ्काशैः शरैः काञ्चनभूषणैः।
अभ्यवर्षद्रणे रामो दशग्रीवं समाहितः॥१८
रथस्थं रावणं दृष्ट्वा भूमिस्थं रघुनन्दनम्।
आहूय मातलिं शक्रो वचनं चेदमब्रवीत्॥१९
रथेन मम भूमिष्ठं शीघ्रं याहि रघूत्तमम्।
त्वरितं भूतलं गत्वा कुरु कार्यं ममानघ!॥२०
एवमुक्तोऽथ तं नत्वा मातलिर्देवसारथिः।
ततो हयैश्च संयोज्य हरितैः स्यन्दनोत्तमम्॥२१

स्वर्गाज्जयार्थं रामस्य ह्युपचक्राम मातलिः।
अब्रवीच्च ततो राममप्रतर्क्यं रथे स्थितः।
प्राञ्जलिर्देवराजेन प्रेषितोऽस्मि रघुत्तम! ॥२२
रथोऽयं देवराजस्य विजयाय तव प्रभो!।
प्रेषितश्च महाराज! धनुरैन्द्रं च भूषितम् ॥२३

**रथ इति**—इदं रथादिकं सर्वमिन्द्रेण प्रेषितं तत् गृहाणेत्यादिना स्वीये यशसि अस्माकमपि यशः मिलितं कुर्विति प्रार्थना व्यज्यते।२३

अभेद्यं कवचं खड्गं दिव्यतूणीयुगं तथा।
आरुह्य च रथं राम! रावणं जहि राक्षसम् ॥२४
मया सारथिना देव! वृत्रं देवपतिर्यथा।
इत्युक्तस्तं परिक्रम्य नमस्कृत्य रथोत्तमम् ॥२५
आरुरोह रथं रामो लोकांल्लक्ष्म्या नियोजयन्।
ततोऽभवन्महायुद्धं भैरवं रोमहर्षणम् ॥२६

**आरुरोहेति**—लोकांल्लक्ष्म्या नियोजयन्नित्यनेन रथावरोहणकाले सर्वलोकेषु प्रसरन्त्या शोभया श्रीराम एव विजेष्यतीति कथितमिवेत्युत्प्रेक्षालङ्कारो व्यक्तः।२६

महात्मनो राघवस्य रावणस्य च धीमतः।
आग्नेयेन च आग्नेयं दैवं दैवेन राघवः ॥२७
अस्त्रं राक्षसराजस्य जघान परमास्त्रवित्।
ततस्तु ससृजे घोरं राक्षसं चास्त्रमस्त्रवित् ॥२८
क्रोधेन महताविष्टो रामस्योपरि रावणः।
रावणस्य धनुर्मुक्ताः सर्पाः भूत्वा महाविषाः ॥
शराः काञ्चनपुङ्खाभाः राघवं परितोऽपतन् ॥२९
तैः शरैः सर्पवदनैर्वमद्भिरनलं मुखैः।
दिशश्च विदिशश्चैव व्याप्तास्तत्र तदाऽभवन् ॥३०
रामः सर्पांस्ततो दृष्ट्वा समन्तात्परिपूरितान्।
सौपर्णमस्त्रं तद्घोरं पुरः प्रावर्तयद्रणे ॥३१
रामेण मुक्तास्ते बाणा भूत्वा गरुडरूपिणः।
चिच्छिदुः सर्पबाणांस्तान् समन्तात् सर्पशत्रवः ॥३२

अस्त्रे प्रतिहते युद्धे रामेण दशकन्धरः।
अभ्यवर्षत्ततो रामं घोराभिः शरवृष्टिभिः॥३३
ततः पुनः शरानीकैः राममक्लिष्टकारिणम्।
अर्दयित्वा तु घोरेण मातलिं प्रत्यविध्यत॥३४
पातयित्वा रथोपस्थे रथकेतुं च काञ्चनम्।
ऐन्द्रानश्वानभ्यहनद्रावणः क्रोधमूर्च्छितः॥३५
विषेदुर्देवगन्धर्वाश्चारणाः पितरस्तथा।
आर्त्ताकारं हरिं दृष्ट्वा व्यथिताश्च महर्षयः॥३६
व्यथिताः वानरेन्द्राश्च बभूवुः सविभीषणाः।
दशास्यो विंशतिभुजः प्रगृहीतशरासनः॥३७
ददृशे रावणस्तत्र मैनाक इव पर्वतः।
रामस्तु भृकुटीं बद्ध्वा क्रोधसंरक्तलोचनः॥३८
कोपं चकार सदृशं निर्दहन्निव राक्षसम्।
धनुरादाय देवेन्द्रधनुराकारमद्भुतम्॥३९
गृहीत्वा पाणिना बाणं कालानलसमप्रभम्।
निर्दहन्निव चक्षुर्भ्यां ददृशे रिपुमन्तिके॥४०
पराक्रमं दर्शयितुं तेजसा प्रज्वलन्निव।
प्रचक्रमे कालरूपी सर्वलोकस्य पश्यतः॥४१
विकृष्य चापं रामस्तु रावणं प्रतिविध्य च।
हर्षयन्वानरानीकं कालान्तक इवाबभौ॥४२
क्रुद्धं रामस्य वदनं दृष्ट्वा शत्रुं प्रधावतः।
तत्रसुः सर्वभूतानि चचाल च वसुन्धरा॥४३
रामं दृष्ट्वा महारौद्रमुत्पातांश्च सुदारुणान्।
त्रस्तानि सर्वभूतानि रावणं चाविशद् भयम्॥४४
विमानस्थाः सुरगणाः सिद्धगन्धर्वकिन्नराः।
ददृशुस्ते महायुद्धं लोकसंवर्तकोपमम्॥४५
मूर्धानो रावणस्याथ बहवो रुधिरोक्षिताः।
गगनात्प्रपतन्ति स्म तालादिव फलानि हि॥४६

न दिनं न च वै रात्रिर्न सन्ध्या न दिशोऽपि वा।
प्रकाशन्ते न तद्रूपं दृश्यते तत्र सङ्गरे॥४७

**न दिनमिति**—तत्र वाल्मीकीयोक्तरीत्या सप्तदिनाधिके तस्मिन् सङ्गरे। एतेन दिशो न प्रकाशन्ते तद्रूपं तयोः रामरावणयोः रूपं दृश्यते। एतेन श्रीरामः स्वं शरीरमिव रावण-शरीरं व्यापकं कृतवानिति। तेन च श्रीरामस्याघटितघटनापटीयस्त्वं व्यक्तम्।४७

ततो रामो बभूवाथं विस्मयाविष्टमानसः।
शतमेकोत्तरं छिन्नं शिरसां चैकवर्चसाम्॥४८

**तत इति**—शतमेकोत्तरं छिन्नं शिरसां चैकवर्चसामिति शिरः छेदने श्रीशिवाय एकोत्तरं शतं शिरांसि समर्पितानि अतो बहूनि शिरांसि प्राप्तानीति हेतुः।४८

न चैव रावणः शान्तो दृश्यते जीवितक्षयात्।
ततः सर्वास्त्रविद्वीरः कौशल्यानन्दवर्धनः॥४९

**न चैवेति**—न चैव रावणः शान्तो दृश्यते इत्यादिना श्रीरामेण युद्धं कर्तुं रावणः, रावणेन श्रीरामः समर्थ इत्यन्योऽन्यालङ्कारो व्यक्तः।४९

अस्त्रैश्च बहुभिर्युक्तश्चिन्तयामास राघवः।
यैर्यैर्बाणैर्हता दैत्या महासत्त्वपराक्रमाः॥५०
त एते निष्फलं याता रावणस्य विघातने।
इति चिन्ताकुले रामे समीपस्थो विभीषणः॥५१
उवाच राघवं वाक्यं ब्रह्मदत्तवरो ह्यसौ।
विच्छिन्ना बाहवोऽप्यस्य विच्छिन्नानि शिरांसि च॥५२
उत्पत्स्यन्ति पुनः शीघ्रमित्याह भगवानजः।
नाभिदेशेऽमृतं तस्य कुण्डलाकारसंस्थितम्॥५३
तच्छोषयानलास्त्रेण तस्य मृत्युस्ततो भवेत्।
विभीषणवचः श्रुत्वा रामः शीघ्रपराक्रमः॥५४
पावकास्त्रेण संयोज्य नाभिं विव्याध रक्षसः।
अनन्तरं च चिच्छेद शिरांसि च महाबलः॥५५
बाहूनपि च संरब्धो रावणस्य रघूत्तमः।
ततो घोरां महाशक्तिमादाय दशकन्धरः॥५६

**पावकास्त्रेणेति**—शिरांसि बाहूनपि चिच्छेद इत्यनेन जीवितस्यैवं एकशिरोबाहुद्वयेन स्थापितमिति। तेन च द्विभुजो भूत्वा मत्साकेतपार्षदो भविष्यसीति न तु वैकुण्ठस्थः इति सूचितम्।५५-५६।

विभीषणवधार्थाय चिक्षेप क्रोधविह्वलः।
चिच्छेद राघवो बाणैस्तां शितैर्हेमभूषितैः॥५७
दशग्रीवशिरश्छेदात्तदा तेजो विनिर्गतम्।
म्लानरूपो बभूवाथ छिन्नैः शीर्षैर्भयङ्करैः॥५८
एकेन मुख्यशिरसा बाहुभ्यां रावणो बभौ।
रावणस्तु पुनः क्रुद्धो नानाशस्त्रास्त्रवृष्टिभिः॥५९
ववर्ष रामं तं रामस्तथा बाणैर्ववर्ष च।
तयोर्युद्धमभूद्घोरं तुमुलं लोमहर्षणम्॥६०
अथ संस्मारयामास मातली राघवं तदा।
विसृजास्त्रं वधायास्य ब्राह्मं शीघ्रं रघूत्तम!॥६१
विनाशकालः प्रथितो यः सुरैः सोऽद्य वर्तते।
उत्तमाङ्गं न चैतस्यच्छेत्तव्यं राघव! त्वया॥६२
नैव शीर्ष्णि प्रभो वध्यो वध्य एव हि मर्मणि।
ततः संस्मारितो रामस्तेन वाक्येन मातलेः॥६३
जग्राह स शरं दीप्तं निःश्वसन्तमिवोरगम्।
यस्य पार्श्वे तु पवनः फले भास्करपावकौ॥६४
शरीरमाकाशमयं गौरवे मेरुमन्दरौ।
पर्वस्वपि च विन्यस्ता लोकपाला महौजसः॥६५
जाज्वल्यमानं वपुषा भान्तं भास्करवर्चसा।
तमुग्रमस्त्रं लोकानां भयनाशनमद्भुतम्॥६६
अभिमन्त्र्य ततो रामस्तं महेषुं महाभुजः।
वेदप्रोक्तेन विधिना सन्दधे कार्मुके बली॥६७
तस्मिन् सन्धीयमाने तु राघवेण शरोत्तमे।
सर्वभूतानि वित्रेसुश्चचाल च वसुन्धरा॥६८

स रावणाय संक्रुद्धो भृशमानम्य कार्मुकम्।
चिक्षेप परमायत्तस्तमस्त्रं मर्मघातिनम् ॥६९
स वज्र इव दुर्धर्षो वज्रपाणिविसर्जितः।
कृतान्त इव घोरास्यो न्यपतद्रावणोरसि ॥७०
स निमग्नो महाघोरः शरीरान्तकरः परः।
बिभेद हृदयं तूर्णं रावणस्य महास्वनः ॥७१
रावणस्याहरत्प्राणान् विवेश धरणीतले।
स शरो रावणं हत्वा रामतूणीरमाविशत् ॥७२
तस्य हस्तात्पपाताशु सशरं कार्मुकं महत्।
गतासुर्भ्रमिवेगेन राक्षसेन्द्रोऽपतद् भुवि ॥७३
तं दृष्ट्वा पतितं भूमौ हतशेषाश्च राक्षसाः।
हतनाथाः भयत्रस्ताः दुद्रुवुः सर्वतो दिशम् ॥७४
दशग्रीवस्य निधनं विजयं राघवस्य च।
ततो विनेदुः संहृष्टा वानरा जितकाशिनः ॥७५
वदन्तो रामविजयं रावणस्य च तद्वधम्।
अथान्तरिक्षे व्यनदत्सौम्यस्त्रिदशदुन्दुभिः ॥७६

**वदन्त इति**--वानरैः रामविजयकथनानन्तरं देवैर्दुन्दुभयो वादिताः। एतेन मृतमपि रावणं मूर्च्छितभ्रमेण सन्त्रस्ताः देवाः कर्णाकर्णिकया रामजयं कथितवन्त इति। तेन च देवानां भयातिशयः, तेन च रावणप्रतापातिशयो व्यज्यते।७६

पपात पुष्पवृष्टिश्च समन्ताद्राघवोपरि।
तुष्टुवुर्मुनयः सिद्धाश्चारणाश्च दिवौकसः ॥७७
अथान्तरिक्षे ननृतुः सर्वतोऽप्सरसो मुदा।
रावणस्य च देहोत्थं ज्योतिरादित्यवत् स्फुरत् ॥७८
प्रविवेश रघुश्रेष्ठं देवानां पश्यतां सताम्।
देवा ऊचुरहोभाग्यं रावणस्य महात्मनः ॥७९

**अथान्तरिक्ष इति**--रावणदेहोत्थं ज्योतिः रघुश्रेष्ठं प्रविवेशेत्यनेन रावणः श्रीरामधाम प्राप्तवानित्यवगम्यते। तेन च सच्चिदानन्दत्वेन श्रीरामस्य नामरूपलीलाधाम्नैक्यं यक्तम्। रावणस्य देहोत्थं ज्योतिः प्रविवेश रघुश्रेष्ठं देवानां पश्यतां सतामित्यत्र अणुरेव

आत्मा चेतसा वेदितव्यः, 'वालाग्रशतभागस्य शतधा कल्पितस्य च, भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' इति श्रुत्या अतिसूक्ष्मस्य जीवात्मनो दर्शनासम्भवादत्रैव श्रीरामेण षष्ठशरीरं दत्तमिति गम्यते। तेन लब्धषष्ठशरीरेण रावणेन इति विचारितं सर्वलोकोपरिस्थितं साकेतं झटिति न प्राप्नोमीति नामरूपलीलाधाम्नां सच्चिदानन्दत्वेन ऐक्यात् रूपप्रवेशे धामप्रवेशो भविष्यत्येवेति निश्चित्य रामरूपं प्रविष्ट इति व्यक्तम्।७८-७९।

वयं तु सात्त्विका देवा विष्णोः कारुण्यभाजिनः।
भयदुःखादिभिर्व्याप्ताः संसारे परिवर्तिनः॥८०

अयं तु राक्षसः क्रूरो ब्रह्महाऽतीवतामसः।
परदाररतो विष्णुद्वेषी तापसहिंसकः॥८१

पश्यत्सु सर्वभूतेषु राममेव प्रविष्टवान्।
एवं ब्रुवत्सु देवेषु नारदः प्राह सस्मितः॥८२

शृणुतात्र सुराः! यूयं धर्मतत्त्वविचक्षणाः।
रावणो राघवद्वेषादनिशं हृदि भावयन्॥८३

भृत्यैः सह सदा रामचरित्रं द्वेषसंयुतः।
श्रुत्वा रामात्स्वनिधनं भयात्सर्वत्र राघवम्॥८४

पश्यन्ननुदिनं स्वप्ने राममेवानुधावति।
क्रोधोऽपि रावणस्याशु गुरुबोधाधिकोऽभवत्॥८५

रामेण निहतश्चान्ते निर्धूताशेषकल्मषः।
रामसायुज्यमेवाप रावणो मुक्तबन्धनः॥८६

**रामेणेति**—सायुज्यम् सह युनक्तीति सयुक्, सयुजो भावः सायुज्यम्। 'प्रतापी राघवसखा भ्रात्रा वै सह रावणः। रावणेन तदा साक्षात् साकेतादवतीर्यत' इति सदाशिवसंहितोक्तेः प्रतापीनामकसखात्वात्साकेते रामसखत्वं प्राप्य श्रीरामस्यात्यन्तसान्निध्यं प्रापेत्यर्थः। 'समानदेशे युज्यते सयुक् तस्य भावः समानलोकवास इत्यर्थः। तदेवाभिप्रेत्य अग्रे वक्ष्यति वैकुण्ठं यातीति' भट्टाः। ननु रावणस्य श्रीरामलोकप्राप्तत्वेन न स पुनरावर्तते 'यद्गत्वा न निवर्तन्ते तद्धाम परमं ममेति' श्रुतिस्मृतिविरुद्धत्वात् शिशुपालरूपेण तस्य पुनर्जन्म न सङ्गच्छत इति चेन्न 'ज्ञात्वा स्वपार्षदौ जातौ राक्षसप्रवरौ प्रिये। तदा नारायणः साक्षाद्रामरूपेण जायते। प्रतापी राघवसखा भ्रात्रा वै सह रावणः। [1]राघवेण तदा साक्षा-

१. रावणेन इत्युचितः पाठः।

त्साकेतादवतीर्यत।' इति शिवसंहितायां रावणद्वयस्योक्तेः यदा जयविजयौ सनकादिशापेन हिरण्याक्षहिरण्यकशिपुरावणकुम्भकर्णशिशुपालदन्तवक्त्ररूपाणि धत्तस्तदा नारायणः (वाराह) नृसिंहरामकृष्णरूपाणि धृत्वा तौ हत्वा शापान्मोचयति। यदा च श्रीरामविलासार्थं प्रतापी नामकः भ्रात्रा सह राक्षसो जातस्तदा वाङ्मनसागोचरो नित्यविहारी श्रीरामः आवेशेन नारायणे प्रविश्यावतीर्य ताभ्यां सह युद्धे संक्रीड्य पुनः स्वधाम प्रापयतीति न कश्चिद्विरोधः। नन्वेवमपि जयविजययोर्भगवद्धाम्नः हिरण्याक्षादिरूपेण जातत्वे पूर्वोक्त-दोषस्तु तदवस्थ एवेति चेन्न जयविजयलोकस्य विरजापारस्थमहावैकुण्ठातिरिक्त रमा-वैकुण्ठस्य ब्रह्माण्डान्तर्वर्तित्वात्। गोलोकादपि श्रीराधिकाशापात् श्रीदाम्नः शंखचूड-रूपेणात्रागमनं श्रूयतेऽतस्तद्विरोधः पुनस्तदवस्थ एवेति चेन्न गोलोकस्य द्वैविध्यात्। तथाहि एकं सुरभीस्थानं तच्च यदा महाप्रलये तमसावृतत्वेन शून्यमासीत्तदा नित्यविहारस्थलात् गोलोकात्सुरभीस्थानभूतगोलोकमागत्य जगत्सृष्ट्यादिकं श्रीकृष्णः कृत्वा पुनः रासमण्डलं जगाम। तथा चोक्तं ब्रह्मवैवर्ते 'एतान् सृष्ट्वा जगामादौ सुरम्यं रासमण्डलमिति'। यतोऽत्रैव विरजोत्पत्त्यादिः ततोऽत्रैव शापादिकं न तु नित्यविहारोपयोगिनि महावैकुण्ठादपि पञ्चाशद्योजनादूर्ध्वस्थितगोलोकान्तर्वर्तिनि साकेते। (य) त्तु कैमुत्येन [1]'ततः पुनरा-वृत्त्यसंभवः एव, कथं तर्हि प्रतापिनः रावणरूपेणात्रागमनमिति चेत्सत्यं न स पुनरावर्तत इत्यादिकं मुक्तजीवविषयं न तु नित्यपार्षदविषयं तेषां भगवत्क्रीडनेच्छया तेन सहावि-र्भावतिरोभावौ भवत एवेति मुक्तानामपि सर्वलोकेषु कामचारः श्रूयते। न तु तयोः कर्म-सम्बन्धः 'तेषां सर्वेषु लोकेषु कामचारो भवती'तिश्रुतेः।८६

पापिष्ठो वा दुरात्मा परधनपरदारेषु सक्तो यदि स्या-
न्नित्यं स्नेहाद्ब्रूयाद्वा रघुकुलतिलकं भावयन्सम्परेतः।
भूत्वा शुद्धान्तरङ्गो भवशतजनितानेकदोषैर्विमुक्तः,
सद्यो रामस्य विष्णोः सुरवरविनुतं याति वैकुण्ठमाद्यम् ॥८७

**पापिष्ठ इति**—रामं भावयन् यदि सम्परेतो मृतस्तर्हि भवशतजनिताऽनेकदोषैर्विमुक्तः सन् सुरवरविनुतं सुरवरैर्नारायणादिभिः विशेषेण स्तुतं विष्णोर्व्यापकस्य च श्रीरामस्य च सबन्धि आद्यं 'वैकुण्ठपञ्चकं ख्यातं क्षीराब्धिश्चरमाद्वयम्। कारणं महावैकुण्ठं पञ्चमं-विरजापरम्॥ नित्यं दिव्यमनेकभोगविभवं वैकुण्ठरूपोत्तरम्। सत्यानन्दचिदात्मकं स्वयमभून्मूलं त्वयोध्यापुरी' त्यादि रामायणोक्तसर्ववैकुण्ठकारणं साकेतं याति।८७

---

१. ततत इति मत्पुस्तके।

हत्वा युद्धे दशास्यं त्रिभुवनविषमं वामहस्तेन चापं,
भूमौविष्टभ्य तिष्ठन्नितरकरधृतं भ्रामयन्वाणमेकम्।
आरक्तोपान्तनेत्रः शरदलितवपुः सूर्यकोटिप्रकाशो,
वीरश्रीबन्धुराङ्गस्त्रिदशपतिनुतः पातु मां वीररामः॥८८

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे एकादशोऽध्यायः।११

⊙

**हत्वेति**—त्रिभुवनस्य विषमं दुःखदं दशास्यं युद्धे हत्वा वामहस्तेन चापं भूमौ विष्टभ्य इतरकरधृतं दक्षिणकरधृतं एकबाणं भ्रामयन् भूमौ तिष्ठन् आरक्तोपान्तनेत्रः वीरश्रीबन्धुराङ्गः वीरश्रिया बन्धुराणि मनोज्ञानि अङ्गानि यस्य एवम्भूतो वीररामः वीरो रामः मां पातु। भ्रामयन्वाणमेकमित्यनेन वीररसयुतः शरं भ्रामयन् स्थितो राम इति वस्तुना अन्योऽपि यः कश्चिद्रावणसहायो भवेत् तमाह्वयमान इव स्थित इति उत्प्रेक्षालङ्कारो व्यज्यते। मां पातु राम इति श्रीशिवोक्त्या मद्भक्तापराधेन मा हन्यादिति तस्य भयं व्यज्यते।८८

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
एकादशोऽध्यायः।११

⊙

---

१. इति श्रीयुद्धकाण्डे ध्वनिप्रकाशिकायामेकादशोऽध्यायः। ११ रा० व० पु०।

अथ द्वादशोऽध्यायः

श्रीमहादेव उवाच

रामो विभीषणं दृष्ट्वा हनुमन्तं तथाङ्गदम्।
लक्ष्मणं कपिराजं च जाम्बवन्तं तथाऽपरान्॥१
परितुष्टेन मनसा सर्वानिवाब्रवीद्वचः।
भवतां बाहुवीर्येण निहतो रावणो मया॥२
कीर्त्तिः स्थास्यति वः पुण्या यावच्चन्द्रदिवाकरौ।
कीर्त्तयिष्यन्ति भवतां कथां त्रैलोक्यपावनीम्॥३
मयोपेतां कलिहरां यास्यन्ति परमां गतिम्।
एतस्मिन्नन्तरे दृष्ट्वा रावणं पतितं भुवि॥४
मन्दोदरीमुखा सर्वाः स्त्रियो रावणपालिताः।
पतिताः रावणस्याग्रे शोचन्त्यः पर्यदेवयन्॥५
विभीषणः शुशोचार्तः शोकेन महता वृतः।
पतितो रावणस्याग्रे बहुधा पर्यदेवयत्॥६
रामस्तु लक्ष्मणं प्राह बोधयस्व विभीषणम्।
करोतु भ्रातृसंस्कारं किं विलम्बेन मानद!॥७
स्त्रियो मन्दोदरीमुख्या पतिता विलपन्ति च।
निवारयतु ताः सर्वाः राक्षसी रावणप्रियाः॥८
एवमुक्तोऽथ रामेण लक्ष्मणोऽगाद्विभीषणम्।
उवाच मृतकोपान्ते पतितं मृतकोपमम्॥९
शोकेन महताविष्टं सौमित्रिरिदमब्रवीत्।
यं शोचसि त्वं दुःखेन कोऽयं तव विभीषण!॥१०
त्वं वास्य कतमः सृष्टेः पुरेदानीमतः परम्।
यद्वत्तोयौघपतिताः सिकता यान्ति तद्वशाः॥११

संयुज्यन्ते वियुज्यन्ते तथा कालेन देहिनः ।
तथा धानासु वै धाना भवन्ति न भवन्ति च ॥१२
एवं भूतेषु भूतानि प्रेरितानीशमायया ।
त्वं चेमे वयमन्ये च तुल्याः कालवशोद्भवाः ॥१३

**एवमिति**—अयमितिच्छेदः। उ इति वितर्के, अयं रावण इत्यर्थः। अयमेव मुख्यार्थः रावणस्य प्रधानतया वक्तव्यत्वात्।१३

जन्ममृत्यू यदा यस्मात्तदा तस्माद् भविष्यतः ।
ईश्वरः सर्वभूतानि भूतैः सृजति हन्त्यजः ॥१४
आत्मसृष्टैरस्वतन्त्रैरनपेक्षोऽपि बालवत् ।
देहेन देहिनो जीवा देहाद्देहोऽभिजायते ॥१५
बीजादेव यथा बीजं देहान्य इव शाश्वतः ।
देहिदेहविभागोऽयमविवेककृतः पुरा ॥१६

**बीजादेवेति**—अयं सर्वैरनुभूयमानः देहिदेहविभागः अयं मम देही जीवः अयं मम देहः इत्येवं रूपो यो विभागः स च त्वयि अविवेककृतः अज्ञानकृतः उभयोः भगवच्छरीरत्वात् जीवस्य ममेति बुद्धिरज्ञानकृतेत्यर्थः। यद्वा देहिनि जीवे देहविभागः करचरणाद्यवयव-विभागः जीवस्य चित्त्वात् अविवेककृतः।१६

नानात्वं जन्मनाशश्च क्षयो वृद्धिः क्रियाफलम् ।
द्रष्टुराभान्त्यतद्धर्मा यथाग्नेर्दारुविक्रिया ॥१७

**नानात्वमिति**—नानात्वं देवमनुष्यादिभावत्वं क्रियाफलं सुखदुःखेन अतद्धर्मा दृश्यधर्मा एते द्रष्टुर्जीवस्य आभान्ति।१७

त इमे देहसंयोगादात्मन्याभान्त्यसद्ग्रहात् ।
प्रथा यथा तथा चान्यद् ध्यायतोऽसत्सदाग्रहात् ॥१८

**त इति**—ते इमे नानात्वादयः असति देहादौ य आग्रहः अहं बुद्धिरूपस्तस्मात् देह संयोगो देहसम्बन्धस्तस्मादात्मनि आभान्ति। तत्र दृष्टान्तः आग्रहात् अहं ममेति बुद्ध्या असत् सद्वा अन्यद्वा किन्त्ववस्तु ध्यायतः पुंसः यथा तथा प्रथा भवति तथेत्यर्थः।१८

प्रसुप्तस्यानहम्भावात्तदा भाति न संसृतिः ।
जीवतोऽपि तथा तद्बुद्धिमुक्तस्यानहङ्कृतेः ॥१९

एवम्भूतस्य तस्य सुषुप्तिदृष्टान्तेन जीवन्मुक्ततामाह **प्रसुप्तस्येति**।१९

तस्मान्मायामनोधर्मं जह्यहंममताभ्रमम्।
रामभद्रे भगवति मनो देह्यात्मनीश्वरे ॥२०
सर्वभूतात्मनि परे मायामानुषरूपिणि।
बाह्येन्द्रियार्थसम्बन्धात्त्याजयित्वा मनः शनैः ॥२१

अनहङ्कृतेः साधनमाह **तस्मादिति**—बाह्येन्द्रियसम्बन्धात्तु शनैर्मनः त्याजयित्वा [1]लर्वर्थविषयत्यागस्यासम्भवात् शनैरित्युक्तम्। आत्मनि परमात्मनि सर्वभूतात्मनि सर्वान्तर्यामिनि मायया मानुषरूपिणि 'ऋते मायां विशालाक्षीमि'त्युक्तया मायया [2]सीतया सह मानुषरूपिणि नित्यद्विभुजे रामभद्रे मनो देहीति द्वयोरन्वयः।२०-२१।

तत्र दोषान्दर्शयित्वा रामानन्दे नियोजय।
देहबुद्ध्या भवेद् भ्राता पिता माता सुहृत्प्रियः ॥२२
विलक्षणं यदा देहाज्जानात्यात्मानमात्मना।
तदा कः कस्य वा बन्धुर्भ्राता माता पिता सुहृत् ॥२३
मिथ्याज्ञानवशाज्जाता दारागारादयः सदा।
शब्दादयश्च विषयाः विविधाश्चैव सम्पदः ॥२४
बलं कोशो भृत्यवर्गो राज्यं भूमिः सुतादयः।
अज्ञानजत्वात् सर्वे ते क्षणसङ्गमभङ्गुराः ॥२५
अथोत्तिष्ठ हृदा रामं भावयन् भक्तिभावितम्।
अनुवर्तस्व राज्यादि भुञ्जन् प्रारब्धमन्वहम् ॥२६
भूतं भविष्यदभजन् वर्तमानमथाचरन्।
विहरस्व यथान्यायं भवदोषैर्न लिप्यसे ॥२७

**भूतमिति**—विहरस्व यथान्यायमित्यनेन रावणेनाज्ञप्तत्वात् मन्दोदर्या सह विहारेऽपि तव दोषाभाव इति सूचितम्।२७

आज्ञापयति रामस्त्वां यद्भ्रातुः साम्परायिकम्।
तत् कुरुष्व यथाशास्त्रं रुदतीश्चापि योषितः ॥२८
निवारय महाबुद्धे! लङ्कां गच्छतु मा चिरम्।
श्रुत्वा यथावद्वचनं लक्ष्मणस्य विभीषणः ॥२९

---

१ अत्यर्थ इत्युचितः। २. सीतया मत्पुस्तके नास्ति।

त्यक्त्वा शोकं च मोहं च रामपार्श्वमुपागमत् ।
विमृश्य बुद्ध्या धर्मज्ञो धर्मार्थसहितं वचः ॥३०
रामस्यैवानुवृत्त्यर्थमुत्तरं पर्यभाषत ।
नृशंसमनृतं क्रूरं त्यक्तधर्मव्रतं प्रभो ! ॥३१
नार्होऽस्मि देव ! संस्कर्तुं परदाराभिमर्शिनम् ।
श्रुत्वा तद्वचनं प्रीतो रामो वचनमब्रवीत् ॥३२

**नार्होऽस्मीति**—नार्होऽस्मि देव संस्कर्तुं परदाराभिमर्शिनमित्यनेन श्रीरामाज्ञया एतद्देहसंस्कारस्य सद्गतिर्भविष्यतीति । तेन [1]श्रीरामं सखित्वं प्राप्तस्यास्य [2]नृशंसत्वादिकमस्य प्रतिबन्धकं माभूदिति तस्याशयः । [3]तेन च परदाराभिमर्शादिनाऽतिपापिनोऽस्य संस्कारविधानेन ममापि पातकं स्यादिति शङ्कापि निरस्तेति[4] । तेन च शोकाक्रान्तत्वेन पूर्वोक्तं तद्ज्ञानं विस्मृतमिति व्यक्तम् ।३२

मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम् ।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥३३

**मरणान्तानीति**—ममाप्येष यथा तवेत्यनेन यदि त्वमस्य संस्कारं न कुर्यास्तर्हि यथापूर्वं मम सखिभावं गतस्याहमेव करोमीति व्यञ्जितम् । तेन रामस्य सौहार्दातिशय इति व्यक्तम् ।३३

रामाज्ञां शिरसा धृत्वा शीघ्रमेव विभीषणः ।
सान्त्ववाक्यैर्महाबुद्धिं राज्ञीं मन्दोदरीं तदा ॥३४
सान्त्वयामास विधिना धर्मबुद्धिर्विभीषणः ।
त्वरयामास धर्मज्ञः संस्कारार्थं स्वबान्धवान् ॥३५
चित्यां निवेश्य विधिवत्पितृमेधविधानतः ।
आहिताग्नेर्यथा कार्यं रावणस्य विभीषणः ॥३६
तथैव सर्वमकरोद् बन्धुभिः सह मन्त्रिभिः ।
ददौ च पावकं तस्य विधियुक्तं विभीषणः ॥३७

---

१. तः २. पर्यन्तभागो न विद्यते रा० व० पु० । ३. तः ४. पर्यन्तभागः नास्ति रा० व० पु० ।

स्नात्वा चैवार्द्रवस्त्रेण तिलान् दर्भविमिश्रितान्।
उदकेन च सम्मिश्रान् प्रदाय विधिपूर्वकम् ॥३८
प्रदाय चोदकं तस्मै मूर्ध्ना चैनं प्रणम्य च।
ताः स्त्रियोऽनुनयामास सान्त्वमुक्त्वा पुनः पुनः ॥३९
गम्यतामिति ताः सर्वाः विविशुर्नगरं तदा।
प्रविष्टासु च सर्वासु राक्षसीषु विभीषणः ॥४०
रामपार्श्वमुपागत्य तदाऽतिष्ठद्विनीतवत्।
रामोऽपि सहसैन्येन ससुग्रीवः सलक्ष्मणः ॥४१

**रामपार्श्वमिति**—[1]'सभोतव इत्यनेन एतावत्कालातिक्रमेऽपि सीतायाः आनयनार्थं नाज्ञापितवानतस्तामङ्गीकरिष्यति न वेति भये हेतुः व्यक्तः। तेन तस्य युगलोपासनानुरागो व्यक्तः।४१

हर्षं लेभे रिपून्हत्वा यथावृत्रं शतक्रतुः।
मातलिश्च तदा रामं परिक्रम्याभिवन्द्य च ॥४२
अनुज्ञातश्च रामेण ययौ स्वर्गं विहायसा।
ततो हृष्टमना रामो लक्ष्मणं चेदमब्रवीत् ॥४३
विभीषणाय मे लङ्काराज्यं दत्तं पुरैव हि।
इदानीमपि गत्वा त्वं लङ्कामध्ये विभीषणम् ॥४४
अभिषेचय विप्रैश्च मन्त्रवद्विधिपूर्वकम्।
इत्युक्तो लक्ष्मणस्तूर्णं जगाम सह वानरैः ॥४५
लङ्कां सुवर्णकलशैः समुद्रजलसंयुतैः।
अभिषेकं शुभं चक्रे राक्षसेन्द्रस्य श्रीमतः ॥४६

---

१. प्रारम्भे प्रतीकाभावात् श्लोकगतस्य कस्याऽपि शब्दस्य उल्लेखं विधाय विवेचनाभावाच्च कस्य श्लोकस्य टीकेयमिति न प्रतीयते। टीकायां 'भये हेतुः' इति लिखितोऽस्ति, एतेन अनुमिनोमि रामपार्श्वमुपागत्य इति श्लोके 'विनीतवत्' स्थाने सभीतवदिति पाठं स्वीकृत्य टीकाकारेण व्याख्या विहिता। टीकाकर्तुः समक्षं तदानीं 'रामपार्श्वम्' इति श्लोकः सभीतवत् पाठयुक्तः आसीदिति मदीया धारणा। अस्मात् कारणात् टीकायां प्रारम्भे 'सभोतव' भ्रष्टपाठः। अस्य स्थाने सभीतवदित्युचितः प्रतिभाति। श्लोकेऽपि सभीतवत् इति पाठः टीकाकारसम्मतः। अलमतिविस्तरेण।

ततः पौरजनैः सार्धं नानोपायनपाणिभिः ।
विभीषणः ससौमित्रिरुपायनपुरस्कृतः ॥४७
दण्डप्रणाममकरोद्रामस्याक्लिष्टकर्मणः ।
रामो विभीषणं दृष्ट्वा प्राप्तराज्यं मुदान्वितः ॥४८
कृतकृत्यमिवात्मानममन्यत सहानुजः ।
सुग्रीवं च समालिङ्ग्य रामो वचनमब्रवीत् ॥४९

कृतेति—कृतकृत्यमिव प्रतिज्ञातार्थसिद्धेः कृतकृत्यमेवेत्यर्थः ।४९

सहायेन त्वया वीर! जितो मे रावणो महान् ।
विभीषणोऽपि लङ्कायामभिषिक्तो मयानघ! ॥५०
ततः प्राह हनूमन्तं पार्श्वस्थं विनयान्वितम् ।
विभीषणस्यानुमतेर्गच्छ त्वं रावणालयम् ॥५१
जानक्यै सर्वमाख्याहि रावणस्य वधादिकम् ।
जानक्याः प्रतिवाक्यं मे शीघ्रमेव निवेदय ॥५२
एवमाज्ञापितो धीमान् रामेण पवनात्मजः ।
प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥५३
प्रविश्य रावणगृहं शिंशपामूलमाश्रिताम् ।
ददर्श जानकीं तत्र कृशां दीनामनिन्दिताम् ॥५४
राक्षसीभिः परिवृतां ध्यायन्तीं राममेव हि ।
विनयावनतो भूत्वा प्रणम्य पवनात्मजः ॥५५
कृताञ्जलिपुटो भूत्वा प्रह्वो भक्त्याग्रतः स्थितः ।
तं दृष्ट्वा जानकी तूष्णीं स्थित्वा पूर्वस्मृतिं ययौ ॥५६
ज्ञात्वा तं रामदूतं सा हर्षात्सौम्यमुखी [1]भवत् ।
स तां सौम्यमुखीं दृष्ट्वा तस्याः पवननन्दनः ॥५७
रामस्य भाषितं सर्वमाख्यातुमुपचक्रमे ।
देवि! रामः ससुग्रीवो विभीषणसहायवान् ।
कुशली वानराणां च सैन्यैश्च सह लक्ष्मणः ॥५८

---

१. भवत्—इति अभवदित्यर्थप्रतिपादकः । अत्राडभावः आर्षः ।

रावणं ससुतं हत्वा सबलं सह मन्त्रिभिः।
त्वामाह कुशलं रामो राज्ये कृत्वा विभीषणम् ॥५९
श्रुत्वा भर्तुः प्रियं वाक्यं हर्षगद्गदया गिरा।
किं ते प्रियं करोम्यद्य न पश्यामि जगत्त्रये ॥६०
समं ते प्रियवाक्यस्य रत्नान्याभरणानि च।
एवमुक्तस्तु वैदेह्या प्रत्युवाच प्लवङ्गमः ॥६१
रत्नौघाद्विविधाद्वापि देवराज्याद्विशिष्यते।
हतशत्रुं विजयिनं रामं पश्यामि सुस्थिरम् ॥६२
तस्य तद्वचनं श्रुत्वा मैथिली प्राह मारुतिम्।
सर्वे सौम्या गुणाः सौम्य ! त्वय्येव परिनिष्ठिताः ॥६३
रामं द्रक्ष्यामि शीघ्रं मामाज्ञापयतु राघवः।
तथेति तां नमस्कृत्य ययौ द्रष्टुं रघूत्तमम् ॥६४
जानक्या, भाषितं सर्वं रामस्याग्रे न्यवेदयत्।
यन्निमित्तोऽयमारम्भः कर्मणां च [1]फलोदयम् ॥६५
तां देवीं शोकसन्तप्तां द्रष्टुमर्हसि मैथिलीम्।
एवमुक्तो हनुमता रामो ज्ञानवतां वरः ॥६६
मायासीतां परित्यज्य जानकीमनले स्थिताम्।
आदातुं मनसा ध्यात्वा रामः प्राह विभीषणम् ॥६७
गच्छ राजन् ! जनकजामानयाशु समान्तिकम्।
स्नातां विरजवस्त्राढ्यां सर्वाभरणभूषिताम् ॥६८
विभीषणोऽपि तच्छ्रुत्वा जगाम सहमारुतिः।
राक्षसीभिः प्रवृद्धाभिः स्नापयित्वा[2] तु मैथिलीम् ॥६९
सर्वाभरणसम्पन्नामारोप्य शिविकोत्तमे।
याष्टिकैर्बहुभिर्गुप्तां कञ्चुकोष्णीषिभिः शुभाम् ॥७०
तां द्रष्टुमागताः सर्वे वानरा जनकात्मजाम्।
तान् वारयन्तो बहवः सर्वतो वेत्रपाणयः ॥७१

---

१. मदीये रा० व० पुस्तके च फलोदयम् इत्यस्ति। फलोदयः इति समीचीनः।
२. सुमैथिलीम् इति मत्पुस्तके।

कोलाहलं प्रकुर्वन्तो रामपार्श्वमुपाययुः।
दृष्ट्वा तां शिविकारूढां दूरादथ रघूत्तमः॥७२
विभीषण! किमर्थं ते वानरान्वारयन्ति हि।
पश्यन्तु वानराः सर्वे मैथिलीं मातरं यथा॥७३
पादचारेण सायातु जानकी मम सन्निधिम्।
श्रुत्वा तद्रामवचनं शिविकादवरुह्य सा॥७४
पादचारेण शनकैरागता रामसन्निधिम्।
रामोऽपि दृष्ट्वा तां मायासीतां कार्यार्थनिर्मिताम्॥७५
अवाच्यवादान्बहुशः प्राह तां रघुनन्दनः।
अमृष्यमाणा सा सीता वचनं राघवोदितम्॥७६

**अवाच्येति**—अवाच्यवादान् बहुश इत्यनेन अग्निस्थितप्रेमां ततः सकाशान्निष्काशयितुं रामस्येच्छा व्यक्ता।७६

लक्ष्मणं प्राह मे शीघ्रं प्रज्वालय हुताशनम्।
विश्वासार्थं हि रामस्य लोकानां प्रत्ययाय च॥७७

**लक्ष्मणमिति**—रामस्य विश्वासार्थम्। एतेनाग्नौ प्रवेशिता प्रेमा सीता सा यदि प्रकटीभविष्यति तर्हि मूलप्रकृतिरूपत्वेन मम स्पर्शाभावेऽपि तया सार्धं श्रीरामं प्राप्स्यामीति ध्वनिः।७७

राघवस्य मतं ज्ञात्वा लक्ष्मणोऽपि तदैव हि।
महाकाष्ठचयं कृत्वा ज्वालयित्वा हुताशनम्॥७८
रामपार्श्वमुपागम्य तस्थौ तूष्णीमरिन्दमः।
ततः सीता परिक्रम्य राघवं भक्तिसंयुता॥७९
पश्यतां सर्वलोकानां देवराक्षसयोषिताम्।
प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली॥८०
बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपगा।
यथा मे हृदयं नित्यं नापसर्पति राघवात्॥८१
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः।
एवमुक्त्वा तदा सीता परिक्रम्य हुताशनम्॥८२
विवेश ज्वलनं दीप्तं निर्भयेन हृदा सती॥८३

दृष्ट्वा ततो भूतगणाः ससिद्धाः,
सीतां महावह्निगतां भृशार्ताः ।
परस्परं प्राहुरहो स सीतां,
रामः [1]श्रियं स्वां कथमत्यजज्ज्ञः ॥८४

इति श्रीबृहद्ब्रह्माण्डपुराणे अध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे द्वादशोऽध्यायः ।१२

⊙

**रामपार्श्वमिति**—लक्ष्मणस्तूष्णीं तस्थौ इत्युक्त्या ससिद्धाः भूतगणाः सर्वज्ञोऽपि रामः सीतां कथमत्यजदित्युक्त्या च श्रीरामः अग्निस्थां सीतां बहिः निसारयतीति लक्ष्मणो जानाति न त्वन्ये इति ध्वनिः ।७९-८४।

[2]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
द्वादशोऽध्यायः ।१२

⊙

---

१. स्त्रियम् मदीयपुस्तके । २. इति श्रीयुद्धकाण्डे ध्वनिप्रकाशिकायां द्वादशोऽध्यायः ।

## अथ त्रयोदशोऽध्यायः

**श्रीमहादेव उवाच**

ततः शक्रः सहस्राक्षो यमश्च वरुणस्तथा।
कुबेरश्च महातेजाः पिनाकी वृषवाहनः ॥१
ब्रह्मा ब्रह्मविदां श्रेष्ठो मुनिभिः सिद्धचारणैः।
पितरो[1] ऋषयः साध्या गन्धर्वाप्सरसोरगाः ॥२
एते चान्ये विमानाग्र्यैराजग्मुर्यत्र राघवः।
अब्रुवन्परमात्मानं रामं प्राञ्जलयश्च ते ॥३
कर्ता त्वं सर्वलोकानां साक्षी विज्ञानविग्रहः।
वसूनामष्टमोऽसि त्वं रुद्राणां शङ्करो भवान् ॥४
आदिकर्तासि लोकानां ब्रह्मा त्वं चतुराननः।
अश्विनौ घ्राणभूतौ ते चक्षुषी चन्द्रभास्करौ ॥५
लोकानामादिरन्तोऽसि नित्य एकः सदोदितः।
सदा शुद्धः सदा बुद्धः सदा मुक्तोऽगुणोऽद्वयः ॥६

**लोकानामिति**—आदिरुत्पत्तिकृत्। अन्तो नाशकृत्। सदोदितः रात्रिदिनव्यवहारहीनः। शुद्धः मायागुणास्पृष्टः सदा बुद्धः ज्ञानस्वरूपो ज्ञानगुणश्च अत एव मुक्तोऽसंसारी अगुणः अद्वय इतिच्छेदः।६

त्वन्मायासंवृतानां त्वं भासि मानुषविग्रहः।
त्वन्नाम स्मरतां राम! सदा भासि चिदात्मकः ॥७

**त्वदिति**—चिदात्मकः शुद्धज्ञानस्वरूपः त्वन्नाम स्मरताम् अत एव त्वन्मायया संवृतानां त्वत्कृपाविष्टानां भासि मानुषविग्रहः ब्रह्मप्रकाशयुतमानुषविग्रहस्त्वं सदा चिदात्मको भासि।७

रावणेन हृतं स्थानमस्माकं तेजसा सह।
त्वयाद्य निहतो दुष्टः पुनः प्राप्तं पदं स्वकम् ॥८

---

१. अत्र सन्धिरार्षः।

एवं स्तुवत्सु देवेषु ब्रह्मा साक्षात्पितामहः।
अब्रवीत् प्रणतो भूत्वा रामं सत्यपथे स्थितम् ॥९

**ब्रह्मोवाच**

वन्दे देवं विष्णुमशेषस्थितिहेतुं,
त्वामध्यात्मज्ञानिभिरन्तर्हृदि भाव्यम्।
हेयाहेयद्वन्द्वविहीनं परमेकं,
सत्तामात्रं सर्वहृदिस्थं दृशिरूपम् ॥१०

**वन्दे इति**—देवं क्रीडाशीलं विष्णुं व्यापकं त्वां वन्दे। उक्तविशेषणैः क्रीडां विवृणोति, अशेषस्य सर्वस्य स्थितिहेतुं कारणम्। स्थितीति सृष्टिसंहारयोरुपलक्षणम्। अध्यात्म-ज्ञानिनः अध्यात्मविषयतत्त्वज्ञानवन्तस्तैरन्तर्हृदि भाव्यं चिन्त्यं सर्वातीतमित्यर्थः। हेया-हेयद्वन्द्वविहीनं सुखदुःखविहीनं परमुत्कृष्टं अत एकं समाभ्यधिकरहितं। सत्तामात्रं सत्तया शक्त्या जगत् माति त्राति त्रायते इति सत्तामात्रस्तम्। यद्वा सत्तामात्रं सत्यमात्रं नामरूपलीलाधामभिः सह सत्यस्वरूपमित्यर्थः। तव किमपि मिथ्या नेत्यर्थः। [1]यद्वा सत्तामात्रं सत्तारूपं मां शोभां त्रायते इति स्वप्रकाशेन ब्रह्मणा नित्ययुक्तमित्यर्थः।[2] सर्वहृदिस्थं सर्वान्तर्यामिनं दृशिरूपं ज्ञानस्वरूपम्।१०

प्राणापानौ निश्चयबुद्ध्या हृदि रुद्ध्वा,
छित्वा सर्वं संशयबन्धं विषयौघान्।
पश्यन्तीशं यं गतमोहा यतयस्तं,
वन्दे रामं रत्नकिरीटं रविभासम् ॥११

योगिध्येयतामाह **प्राणेति**—हृदि प्राणापानौ रुद्ध्वा सञ्चारहीनौ कृत्वा मनः पवनौ एकत्र कृत्वेति यावत्। संशयबन्धं व्यापकब्रह्मसाकारं कथमित्येवं संशयरूपबन्धने 'य एव विग्रहो व्यापी परिच्छिन्नः स एव हि, एकस्यैवैकदा तस्य द्विरूपत्वं विराजते' इत्युक्त निश्चयज्ञानेन छित्वा, विषयौघान् विषयसमूहांश्च छित्वा वशीकारवैराग्येनेत्यर्थः। गतमोहाः त्यक्तमोहाः यतयः य ईशं पश्यन्ति साक्षात्कुर्वन्ति। रत्नयुतं किरीटं यस्य तं रविभासं सूर्यवत्प्रकाशमानं रामं त्वां वन्दे। रत्नकिरीटमिति, रविभासमिति च पदाभ्यां साकार निराकाररूपद्वयं दर्शितम्।११

---

१. तः २ पर्यन्तः रा० व० पुस्तकेऽधिकः।

मायातीतं माधवमाद्यं जगदादिं,
मानातीतं मोहविनाशं मुनिवन्द्यम् ।
योगिध्येयं योगविधानं परिपूर्णं,
वन्दे रामं रञ्जितलोकं रमणीयम् ॥१२

**मायातीतमिति**—ननु निराकारोऽहं मायया साकार इति चेत्तत्राह मायातीतमिति, तर्हि किं निराकारः नेत्याह माधवमिति लक्ष्मीपतिं माया तस्याश्चेटीति भावः। तत्रापि जन्मत्वं वारयन्नाह आद्यमिति तस्यैव विवरणं जगदादिमिति। तत्रापि परिछिन्नत्वं वारयन्नाह, मानातीतमिति—देशकालवस्तुपरिच्छेदरहितमित्यर्थः। तर्हि किं दुर्ज्ञेयत्वं नेत्याह मोहविनाशमिति, भक्तानां मोहनाशकमित्यर्थः, भक्तानां मोहं विनाश्य स्वयमेव प्रकटो भवतीति फलितार्थः अत एव मुनिवन्द्यम् योगिभिर्ज्ञानियोगिभिर्ध्येयं हठयोगिनः पूर्वमुक्तत्वात्सारासारभूतं त्वामेव निश्चिन्वन्तीत्यर्थः। ननु वाङ्मनसागोचरं मां कथं निश्चिन्वन्ति तत्राह योगविधानं येन ज्ञानेन योगो विधीयते तत्त्वमेवेत्यर्थः। 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतेः वाङ्मनसागोचरोऽपि त्वं स्वेनैव ज्ञातो भवसीति भावः। परिपूर्णं [1]'सर्वत्र पूर्णं ब्रह्मानन्दानुभवेनैव किं ध्यायन्ति तत्राह रञ्जितलोकं रञ्जिताः स्वस्मिन् अनुरागयुक्ताः कृताः लोकाः जनाः येन तं, रमणीयं रामं वन्दे।१२

भावाभावप्रत्ययहीनं भवमुख्यै-
र्भोगासक्तैरर्चितपादाम्बुजयुग्मम् ।
नित्यं शुद्धं बुद्धमनन्तं प्रणवाख्यं,
वन्दे रामं वीरमशेषासुरदावम् ॥१३

**भावाभावेति**—वाङ्मनसागोचरत्वाद् भावाभावप्रत्ययहीनं एवम्भूतमपि भोगासक्तैरपि भवमुख्यैः भवे संसारे मुख्यैर्भक्तैः अर्चितपादाम्बुजयुग्मं, एतेन वाङ्मनसागोचरोऽपि त्वं स्वकृपया तेषां निजभक्तानां, प्रत्यक्षोऽसीति, तेन च सौलभ्यगुणो दर्शितः। 'अपि चेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः॥ [2]त्वयोपभुक्तस्रग्गंधवासोऽलङ्कारचर्चिताः। उच्छिष्टभोजिनो दासास्तव मायां जयेमहि॥ इति भागवतोक्तेः। नित्यं कालत्रयाबाधितं शुद्धं मायागुणास्पृष्टं ज्ञानस्वरूपं अनन्तमपरिच्छिन्नं प्रणवाख्यं, प्रणववाच्यं वो युद्धादिलीलाशीलं अत एव अशेषासुरदावं सर्वदैत्यनाशकम्।१३

---

१. सर्वत्र पूर्णम्, इति रा० व० पु०। २. त्वयोक्तभुक्त इति मदीयपुस्तके।

त्वं मे नाथो नाथितकार्यखिलकारी,
　　मानातीतो माधवरूपोऽखिलधारी।
भक्त्या गम्यो भावितरूपो भवहारी,
　　योगाभ्यासैर्भावितचेतः सहचारी॥१४

त्वमिति——मे चतुर्वेदाभिज्ञस्य मम नाथः स्वामी त्वमेव, नाथितं प्रार्थितमखिलं यत्कार्यं तस्य कारी कर्ता अखिलशब्दस्य परनिपातः आर्षः। मानातीतः 'यतो वाचो निवर्तन्ते' इति श्रुतेः प्रत्यक्षानुमानोपमानशब्दागोचरः। माधवरूपः माधवे नारायणे रूपं आवेशो यस्य सः एतेन वाङ्मनसागोचररूपं नित्यविहारे एवेति सूचितम्। अखिलधारी नित्यविहारे स्थितोऽपि आवेशेन नारायणे प्रविश्य क्रीडन् स्वप्रकाशब्रह्मणा निखिलभुवनधर्ता त्वमेवेत्यर्थः। वाङ्मनसागोचरोऽपि भक्त्या पराख्यया गम्यः 'क्लेशघ्नी शुभदा मोक्षलघुताकृत्सुदुर्लभा। सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षणी मते'त्युक्तश्रीकृष्णाकर्षणगुणस्य तस्यां विद्यमानत्वात्। श्रुतिश्च 'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति, भक्तिवशः पुरुष' इति। अतो भावितरूपः भावितानि ध्यातानि रूपाणि मत्स्यादीनि यस्य तादृशः सन् भवहारी, मत्स्यादिरूपेण त्वां ध्यायतां भवनिवर्तकः किमुत साक्षात्त्वां ध्यायतामिति काव्यार्थापत्तिरलङ्कारो व्यक्तः। हठयोगज्ञानयोगावुक्त्वा इदानीं भक्तियोगाभ्यासैः भावितं भावप्रेम्णः पूर्वावस्थारूपभावयुक्तं चेतः चित्तं तत् सहचारी अनुगामी [1]'यथा यथा भक्तः चित्तेऽभिलषति तत्तत्करोषीति फलितोऽर्थः, तेन येषां प्रेम्णो भावः पुष्टिङ्गतः तेषां किं ददासीति न जाने इति व्यक्तम्।१४

त्वामाद्यन्तं लोकततीनां परमीशं,
　　लोकानां नो लौकिकमानैरधिगम्यम्।
भक्तिश्रद्धाभावसमेतैर्भजनीयं,
　　वन्दे रामं सुन्दरमिन्दीवरनीलम्॥१५

त्वामिति——लोकततीनां लोकपरम्पराणामाद्यन्तम् आद्यं तेन मध्यमप्याक्षिप्यते, सृष्टिस्थितिलयहेतुमित्यर्थः। तर्हि किं विकारी नेत्याह परमिति, पिपर्तीति परं पूर्णं आदिनारायणमित्यर्थः। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इति श्रुतेः। लोकानां नोऽस्माकं ईशं नियन्तारम् अतः लौकिकमानैर्न अधिगम्यं 'तं त्वौपनिषदं पुरुषं पृच्छामी'ति श्रुत्या श्रुतितात्पर्यैकसमधिगम्यं एवं श्रुतितात्पर्यैकगम्यत्वे श्रुतितात्पर्याभिज्ञानामेव

---

१. यथा भक्तं चेतिभिलषति इति मत्पुस्तके।

मत्प्राप्तिर्नानिभिज्ञानामिति चेत्तत्राह भक्तिश्रद्धाभावसमेतैः, भक्तिः सगुणा तदुत्तरं श्रद्धा निर्गुणा पूर्वावस्थाकर्त्तव्यत्वराबुद्धिः भावः प्रेम्णः पूर्वावस्था तैः समेतैः पुरुषैर्भजनीयं, रुचिभक्तौ न शास्त्रापेक्षेति भावः। एतेन सुन्दरम्-इन्दीवरनीलमित्यनेन ईश्वरज्ञानाभावेऽपि तत्सौन्दर्यविलोकनमात्रेण त्वयि प्रेम कुर्वतां मुक्तिर्भवतीति सूचितम्। १५

को वा ज्ञातुं त्वामतिमानं गतमानं,<br>
मानासक्तो माधव! शक्तो मुनिमान्यम्।<br>
वृन्दारण्ये वन्दितवृन्दारकवृन्दं,<br>
वन्दे रामं भवमुखवन्द्यं सुखकन्दम्॥१६

**को वा ज्ञातुमिति**—हे माधव! मानासक्तः मानेषु प्रत्यक्षानुमानोपमानादिप्रमाणेष्वासक्तः को वा ज्ञातुं शक्तः समर्थः न कोऽपीत्यर्थः। एतेन स्वकृपयैव प्राप्योऽसीति व्यक्तम्। 'यमेवैष वृणुते तेन लभ्य' इति श्रुतेः अत एव मुनिमान्यं मुनिभिः मननेन भवत्प्रसादलब्धदिव्यदृष्टिभिः मान्यते बोध्यते सेवकान् प्रति इति मुनिमान्यस्तं। कीदृशं त्वामतिमानं सर्वगतं प्रकाशब्रह्मणोऽपि महान्तं प्रकाशित्वादित्यर्थः। 'अणोरणीयान् महतो महीयान्, यदद्वैतं, ब्रह्म यस्य तनुभा, यस्य भासा सर्वमिदं विभातीत्यादि श्रुतिभ्यः। गतमानं प्राप्तमानं 'सर्वे वेदाः यत्पदमामनन्तीति' श्रुतेः। वृन्दारण्ये वन्दितं [1]'प्राकट्यसमये वन्दनकर्तृ वृन्दारकवृन्दं यस्य सः इति वन्दितवृन्दारकवृन्दस्तं, एतेन वृन्दावनविहारी ते रूपमिति व्यक्तम्। [2]'मत्स्यश्च रामहृदयं तपो गुरुजनार्दनः। कर्मास्याधारशक्तिश्च वाराहो भुजयोर्बलम्॥ नरसिंहो महाकोपो वामनः कटिमेखला। भार्गवो जङ्घयोर्जातो बलरामश्च पृष्ठतः॥ बौद्धश्च करुणा साक्षात्कल्किश्चित्तस्य हर्षतः। कृष्णः श्रृङ्गाररूपश्च वृन्दावनविभूषणः। एते चांशकलाश्चैव रामस्तु भगवान्स्वयम्' इति यजुर्वेदीयसुदर्शनसंहितायाम्। पूर्णः पूर्णावतारश्च श्यामो रामो रघूद्वहः। अंशा नृसिंहकृष्णाद्या राघवो भगवान् स्वयमिति याज्ञवल्कीयसंहितायाम्। [3]तेन च परनारायणादीनां आदिकारणभूतः श्रीकृष्णो यदि ते रूपं तर्ह्यन्ये नारायणास्तदवताराश्च तव रूपाणीति किमुतेति काव्यार्थापत्तिरलङ्कारो व्यक्तः। तेन च तस्य अवतारावतारिणोरीश्वरत्वं तदभेदश्च ध्वन्यते स च तत्त्वेन न तु व्यक्तो 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥'' स आत्मानमुद्धृत्यात्मन्येव विलापयत्यात्मैव स आत्मैव भवति' इति श्रुतेः। ननु सर्वेषामाविर्भावतिरोभावे 'सर्वे नित्या शाश्वताश्च देहास्तस्य महात्मनः' इति स्मृत्युक्तम् सर्वेषां नित्यत्वं

---

१. प्राथमिकवन्दनकर्तृ इति रा० व० पु०। २. तः ३. पर्यन्तः रा० व० पु० न विद्यते।

कथमिति चेन्न तस्याः स्मृतेः पूर्वादिक्रमेण वशिष्ठसंहितोक्तमिथिलाचित्रकूटवृन्दावनवैकुण्ठरूपचतुर्द्वारोपेतब्रह्मरूपा[1]योध्यास्थित तत्तद्रूपपरत्वात् तत्र तासां मूर्त्तीनां रामादेशव्यवस्थानतया नित्यावस्थानस्य 'मत्स्यःकूर्मःकिरिर्नैक' इत्यादिना शिवसंहितादावुक्तत्वात्। अयोध्यायाः ब्रह्मत्वं च 'अयोध्या च परब्रह्म सरयूः सगुणः पुमानि' ति स्मृतावुक्तम्। अत एव भवमुखवन्द्यं भवादीश्वरैरुपास्यम्। सुखकन्दं 'प्रणखादानन्दमूर्तिं' 'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुतेः।१६

नानाशास्त्रैर्वेदकदम्बैः प्रतिपाद्यं,
नित्यानन्दं निर्विषयज्ञानमनादिम्।
मत्सेवार्थं मानुषभावं प्रतिपन्नं,
वन्दे रामं मरकतवर्णं मधुरेशम्॥१७

**नानाशास्त्रैरिति**—नानाशास्त्रैः नानाशास्त्रनिर्णीतार्थैर्वेदकदम्बैस्तात्पर्यवृत्त्या प्रतिपाद्यं। एतेन सकलशास्त्रेण सर्ववेदानां तात्पर्यं त्वय्येव पर्यवसन्नम्, एतद्विरुद्धस्तु न वेदार्थ इति व्यज्यते। नित्यानन्दं नित्यरासोत्सवं निर्विषयज्ञानं देशकालवस्तुपरिच्छेदशून्यत्वात्, निर्गताः विषयाः यस्मात्तत् निर्विषयं आनन्दात्मकं नामरूपलीलाधामज्ञानं परिचायकं यस्य तं, अनादिमित्यनेन सर्वेषां भवतः प्रादुर्भावः भवतस्तु न कस्मादपि प्रादुर्भाव इति व्यक्तम्। मत्सेवार्थं मदनुष्ठेया सेवा मत्सेवा, तदर्थम्। वाङ्मनसागोचरस्य कोटिसूर्यप्रकाशस्य अतिरोहितब्रह्मकत्वेन सेवितुमशक्यस्य अतिरोहितब्रह्मरूपं मम, मदिति भक्तोपक्षणम्, कस्यापि गोचरो न [2]भवत्यतः कृपयाऽदिनारायणे आवेशेन प्रविश्य तिरोहितब्रह्मकत्वेन मानुषभावं प्रतिपन्नं रामं नित्यायोध्यारासमण्डले रमणशीलं पुनः मरकतवर्णम् अत एव मधुरेशं शृङ्गारस्यापि शृङ्गारमित्यर्थः। 'कृष्णः शृङ्गाररूपश्च वृन्दावनविभूषण' इति स्मृतेः।१७

श्रद्धायुक्तो यः पठतीमं स्तवमाद्यं,
ब्राह्मं ब्रह्मज्ञानविधानं भुवि मर्त्यः।
रामश्यामं कामितकामप्रदमीशं,
ध्यात्वा ध्याता पातकजालैर्विगतः स्यात्॥१८

श्रुत्वा स्तुतिं लोकगुरोर्विभावसुः,
स्वाङ्के समादाय विदेहपुत्रिकाम्।
विभ्राजमानां विमलारुणद्युतिं,
रक्ताम्बरां दिव्यविभूषणाञ्चिताम्॥१९

---

१. योध्यास्थ इति मत्पुस्तके। २. भवतः रा० व० पु०।

प्रोवाच साक्षी जगतां रघूत्तमं,
प्रपन्नसर्वार्तिहरं हुताशनः।
गृहाण देवीं रघुनाथ! जानकीं,
पुरा त्वया मय्यवरोपितां वने ॥२०
विधाय मायाजनकात्मजां हरे!
दशाननप्राणविनाशनाय च।
हतो दशास्यः सहपुत्रबान्धवै-
र्निराकृतोऽनेन भरो भुवः प्रभो! ॥२१
तिरोहिता सा प्रतिबिम्बरूपिणी,
कृता यदर्थं कृतकृत्यतां गता।
ततोऽतिहृष्टां परिगृह्य जानकीं,
रामः प्रहृष्टः प्रतिपूज्य पावकम्।
स्वाङ्के समावेश्य सदानपायिनीं,
श्रियं त्रिलोकीजननीं श्रियः पतिः ॥२२
दृष्ट्वाथ रामं जनकात्मजायुतं,
श्रिया स्फुरन्तं सुरनायको मुदा।
भक्त्या गिरा गद्गदया समेत्य,
कृताञ्जलिः स्तोतुमथोपचक्रमे ॥२३

**इन्द्र उवाच**

भजेऽहं सदा राममिन्दीवराभं,
भवारण्यदावानलाभाभिधानम्।
भवानीहृदा भावितानन्दरूपं,
भवाभावहेतुं भवादिप्रपन्नम् ॥२४

इदानीमिन्द्रो नित्यायोध्या[1]विहारिणं[2]स्तुवन् श्रीरामावेशयुतमादिनारायणं[3]स्तौति **भजे इत्यादि**—इन्दीवराभमित्यनेनानन्दजनकत्वं व्यक्तम्। भवारण्यदावानलाभाभिधा-

---

१. विहारी रा० व० पु०। २. स्तुवन्-इति रा० व० पु० नास्ति।
३. स्तौष्यति मत्पुस्तके।

नमित्यनेन यथाग्निकणेन महावनं भस्मीभवति तथा [1]त्वन्नामैकदेशेनापि जन्मजन्मान्तरीयं पापं नश्यतीति व्यक्तम्। तेन हे राम! मत्क्लेशं दूरीकुर्विति भक्तार्तिवाणीश्रवणासहिष्णुत्वं व्यक्तम्। तथा चोक्तं ब्रह्मयामले 'रकारः सर्वपापानां नाशको रघुनायक' इति। अत एव भवाभावहेतुं संसारनाशकारणं। भवानीहृदा पार्वतीहृदयेन भावितं ध्यातमानन्दरूपं यस्य तम् भवादिप्रपन्नं भवादिभि[2]शिवादिभिः प्रपन्नं सेवितम्। यद्वा भवादयः प्रपन्नाः शरणं गताः यम्। एतेन शक्तीनां शक्तिमतां च श्रीराम एव सेव्य इति व्यक्तम्।२४

सुरानीकदुःखौघनाशैकहेतुं,
　　नराकारदेहं निराकारमीड्यम्।
परेशं परानन्दरूपं वरेण्यं,
　　हरिं राममीशं भजे भारनाशम्॥२५

**सुरानीकेति**––सुरानीकस्य देवसमूहस्य यो दुःखौघो दुःखसमूहस्तन्नाशस्यैकहेतुं मुख्यकारणं। सुरानीक इति द्विजाद्युपलक्षणम्। एतेन सकललोकैकपालकत्वगुणो व्यक्तः। नराकारदेहं 'आनन्दो द्विविधः प्रोक्तो मूर्त्तश्चामूर्त्त एव च। अमूर्त्तस्याश्रयो मूर्त्तः परमात्मा नराकृति' इत्यानन्दसंहितायाम्। तदेव निराकारं प्राकृताकारशून्यं 'सत्त्वादिगुणहीनत्वान्निर्गुणो हरिरीश्वरः। 'अप्राकृतस्वरूपत्वादरूपी भगवान्विभुरि'-तिवायुपुराणोक्तेः। ईड्यं सर्वस्तुत्यं शत्रवोऽपि तं स्तुवन्तीति भावः। अत एव परेशं ईश्वरेश्वरं, 'तमीश्वराणां परमं महेश्वरमिति' श्रुतेः। अत एव परानन्दरूपं, परेषां शत्रूणां आनन्दः आनन्दजनकः रूपं यस्य तम्। वरेण्यं सकलरक्षकत्वेन वरणयोग्यम्। एतेन सर्वाधिकसामर्थ्यं सूचितम्। हरिं सर्वार्तिहरं अत एव भारनाशं भुवः भारहरं, अत एव ईशं सर्वस्वामिनम् 'राजाधिराजः सर्वेषां राम एव न संशयः।' इति श्रुतेः। श्रीभागवते चोक्तम्––'नमो भगवते उत्तमश्लोकाय नम आर्यलक्षणशीलव्रताय नम उपशिक्षितात्मने, उपासितलोकाय नमः साधुवादनिकषणाय नमो ब्रह्मण्यदेवाय महापुरुषाय महाराजाय नम' इति एवम्भूतं रामं भजे।२५

प्रपन्नाखिलानन्ददोहं प्रपन्नं,
　　प्रपन्नार्तिनिःशेषनाशाभिधानम्।
तपोयोगयोगीशभावाभिभाव्यं,
　　कपीशादिमित्रं भजे राम! मित्रम्॥२६

---

१. तत् रा० व० पु०। २. शिवादिभिः रा० व० पुस्तकस्थः।

**प्रपन्न इति**—प्रपन्नानां शरणागतानामखिलानन्ददातारं ऐहिकामुष्मिकानन्ददातारम्। एतेन रामं शरणागतानामैहिकसुखान्यपि भगवद्दत्तत्वान्न दोषावहानीति व्यक्तम्। प्रपन्नं [1]भक्ता निःशेषः अत एव प्रपन्नानां सम्बन्धिनीनाम् आर्तीनां निःशेषं यथा भवति तथा नाशं नाशकृत् अभिधानं नाम यस्य तम्। एतेन प्रपन्नानां प्रार्थनाश्रवणेन स्वलोकादागमनसहिष्णुत्वं सूचितं तेन च कारुण्यातिशयः सूचितः। तपसा योगो येषान्ते तपोयोगास्ते च ते योगीशाश्च तैर्भावेन प्रेम्णा अभिभाव्यम्। अत्रायं क्रमः अनेकजन्मतपसा योगः योगिनो जन्मान्तरैः तपसा योगयोगीशाः विज्ञानिनः तत्तज्जन्मान्तरैर्भगवति भावः इति प्रेम इति। एतेन श्रीरामभक्तेर्दुर्लभता सर्वोत्कृष्टता च व्यक्ता। नन्वेवं भक्तेर्दुलभत्वे कथं सगोचरो भवति चेत्तत्राह कपीशादिमित्रमिति। एतेन किञ्चित्साम्मुख्येन स्वयमेव त्वं भक्तिं ददासि प्राप्यश्चेति ध्वनितम्। अत एव हे राम! मित्रं सर्वजीवसुहृदं त्वां भजे। तथा च श्रुतिः 'द्वा सुपर्णा सयुजा सखायाविति'। मकारवाच्यो जीवः रकारवाच्यस्यैव सन्निधौ शोभते राम इति सम्बोधनस्याशयः।२६

सदा भोगभाजां सुदूरे विभान्तं,
सदा योगभाजामदूरे विभान्तम्।
चिदानन्दकन्दं सदा राघवेशं,
विदेहात्मजानन्दरूपं प्रपद्ये ॥२७

**सदा भोगभाजामिति**—ननु मम सर्वमित्रत्वे जीवः कथं संसरतीत्यत आह—भोगभाजां भोगासक्तानां सदा सु अतिशयेन दूरे विभान्तम्। योगभाजां भक्तियोगवताम् अदूरे समीपे विभान्तम्। भक्ताभक्तयोर्विषये विभान्तमिति पदोपन्यासेन सर्वत्र समतया विद्यमानत्वेऽपि भक्तानामदूरे विभासि अभक्तानां दूरे विभासीति फलितोऽर्थः। तेन त्वत्सन्निधानेऽपि स्वकार्योपार्जित-ऐहिकामुष्मिकभोगासक्ताः स्वभोगान् पश्यन्ति न तु त्वामिति ध्वन्यते। चितः जीवस्य आनन्दस्य ब्रह्मणः 'आनन्दो ब्रह्मेति व्यजानादिति' श्रुतेः कन्दं कारणं अंशित्वात्प्रकाशित्वाच्च चिदानन्दं सर्वानन्दं मूलमिति वा अंशो नाना व्यपदेशात् 'ममैवांशो जीवलोके जीवभूतः सनातनः' 'यस्य प्रभा प्रभवतो जगदण्डकोटिकोटिष्वशेषवसुधादिविभूतिभिन्नम्। तद् ब्रह्म निष्कलमनन्तमगाधबोधं गोविन्दमादिपुरुषं तमहं भजामि' इति सूत्रस्मृत्युक्तेः। हे राघव! द्विभुजनित्यविहारिन्! विदेहात्मजानन्दरूपं रासे विदेहात्मजायाः आनन्दरूपं रासोत्सवानन्ददातारमित्यर्थः। [2]इदृशमीशं सर्वस्वामिनं त्वां प्रपद्ये।२७

---

१. भक्तैरिति शेष इत्युचितः २. इदृशम्—इति मदीयपुस्तके न विद्यते।

महायोगमायाविशेषानुयुक्तो,
विभासीशलीलानराकारवृत्तिः ।
त्वदानन्दलीलाकथापूर्णकर्णाः,
सदानन्दरूपा भवन्तीह लोके ॥२८

महायोगेति—महायोगपदेन मूलप्रकृतिः, मायापदेन प्रेमा लक्ष्मीः तयोर्विषयो विशेषः नित्यविहारिसीतावेशस्तेनानुयुक्तः ईशस्य श्रीरामस्यावेशेन लीलार्थं नराकारवृत्तिः स्थितिर्यस्य सः त्वं विभासि। एतेन त्वन्नामादिना अवाङ्मनसगोचरस्य नामरूपादिकं अस्मान् प्रति व्यक्तो भवतीति सूचितम्।२८

अहंमानमानाभिमत्तः प्रमत्तो,
न वेदाखिलेशाभिमानाभिमानः ।
इदानीं भवत्पादपद्मप्रसादा-
त्त्रिलोकाधिपत्याभिमानो विनष्टः ॥२९

अहमिति—अहंमान अहङ्कारः तद्रूपं मानं मद्यं आदिकर्मणि ल्युट् तेनाभिमत्तः अत एव प्रमत्तः अत एव अखिलेशानाम्-अभिमान इवाभिमानो यस्य तादृशस्त्वां न वेद न जानामि। अत्रायं भावः बद्धदशायां ज्ञानाभावादेव न जानाति। ज्ञानदशायामपि ब्रह्माऽह-मस्मीति मूलाज्ञानरूपाभिमानेन न त्वां जानाति। ननु प्रमत्तश्चेन्मां कथं स्तौषीत्यत आह—इदानीं भवत्पादपद्मप्रसादात् त्रिलोके यत् आधिपत्यं तत्प्रयुक्तोऽभिमानो विनष्टः। भवत्पादपद्मप्रसादादित्यस्यायंभावः भवदनुग्रहादेव रावणेन ममैश्वर्यं दत्तमित्यतस्त्वां ज्ञात्वा स्तौमीति व्यक्तम्।२९

स्फुरद्रत्नकेयूरहाराभिरामं,
धराभारभूतासुरानीकदावम् ।
शरच्चन्द्रवक्त्रं लसत्पद्मनेत्रं,
दुरापारपारं भजे राघवेशम् ॥३०

स्फुरद्रत्नेति—स्फुरद्रत्नकेयूरहारैरभिरामं मनोहरम्। एतेन नित्यविहारिणः स्तुति-रियमिति सूचितम्। धराभारभूतासुरानीकदावम् धरायाः पृथिव्याः भारभूताः ये असुराः दैत्यास्तदनीकस्य दावाग्नितुल्यम्। एतेन नारायणस्येयं स्तुतिरिति सूचितम्। शरच्चन्द्र-वक्त्रं लसत्पद्मनेत्रं दुरापारस्य संसारार्णवस्य पारं संसारातीतमित्यर्थः। शरच्चन्द्रवक्त्र-मित्यादिविशेषणत्रयेणोभयोः स्तुतिः उभयोरानंदजनकत्वञ्चेति सूचितम्। राघवेशं राघवावेशयुतं नारायणं भजे।३०

सुराधीशनीलाभ्रनीलाङ्गकान्तिं,
विराधादिरक्षोवधाल्लोकशान्तिम् ।
किरीटादिशोभं पुरारातिलाभं,
भजे रामचन्द्रं रघूणामधीशम् ।।३१

**सुराधीशेति**—सुराधीशनील इन्द्रनीलमणिरभ्रं च तद्वन्नीला अङ्गकान्तिर्यस्य, इन्द्रनीलमणिवन्नित्यविहारिणः अङ्गकान्तिः। नीलमेघवन्नारायणस्येति बोध्यम्। लोकानां शान्तिर्यस्मात् रामावेशयुतनारायणात्सः तम्। एतेन रामायणस्य उभयलीला। पुरारातिः शिवः तस्य लाभभूतं किरीटादीनां शोभा यस्मात् तम्, एतेन शौर्यातिशयो व्यक्तः। पुरारातिलाभमित्यनेन श्रीरामोपासकसदृशः अन्यस्योपासको नास्तीति व्यक्तम्। रघून्ते लोकाल्लोकान्तरं गच्छन्तीति रघवः-जीवास्तेषामधीशं नियन्तारं रामचन्द्रं त्वां भजे। एतेन उपास्योपासकानां सर्वेषां श्रीराम एव भजनीय इति सूचितम्।३१

लसच्चन्द्रकोटिप्रकाशादिपीठे,
समासीनमङ्के समादाय सीताम्।
स्फुरद्धेमवर्णां तडित्पुञ्जभासम्,
भजे रामचन्द्रं निवृत्तार्तितन्द्रम् ।।३२

अयोध्याविहारिनित्यद्विभुजध्यानं कुर्वन् स्तौति **लसच्चन्द्रेति**—लसन् चन्द्रकोटीनां प्रकाशः यत्र तादृशे आदिपीठे 'मूलं त्वयोध्यापुरी' त्याद्युक्तायोध्याख्ये रत्नसिंहासने इति शेषः। उक्तविशेषणयुक्तां सीतां समादाय समासीनं भक्तरक्षणे निवृत्ते आर्तितन्द्रे दुःखालस्ये यस्य तम् [1]भूयो भूयो तद्रक्षणे श्रमजनितदुःखमालस्यञ्च नास्तीत्यर्थः। एतेन सर्वत्र पूर्णत्वात् यत्रैव भक्तानां रक्षणापेक्षा तत्रैवाविर्भवतीति व्यक्तम्।३२

ततः प्रोवाच भगवान् भवान्या सहितो भवः।
रामं कमलपत्राक्षं विमानस्थो नभस्थले।।३३
आगमिष्याम्ययोध्यायां द्रष्टुं त्वां राज्यसत्कृतम्।
इदानीं पश्य पितरमस्य देहस्य राघव ! ।।३४

**आगमिष्यामीति**—राज्यसत्कृतं त्वां द्रष्टुमयोध्यायामागमिष्यामि। इदानीमस्य नारायणसम्बन्धिनः देहस्य पितरमाविर्भावयितारं पश्य। एतेन इदानीमेव मत्कृतस्तुतौ

---

१. भूयोतद्रक्षणे इति मत्पुस्तके।

मय। सहागतस्य दशरथस्य वात्सल्यं नश्येदिति तस्याशयो व्यक्तः। यद्वा युगलोपासकत्वेन मत्कृतयुगलस्तुतौ रामस्य दशरथसंनिधानत्वेन सङ्कोचः स्यादिति च व्यक्तम्।३४

ततोऽपश्यद् विमानस्थं रामो दशरथं पुरः।
ननाम शिरसा पादौ मुदा भक्त्या सहानुजः॥३५

**तत इति**–तत इत्यादि सूतोक्तिः, न च वाच्यं दशरथस्य मुक्तत्वादत्रागमनासंभव इति, 'तेषां सर्वेषु लोकेषु कामचारो भवति' इति श्रुत्या सर्वत्र गमनोपलम्भात्। मुक्तोऽपि दशरथः श्रीरामयुद्धादिलीलादर्शनार्थमागतस्तेन विमानस्थो भूत्वा तल्लीलां दृष्ट्वा देवैः सह प्रकटीभूत इत्यवगम्यते वात्सल्यभक्तिरसाधिकारिणो दशरथस्य मोक्ष '[1]लघुताकृतत्वं दर्शितम्। 'क्लेशघ्नी शुभदा मोक्षलघुताकृत्सुदुर्लभा। सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षणी मते' त्युतेः।३५

आलिङ्ग्य मूर्ध्न्यवघ्राय रामं दशरथोऽब्रवीत्।
तारितोऽस्मि त्वया वत्स! संसाराद् दुःखसागरात्॥३६

**आलिङ्ग्येति**–वत्स! इति सम्बोध्य दुःखसागरात्संसारात्त्वया तारितोऽस्मीति प्रभावसूचनेन तस्य प्रेमवैचित्र्यं व्यक्तम्।३६

इत्युक्त्वा पुनरालिङ्ग्य ययौ रामेण पूजितः।
रामोऽपि देवराजं तं दृष्ट्वा प्राह कृताञ्जलिम्॥३७

**इत्युक्त्वेति**–कृताञ्जलिं प्राहेत्यनेन श्रीरामः मां किञ्चिदाज्ञापयत्विति इन्द्राभिलाषपूर्तिरिति व्यक्तम्। तेन कृपादृष्ट्या वानरानुत्थापनेऽयमेव हेतुरिति।३७

मत्कृते निहतान्सङ्ख्ये वानरान् पतितान् भुवि।
जीवयाशु सुधावृष्ट्या सहस्राक्ष! ममाज्ञया॥३८
तथेत्यमृतवृष्ट्या तान् जीवयामास वानरान्।
ये ये मृता मृधे पूर्वं ते ते सुप्तोत्थिता इव॥३९

**तथेति**–सुधावृष्ट्या वानरा एव उत्तस्थुः न तु राक्षसाः। तेन ते मुक्ता अभवन्निति सूचितम्। ननु रामकार्यार्थं मृतानां वानराणामपि मुक्तिरुचिता तथापि श्रीरामेच्छया न

---

१. लघुकृताकृतत्वम् रा० व० पु०।

तेषां मुक्तिरिरिति। तेन रामेच्छैव 'राक्षसानामुत्थाने हेतुः न सुधावृष्टिरिति। तेन सुधावृष्ट्यर्थमिन्द्राज्ञापनं तदभिलाषपूर्त्यर्थमेवेति व्यक्तम्।३९

पूर्ववद् बलिनो हृष्टाः रामपार्श्वमुपाययुः।
विभीषणस्तु साष्टाङ्गं प्रणिपत्याब्रवीद्वचः॥४०
देव! मामनुगृह्णीष्व मयि भक्तिर्यदा तव।
मङ्गलस्नानमत्र त्वं कुरु सीतासमन्वितः॥४१
अलङ्कृत्य सह भ्रात्रा श्वो गमिष्यामहे वयम्।
विभीषणवचः श्रुत्वा प्रत्युवाच रघूत्तमः॥४२
सुकुमारोऽतिभक्तो मे भरतो मामवेक्षते।
जटावल्कलधारी स शब्दब्रह्मसमाहितः॥४३

**सुकुमार इति**—शब्दब्रह्मसमाहितः शब्दब्रह्म मन्त्राम तत्र समाहितः तज्जापिक इत्यर्थः। 'श्रीरामेति परं जाप्यं तारकं ब्रह्मसंज्ञकम्' इति स्मृतेः।४३

कथं तेन विना स्नानमलङ्कारादिकं मम।
अतः सुग्रीवमुख्यांस्त्वं पूजयाशु विशेषतः॥
पूजितेषु कपीन्द्रेषु पूजितोऽहं न संशयः॥४४

**कथमिति**—अलङ्कारादिकं कथं ममेत्यनेन भक्तवात्सल्यातिशयो व्यक्तः। कपीन्द्रेषु पूजितेषु अहं पूजितः, तेन भक्ताः भगवद्रूपा एवेति व्यक्तम्। तथा चोक्तं भागवते 'मद्भक्तपूजाभ्यधिकेति'।४४

इत्युक्तो राघवेणाशु स्वर्णरत्नाम्बराणि च।
ववर्ष राक्षसश्रेष्ठो यथाकामं यथारुचि॥४५

**इत्युक्त इति**—स्वर्णरत्नाम्बराणि ववर्षेत्यनेन वानरसेनायाः असङ्ख्यात्वेन सर्वेषामुपरि वर्षणम्। तेन च तद्धनबाहुल्यं व्यक्तम्। तेन च रावणस्य जगद्विजयित्वं व्यक्तम्।४५

ततस्तान् पूजितान् दृष्ट्वा रामो रत्नैश्च यूथपान्।
अभिनन्द्य यथान्याय्यं विससर्ज हरीश्वरान्॥४६
विभीषणसमानीतं पुष्पकं सूर्यवर्चसम्।
आरुरोह ततो रामस्तद्विमानमनुत्तमम्॥४७

१. वानराणाम् इत्युचितः।

अङ्के निधाय वैदेहीं लज्जमानां यशस्विनीम्।
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मताम्॥४८

अङ्क इति—लज्जमानामिति स्वभावोक्तिः।४८

अब्रवीच्च विमानस्थः श्रीरामः सर्ववानरान्।
सुग्रीवं हरिराजं च अङ्गदं च विभीषणम्॥४९
मित्रकार्यं कृतं सर्वं भवद्भिः सह वानरैः।
अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ॥५०
सुग्रीव! प्रतियाह्याशु किष्किन्धां सर्वसैनिकैः।
स्वराज्ये वस लङ्कायां मम भक्तो विभीषण!॥५१
न त्वां धर्षयितुं शक्ताः सेन्द्राः अपि दिवौकसः।
अयोध्यां गन्तुमिच्छामि राजधानीं पितुर्मम॥५२
एवमुक्तास्तु रामेण वानरास्ते महाबलाः।
ऊचुः प्राञ्जलयः सर्वे राक्षसश्च विभीषणः॥५३
अयोध्यां गन्तुमिच्छामि त्वया सह रघूत्तम!।
दृष्ट्वा त्वामभिषिक्तं तु कौशल्यामभिवाद्य च॥५४
पश्चाद् वृणीमहे राज्यमनुज्ञां देहि नः प्रभो!।
रामस्तथेति सुग्रीव! वानरैः सविभीषणः॥५५
पुष्पकं सहनूमांश्च शीघ्रमारोह साम्प्रतम्।
ततस्तु पुष्पकं दिव्यं सुग्रीवः सह सेनया॥५६

पुष्पकमिति—दिव्यमित्यनेन असङ्ख्येयवानरराक्षसानां यथावकाशस्थितावपि अवकाशोऽस्तीति दिव्यपदोपादाने हेतुः व्यक्तः। दिव्यमित्यनेन शास्त्रे पुष्पकारूढध्यानवर्णनेनेदं विमानं श्रीरामारोहणकाले श्रीरामनित्यपुष्पकावेशयुतमिति व्यक्तम्।५६

विभीषणश्च सामात्यः सर्वे चारुरुहुर्द्रुतम्।
तेष्वारूढेषु सर्वेषु कौबेरं परमासनम्॥५७
राघवेणाभ्यनुज्ञातमुत्पपात विहायसा।
बभौ तेन विमानेन हंसयुक्तेन भास्वता।
प्रहृष्टश्च तदा रामश्चतुर्मुख इवापरः॥५८

ततो बभौ भास्करविम्बतुल्यं,
कुबेरयानं तपसा तु लब्धम्।
रामेण शोभां नितरां प्रपेदे,
सीतासमेतेन सहानुजेन ।।५९

इति श्रीबृहद्ब्रह्माण्डपुराणे अध्यात्मरामायणे उमामहेश्वरसंवादे युद्धकाण्डे त्रयोदशोऽध्यायः।१३

तत इति–तपसा लब्धं कुबेरेणेति शेषः। यथा रामेण शोभा प्राप्ता न तथा कुबेरेणेति भावः।५९

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे त्रयोदशोऽध्यायः।१३

⊙

१. इति युद्धकाण्डे त्रयोदशोऽध्याय रा० व० पु०।

## अथ चतुर्दशोऽध्यायः

**श्रीमहादेव उवाच**

पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः।
अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ॥१

**पातयित्वेत्यादि**।१

त्रिकूटशिखराग्रस्थां पश्य लङ्कां महाप्रभाम्।
एतां रणभुवं पश्य मांसकर्दमपङ्किलाम् ॥२

**त्रिकूटेति**—कर्दमोऽत्यन्तार्द्रः पङ्कः ईषदार्द्रः।२

असुराणां प्लवङ्गानामत्र वैशसनं महत्।
अत्र मे निहतः शेते रावणो राक्षसेश्वरः॥३

**असुराणामिति**—शेते अशयिष्ट।३

कुम्भकर्णेन्द्रजिन्मुख्याः सर्वे चात्र निपातिताः।
एष सेतुर्मया बद्धः सागरे सलिलाशये॥४
एतच्च दृश्यते तीर्थं सागरस्य महात्मनः।
सेतुबन्धमिति ख्यातं त्रैलोक्येन च पूजितम्॥५
एतत्पवित्रं परमं दर्शनात्पातकापहम्।
अत्र रामेश्वरो देवो मया शंभुः प्रतिष्ठितः॥६
अत्र मां शरणं प्राप्तो मन्त्रिभिश्च विभीषणः।
एषा सुग्रीवनगरी किष्किन्धा चित्रकानना॥७
तत्र रामाज्ञया ताराप्रमुखा हरियोषितः।
आनयामास सुग्रीवः सीतायाः प्रियकाम्यया॥८

**तत्रेति**—रामाज्ञया, जानकीप्रार्थितश्रीरामाज्ञयेत्यर्थः। एतेन ताराप्रभृतीनां श्रीजानकी-दर्शनेच्छा, सीतायाः तदाशयाभिज्ञता चेति सूचितम्।८

ताभिः सहोत्थितं शीघ्रं विमानं प्रेक्ष्य राघवः।
प्राह चाद्रिमृष्यमूकं पश्य वाल्यत्र मे हतः ॥९

एषा पंचवटी नाम राक्षसाः यत्र मे हताः।
अगस्त्यस्य सुतीक्ष्णस्य पश्याश्रमपदं शुभम् ॥१०

एते ते तापसाः सर्वे दृश्यन्ते वरवर्णिनि !।
असौ शैलवरो देवि ! चित्रकूटः प्रकाशते ॥११

अत्र मां कैकयीपुत्रः प्रसादयितुमागतः।
भरद्वाजाश्रमं पश्य दृश्यते यमुनातटे ॥१२

एषा भागीरथी गङ्गा दृश्यते लोकपावनी।
एषा सा दृश्यते सीते ! सरयूर्यूपमालिनी ॥१३

एषा सा दृश्यतेऽयोध्या प्रणामं कुरु भामिनि !।
एवं क्रमेण सम्प्राप्तो भरद्वाजाश्रमं हरिः ॥१४

पूर्णे चतुर्दशे वर्षे पञ्चम्यां रघुनन्दनः।
भरद्वाजमुनिं दृष्ट्वा ववन्दे सानुजः प्रभुः ॥१५

पप्रच्छ मुनिमासीनं विनयेन रघूत्तमः।
शृणोषि कच्चिद् भरतः कुशल्यास्ते सहानुजः ॥१६

सुभिक्षा वर्ततेऽयोध्या जीवन्ति च हि मातरः।
श्रुत्वा रामस्य वचनं भरद्वाजः प्रहृष्टधीः ॥१७

प्राह सर्वे कुशलिनो भरतस्तु महामनाः।
फलमूलकृताहारो, जटावल्कलधारकः ॥१८

पादुके सकलं न्यस्य राज्यं त्वां सुप्रतीक्षते।
यद्यत्कृतं त्वया कर्म दण्डके रघुनन्दन ! ॥१९

राक्षसानां विनाशं च। सीताहरणपूर्वकम्।
सर्वं ज्ञातं मया राम ! तपसा ते प्रसादतः ॥२०

त्वं ब्रह्म परमं साक्षादादिमध्यान्तवर्जितम्।
त्वमग्रे सलिलं सृष्ट्वा तत्र सुप्तोऽसि भूतकृत् ॥२१

नारायणोऽसि विश्वात्मन् ! नराणामन्तरात्मकः।
त्वन्नाभिकमलोत्पन्नो ब्रह्मा लोकपितामहः ॥२२

नारायण इति–यन्नाभिकमलोत्पन्नो ब्रह्मा स नारायणस्त्वमसि त्वद्विभूतिरित्यर्थः।२२

अतस्त्वं जगतामीशः सर्वलोकनमस्कृतः।
त्वं विष्णुर्जानकी लक्ष्मीः शेषोऽयं लक्ष्मणाभिधः॥२३

अत इति—एवं त्वं ब्रह्मेत्यारभ्य 'त्वन्नाभिकमलोत्पन्नो ब्रह्मा लोकपितामह' इत्यन्तेन विभूतिमुक्त्वा श्रीरामावेशाधिष्ठानादिनारायणमाह त्वमिति, त्वं विष्णु-आवेशेनादि-नारायणविष्णौ प्रविष्टत्वात् विष्णुः, जानकी लक्ष्मीः लक्ष्म्याधिष्ठत्वाल्लक्ष्मीः, अयं शेषः शेष इति क्षीरसागरवासिनारायणोलक्षणं सङ्कर्षणः क्षीरसागरवासिनारायणश्च लक्ष्मणाभिधः लक्ष्मणावेशयुक्तत्वाल्लक्ष्मणनामेति मया ते प्रसादतः ज्ञातमिति पूर्वस्यानुकर्षः।२३

आत्मना सृजसीदं त्वमात्मन्येवात्ममायया।
न सज्जसे नभोवत्त्वं चिच्छक्त्या सर्वसाक्षिकः॥२४

आत्मनेति–आमना चिच्छक्त्या प्रकाशब्रह्मणा आत्ममायया अचिच्छक्त्या च आत्मनि जीवे इदं नामरूपादि सृजसि। तत्र त्वं न सज्जसे आशक्तो न भवसि। अनाशक्तौ दृष्टान्तः नभोवत्। तत्र हेतुः सर्वसाक्षिकः।२४

बहिरन्तश्च भूतानां त्वमेव रघुनन्दन!।
पूर्णोऽपि मूढदृष्टीनां विच्छिन्न इव लक्ष्यसे॥२५

तदेवोपपादयति बहिरिति–हे रघुनन्दन! भूतानां बहिरन्तश्च त्वं पूर्णोऽपि मूढदृष्टीनाम् अज्ञानां विच्छिन्न इव एकदेशस्थित इव लक्ष्यसे।२५

जगत्त्वं जगदाधारस्त्वमेव परिपालकः।
त्वमेव सर्वभूतानां भोक्ता भोज्यं जगत्पते!॥२६

जगत्त्वमिति—हे जगत्पते! जगत् त्वं चिदचिद्विग्रहेणेत्यर्थः। विगृहित्वेन जगदाधारोऽपि, अतः सर्वभूतानां परिपालकोऽसि, भोक्ता चिच्छरीरजीवेनेत्यर्थः; भोज्यमचिच्छरीरेण।२६

दृश्यते श्रूयते यद्यत् स्मर्यते वा रघूत्तम!।
त्वमेव सर्वमखिलं त्वद्विनान्यन्न किञ्चन॥२७

दृश्यत इति—एवं रीत्या यद् दृश्यते श्रूयते तत्सर्वं त्वमेव,[1] ततोऽन्यं न किञ्चिदि-त्यर्थः।२७

---

१. त्वत्त इत्युचितः।

माया सृजति लोकांश्च स्वगुणैरहमादिभिः।
त्वच्छक्तिप्रेरिता राम! तस्मात्त्वय्युपचर्य्यते ॥२८

**मायेति**—हे राम! माया अचिच्छक्तिः अहमादिभिर्लोकान् सृजति। ननु अचिच्छक्तेः सृष्टिकर्तृत्वं कथमिति चेत्तत्राह त्वच्चिच्छक्तिप्रेरिता, तस्मात्तत्कर्तृत्वं त्वयि उपचर्यते।२८

यथा चुम्बकसान्निध्याच्चलन्त्येवाचलादयः।
जडा तथा त्वया दृष्टा माया सृजति वै जगत् ॥२९

तदेवाह **यथेति**—यथा चुम्बकसान्निध्यादचलादयः [1]लोहादयः चलन्त्येव तथा जडापीति शेषः माया त्वया दृष्टा सती जगत्सृजति।२९

देहद्वयमदेहस्य तव विश्वं रिरक्षिषोः।
विराट् स्थूलं शरीरं ते सूत्रं सूक्ष्ममुदाहृतम् ॥३०

**देहद्वयमिति**—विश्वं रिरक्षिषोः तव सम्बन्धिनः पुत्रस्य अदेहस्य न विद्यन्ते देहाः यस्मात् स्वस्मरणेन संसारनिवर्तकस्य विराजः, 'यस्य स्मरणमात्रेण जन्मसंसारबन्धनात्। विमुच्यते तमस्तस्मै' इत्यादि स्मृतेः। तस्य विराजः रूपद्वयं स्थूलं सूक्ष्मं तनुविराट् चतुर्भुज-नारायणरूपं, स्थूलं सूत्रं व्यापकं ब्रह्मरूपम्।३०

विराजः संभवन्त्येते अवताराः सहस्रशः।
कार्यान्ते प्रविशन्त्येव विराजं रघुनन्दन! ॥३१

**विराज इति**—तत्र विराजः चतुर्भुजनारायणात् सहस्रशः अवताराः संभवन्ति। कार्यान्ते विराजं चतुर्भुजनारायणं प्रविशन्ति च। अत्रेयं ब्रह्मवैवर्तीयाख्यायिका श्रीकृष्णा-दुत्पन्नस्य विराजः रूपद्वयं स्थूलं सूक्ष्मं च। तत्र सूक्ष्मं व्यापकरूपेण स्थितम्। स्थूलं तु जले अशयिष्ट तन्नाभ्युत्पन्नकमले ब्रह्माऽभूत्। ततः सर्वेऽवताराः उत्पद्यन्ते। न तु समष्टि-जीवरूपविराजः इति। तथा च ब्रह्मवैवर्ते 'ततो महान् विराड् जज्ञे विश्वौघाधार एव सः। यस्यैकरोमविवरे विश्वौघः संव्यवस्थितः॥ स्थूलात् सूक्ष्मतमः सोऽपि महानन्यस्ततः परम्। स एव षोडशोंऽशोऽपि (श्री) कृष्णः परमात्मनः॥ महान् विष्णुः स विज्ञेयः सर्वाधारः सनातनः। महार्णवे शयानः स पद्मपत्रं यथा जले' इति।३१

अवतारकथां लोके ये गायन्ति गृणन्ति च।
अनन्यमनसो मुक्तिस्तेषामेव रघूत्तम! ॥३२

---

१. लोहादय इति रा० व० पु०।

अवतारेति—यदि विराज उत्पन्नावतारकथाभिर्मुक्तिस्तर्हि विराडवतारिणस्ते कथाभिर्मुक्तिरिति किमुतेति काव्यार्थापत्तिरलङ्कारो व्यक्तः।३२

त्वं ब्रह्मणा पुरा भूमेर्भारहाराय राघव!।
प्रार्थितस्तपसा तुष्टस्त्वं जातोऽसि रघोःकुले॥३३

त्वमिति-ब्रह्मणा प्रार्थित इत्याद्यर्थ उक्त एव।३३

देवकार्यमशेषेण कृतं ते राम! दुष्करम्।
बहुवर्षसहस्राणि मानुषं देहमाश्रितः॥३४
सर्वदुष्करकर्माणि लोकद्वयहिताय च।
पापहारीणि भुवनं यशसा पूरयिष्यति॥३५

देवकार्यमिति—दुष्करं देवैरपि कर्तुमशक्यं देवकार्यं रावणादिवधरूपं तत्त्वयाऽशेषेण कृतम्। पुनश्च मनुष्यस्यायं मानुषस्तद्देहमाश्रितः नित्यद्विभुजरामावेशयुतः त्वं बहुवर्षसहस्राणि लोकद्वयहिताय जनानां पापहारीणि दुष्करकर्माणि चरित्राणि कुर्वन् भुवनं चतुर्दशसङ्ख्याकं यशसा पूरयिष्यसीत्यन्वयः। दुष्करकर्माणीत्यनेन ये इदानीन्तनास्ते त्वद्दर्शनादिना मुक्ता एव। ये च भविष्यन्तस्तेऽपि त्वच्चरित्रश्रवणपठनाभ्यां मुक्ताः भवेयुरिति दर्शितम्।३४-३५।

प्रार्थयामि जगन्नाथ! पवित्रं कुरु मे गृहम्।
स्थित्वाद्य भुक्त्वा सबलः श्वो गमिष्यसि पत्तनम्॥३६
तथेति राघवोऽतिष्ठत्तस्मिन्नाश्रम उत्तमे।
ससैन्यः पूजितस्तेन सीतया लक्ष्मणेन च॥३७
ततो रामश्चिन्तयित्वा मुहूर्तं प्राह मारुतिम्।
इतो गच्छ हनूमंस्त्वमयोध्यां प्रति सत्वरः॥३८

तत इति—मुहूर्तं चिन्तयित्वेत्यनेन यदि मुनिवाक्यं नाङ्गीकरोमि तर्हि मुनिमानभङ्गः, एतद्वाक्याङ्गीकारेऽयोध्यानागमने भरतनिषादप्राणहानिरिति घटिकाद्वयेन चिन्तने हेतुर्व्यक्तः। हनुमद्गमनवेगातिशयं जानतापि रामेण इतो गच्छ सत्वर इति यदुक्तं तेन भरतनिषादयोर्विषये रामस्य प्रेमातिशयो व्यक्तः।३८

जानीहि कुशली कश्चिज्जनो नृपतिमन्दिरे।
शृङ्गवेरपुरं गत्वा ब्रूहि मित्रं गुहं मम॥३९

जानकीलक्ष्मणोपेतमागतं मां निवेदय।
नन्दिग्रामे ततो गत्वा भ्रातरं भरतं मम ॥४०

दृष्ट्वा ब्रूहि सभार्यस्य सभ्रातुः कुशलं मम।
सीताया हरणादीनि रावणस्य वधादिकम् ॥४१

ब्रूहि क्रमेण मे भ्रातुः सर्वं तत्र विचेष्टितम्।
हत्वा रक्षोगणान् सर्वान् सभार्यः सहलक्ष्मणः ॥४२

ब्रूहीति—भरतस्य विचेष्टितं मे ब्रूहीत्यनेन यदि भरतस्य राज्येच्छा तर्हि अयोध्याराज्यं स एव पालयतु अहमन्यत्र एव राज्यं करोमीति व्यञ्जितम्। यद्वा चेष्टितमित्यनेन मद्विरहासहिष्णोस्तस्य देहः श्वः तिष्ठति न वेति विज्ञाय यदि श्वः पर्यन्तं देहं धर्तुं क्षमस्तर्हि तत्रैव तिष्ठ नो चेत् शीघ्रमागच्छेति सूचितम्। तेन श्वः पर्यन्तं यदि न देहं धर्तुं क्षमस्तर्हि अद्यैव गमिष्यामीति व्यक्तम्।४२

उपयाति समृद्धार्थः सह ऋक्षहरीश्वरैः।
इत्युक्त्वा तत्र वृत्तान्तं भरतस्य विचेष्टितम् ॥४३

सर्वं ज्ञात्वा पुनः शीघ्रमागच्छ मम सन्निधिम्।
तथेति हनुमांस्तत्र मानुषं वपुरास्थितः ॥४४

नन्दिग्रामं ययौ तूर्णं वायुवेगेन मारुतिः।
गरुत्मानिव वेगेन जिघृक्षन् भुजगोत्तमम् ॥४५

शृङ्गवेरपुरं प्राप्य गुहमासाद्य मारुतिः।
उवाच मधुरं वाक्यं प्रहृष्टेनान्तरात्मना ॥४६

रामो दाशरथिः श्रीमान् सखा ते सह सीतया।
सलक्ष्मणस्त्वां धर्मात्मा क्षेमी कुशलमब्रवीत् ॥४७

अनुज्ञातोऽद्य मुनिना भरद्वाजेन राघवः।
आगमिष्यति तं देवं द्रक्ष्यसि त्वं रघूत्तमम् ॥४८

एवमुक्त्वा महातेजाः सम्प्रहृष्टतनूरुहम्।
उत्पपात महावेगो वायुवेगेन मारुतिः ॥४९

सोऽपश्यद्रामतीर्थं च सरयूं च महानदीम्।
तामतिक्रम्य हनुमान्नन्दिग्रामं ययौ मुदा ॥५०

एवमुक्त्वेति—सम्प्रहृष्टतनूरुहमिति गुहविशेषणं दत्तम्। गुहः हनुमन्तमुवाचेति नोक्तम्। तेन श्रीरामागमनश्रवणानन्देन तद्देहभानं विस्मृतमिति व्यक्तम्। महावेगोऽपि मारुतिः वायुवेगेनोत्पपात तदा च आकाशात् रामतीर्थमयोध्याख्यं महानदीं सरयूं चापश्यत् तामतिक्रम्य अतिशये क्रान्त्वाऽष्टचत्वारिंशत् क्रोशपरिमितस्य सरयूसहिताऽयोध्यामण्डलस्य प्रदक्षिणचतुष्टयं कृत्वेति यावत् । अत एव महावेग इति वायुवेगेनेतिचोपात्तमन्वर्थम्। अस्मदुक्तास्वीकारे उक्तविशेषणवैयर्थ्यं स्पष्टमेवेति।४९-५०।

क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम्।
ददर्श भरतं दीनं कृशमाश्रमवासिनम्॥५१

क्रोशमात्र इति—अयोध्यायाः अयोध्याख्यनगरवासात्, क्रोशमात्रे नन्दिग्रामे उक्त-विशेषणविशिष्टं भरतं ददर्श, उवाचेति चतुर्णामन्वयः। चीरकृष्णाजिनाम्बरं चीराम्बरं कृष्णजिनाम्बरञ्चेत्यर्थः। चीराम्बरमित्यनेन चित्रकूटे यदम्बरेण रामः आलिङ्गितः तदेवाम्बरमेतत्कालपर्यन्तं भरतः परिधत्ते स्म इति व्यक्तम्। कृष्णाजिनाम्बरं जटिल-वल्कलाम्बरं फलमूलकृताहारमिति चतुर्विशेषणैः श्रीरामवेषः कृतस्तेनेति व्यक्तम्। दीनमित्यनेन व्यतिरेकालङ्कारः सूचितः। तेन श्रीरामानागमने मरणैकनिश्चयः सूचितः। कृशमित्यनेन भोगत्यागो दर्शितः।५१

मलपङ्कविदिग्धाङ्गं जटिलं वल्कलाम्बरम्।
फलमूलकृताहारं रामचिन्तापरायणम्॥५२

मलपङ्केति—मलपङ्कविदिग्धाङ्गमित्यनेन यत्रैव रामस्मृतिस्तत्रैव प्रेम्णाऽलुण्ठदिति व्यक्तम्। रामस्य चिन्ता ध्यानं सैव परमयनं यस्य तम्। एतेन श्रीरामध्यानेनैव जीवतीति व्यक्तम्।५२

पादुके ते पुरस्कृत्य शासयन्तं वसुन्धराम्।
मन्त्रिभिः पौरमुख्यैश्च काषायाम्बरधारिभिः॥५३

पादुक इति—ते पादुके पुरस्कृत्य वसुन्धरां शासयन्तम्-तेन राममेव राजानममंस्तेति व्यक्तम्। काषायाम्बरधारिभिरित्यनेन श्रीराममन्तरा मन्त्र्यादीनां इहामुत्र फलभोग-विरागः सूचितः। सर्वविशेषणैर्नियमातिशयेन तस्य श्रीरामभक्ताधिराजत्वं व्यक्तम्।५३

वृतदेहं मूर्त्तिमन्तं साक्षाद्धर्ममिव स्थितम्।
उवाच प्राञ्जलिर्वाक्यं हनुमान् मारुतात्मजः॥५४
यं त्वं चिन्तयसे रामं तापसं दण्डके स्थितम्।
अनुशोचसि काकुत्स्थः स त्वां कुशलमब्रवीत्॥५५

प्रियमाख्यामि ते देव! शोकं त्यज सुदारुणम्।
अस्मिन् मुहूर्त्ते भ्रात्रा त्वं रामेण सह सङ्गतः ॥५६

**प्रियमिति**–हे देव! ते प्रियमाख्यामि। अस्मिन्नेव मुहूर्त्ते सुदारुणं शोकं त्यज। यतः भ्रात्रा रामेण सङ्गतो भविष्यसीति शेषः।५६

समरे रावणं हत्वा रामः सीतामवाप्य च।
उपयाति समृद्धार्थः ससीतः सहलक्ष्मणः ॥५७

एवमुक्तो महातेजा भरतो हर्षमूर्च्छितः।
पपात भुवि चास्वस्थः कैकेयीप्रियवादिनः[1] ॥५८

आलिङ्ग्य भरतः शीघ्रं मारुतिं प्रियवादिनम्।
आनन्दजैरश्रुजलैः सिषेच भरतः कपिम् ॥५९

देवो वा मानुषो वा त्वमनुक्रोशादिहागतः।
प्रियाख्यानस्य ते सौम्य! ददामि ब्रुवतः प्रियम् ॥६०

गवां शतसहस्रञ्च ग्रामाणाञ्च शतं वरम्।
सर्वाभरणसम्पन्नाः मुग्धाः कन्यास्तु षोडश ॥६१

एवमुक्त्वा पुनः प्राह भरतो मारुतात्मजम्।
बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् ॥६२

शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम्।
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ॥६३

**शृणोमीति**––कल्याणी बतेत्यनेन यदि रामवृत्तं मच्छ्रवणयोः न प्राप्तं चेत्तदा मज्जीवनमपि न भवेदिति व्यक्तम्। तेन मत्प्राणदाता त्वमेवेति। तेन त्वत्प्रत्युपकारं दातुं न किञ्चित् श्रीरामविरहेणाकल्याणकरमपि जीवनं त्वन्मुखादेतद्वृत्तान्तश्रवणेन कल्याणकरं जातमित्यपि व्यक्तम्। ननु पूर्वं ते प्रियाख्यानस्य प्रियं ददामीति प्रतिज्ञायाल्पमेव गवां सहस्रं ग्रामाणां शतमित्यादि कथं दत्तमिति चेन्न सकलराज्यस्य श्रीरामसम्बन्धितया तावत्येव वस्तुनि स्वस्य सत्त्वात्सर्वार्पणेनादोषात्।६३

एति जीवन्तमानन्दो नरं वर्षशतादपि।
राघवस्य हरीणाञ्च कथमासीत् समागमः ॥६४

---

1. प्रचलितपाठः 'प्रियनन्दनः' एवोचितः।

तत्त्वमाख्याहि भद्रं ते विश्वसेयं वचस्तव।
एवमुक्तोऽथ हनुमान् भरतेन महात्मना॥६५
आचचक्षेऽथ रामस्य चरितं कृत्स्नशः क्रमात्।
श्रुत्वा तु परमानन्दं भरतो मारुतात्मजात्॥६६
आज्ञापयच्छत्रुहणं मुदा युक्तं मुदान्वितः।
दैवतानि च यावन्ति नगरे रघुनन्दन!॥६७
नानोपहारबलिभिः पूजयन्तु महाधियः।
सूताः वैतालिकाश्चैव वन्दिनः स्तुतिपाठकाः॥६८
वारमुख्याश्च शतशो निर्यान्त्वद्यैव सङ्घशः।
राजदारास्तथामात्या सेना हस्त्यश्वपत्तयः॥६९
ब्राह्मणाश्च तथा पौरा राजानो ये समागताः।
निर्यान्तु राघवस्यास्य द्रष्टुं शशिनिभाननम्॥७०
भरतस्य वचः श्रुत्वा शत्रुघ्नपरिचोदिताः।
अलञ्चक्रुश्च नगरीं मुक्तारत्नमयोज्ज्वलैः॥७१
तोरणैश्च पताकाभिर्विचित्राभिरनेकधा।
अलङ्कुर्वन्तु वेश्मानि नानावलिविचक्षणाः॥७२
निर्यान्तु वृन्दशः सर्वे रामदर्शनलालसाः।
हयानां शतसाहस्रं गजानामयुतं तथा॥७३
रथानां दशसाहस्रं स्वर्णसूत्रविभूषितम्।
पारमेष्ठीन्युपादाय द्रव्याण्युच्चावचानि च॥७४
ततस्तु शिविकारूढाः निर्ययू राजयोषितः।
भरतः पादुके न्यस्य शिरस्येव कृताञ्जलिः॥७५
शत्रुघ्नसहितो रामं पादचारेण निर्ययौ।
तदैव दृश्यते दूराद्विमानं चन्द्रसन्निभम्॥७६
पुष्पकं सूर्यसङ्काशं मनसा ब्रह्मनिर्मितम्।
एतस्मिन् भ्रातरौ वीरौ वैदेह्या रामलक्ष्मणौ॥७७

**शत्रुघ्नेति**—अतिकृशोऽपि पादचारेण निर्ययौ, तेन रामागमनजहर्षेण बलिष्ठोऽभूदिति व्यक्तम्। सूर्यसङ्काशमित्यनेन प्रकाशाधिक्यं चन्द्रसन्निभमित्यनेनाह्लादजनकत्वम्। ७६-७७

सुग्रीवश्च कपिश्रेष्ठो मन्त्रिभिश्च विभीषणः ।
दृश्यन्ते पश्यत जनाः इत्याह पवनात्मजः ॥७८

ततो हर्षसमुद्भूतो निस्वनो दिवमस्पृशत् ।
स्त्रीबालयुववृद्धानां रामोऽयमिति कीर्तनात् ॥७९

**तत इति**—हर्षसमुद्भूतो निस्वनः दिवं त्रिपाद्विभूतिं 'त्रिपादस्यामृतं दिवीति' श्रुतेः । एतेन स च निःश्वसनः शब्दपरम्परया स्वर्गमारभ्याब्रह्माण्डपर्यन्तं निर्भिद्य ततः त्रिपाद्विभूतौ गत इति व्यक्तम् ।७९

रथकुञ्जरवाजिस्था अवतीर्य महीं गताः ।
ददृशुस्ते विमानस्थं जनाः सोममिवाम्बरे ॥८०

प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः ।
ततो विमानाग्र्यगतं भरतो राघवं मुदा ॥८१

ववन्दे प्रणतो रामं मेरुस्थमिव भास्करम् ।
ततो रामाभ्यनुज्ञातं विमानमपतद् भुवि ॥८२

आरोपितो विमानं तद्भरतः सानुजस्तदा ।
राममासाद्य मुदितः पुनरेवाभ्यवादयत् ॥८३

समुत्थाप्य चिराद् दृष्टं भरतं रघुनन्दनः ।
भ्रातरं स्वाङ्कमारोप्य मुदा तं परिषस्वजे ॥८४

ततो लक्ष्मणमासाद्य वदेहीं नाम कीर्त्तयन् ।
अभ्यवादयत प्रीतो भरतः प्रेमविह्वलः ॥८५

सुग्रीवं जाम्बवन्तं च युवराजं तथाङ्गदम् ।
मैन्दद्विविदनीलांश्च ऋषभञ्चैव सस्वजे ॥८६

सुषेणं च नलञ्चैव गवाक्षं गन्धमादनम् ।
शरभं पनसञ्चैव भरतः परिषस्वजे ॥८७

सर्वे ते मानुषं रूपं कृत्वा भरतमादृताः ।
पप्रच्छुः कुशलं सौम्याः प्रहृष्टाश्च प्लवङ्गमाः ॥८८

ततः सुग्रीवमालिङ्ग्य भरतः प्राह भक्तितः।
त्वत्सहायेन रामस्य जयोऽभूद्रावणो हतः॥८९

त्वमस्माकं चतुर्णां तु भ्राता सुग्रीव! पञ्चमः।
शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम्॥९०

सीतायाश्चरणौ पश्चाद्ववन्दे विनयान्वितः।
रामो मातरमासाद्य विवर्णां शोकविह्वलाम्॥९१

जग्राह प्रणतः पादौ मनो मातुः प्रसादयन्।
कैकेयीं च सुमित्रां च ननामेतरमातरः॥९२

**जग्राहेति**—कौशल्यां सुमित्रां कैकेयीञ्च याः इतरमातरः कौशल्यादिभ्योऽतिरिक्ताः सार्द्धशतत्रयपरिमितास्ताः ननामेति योजना।९२

भरतः पादुके ते तु राघवस्य सुपूजिते।
योजयामास रामस्य पादयोर्भक्तिसंयुतः॥९३

राज्यमेतन्न्यासभूतं मया निर्यातितं तव।
अद्य मे सफलं जन्म फलितो मे मनोरथः॥९४

यत्पश्यामि समायान्तमयोध्यां त्वामहं प्रभो!।
कोष्ठागारं बलं कोशं कृतं दशगुणं मया।
त्वत्तेजसा जगन्नाथ! पालयस्व पुरं स्वकम्॥९५

**कोष्ठागारमिति**—कोष्ठागारमन्नादिस्थापनगृहं कोशं धनगृहं त्वत्तेजसा दशगुणं कृतम्। त्वत्तेजसेत्यनेन त्वद्विरहखिन्नतया नाहं किमपि कर्तुं शक्त इति सूचितम्।९५

इति ब्रुवाणं भरतं दृष्ट्वा सर्वे कपीश्वराः।
मुमुचुर्नेत्रजं तोयं प्रशशंसुर्मुदान्विताः॥९६

ततो रामः प्रहृष्टात्मा भरतं स्वाङ्कगं मुदा।
ययौ तेन विमानेन भरतस्याश्रमं तदा॥९७

**तत इति**—भरतं स्वाङ्कगं कृत्वेति शेषः।९७

अवरुह्य तदा रामो विमानाग्र्यान्महीतलम्।
अब्रवीत् पुष्पकं देवो गच्छ वैश्रवणं वह॥९८

अनुगच्छानुजानामि कुबेरं धनपालकम् ॥९९

रामो वशिष्ठस्य गुरोः पदाम्वुजं,
नत्वा यथा देवगुरोः शतक्रतुः ।
दत्वा महार्हासनमुत्तमं गुरो-
रुपाविवेशाथ गुरोः समीपतः ॥१००

इति श्रीबृहद्‌ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे चतुर्दशोऽध्यायः ।१४

⊙

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्‌ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
चतुर्दशोऽध्यायः ।१४

⊙

---

१. इति ध्वनिप्रकाशिकायाम् चतुर्दशोऽध्यायः इति रा० व० पु० ।

## अथ पञ्चदशोऽध्यायः

**श्रीमहादेव उवाच**

ततस्तु कैकेयीपुत्रो भरतो भक्तिसंयुतः।
शिरस्यञ्जलिमाधाय ज्येष्ठं भ्रातरमब्रवीत् ॥१

**तत इति**—कैकेयीपुत्र इत्यनेन कार्यात् कारणानुमितिरितिन्यायेन भरतभक्त्यतिशयेन कैकेय्याः भक्त्यतिशयो दर्शितः।१

माता मे सत्कृता राम! दत्तं राज्यं त्वया मम।
ददामि तत्ते च पुनर्यथा त्वमददा मम ॥२

**मातेति**—मे माता सत्कृता, लोकदृष्ट्याऽपराधकरणेऽपि सम्मानिता, एतेन श्रीरामस्य दोषादर्शित्वगुणो दर्शितः।२

इत्युक्त्वा पादयोर्भक्त्या साष्टाङ्गं प्रणिपत्य च।
बहुधा प्रार्थयामास कैकेय्या गुरुणा सह ॥३

**इत्युक्त्वेति**—भरतः इत्युक्त्वा रामपादयोः भक्त्या साष्टाङ्गं प्रणिपत्य गुरुणा वशिष्ठेन कैकेय्या च सह बहुधा प्रार्थयामास। गुरुणा कैकेय्या सहेत्यनेन भरतदत्तराज्यमङ्गीकर्तुं नेच्छतीति व्यक्तम्। न च कैकेयीविवाहकाले कैकेयीपुत्रो राजा भवत्विति-केकयराजोक्तं दशरथः स्वीचकारेति रामस्य राज्यानङ्गीकारे हेतुर्व्यक्तः। तेन च कैकेयी रामं पुत्रत्वे भरतादप्यधिकममंस्तेति वशिष्ठः। रमावैकुण्ठनारायणभरतस्य आदिनारायणरामस्य चैक्यदृष्ट्या रामे कैकेयीपुत्रत्वमिति रामं बोधितवानिति सूचितम्।३

तथेति प्रतिजग्राह भरताद्राज्यमीश्वरः।
मायामाश्रित्य सकलं नरचेष्टामुपागतः ॥४

**तथेतीति**—मायां कृपामाश्रित्य सकलं रावणाद्युद्धारूपं चरितं कृत्वा नरचेष्टामुपागतः। नरस्य नित्यविहारिपरमात्मनः श्रीरामस्य चेष्टामावेशमुपागतः प्राप्तः राज्यं स्वीचकार। 'आनन्दो द्विविधः प्रोक्तो मूर्तश्चामूर्त एव च। अमूर्तस्याश्रयो मूर्तः परमात्मा नराकृतिरिति' स्मृतेः। यद्वा नरस्य नित्यविहारिपरमात्मनः रामस्य चेष्टामावेशमुपागतः, ईश्वरः वशिष्ठ-

भरताभिप्रायः तद्वाक्यखण्डनसमर्थः आदिनारायणः मायां भरतोपरि कृपामाश्रित्य सकलं राज्यं प्रतिजग्राह स्वीचकार।४

स्वाराज्यानुभवो यस्य सुखज्ञानैकरूपिणः।
निरस्तातिशयानन्दरूपिणः परमात्मनः।
मानुषेण तु राज्येन किं तस्य जगदीशितुः॥५

स्वाराज्येति–स्वेषामात्मीयानां मत्स्याद्यवताराणां नारायणाद्यवतारिणां च राट् स्वराट् तस्य भावः स्वाराज्यं तस्यानुभवः अहमेव सर्वेषामीश्वराणां राजेत्येवंरूपः यस्यास्ति तस्य जगदीशितुः चिदचिद्विग्रहस्येशितुः शरीरिणः निरस्तोऽतिशयः इतराभिभावकतारूपो यस्मात्तादृशानन्दरूपस्य नित्यविहारिणः श्रीरामस्य मानुषेण राज्येन किम् न किमपीत्यर्थः।५

यस्य भ्रूभङ्गमात्रेण त्रिलोकी नश्यति क्षणात्॥६
यस्यानुग्रहमात्रेण भवन्त्याखण्डलश्रियः।
लीलासृष्टमहासृष्टेः कियदेतद्रमापतेः॥७

जगदीशितृत्वमेवाह यस्येति–यस्य भ्रूभङ्गमात्रेण त्रिलोकी क्षणान्नश्यति, यस्यानुग्रहमात्रेण अनुग्रहलेशेन रङ्का अपि आखण्डलश्रियः भवन्ति। लीलया सृष्टा महासृष्टिरनेककोटिब्रह्माण्डात्मिका येन तस्य रमापतेः नारायणे आवेशेन स्थितस्य पञ्चवैकुण्ठमूलभूतसच्चिदानन्दात्मिकगुप्तायोध्याधिपतेः राजाधिराजस्य एतच्च रमलोचनगोचरं प्रकटायोध्याराज्यं कियत्।६-७।

तथापि भजतां नित्यं कामपूरविधित्सया।
लीलामानुषदेहेन सर्वमप्यनुवर्तते॥८

तथापीति–तथापि नित्यं भजतां निष्कामभक्तानां कामस्य स्मरणादिस्मरणनामजपरूपस्य पूरः पूर्तिस्तस्य विधित्सया विधानेच्छया अवाङ्मनसगोचरश्रीरामः लीलया निमित्तभूतया नारायणे आवेशेन मानुषदेहेन सर्वं राज्यादिकमनुवर्तते अनुकरोति। एतेन एतन्नामरूपलीलाधामभिर्वाङ्मनसागोचराणां मम नामरूपलीलाधाम्नां जपस्मरणध्यानादिकं भविष्यतीति हेतुर्व्यज्यते। तेन च तस्य दयालुतातिशयो व्यक्तः।८

ततः शत्रुघ्नवचनान्निपुणः श्मश्रुकृन्तकः।
संभाराश्चाभिषेकार्थमानीता राघवस्य हि॥९

तत इति–श्मश्रुकृन्तको नापितः।९

पूर्वं तु भरते स्नाते लक्ष्मणे च महात्मनि।
सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे॥१०

पूर्वमिति–भरतलक्ष्मणस्नानानन्तरं सुग्रीवविभीषणावपि स्नातावभूतामिति ध्वनिः।१०

विशोधितजटः स्नातश्चित्रमाल्यनुलेपकः।
महार्हशयनोपेतस्तस्थौ तत्र श्रिया ज्वलन्॥११

विशोधितजट इति–विशोधितजटः शुद्धकेशरूपतां प्रापितजटः न तु कर्तितनखजटः। तेन 'आप्रणखादानन्दमूर्ति' रिति ध्वनि। श्रीरामेण स्नानसमये दानकरणं तु श्रीभरत-दत्तदानेन पूर्वमेवार्थिनां पूर्णमनोरथतया पुनराकाङ्क्षाभावात् (नोक्तम्)।११

प्रतिकर्म च रामस्य लक्ष्मणस्य महामतिः।
कारयामास भरतः सीताया राजयोषितः॥१२

महार्हवस्त्राभरणैरलञ्चक्रुः सुमध्यमाम्।
ततो वानरपत्नीनां सर्वासामेव शोभना॥१३

अकारयत कौशल्या प्रहृष्टा पुत्रवत्सला।
ततः स्यन्दनमादाय शत्रुघ्नवचनात्सुधीः॥१४

सुमन्त्रः सूर्यसङ्काशं योजयित्वाऽग्रतः स्थितः।
आरुरोह रथं रामः सत्यधर्मपरायणः॥१५

सुमन्त्र इति–सत्यधर्मपरायणः, एतेन बहुभरतप्रार्थनया स्वीकृतराज्यभार इति ध्वनिः।१५

सुग्रीवो युवराजश्च हनुमांश्च विभीषणः।
स्नात्वा दिव्याम्बरधरा दिव्याभरणभूषिताः॥१६

राममन्वीयुरग्रे च रथाश्वगजवाहनाः।
सुग्रीवपत्न्यः सीता च ययुर्यानैः पुरं महत्॥१७

वज्रपाणिर्यथा देवैर्हरिताश्वरथे स्थितः।
प्रययौ रथमास्थाय तथा रामो महत् पुरम्॥१८

सारथ्यं भरतश्चक्रे रत्नदण्डं महाद्युतिः।
श्वेतातपत्रं शत्रुघ्नो लक्ष्मणो व्यजनं दधे॥१९

चामरं च समीपस्थो न्यवीजयदरिन्दमः।
शशिप्रकाशं त्वपरं जग्राहासुरनायकः॥२०

**चामरमिति**—अरिन्दमः सुग्रीवः, असुरनायको विभीषणः।२०

दिविजैः सिद्धसङ्घैश्च ऋषिभिर्दिव्यदर्शनैः।
स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः॥२१
मानुषं रूपमास्थाय वानरा गजवाहनाः।
भेरीशंखनिनादैश्च मृदङ्गपणवानकैः॥२२

**मानुषमिति**—पटभूषणाद्यलङ्कृता गजवाहनाः वानराः बभूवुः। तेन राज्यश्रियः आनन्त्यं व्यक्तम्। मानुषरूपमास्थायेत्यनेन तेषां सर्वेषां देवांशपार्षदांशभिन्नानां लघुवानराणां कामरूपता च।२२

प्रययौ राघवश्रेष्ठस्तां पुरीं समलङ्कृताम्।
ददृशुस्ते समायान्तं राघवं पुरवासिनः॥२३

दूर्वादलश्यामतनुं महार्ह-
किरीटरत्नाभरणाञ्चिताङ्गम्,।
आरक्तकञ्जायतलोचनं तं
दृष्ट्वा ययुर्मोदमतीव पुण्याः॥२४
विचित्ररत्नाञ्चितसूत्रनद्ध-
पीताम्बरं पीनभुजान्तरालम्।
अनर्घ्यमुक्ताफलदिव्यहारै-
र्विरोचमानं रघुनन्दनं प्रजाः॥२५

**दूर्वादलेति**—आरक्तकञ्जायतलोचनमित्यनेन दर्शनमात्रेण सर्वेषामानन्दजनकत्वं व्यक्तम्। विचित्ररत्नाञ्चितसूत्रनद्धपीताम्बरमित्यनेन कञ्चुकप्रावारयोरतिसूक्ष्मता व्यक्ता।२४-२५।

सुग्रीवमुख्यैर्हरिभिः प्रशान्तै—
र्निषेव्यमाणं रवितुल्यभासम्।
कस्तूरिकाचन्दनलिप्तगात्रं,
निवीतकल्पद्रुमपुष्पमालम्॥२६

सुग्रीवेति—रवितुल्यभासम्-रवितुल्यैः स्ववयस्यैः राजभिः भासं भासमानं निवीतकल्पद्रुमपुष्पमालमित्यनेन अयोध्यावाटिकायां कल्पवृक्षा अपि सन्तीति सूचितम् ।२६

श्रुत्वा स्त्रियो राममुपागतं मुदा,
प्रहर्षवेगोत्कलिताननश्रियः ।
अपास्य सर्वं गृहकार्यमाहितं,
हर्म्याणि चैवारुरुहुः स्वलङ्कृताः ॥२७

श्रुत्वेति—गृहकार्याण्युत्सृज्य हर्म्याण्यारुरुहुरित्यनेन भूषणवसनाङ्गरागाञ्जनानां व्यत्यासो व्यक्तः। तेन च तद्दर्शने तासामुत्कण्ठातिशयश्च ।२७

दृष्ट्वा हरिं सर्वदिगुत्सवाकृतिं,
पुष्पैः किरन्त्यः स्मितशोभिताननाः ।
दृग्भिः पुनर्नेत्रमनोरसायनं,
स्वानन्दमूर्तिं मनसाऽभिरेभिरे ॥२८

दृष्ट्वेति—दृग्भिः स्वानन्दमूर्तिमभिरेभिरे इत्यनेन दृशां निर्निमेषत्वम्, मनसाऽभिरेभिरे इत्यनेन शृङ्गाररसः सूचितः। पतिव्रतानामयोध्यानारीणां शृङ्गारोत्पत्त्या श्रीरामस्य सौन्दर्यातिशयो व्यक्तः ।२८

रामः स्मितस्निग्धदृशा प्रजास्तथा,
पश्यन् प्रजानाथ इवापरः प्रभुः ।
शनैर्जगामाथ पितुः स्वलङ्कृतं,
गृहं महेन्द्रालयसन्निभं हरिः ॥२९

राम इति—प्रभुः सर्वमनोरथपूरणसमर्थो रामः स्मितयुक्तया अत एव स्निग्धया दृशा प्रजाः तथा पश्यन् दर्शनेन सम्माननं कुर्वन् अपरः प्रजानाथ इव ब्रह्मेव पितुः गृहं शनैर्जगाम। यासां यथा भावः तास्तथैव सत्कृतवानिति भावः। प्रजानाथ इत्युपमया चतुरङ्गिणीसेनासमेतोऽपि श्रीरामः स्वस्त्ययनं कुर्वद्भिः सन्निहितमुनिमण्डलैः परिवेष्टितोऽभूदिति सूचितम् ।२९

प्रविश्य वेश्मान्तरसंस्थितो मुदा,
रामो ववन्दे चरणौ स्वमातुः ।
क्रमेण सर्वाः पितृयोषितः प्रभु-
र्ननाम भक्त्या रघुवंशकेतुः ॥३०

ततो भरतमाहेदं रामः सत्यपराक्रमः।
सर्वसम्पत्समायुक्तं मम मन्दिरमुत्तमम् ॥३१
मित्राय वानरेन्द्राय सुग्रीवाय प्रदीयताम्।
सर्वेभ्यः सुखवासार्थं मन्दिराणि प्रकल्पय ॥३२

**मित्रायेति**—वानरेन्द्राय सुग्रीवाय मम मन्दिरं वेश्म प्रदीयताम्। ससैन्यस्य तवोपभोगार्थं तपोबलेन भरद्वाज इव त्वमपि नारायणत्वात् सर्वेभ्यः वानरर्क्षराक्षसेभ्यः सुखवासार्थं मन्दिराणि प्रकल्पय।३२

रामेणैवं समादिष्टो भरतश्च तथाऽकरोत्।
उवाच च महातेजाः सुग्रीवं राघवानुजः ॥३३
राघवस्याभिषेकार्थं चतुःसिन्धुजलं शुभम्।
आनेतुं प्रेषयस्वाशु दूतान् त्वरितविक्रमान् ॥३४
प्रेषयामास सुग्रीवो जाम्बवन्तं मरुत्सुतम्।
अङ्गदं च सुषेणं च ते गत्वा वायुवेगतः ॥३५
जलपूर्णान् शातकुम्भकलशांश्च समानयन्।
आनीतं तीर्थसलिलं शत्रुघ्नो मन्त्रिभिः सह ॥३६
राघवस्याभिषेकार्थं वशिष्ठाय न्यवेदयत्।
ततस्तु प्रयतो वृद्धो वशिष्ठो ब्राह्मणैः सह ॥३७
रामं रत्नमये पीठे ससीतं संन्यवेशयत्।
वशिष्ठो वामदेवश्च जाबालिर्गौतमस्तथा ॥३८
वाल्मीकिश्च तथा चक्रुः सर्वे रामाभिषेचनम्।
कुशाग्रतुलसीयुक्तपुण्यगन्धजलैर्मुदा ॥३९
अभ्यषिञ्चन् रघुश्रेष्ठं वसवो वासवं यथा।
ऋत्विग्भिः ब्राह्मणैः श्रेष्ठकन्याभिः सहमन्त्रिभिः ॥४०
सर्वौषधिरसैश्चैव दैवतैर्नभसि स्थितैः।
चतुर्भिः लोकपालैश्च स्तुवद्भिः सगणैस्तथा ॥४१
छत्रञ्च तस्य जग्राह शत्रुघ्नः पाण्डुरं शुभम्।
सुग्रीवराक्षसेन्द्रौ तौ दधतुः श्वेतचामरे ॥४२

मालां च काञ्चनीं वायुर्ददौ वासवचोदितः।
सर्वरत्नसमायुक्तं मणिकाञ्चनभूषितम् ।।४३
ददौ हारं नरेन्द्राय स्वयं शक्रस्तु भक्तितः।
प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ।।
देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात खात् ।।४४
नवदूर्वादलश्यामं पद्मपत्रायतेक्षणम् ।।४५
रविकोटिप्रभायुक्तकिरीटेन विराजितम्।
कोटिकन्दर्पलावण्यं पीताम्बरसमावृतम् ।।४६
दिव्याभरणसम्पन्नं दिव्यचन्दनलेपनम्।
अयुतादित्यसङ्काशं द्विभुजं रघुनन्दनम् ।।४७
वामभागे समासीनां सीतां काञ्चनसन्निभाम्।
सर्वाभरणसम्पन्नां वामाङ्के समुपस्थिताम् ।।४८
रक्तोत्पलकराम्भोजां वामेनालिङ्ग्य संस्थितम्।
सर्वातिशयशोभाढ्यं दृष्ट्वा भक्तिसमन्वितः ।।४९
उमया सहितो देवः शङ्करो रघुनन्दनम्।
सर्वदेवगणैर्युक्तं स्तोतुं समुपचक्रमे ।।५०

अथ श्रीशिवः रामावेशाधिष्ठानं नारायणं रामावेशं च स्तोतुमुपक्रान्तवानितीत्याह **नवेति**–नवदूर्वादलवत् श्यामं पद्मपत्रायतेक्षणं रविकोटिप्रभायुक्तं रविकोटिप्रभासदृशदीप्तिमन्तम्। यद्वा रविकोटिप्रभया जानक्या युक्तम्। आवेशिनं श्रीरामम् अयुतादित्यसङ्काशं रामावेशाधिष्ठानं आदिनारायणं च दृष्ट्वा स्तोतुं समुपचक्रमे। अन्यथार्थकल्पने रविकोटिप्रभायुक्तम्-अयुतादित्यसङ्काशमित्यार्थिकद्विरुक्तिः रघुनन्दनमिति शाब्दिकद्विरुक्तिश्च दुर्वारैव। ननु प्रभायुक्तैकसूर्यमूर्तिदर्शनाशक्यत्वेन अयुतादित्यसङ्काशं कोटिसूर्यप्रभायुक्तं रामं राज्याभिषेकसमये सर्वे कथमपश्यन्निति चेन्न, श्रीरामदत्तसच्चिदानन्दमयषष्ठशरीरीयचक्षुषा सर्वेषां दर्शनयोग्यत्वात् ।४५-५०।

**श्रीमहादेव उवाच**

नमोऽस्तु रामाय सशक्तिकाय,
नीलोत्पलश्यामलकोमलाय।
किरीटहाराङ्गदभूषणाय,
सिंहासनस्थाय महाप्रभाय ।।५१

**नमोऽस्त्विति**–सशक्तिकाय रामाय नमोऽस्तु। कीदृशाय नीलोत्पलवत् श्यामलः कोमलश्च तस्मै। किरीटाङ्गहाराङ्गदानि भूषणानि यस्य, तेषां भूषणमिति वा तस्मै, सिंहासनस्थाय राजाधिराजाय तर्हि सशक्तिकत्वेन साकारकत्वेन च किं मायासबलितो नेत्याह महाप्रभाय महती ब्रह्मरूपा प्रभा यस्य तस्मै। यत्प्रकाशब्रह्मणः मायासम्बन्धाभावः तस्य प्रकाशिनः कुतो मायासम्बन्धावकाश इति भावः। तर्हि सशक्तिकायेत्यस्य का गतिरिति चेत् सत्यम्-शक्तिशब्देन स्वरूपभूतजानक्याः ग्रहणं तर्हि ईश्वरद्वित्वापत्तिः स्यादिति चेन्न सीतारामयोरैक्यात् तथा च श्रुतिः 'रामः सीता जानकी रामचन्द्रो नित्याखण्डो ये च पश्यन्ति धीराः' इति। 'एकं चापि परं समस्तजगतां ज्योतिर्मयं कारणं, प्रागन्ते च विकारशून्यमगुणं निर्नामिरूपं च यत्। तच्छ्रीरामपदारविन्दनखरप्रान्तस्य तेजोऽमलम्, प्राज्ञा वेदविदो वदन्ति मुनयः तत्त्वं परं नास्त्यतः॥' इति पारमहंसपरमसिद्धान्तसंहितायाम्।५१

त्वमादिमध्यान्तविहीन एकः,
सृजस्यवस्यत्सि च लोकजातम्।
स्वमायया तेन न लिप्यसे त्वं,
यः स्वे सुखेऽजस्ररतोऽनवद्यः॥५२

**त्वमिति**–एकः समाभ्यधिकरहितः त्वं स्वमायया स्वप्रकाशब्रह्मद्वारा लोकजातं सृजसि अवसि अत्सि च, तेन सर्जनादिरूपकर्मणा न लिप्यसे। यस्त्वं स्वसुखे नित्यरामरूपे अजस्ररतः नित्यरतः अत एव अनवद्यः।५२

लीलां विधत्से गुणसंवृतस्त्वं,
प्रपन्नभक्तानुविधानहेतोः ।
नानावतारैः सुरमानुषाद्यैः,
प्रतीयसे ज्ञानिभिरेव नित्यम्॥५३

**लीलामिति**–नन्वेवं मम नित्यविहारित्वे इमे मत्स्याद्यवताराः तल्लीलाश्च किमन्यस्येत्यत आह–गुणसंवृतः कारुण्यादिदिव्यगुणसंयुक्तस्त्वं प्रपन्नभक्तानुविधानहेतोः प्रपन्नाः ये भक्ताः तेषां यदनुविधानं तदवतारे यथारुचि भजनं तस्य हेतो-सुरमानुषाद्यैः नानावतारैर्लीलां विधत्से ज्ञानिभिः तत्तदवतारेऽपि त्वमेव नित्यं प्रतीयसे ज्ञायसे न त्वज्ञानिभिः; तेन अवतारावतारिणोरभेदः सूचितः।५३

स्वांशेन लोकं सकलं विधाय तं,
बिभर्षि च त्वं तदधः फणीश्वरः।
उपर्यथो भान्वनिलोडुपौषधीः,
प्रवर्षरूपोऽवसि नैकधा जगत्॥५४

लीला एवाह **स्वांशेनेति**—स्वांशेन महदंशरूपप्रकाशब्रह्मणा चिदंशेन सकलं लोकं विधाय तदधः स्वांशेन लघुचिदंशेन फणीश्वरः सन् लोकं बिभर्षि। अथोपरिस्वांशेन लघुतरांशेन अचिदंशेन भान्वनिलोडुपौषधीप्रवर्षरूपः भानुरग्निपिण्डः अनिलो वायुः उडुपश्चन्द्रः जलपिण्डः ओषध्यो व्रीह्यादयः प्रवर्षो मेघः एतद्रूपः सन् अनेकधा अवसि। एतेन त्वत्तोऽन्यः जगदीश्वरो नास्तीति व्यक्तम् ।५४

त्वमिह देहभृतां शिखिरूपः,
पचसि भुक्तमशेषमजस्रम् ।
पवनपञ्चकरूपसहायो,
जगदखण्डमनेन बिभर्षि ॥५५

पूर्वोक्तभान्वादिरूपेण पालकत्वं विशदयति **त्वमिति**—देहभृतां देहभृद्भिः अशेषं भुक्तं शिखिरूपः जठराग्निरूपः सन्नजस्रं पचसि। पवनपञ्चकरूपसहायः प्राणादिपञ्चसहाय-स्त्वमनेन प्रकारेण अखण्डं जगद्बिभर्षि । ५५

चन्द्रसूर्यशिखिमध्यगतं यत्,
तेन ईशचिदशेषतनूनाम् ।
प्राभवत्तनुभृतामिह धैर्यं,
शौर्यमायुरखिलं तव सत्त्वम् ॥५६

त्वं विरिञ्चिशिवविष्णुविभेदात्,
कालकर्मशशिसूर्यविभागात् ।
वादिनां पृथगिवेश ! विभासि,
ब्रह्मनिश्चितमनन्यदिहैकम् ॥५७

**त्वमिति**—हे ईश ! विरिञ्चिः ब्रह्मा शिवो रुद्रः विष्णुः हरिः एषां विभेदात् काल-कर्मशशिसूर्याणां वादिनां तत्तद्भक्तेन तत्र तत्रेश्वरत्वाभिमानिनां त्वं पृथगिव तत्तद्रूपेण-भिन्न इव भासि। वस्तुतः निश्चितं ब्रह्म एकमन्यत् चित्, चिदचितोस्त्वद्[१] विग्रहत्वात् तस्य त्वत्[२] प्रकाशत्वात् सच्चिदानन्दत्वेन अनन्यत्वाच्च सर्वं त्वमेवेत्यर्थः ।५७

मत्स्यादिरूपेण यथा त्वमेकः,
श्रुतौ पुराणेषु च लोकसिद्धः ।
तथैव सर्वं सदसद्विभाग-
स्त्वमेव नान्यद्भवतो विभाति ॥५८

---

१. तः २. पर्यन्तभागः मदीयपुस्तके नास्ति ।

**मत्स्यादीति**—यथा मत्स्यादिरूपेण अभिन्नांशेन श्रुतौ वेदे पुराणेषु लोकसिद्धः एकः त्वमेव तथा सदसद्विभागः सदसतोः भिन्नांशयोः चिदचितोर्विभागः भेदोऽपि त्वमेव अतः सर्वं त्वमेव विभासि। भवतः अंशिनः अन्यन्न विभातीत्यर्थः। एतेन सदसतोस्तस्यापि अभेदप्रतिपादने ब्रह्मस्वरूपत्वे 'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदे' त्यादिश्रुति-प्रतिपादितो भेद सत्य इति व्यक्तम्। अमुमेवार्थं विष्णुपुराणीयस्मृतिराह—'यथेश्वरस्य जीवस्य भेदः सत्यो विनिश्चित्वात्, एवमेवेह मे वाचं सत्यं कर्तुमिहार्हसि' इति।५८

यद्यत्समुत्पन्नमनन्तसृष्टा-
वुत्पत्स्यते यच्च भवच्च यच्च।
न दृश्यते स्थावरजङ्गमादौ,
त्वया विनाऽतः परतः परस्त्वम्॥५९

**यद्यदिति**—अत एव अनन्तसृष्टौ अनादिसृष्टौ यद्यत्समुत्पन्नं भूतं यत् उत्पत्स्यते जनिष्यते यच्च भवत् विद्यमानं स्थावरजङ्गमादौ दृश्यते तत्सर्वं त्वया विना त्वत्प्रकाशब्रह्मणा विना न दृश्यते। अत एव त्वं परतः प्रकाशब्रह्मणोऽपि परः। त्वत्तः परं नास्तीत्यर्थः। उक्तञ्च सनत्कुमारसंहितायाम् 'रामः सत्यं परं ब्रह्म रामात्किंचिन्न विद्यते' इति।५९

तत्त्वं न जानन्ति परात्मनस्ते,
जनाः समस्तास्तव माययातः।
त्वद्भक्तसेवाऽमलमानसानां,
विभाति तत्त्वं परमेकमैशम्॥६०

**तत्त्वमिति**—अतोऽवाङ्मनसगोचरस्य तवैशं तत्त्वं नित्यरासे विहारिस्वरूपं त्वद्-भक्तसेवामलमानसानां विभाति स्वयं स्वकृपयैव तेभ्यो प्रकाशयसीति भावः। 'स्वयं कृपातः स्फुरणं प्रयाती'ति श्रुतेः।६०

ब्रह्मादयस्ते न विदुः स्वरूपं,
चिदात्मतत्त्वं बहिरर्थभावाः,।
ततो बुधस्त्वामिदमेवरूपं,
भक्त्या भजन् मुक्तिमुपैत्यदुःखः॥६१

---

१. उद्धरणात्मकोऽयमंशः प्रतिलिपिकारस्य प्रमादेन गद्यायते। अत एव अस्पष्टार्थ-संवलितः। वस्तुतः श्लोकोऽयम् शुद्धरूपोऽनुमानेन यथा—

यथेश्वरस्य जीवस्य भेदः सत्यो विनिश्चितः।
एवमेवेह मे वाचं सत्यं कर्तुमिहार्हसि॥

ब्रह्मादय इति—ब्रह्मादयोऽपि बहिरर्थभावाः बाह्यविषयैषणाशक्ताः ते तव चिदात्मतत्त्वं चिदिति सदानन्दयोरुपलक्षणम्, अवाङ्मनसगोचरं सच्चिदानन्दात्मकं नाम रूपलीलाधामरूपं न विदुः। ननु साक्षाद् वेदकर्तुर्ब्रह्मणोऽपि अविषयत्वेन कथमन्येषां तज्ज्ञानमित्यत आह तत इति। ततः बुधः ब्रह्मनारदादिः भक्त्या इदमेव रूपमेतद्रूपाभिन्नं त्वां भजन् अदुःखः सन् मुक्तिं जीवन्मुक्तिमुपैति। अयं भावः यदा बाह्यविषयासक्ताः ब्रह्मादयस्तदा न विदुः, यदा भक्तियुक्ताः तदा त्वद्रूपादि ज्ञात्वा षष्ठशरीरं प्राप्य मुक्ता इति। एतेन एतन्नामरूपलीलाधामभिः वाङ्मनसगोचरस्य तव नामरूपलीलाधाम स्फुरितं भवतीति व्यक्तम्।६१

अहं भवन्नामगृणन्कृतार्थो,
वसामि काश्यामनिशं भवान्या।
मुमूर्षमाणस्य विमुक्तयेऽहं,
दिशामि मन्त्रं तव राम! नाम॥६२

भक्त्याऽहमपि जानामीत्याह अहमिति—हे राम! मुमूर्षमाणस्य विमुक्तये ते नामरूपं मन्त्रं दिशामीत्यनेन रामनामजपमन्तरा मुक्तिर्नास्तीति व्यक्तम्।६२

इमं स्तवं नित्यमनन्यभक्त्या,
शृण्वन्ति गायन्ति लिखन्ति ये वै।
ते सर्वसौख्यं परमञ्च लब्ध्वा,
भवत्पदं यान्तु भवत्प्रसादात्॥६३

**इन्द्र उवाच**

रक्षोऽधिपेनाखिलदेवसौख्यं,
हृतं च मे ब्रह्मवरेण देव!।
पुनश्च सर्वं भवतः प्रसादात्,
प्राप्तं हतो राक्षसदुष्टशत्रुः॥६४

रामेण रावणकृतदुःखान्मुक्ताः इन्द्रादयः स्वस्वदुःखं वर्णयन्तः तमस्तुवन्नित्याह इन्द्र उवाचेत्यादिना—एतेन रावणस्य जगद्विजयित्वं तेन च श्रीरामस्य पराक्रमातिशयो व्यक्तः।६४

**देवा ऊचुः**

हृता यज्ञभागा धरादेवदत्ता,
मुरारे! खलेनादिदैत्येन विष्णो!।
हतोऽद्य त्वया नो वितानेषु भागाः,
पुरावद्भविष्यन्ति युष्मत्प्रसादात्॥६५

**पितर ऊचुः**

हतोऽद्य त्वया दुष्टदैत्यो महात्मन्!
गयादौ नरैर्दत्तपिण्डादिकान्नः।
बलादत्ति हत्वा गृहीत्वा समस्ता-
निदानीं पुनर्लब्धसत्त्वा भवामः॥६६

**यक्षा ऊचुः**

सदा विष्टिकर्मण्यनेनाभियुक्ता,
वहामो दशास्यं बलाद् दुःखयुक्ताः।
दुरात्मा हतो रावणो राघवेश!
त्वया ते वयं दुःखजाताद्विमुक्ताः॥६७

**गन्धर्वा ऊचुः**

वयं सङ्गीतनिपुणा गायन्तस्ते कथामृतम्।
आनन्दामृतसन्दोहयुक्ताः पूर्णाः स्थिताः पुरा॥६८
पश्चाद् दुरात्मना राम! रावणेनाभिविद्रुताः।
तमेव गायमानाश्च तदाराधनतत्पराः॥६९
स्थितास्त्वया परित्राता हतोऽयं दुष्टराक्षसः।
एवं महोरगाः सिद्धाः किन्नरा मरुतस्तथा॥७०
वसवो मनवो गावो गुह्यकाश्च पतत्त्रिणः।
सप्रजापतयश्चैते तथा चाप्सरसां गणाः॥७१
सर्वे रामं समासाद्य दृष्ट्वा नेत्रमहोत्सवम्।
स्तुत्वा पृथक् पृथक् सर्वे राघवेणाभिनन्दिताः॥७२

ययुः स्वं स्वं पदं सर्वे ब्रह्मरुद्रादयस्तथा।
प्रशंसन्तो मुदा रामं गायन्तस्तस्य चेष्टितम्॥७३

ययुरिति–मुदा रामं प्रशंसन्तः तच्चेष्टितं च गायन्तः ययुः। तेन सर्वेषां देवानां दुर्लभां मुक्तिं श्रीरामो दत्तवानिति सूचितम्। तेन तत्कल्पवासिनोऽपि मुक्ताः भविष्यन्तीति सूचितम्।६३

ध्यायन्तस्त्वभिषेकार्द्रं सीतालक्ष्मणसंयुतम्।
सिंहासनस्थं राजेन्द्रं ययुः सर्वे हृदि स्थितम्॥७४

खे वाद्येषु ध्वनत्सु प्रमुदितहृदयैर्देववृन्दैः स्तुवद्भि-
र्वर्षद्भिःपुष्पवृष्टिं दिवि मुनिनिकरैरीड्यमानः समन्तात्।
रामः श्यामः प्रसन्नस्मितरुचिरमुखः सूर्यकोटिप्रकाशः,
सीतासौमित्रिवातात्मजमुनिहरिभिः सेव्यमानो विभाति॥७५

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे पञ्चदशोऽध्यायः।१५



[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
पञ्चदशोऽध्यायः।१५



---

१. इति युद्धकाण्डे ध्वनिप्रकाशिकायां युद्धकाण्डे पञ्चदशोऽध्यायः रा० व० पु०।

## अथ षोडशोऽध्यायः

रामेऽभिषिक्ते राजेन्द्रे सर्वलोकसुखावहे।
वसुधा सस्यसम्पन्ना फलवन्तो महीरुहाः ॥१

राम इत्यादि—।१

गन्धहीनानि पुष्पाणि गन्धवन्ति चकाशिरे।
सहस्रशतमश्वानां धेनूनां च गवां तथा ॥२

गन्धेति—धेनूनां नवप्रसूतानां गवान्तरव्यतिरिक्तानाम् ।२

ददौ शतवृषान् पूर्वं द्विजेभ्यो रघुनन्दनः।
त्रिंशत्कोटिसुवर्णस्य ब्राह्मणेभ्यो ददौ पुनः ॥३

ददाविति—शतवृषानित्यत्र शतशब्दोऽनन्तवाची।३

वस्त्राभरणरत्नानि ब्राह्मणेभ्यो मुदा तथा।
सूर्यकान्तिसमप्रख्यां सर्वरत्नमयीं स्रजम् ॥४

सुग्रीवाय ददौ प्रीत्या राघवो भक्तवत्सलः।
अङ्गदाय ददौ दिव्ये ह्यङ्गदे रघुनन्दनः ॥५

चन्द्रकोटिप्रतीकाशं मणिरत्नविभूपितम्।
सीतायै प्रददौ हारं प्रीत्या रघुकुलोत्तमः ॥६

अवमुच्यात्मनः कण्ठात् हारं जनकनन्दिनी।
अवैक्षत हरीन् सर्वान् भर्तारं च मुहुर्मुहुः ॥७

रामस्तामाह वैदेहीमिङ्गितज्ञो विलोकयन्।
वैदेहि! यस्य तुष्टासि देहि तस्मै वरानने! ॥८

हनूमते ददौ हारं पश्यतो राघवस्य च।
तेन हारेण शुशुभे मारुतिर्गौरवेण च ॥९

हनूमते इति—गौरवेण सीतादरेण सीतया दत्तत्वेन परमादरात्तं हारं कण्ठे धृत्वा तेन शुशुभे। पश्चाद्रामनामहीनत्वेन तं पुस्फोटेति बोध्यम्।९

रामोऽपि मारुतिं दृष्ट्वा कृताञ्जलिमुपस्थितम्।
भक्त्या परमया तुष्ट इदं वचनमब्रवीत्॥१०

रामोऽपीति—परमया भक्त्या तुष्टः, परमत्वञ्च सीतादत्तहारैकैकमणीनां रदनेन खण्डनमवलोक्य सुग्रीवेणोक्तं, कुत एतत्खण्डनं कृतमिति श्रीरामनामहीनत्वात्खण्डितमिति हनुमदुक्तं श्रुत्वा पुनः सुग्रीवेणोक्तं तर्हि तद्रहितं शरीरं कथं धृतवानसि, तच्छ्रुत्वा स्वशरीरं विदार्य श्रीरामनाम दर्शितवानिति जैमिनीयाख्यायिकारूपं। तेन च हनुमतः प्रतिरोम श्रीरामनामस्मरणं तैलधारावदविच्छिन्नं भवतीति व्यक्तम्।१०

हनूमंस्ते प्रसन्नोऽस्मि वरं वरय काङ्क्षितम्।
दास्यामि देवैरपि यद् दुर्लभं भुवनत्रये॥११
हनूमानपि तं प्राह नत्वा रामं प्रहृष्टधीः।
त्वन्नाम स्मरतो राम! न तृप्यति मनो मम॥१२
अतस्त्वन्नाम सततं स्मरन् स्थास्यामि भूतले।
यावत् स्थास्यति ते नाम लोके तावत् कलेवरम्॥१३

अत इति—अतस्त्वन्नामेत्यादि हनुमद्रप्रार्थनया पञ्चविधमुक्तेरपि भक्तिरधिकेति व्यक्तम्। उक्तं भागवते 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः।' इति।१३

मम तिष्ठतु राजेन्द्र! वरोऽयं मेऽभिकाङ्क्षितः।
रामस्तथेति तं प्राह मुक्तस्तिष्ठ यथासुखम्॥१४

ममेति—मुक्तः सततं मम नाम स्मरन् जीवन्मुक्तः सन् तिष्ठेत्यर्थः। तेन हनूमतः रामोपासकत्वं व्यक्तम्। उक्तञ्च स्कान्दीयकोसलखण्डे, 'रासमण्डलगं रामं गीतनर्तनसंयुतम्। यो वै विकल्पयेद्विष्णुं जीवन्मुक्तो भवेत्तु सः'।१४

कल्पान्ते मम सायुज्यं प्राप्स्यसे नात्र संशयः।
तमाह जानकी प्रीता यत्र कुत्रापि मारुते!॥१५

कल्पान्त इति—सायुज्यम्—सह युनक्तीति सयुक् सयुजो भावः सायुज्यं नित्यरासगतस्य ममालिङ्गनादिकं चारुशीलारूपेण प्राप्स्यसे।१५

स्थितं त्वामनुयास्यन्ति भोगाः सर्वे ममाज्ञया।
इत्युक्तो मारुतिस्ताभ्यामीश्वराभ्यां प्रहृष्टधीः ॥१६
आनन्दाश्रुपरीताक्षो भूयो भूयः प्रणम्य तौ।
कृच्छ्राद्ययौ तपस्तप्तुं हिमवन्तं महामतिः ॥१७

**स्थितमित्यादि**—हिमवन्तं ययौ, हिमवत्स्थगन्धमादने रासलीलां तद्ध्यानं च कर्तुं ययौ। ईश्वराभ्यां सीतारामाभ्यामित्युक्तः। अत एव प्रहृष्टधीः कृच्छ्राद्ययौ, क्षणमपि तद्विरहदुःसहत्वेन। एतेन मन्नामस्मरणे विच्छेदो मा भूदिति। अयं तु मद्रासे चारुशीला-सखीरूपेण स्थित एवेति च मत्सभामागन्तुमपि शक्तः इति विचार्य श्रीरामो गन्धमादने तं प्रेषितवानिति। तेन उभयोः प्रेमातिशयो व्यक्तः। १६-१७

ततो गुहं समासाद्य रामः प्राञ्जलिमब्रवीत्।
सखे! गच्छ पुरं रम्यं शृङ्गवेरमनुत्तमम् ॥१८

**तत इति**—गुहं रामः [1]प्राञ्जलिमब्रवीदित्यनेन सेवां विहाय राज्यमनिच्छन्तमपि तं सङ्कोचेन राज्ये नियोजितवानिति व्यक्तम्।१८

मामेव चिन्तयन्नित्यं भुङ्क्ष्व भोगान्निजार्जितान्।
अन्ते ममैव सारूप्यं प्राप्स्यसे त्वं न संशयः ॥१९

**मामेवेति**—मामनुस्मरन् निजार्जितान् मदीयसख्येऽनुप्राप्तान् राज्यभोगान्।१९

इत्युक्त्वा प्रददौ तस्मै दिव्यान्याभरणानि च।
राज्यं च विपुलं दत्त्वा विज्ञानं च ददौ विभुः ॥२०

**इत्युक्त्वेति**—राज्यं च विपुलं गुहराज्यादधिकं चित्रकूटपर्यन्तं दत्त्वा विज्ञानं चित्रकूटे सीतालक्ष्मणाभ्यां सह सदैव तिष्ठामीति विशेषज्ञानं ददौ। एतेन राज्याङ्गीकारेऽपि चित्रकूटे सदैव मत्सेवाङ्करिष्यसीति सूचितम्। तेन च गुहस्य श्रीरामसेवैकरसिकत्वं व्यक्तम्। अत एव गुहाम् रायते इति व्युत्पत्त्या लोकेऽपि गुहोरा इति प्रसिद्धम्।२०

रामेणालिङ्गितो हृष्टो ययौ स्वभवनं गुहः।
ये चान्ये वानरश्रेष्ठा अयोध्यां समुपागताः ॥२१
अमूल्याभरणैर्वस्त्रैः पूजयामास राघवः।
सुग्रीवप्रमुखाः सर्वे वानराः सविभीषणाः ॥२२

---

१. प्राञ्जलिः इति मत्पुस्तके।

यथार्हं पूजितास्तेन रामेण परमात्मना।
प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ॥२३

**यथार्हमिति**–प्रहृष्टमनसः सर्वे इत्यनेन प्रत्यहं श्रीरामसमीपागमने तेषां शक्तिरस्तीति व्यक्तम् ।२३

सुग्रीवप्रमुखाः सर्वे किष्किन्धां प्रययुर्मुदा।
विभीषणस्तु संप्राप्य राज्यं निहतकण्टकम् ॥२४
रामेण पूजितः प्रीत्या ययौ लङ्कामनिन्दितः।
राघवो राज्यमखिलं शशासाखिलवत्सलः ॥२५
अनिच्छन्नपि रामेण यौवराज्येऽभिषेचितः।
लक्ष्मणः परया भक्त्या रामसेवापरोऽभवत् ॥२६

**अनिच्छन्निति**–लक्ष्मणः यौवराज्यमनिच्छन्नपि रामेणाभिषेचितः। एतेन भरतः श्रीरामेण दीयमानमपि यौवराज्यं न स्वीचकारेति। तेन च प्रेमातिशयो व्यज्यते ।२६

रामस्तु परमात्मापि कर्माध्यक्षोऽपि निर्मलः।
कर्तृत्वादिविहीनोऽपि निर्विकारोऽपि सर्वदा ॥२७
स्वानन्देनापि तुष्टः सन् लोकानामुपदेशकृत्।
अश्वमेधादियज्ञैश्च सर्वैर्विपुलदक्षिणैः ॥२८

**स्वानन्देनेति**–स्वानन्देन तुष्ट इत्यनेन लौकिकानन्दसामग्रीनिरपेक्षत्वमुक्तम्। लोकानामुपदेशकृत्, अनेन लोकोपदेश एव यज्ञाद्यनुष्ठाने प्रयोजनमुक्तम्। तेन च कारुण्यातिशयो व्यक्तः ।२८

अयजत्परमानन्दो मानुषं वपुराश्रितः।
न पर्यदेवन् विधवा न च व्यालकृतं भयम् ॥२९

**अयजदिति**–मानुषं वपुः नराकारनारायणशरीरं आवेशेनाश्रितः ।२९

न व्याधिजं भयं चासीद्रामे राज्यं प्रशासति।
लोके दस्युभयं नासीदनर्थो नास्ति कश्चन ॥३०
वृद्धेषु सत्सु बालानां नासीन्मृत्युभयं तथा।
रामपूजापराः सर्वे सर्वे राघवचिन्तकाः ॥३१

ववर्षुर्जलदास्तोयं यथाकालं यथारुचि ।
प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः ॥३२
औरसानिव रामोऽपि जुगोप पितृवत्प्रजाः ।
सर्वलक्षणसंयुक्तः सर्वधर्मपरायणः ॥३३
दशवर्षसहस्राणि रामो राज्यमुपास्त सः ॥३४

इदं रहस्यं धनधान्यऋद्धिम-
दीर्घायुरारोग्यकरं सुपुण्यदम् ।
पवित्रमाध्यात्मिकसंज्ञितं पुरा,
रामायणं भाषितमादिशंभुना ॥३५

शृणोति भक्त्या मनुजः समाहितो,
भक्त्या पठेद्वा परितुष्टमानसः ।
सर्वाः समाप्नोति मनोगताशिषो,
विमुच्यते पातककोटिभिः क्षणात् ॥३६

रामाभिषेकं प्रयतः शृणोति यो,
धनाभिलाषी लभते महद्धनम् ।
पुत्राभिलाषी सुतमार्यसम्मतं,
प्राप्नोति रामायणमादितः पठन् ॥३७

शृणोति योऽध्यात्मिकरामसंहितां,
प्राप्नोति राजा भुवमृद्धसम्पदम् ।
शत्रून्विजित्यारिभिरप्रधर्षितो,
व्यपेतदुःखो विजयी भवेन्नृपः ॥३८

स्त्रियोऽपि शृण्वन्त्यधिरामसंहितां,
भवन्ति ता जीविसुताश्च पूजिताः ।
वन्ध्याऽपि पुत्रं लभते सुरूपिणं,
कथामिमां भक्तियुता शृणोति या ॥३९

श्रद्धान्वितो यः शृणुयात्पठेन्नरो,
　　विजित्य कोपञ्च तथा विमत्सरः।
दुर्गाणि सर्वाणि विजित्य निर्भयो,
　　भवेत्सुखी राघवभक्तिसंयुतः॥४०

सुराः समस्ता अपि यान्ति तुष्टतां,
　　विघ्नाः समस्ता अपयान्ति शृण्वताम्।
अध्यात्मरामायणमादितो नृणां,
　　भवन्ति सर्वा अपि सम्पदः पराः॥४१

रजस्वला वा यदि रामतत्परा,
　　शृणोति रामायणमेतदादितः।
पुत्रं प्रसूते ऋषभं चिरायुषं,
　　पतिव्रता लोकसुपूजिता भवेत्॥४२

पूजयित्वा तु ये भक्त्या नमस्कुर्वन्ति नित्यशः।
सर्वपापैर्विनिर्मुक्ता विष्णोर्यान्ति परं पदम्॥४३

अध्यात्मरामचरितं कृत्स्नं शृण्वन्ति भक्तितः।
पठन्ति वा स्वयं वक्त्रात्तेषां रामः प्रसीदति॥४४

राम एव परं ब्रह्म तस्मिंस्तुष्टेऽखिलात्मनि।
धर्मार्थकाममोक्षाणां यद्यदिच्छति तद् भवेत्॥४५
श्रोतव्यं नियमेनैतद्रामायणमखण्डितम्।
आयुष्यमारोग्यकरं कल्पकोट्यघनाशनम्॥४६
देवाश्च सर्वे तुष्यन्ति ग्रहाः सर्वे महर्षयः।
रामायणस्य श्रवणे तुष्यन्ति पितरस्तथा॥४७

अध्यात्मरामायणमेतदद्भुतं,
　　वैराग्यविज्ञानयुतं पुरातनम्।
पठन्ति शृण्वन्ति लिखन्ति ये नरा-
　　स्तेषां भवेऽस्मिन्नपुनर्भवो भवेत्॥४८

आलोड्याखिलवेदराशिमसकृद्यत्तारकं ब्रह्म त-
द्रामो विष्णुरहस्यमूर्तिरिति यो विज्ञाय भूतेश्वरः।
उद्धृत्याखिलसारसंग्रहमिदं संक्षेपतः प्रस्फुटं,
श्रीरामस्य निगूढतत्त्वमखिलं प्राह प्रियायै भवः ॥४९

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
युद्धकाण्डे षोडशोऽध्यायः। १६

⊙

श्रीराम एव सर्वोपास्य इत्याह **आलोड्येति**—यः भूतेश्वरः अखिलवेदराशिम्-असकृदालोड्य निर्मथ्य यत्तारकं ब्रह्म तद्राम इति विज्ञाय ततश्च अखिलसारसङ्ग्रहमुद्धृत्य इदं श्रीरामस्याखिलं निगूढतत्त्वं प्रस्फुटं यथा भवति तथा संक्षेपतः प्रियायै प्राह, तस्मै नमः। अखिलवेदराशिमालोड्येत्यनेन ब्रह्मणा अखिलवेदे सारभूतं तारकं स्थापितमिति। तेन च ब्रह्मोपास्यत्वं रामस्येति व्यक्तम्। तद्विज्ञायेत्यनेन शिवोपास्यत्वं व्यक्तम्। प्रियायै प्राहेत्यनेन पार्वत्युपास्यत्वम्। विष्णुरहस्यमूर्तिरित्यनेन विष्णूपास्यत्वं ब्रह्मविष्णुशिवोपास्यत्वात् सर्वोपास्य इत्यर्थ इति भावः।४९

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायां युद्धकाण्डे
षोडशोऽध्यायः।१६

⊙

---

१. इति श्रीयुद्धकाण्डे ध्वनिप्रकाशिकायां षोडशोऽध्यायः इति रा० ब० पु०।

# उत्तरकाण्डम्

## अथ प्रथमोऽध्यायः

**श्रीपार्वत्युवाच**

अथ राम: किमकरोत् कौशल्यानन्दवर्धन:।
हत्वा मृधे रावणादीन् राक्षसान् भीमविक्रम: ।।१

**अथेति**–अथ अभिषेकानन्तरम्।१

अभिषिक्तस्त्वयोध्यायां सीतया सह राघव:।
मायामानुषतां प्राप्य कति वर्षाणि भूतले ।।२

**अभिषिक्त इति**–मायया कृपया मानुषभावम्-मानुषस्य श्रीरामस्यावेशम्।२

स्थितवान् लीलया देव: परमात्मा सनातन:।
अत्यजन् मानुषं लोकं कथमन्ते रघूद्वह: ।।३

**स्थितवान् इति**–अन्ते एतद्रमणीयलीलावसाने मानुषं लोकं कथमत्यजत्। स्वावेशाधिष्ठानात् नारायणात् नि:सृत्य प्रमोदवनं कथं जगामेत्यर्थ:। नारायणश्चतुर्भुजरूपे वैकुण्ठं जगामेत्यर्थ:।३

एतदाख्याहि भगवन्! श्रद्दधत्या मम प्रभो!।
कथापीयूषमास्वाद्य तृष्णा मेऽतीव वर्धते।
रामचन्द्रस्य भगवन्! ब्रूहि विस्तरश: कथाम् ।।४

**श्रीमहादेव उवाच**

राक्षसानां वधं कृत्वा राज्ये राम उपस्थिते।
आययुर्मुनय: सर्वे श्रीराममभिनन्दितुम् ।।५
विश्वामित्रोऽसित: कण्वो दुर्वासा भृगुरङ्गिरा:।
कश्यपो वामदेवोऽत्रिस्तथा सप्तर्षयोऽमला: ।।६
अगस्त्य: सहशिष्यैश्च मुनिभि: सहितोऽभ्यगात्।
द्वारमासाद्य रामस्य द्वारपालमथाऽब्रवीत् ।।७

ब्रूहि रामाय मुनयः समागत्य बहिःस्थिताः।
अगस्त्यप्रमुखाः सर्वे आशीर्भिरभिनन्दितुम् ॥८
प्रतीहारस्ततो राममगस्त्यवचनाद् द्रुतम्।
नमस्कृत्याब्रवीद् वाक्यं विनयावनतः प्रभुम् ॥९

**प्रतीहार इति**–द्रुतमित्यस्य राजनिवेदनमन्तरा तत्समीपे न गन्तव्यमिति नीतिमङ्गीकृत्यैव स्थितान् मुनीन् दृष्ट्वा मुनयो न [1]निरोद्धव्या इति रामाज्ञाभङ्गभिया तत्र द्रुतङ्गत इत्याशयः।९

कृताञ्जलिरुवाचेदमगस्त्यो मुनिभिः सह।
देव! त्वद्दर्शनार्थाय प्राप्तो बहिरुपस्थितः ॥१०
तमुवाच द्वारपालं प्रवेशय यथासुखम्।
पूजिता विविशुर्वेश्म नानारत्नविभूषितम् ॥११
दृष्ट्वा रामो मुनीञ्छीघ्रं प्रत्युत्थाय कृताञ्जलिः।
पाद्यार्घ्यादिभिरापूज्य गां निवेद्य यथाविधि ॥१२

**दृष्ट्वेति**–गां मधुपर्कार्हीं प्रत्यहं घृतदुग्धसाधनां धेनुं मधुपर्कार्थिम्।१२

नत्वा तेभ्यो ददौ दिव्यान्यासनानि यथार्हतः।
उपविष्टाः प्रहृष्टाश्च मुनयो रामपूजिताः ॥१३

**नत्वेति**–अर्हता योग्यता तदनतिक्रमात्, यतो रामपूजिताः अतः प्रहृष्टाः सर्वदाऽस्य पूजका अपीदानीमनेन पूजिताः इति हर्षं प्राप्ताः।१३

सम्पृष्टकुशलाः सर्वे रामं कुशलमब्रुवन्।
कुशलं ते महाबाहो! सर्वत्र रघुनन्दन! ॥१४
दिष्ट्येदानीं प्रपश्यामो हतशत्रुमरिन्दम! ॥१५
नहि भारः स ते राम! रावणो राक्षसेश्वरः ॥१६
सधनुस्त्वं हि लोकांस्त्रीन् विजेतुं शक्त एव हि।
दिष्ट्या त्वया हताः सर्वे राक्षसा रावणादयः ॥१७
सह्यमेतन् महाबाहो! रावणस्य निवर्हणम्।
असह्यमेतत् सम्प्राप्तं रावणेर्यन्निषूदनम् ॥१८

---

१. मूले निरोधितव्या इति पाठः।

सह्यमिति–रावणेर्मेघनादस्य यन्निषूदनं हननं प्राप्तम् तेन स्वस्तुतितः भक्तस्तुतौ श्रीरामोऽतीवप्रसन्नो भवतीति हेतुर्व्यक्तः।१८

अन्तकप्रतिमाः सर्वे कुम्भकर्णादयो मृधे।
अन्तकप्रतिमैर्बाणैर्हतास्ते रघुसत्तम! ॥१९

दत्ता चेयं त्वयाऽस्माकं पुरा ह्यभयदक्षिणा।
हत्वा रक्षोगणान् सङ्ख्ये कृतकृत्योऽद्य जीवसि॥२०

श्रुत्वा तु भाषितं तेषाम् मुनीनां भावितात्मनाम्।
विस्मयं परमङ्गत्वा रामः प्राञ्जलिरब्रवीत्॥२१

रावणादीनतिक्रम्य कुम्भकर्णादिराक्षसान्।
त्रिलोकजयिनो हित्वा किं प्रशंसथ रावणिम्॥२२

ततस्तद् वचनं श्रुत्वा राघवस्य महात्मनः।
कुम्भयोनिर्महातेजा रामं प्रीत्या वचोऽब्रवीत्॥२३

शृणु राम! यथावृत्तं रावणेः रावणस्य च।
जन्मकर्म वरादानं संक्षेपाद् वदतो मम॥२४

पुरा कृतयुगे राम! पुलस्त्यो ब्रह्मणः सुतः।
तपस्तप्तुङ्गतो विद्वान् मेरोः पार्श्वं महामतिः॥२५

तृणविन्दोराश्रमेऽसौ न्यवसन् मुनिपुङ्गवः।
तपस्तेपे महातेजाः स्वाध्यायनिरतः सदा॥२६

तत्राश्रमे महारम्ये देवगन्धर्वकन्यकाः।
गायन्त्यो ननृतुस्तत्र हसन्त्यो वादयन्ति च॥२७

पुलस्त्यस्य तपोविघ्नं चक्रुः सर्वा अनिन्दिताः।
ततः क्रुद्धो महातेजा व्याजहार वचो महत्॥२८

या मे दृष्टिपथं गच्छेत् सा गर्भं धारयिष्यति।
ताः सर्वाः शापसंविग्ना न तं देशं प्रचक्रमुः॥२९

तृणविन्दोस्तु राजर्षेः कन्या तन्नाशृणोद् वचः।
विचचार मुनेरग्रे निर्भया तं प्रपश्यती॥३०

तृणविन्दोरिति–प्रपश्यतीत्यत्र नुमभाव आर्षः।३०

बभूव पाण्डुरतनुर्व्यञ्जितान्तःशरीरजा।
दृष्ट्वा सा देहवैवर्ण्यं भीता पितरमन्वगात्॥३१

**बभूवेति**–व्यञ्जितः प्रकटीकृतोऽन्तः मध्ये शरीरजो गर्भो यस्याः सा।३१

तृणविन्दुश्च तां दृष्ट्वा राजर्षिरमितद्युतिः।
ध्यात्वा मुनिकृतं सर्वमवैद् विज्ञानचक्षुषा॥३२

तां कन्यां मुनिवर्याय पुलस्त्याय ददौ पिता।
तां प्रगृह्याब्रवीत् कन्यां बाढमित्येव स द्विजः॥३३

शुश्रूषणपरां दृष्ट्वा मुनिः प्रीतोऽब्रवीद् वचः।
दास्यामि पुत्रमेकं त उभयोर्वंशवर्धनम्॥३४

ततः प्रासूत सा पुत्रं पुलस्त्याल्लोकविश्रुतम्।
विश्रवा इति विख्यातः पौलस्त्यो ब्रह्मविन्मुनिः॥३५

तस्य शीलादिकं दृष्ट्वा भरद्वाजो महामुनिः।
भार्यार्थं स्वां दुहितरं ददौ विश्रवसे मुदा॥३६

तस्यां तु पुत्रः सञ्जज्ञे पौलस्त्याल्लोकसम्मतः।
पितृतुल्यो वैश्रवणो ब्रह्मणा चानुमोदितः॥३७

ददौ तत्तपसा तुष्टो ब्रह्मा तस्मै वरं शुभम्।
मनोऽभिलषितं तस्य धनेशत्वमखण्डितम्॥३८

ततो लब्धवरः सोऽपि पितरं द्रष्टुमागतः।
पुष्पकेण धनाध्यक्षो ब्रह्मदत्तेन भास्वता॥३९

नमस्कृत्याथ पितरं निवेद्य तपसः फलम्।
प्राह मे भगवान् ब्रह्मा दत्त्वा वरमनिन्दितम्॥४०

निवासाय न मे स्थानं दत्तवान् परमेश्वरः।
ब्रूहि मे नियतं स्थानं हिंसा यत्र न कस्यचित्॥४१

विश्रवा अपि तं प्राह लङ्का नाम पुरी शुभा।
राक्षसानां निवासाय निर्मिता विश्वकर्मणा॥४२

त्यक्त्वा विष्णुभयाद् दैत्या विविशुस्ते रसातलम्।
सा पुरी दुष्प्रधर्षाऽन्यैर्मध्ये सागरमास्थिता ॥४३

तत्र वासाय गच्छ त्वं नान्यैः साऽधिष्ठिता पुरा।
पित्रादिष्टस्त्वसौ गत्वा तां पुरीं धनदोऽविशत् ॥४४

स तत्र सुचिरं कालमुवास पितृसम्मतः।
कस्यचित्त्वथ कालस्य सुमाली नाम राक्षसः ॥४५

रसातलान्मर्त्यलोकं चचार पिशिताशनः।
गृहीत्वा तनयां कन्यां साक्षाद् देवीमिव श्रियम् ॥४६

अपश्यद् धनदं देवं चरन्तम् पुष्पकेण सः।
हिताय चिन्तयामास राक्षसानां महामनाः ॥४७

उवाच तनयां तत्र कैकसीं नाम नामतः।
वत्से! विवाहकालस्ते यौवनं चातिवर्तते ॥४८

प्रत्याख्यानाच्च भीतैस्त्वं न वरैर्गृह्यसे शुभे!।
सा त्वं वरय भद्रन्ते मुनिं ब्रह्मकुलोद्भवम् ॥४९

स्वयमेव ततः पुत्रा भविष्यन्ति महाबलाः।
ईदृशाः सर्वशोभाढ्या धनदेन समा शुभे! ॥५०

तथेति साऽऽश्रमं गत्वा मुनेरग्रे व्यवस्थिता।
लिखन्ती भुवमग्रेण पादेनाधोमुखी स्थिता ॥५१

तामपृच्छन्मुनिः का त्वं कन्यासि वरवर्णिनि!।
साऽब्रवीत् प्राञ्जलिर्ब्रह्मन्! ध्यानेन ज्ञातुमर्हसि ॥५२

ततो ध्यात्वा मुनिः सर्वं ज्ञात्वा तां प्रत्यभाषत।
ज्ञातं तवाभिलषितं मत्तः पुत्रानभीप्स्यसि ॥५३

दारुणायान्तु वेलायामागतासि सुमध्यमे!।
अतस्ते दारुणौ पुत्रौ राक्षसौ सम्भविष्यतः ॥५४

साऽब्रवीन्मुनिशार्दूल! त्वत्तोऽप्येवंविधौ सुतौ।
तामाह पश्चिमो यस्ते भविष्यति महामतिः ॥५५

महाभागवतः श्रीमान् रामभक्त्येकतत्परः।
इत्युक्ता सा तथा काले सुषुवे दशकन्धरम् ॥५६

रावणं विंशतिभुजं दशशीर्षं सुदारुणम्।
तद्रक्षोजातमात्रेण चचाल च वसुन्धरा ॥५७

बभूवुर्नाशहेतूनि निमित्तान्यखिलान्यपि।
कुम्भकर्णस्ततो जातो महापर्वतसन्निभः ॥५८

ततः शूर्पणखा नाम जाता रावणसोदरी।
ततो विभीषणो जातः शान्तात्मा सौम्यदर्शनः ॥५९

स्वाध्यायी नियताहारो नित्यकर्मपरायणः।
कुम्भकर्णस्तु दुष्टात्मा द्विजान् सन्तुष्टचेतसः ॥६०

भक्षयन्नृषिसङ्घांश्च विचचारातिदारुणः।
रावणोऽपि महासत्त्वो लोकानां भयदायकः ॥६१
ववृधे लोकनाशाय ह्यामयो देहिनामिव ॥६२

राम ! त्वं सकलान्तरस्थमभितो जानासि विज्ञानदृक्,
साक्षी सर्वहृदि स्थितो हि परमे नित्योदितो निर्मलः।
त्वं लीलामनुजाकृतिः स्वमहिमन् ! मायागुणैर्नाज्यसे,
लीलार्थं प्रतिचोदितोऽद्य भवता वक्ष्यामि रक्षोद्भवम् ॥६३

**रामेति**—रक्षोद्भवमित्यत्र सन्धिरार्षः।६३

जानामि केवलमचिन्त्यमनन्तशक्तिं,
चिन्मात्रमक्षरमजं विदितात्मतत्त्वम्।
त्वां राम ! गूढनिजरूपमनुप्रवृत्तो,
मूढोऽप्यहं भवदनुग्रहतश्चरामि ॥६४

**जानामीति**—ब्रह्मादिभिर्विदितं ज्ञातं तत्त्वं नारायणे-आवेशरूपं यस्य तं गूढनिजरूपं रासमण्डलस्थनित्यविहारिरूपं भवदनुग्रहतः सखीरूपेणानुशरणशीलः सन् तत्रैव चरामीत्येव ते ध्यानं कुर्वन् चरामीति अतस्त्वां जानामि।६४

एवं वदन्तमिनवंशपवित्रकीर्तिः,
कुम्भोद्भवं रघुपतिः प्रहसन बभाषे।
मायाश्रितं सकलमेतदनन्यकत्वा-
न्मत्कीर्तनञ्जगति पापहरन्निबोध ॥६५

इति श्रीबृहद्ब्रह्माण्डपुराणे अध्यात्मरामायणे उमामहेश्वरसंवादे
उत्तरकाण्डे प्रथमोऽध्यायः ।१

⊙

**एवमिति**–अनन्यकत्वात् एतदपेक्षयाऽन्यस्याऽप्राधान्यादेव यन्मत्कीर्तनन्तदेव मद्रासज्ञानप्रतिबन्धकीभूतपापहरं एतद्भिन्नं सर्वं मायाश्रितमित्यर्थः। एतेन मद्ज्ञानादेवावाङ्मनसगोचररासज्ञानं तव स्फुरितमिति व्यक्तम्। प्रहसन् इत्यनेन पूर्वसूचितसखीरूपस्य स्वीकृतत्वात् तद्रूपं प्रत्येव बभाषे इत्याशयः। 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति' स्मृतेः।६५

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामुत्तरकाण्डे
प्रथमोऽध्यायः ।१

⊙

---

१. इति सिद्धिश्रीमहाराजाश्रीराजाबहादुरसीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां बृहद्ब्रह्माण्डपुराणीयाध्यात्मरामायणटीकायां ध्वनिप्रकाशिकायाम्-उत्तरकाण्डे प्रथमोऽध्यायः। १ रा० व० पु०।

## अथ द्वितीयोऽध्यायः

अथ वित्तेश्वरो देवस्तत्र कालेन केनचित्।
आययौ पुष्पकारूढः पितरं द्रष्टुमञ्जसा ॥१

अथेत्यादि।१

दृष्ट्वा तं कैकसी तत्र भ्राजमानं महौजसम्।
राक्षसी पुत्रसामीप्यं गत्वा रावणमब्रवीत् ॥२
पुत्र! पश्य धनाध्यक्षं ज्वलन्तं स्वेन तेजसा।
त्वमप्येवं यथा भूयास्तथा यत्नं कुरु प्रभो! ॥३
तच्छ्रुत्वा रावणो रोषात् प्रतिज्ञामकरोद् द्रुतम्।
धनदेन समो वापि ह्यधिको वाऽचिरेण तु ॥४
भविष्याम्यम्ब! माम् पश्य सन्तापं त्यज सुव्रते!।
इत्युक्त्वा दुष्करं कर्तुं तपः स दशकन्धरः ॥५
अगमत् फलसिद्ध्यर्थं गोकर्णन्तु सहानुजः।
स्वं स्वं नियममास्थाय भ्रातरस्ते तपो महत् ॥६
आस्थिता दुष्करं घोरं सर्वलोकैकतापनम्।
दशवर्षसहस्राणि कुम्भकर्णोऽकरोत्तपः ॥७
विभीषणोऽपि धर्मात्मा सत्यधर्मपरायणः।
पञ्चवर्षसहस्राणि पादेनैकेन तस्थिवान् ॥८
दिव्यवर्षसहस्रन्तु निराहारो दशाननः।
पूर्णे वर्षसहस्रे तु शीर्षमग्नौ जुहाव सः ॥९
एवं वर्षसहस्राणि नव तस्यातिचक्रमुः।
अथ वर्षसहस्रन्तु दशमे दशमं शिरः ॥१०

छेत्तुकामस्य धर्मात्मा प्राप्तश्चाथ प्रजापतिः ।
वत्स ! वत्स ! दशग्रीव ! प्रीतोऽस्मीत्यभ्यभाषत ॥११
वरं वरय दास्यामि यत्ते मनसि काङ्क्षितम् ।
दशग्रीवोऽपि तच्छ्रुत्वा प्रहृष्टेनान्तरात्मना ॥१२
अमरत्वं वृणोमीश ! वरदो यदि मे भवान् ।
सुपर्णनागयक्षाणां देवतानां तथाऽसुरैः ॥१३
अवध्यत्वं तु मे देहि तृणभूता तु मानुषाः ।
तथास्त्विति प्रजाध्यक्षः पुनराह दशाननम् ॥१४
अग्नौ हुतानि शीर्षाणि यानि तेऽसुरपुङ्गव ! ।
भविष्यन्ति यथापूर्वमक्षयाणि च सत्तम ! ॥१५
एवमुक्त्वा ततो राम ! दशग्रीवं प्रजापतिः ।
विभीषणमुवाचेदम् प्रणतं भक्तवत्सलः ॥१
विभीषण ! त्वया वत्स ! कृतं धर्मार्थमुत्तमम् ।
तपस्ततो वरं वत्स ! वृणीष्वाभिमतं हितम् ।
विभीषणोऽपि तं नत्वा प्राञ्जलिर्वाक्यमब्रवीत् ॥१७
देव ! मे सर्वथा बुद्धिर्धर्मे तिष्ठतु शाश्वती ।
मा रोचयत्वधर्मं मे बुद्धिः सर्वत्र सर्वदा ॥१८
ततः प्रजापतिः प्रीतो विभीषणमथाब्रवीत् ।
वत्स ! त्वं धर्मशीलोऽसि तथैव च भविष्यसि ॥१९
अयाचितोऽपि ते दास्ये ह्यमरत्वं विभीषण ! ।
कुम्भकर्णमथोवाच वरं वरय सुव्रत ! ॥२०

**अयाचित इति**–हे विभीषण ! अमरत्वं ते दास्ये इत्युक्तिस्तु भविष्ये श्रीरामदत्तामरत्वाभिप्रायेणेति बोध्यम् ।२०

वाण्या व्याप्तोऽथ तं प्राह कुम्भकर्णः पितामहम् ।
स्वप्स्यामि देव ! षण्मासान् दिनमेकन्तु भोजनम् ॥२१
एवमस्त्विति तं प्राह ब्रह्मा दृष्ट्वा दिवौकसः ।
सरस्वती च तद्वक्त्रान्निर्गता प्रययौ दिवम् ॥२२

कुम्भकर्णस्तु दुष्टात्मा चिन्तयामास दुःखितः।
अनभिप्रेतमेवाऽस्यात् किं निर्गतमहो विधिः॥२३
सुमाली वरलब्धांस्तान् ज्ञात्वा पौत्रान् निशाचरान्।
पातालान्निर्भयः प्रायात् प्रहस्तादिभिरन्वितः॥२४
दशग्रीवं परिष्वज्य वचनञ्चेदमब्रवीत्।
दिष्ट्या ते पुत्र संवृत्तो वाञ्छितो मे मनोरथः॥२५
यद्भयाच्च वयं लङ्कां त्यक्त्वा याता रसातलम्।
तद्गतं नो महाबाहो! महद् विष्णुकृतम् भयम्॥२६
अस्माभिः पूर्वमुषिता लङ्केयं धनदेन ते।
भ्रात्राक्रान्तामिदानीं त्वं प्रत्यानेतुमिहार्हसि॥२७
साम्ना वाथ बलेनापि राज्ञां बन्धुः कुतः सुहृत्।
इत्युक्तो रावणः प्राह नार्हस्येवम् प्रभाषितुम्॥२८
वित्तेशो गुरुरस्माकमेवं श्रुत्वा तमब्रवीत्।
प्रहस्तः प्रश्रितं वाक्यं रावणं दशकन्धरम्॥२९
शूराणां नहि सौभ्रात्रं शृणु मे वदतः प्रभो!।
कश्यपस्य सुता देवा राक्षसाश्च महाबलाः॥३०
परस्परमयुध्यन्त त्यक्त्वा सौहृदमायुधैः।
नैवेदानीन्तनं राजन्! वैरं दैवैरनुष्ठितम्॥३१
प्रहस्तस्य वचः श्रुत्वा दशग्रीवो दुरात्मनः।
तथेति क्रोधताम्राक्षस्त्रिकूटाचलमन्वगात्॥३२
दूतं प्रहस्तं सम्प्रेष्य निष्कास्य धनदेश्वरम्।
लङ्कामाक्रम्य सचिवै राक्षसैः सुखमास्थितः॥३३
धनदः पितृवाक्येन त्यक्त्वा लङ्कां महायशाः।
गत्वा कैलाशशिखरं तपसातोषयच्छिवम्॥३४
तेन सख्यमनुप्राप्य तेनैव परिपालितः।
अलकां नगरीं तत्र निर्ममे विश्वकर्मणा॥३५
दिक्पालत्वं चकारात्र शिवेन परिपालितः।
रावणो राक्षसैः सार्धमभिषिक्तः सहानुजैः॥३६

राज्यं चकारासुराणां त्रिलोकीं बाधयन् खलः।
भगिनीं कालखञ्जाय ददौ विकटरूपिणीम् ॥३७
विद्युज्जिह्वाय नाम्नाऽसौ महामायी निशाचरः।
ततो मयो विश्वकर्मा राक्षसानां दितेः सुतः॥३८
सुतां मन्दोदरीं नाम्ना ददौ लोकैकसुन्दरीम्।
रावणाय पुनः शक्तिममोघां प्रीतिमानसः॥३९
वैरोचनस्य दौहित्रीं वृत्रज्वालेति विश्रुताम्।
स्वयं दत्तामुदवहत् कुम्भकर्णाय रावणः॥४०
गन्धर्वराजस्य सुतां शैलूषस्य महात्मनः।
विभीषणस्य भार्यार्थे धर्मज्ञां समुदावहत्॥४१
सरमां नाम सुभगां सर्वलक्षणसंयुताम्।
ततो मन्दोदरी पुत्रं मेघनादमजीजनत्॥४२
जातमात्रस्तु यो नादं मेघवत् प्रमुमोच ह।
ततः सर्वेऽब्रुवन् मेघनादोऽयमिति चासकृत्॥४३
कुम्भकर्णस्ततः प्राह निद्रा मां बाधते प्रभो!।
ततश्च कारयामास गुहां दीर्घां सुविस्तराम्॥४४
तत्र सुष्वाप मूढात्मा कुम्भकर्णो विघूर्णितः।
निद्रिते कुम्भकर्णे तु रावणो लोकरावणः॥४५
ब्राह्मणानृषिमुख्यांश्च देवदानवकिन्नरान्।
देवश्रियो मनुष्यांश्च निजघ्ने स महोरगान्॥४६
धनदोऽपि ततः श्रुत्वा रावणस्याऽक्रमं प्रभुः।
अधर्मं मा कुरुष्वेति दूतवाक्यैर्न्यवारयत्॥४७
ततः क्रुद्धो दशग्रीवो जगाम धनदालयम्।
विनिर्जित्य धनाध्यक्षं जहारोत्तमपुष्पकम्॥४८
ततो यमञ्च वरुणं निर्जित्य समरेऽसुरः।
स्वर्गलोकमगात्तूर्णं देवराजजिघांसया॥४९
ततोऽभवन्महद्युद्धमिन्द्रेण सह दैवतैः।
ततो रावणमभ्येत्य बबन्ध त्रिदशेश्वरः॥५०

**ततोऽभवदिति**—बबन्धेति रावणं बबन्ध अमोघनागपाशेनेति शेषः। यावद् रावणो-गरुडास्त्रेणात्मनो बन्धान्निर्मुक्ततामिच्छति तावत् मेघनाद एव मुमोचेति बोध्यम्। एतेन रावणः स्वयं मोक्तुं समर्थ इ ति व्यक्तम्।५०

तच्छ्रुत्वा सहसाऽऽगत्य मेघनादः प्रतापवान्।
कृत्वा घोरं महद्युद्धंजित्वा त्रिदशपुङ्गवान्॥५१
इन्द्रं गृहीत्वा बद्ध्वाऽसौ मेघनादो महाबलः।
मोचयित्वा तु पितरं गृहीत्वेन्द्रं ययौ पुरम्॥५२
ब्रह्मा तु मोचयामास देवेन्द्रं मेघनादतः।
दत्त्वा वरान् बहूंस्तस्मै ब्रह्मा स्वभवनं ययौ॥५३
रावणो विजयी लोकान् सर्वान् जित्वा क्रमेण तु।
कैलाशं तोलयामास बाहुभिः परिघोपमैः॥५४
तत्र नन्दीश्वरेणैव शप्तोऽयं राक्षसेश्वरः।
वानरैर्मानुषैश्चैव नाशं गच्छेति कोपिना॥५५
शप्तोऽप्यगणयन् वाक्यं ययौ हैहयपत्तनम्।
तेन बद्धो दशग्रीवः पुलस्त्येन विमोचितः॥५६

**शप्त इति**—तेनेति सहस्रार्जुनेन नागपाशादिना बद्धः मूर्च्छित रावण इति बोध्यम्।५६

ततोऽतिबलमासाद्य जिघांसुर्हरिपुङ्गवम्।
धृतस्तेनैव कक्षेण वालिना दशकन्धरः॥५७
भ्रामयित्वा तु चतुरः समुद्रान् रावणं हरिः।
विसर्जयामास ततस्तेन सख्यं चकार सः॥५८

**भ्रामयित्वेति**—वाली रावणं भ्रामयित्वेत्यत्र शरीरबलेनैव वाल्यधिकः अस्त्रशस्त्रा-दिभिस्तु रावण एवेत्यतो मैत्रीं चकारेति बोध्यम्।५८

रावणः परमप्रीत एवं लोकान् महाबलः।
चकार स्ववशे राम! बुभुजे स्वयमेव तान्॥५९
एवम् प्रभावो राजेन्द्र! दशग्रीवः सहेन्द्रजित्।
त्वया विनिहतः सङ्ख्ये रावणो लोकरावणः॥६०
मेघनादश्च निहतो लक्ष्मणेन महात्मना।
कुम्भकर्णश्च निहतस्त्वया पर्वतसन्निभः॥६१

भवान् नारायणः साक्षाज्जगतामादिकृद्विभुः ।
त्वत्स्वरूपमिदं सर्वं जगत् स्थावरजङ्गमम् ॥६२

भवानिति–भवान् साक्षात् परवैकुण्ठस्थानादिनारायणः । [1]सोऽपि तव विभूतिरित्यर्थः ।६२

त्वन्नाभिकमलोत्पन्नो ब्रह्मा लोकपितामहः ।
अग्निस्ते मुखतो जातो वाचा सह रघूत्तम ! ॥६३

बाहुभ्यां लोकपालौघाश्चक्षुर्भ्यां चन्द्रभास्करौ ।
दिशश्च विदिशश्चैव कर्णाभ्यां ते समुत्थिताः ॥६४

घ्राणात् प्राणः समुत्पन्नश्चाश्विनौ देवसत्तमौ ।
जङ्घाजानूरुजघनाद् भुवर्लोकादयोऽभवन् ॥६५

कुक्षिदेशात् समुत्पन्नाश्चत्वारः सागरा हरे ! ।
स्तनाभ्यामिन्द्रवरुणौ वालखिल्याश्च रेतसः ॥६६

मेढ्राद्यमो गुदान्मृत्युर्मन्योः रुद्रस्त्रिलोचनः ।
अस्थिभ्यः पर्वता जाताः केशेभ्यो मेघसंहतिः ॥६७

औषध्यस्तव रोमेभ्यो नखेभ्यश्च खरादयः ।
त्वं विश्वरूपः पुरुषो मायाशक्तिसमन्वितः ॥६८

नानारूप इवाभासि गुणव्यतिकरे सति ।
त्वामाश्रित्यैव बिबुधाः पिबन्त्यमृतमध्वरे ॥६९

त्वया सृष्टमिदं सर्वं विश्वं स्थावरजङ्गमम् ।
त्वामाश्रित्यैव जीवन्ति सर्वे स्थावरजङ्गमाः ॥७०

त्वद्युक्तमखिलं वस्तु व्यवहारेऽपि राघव ! ।
क्षीरमध्यगतं सर्पिर्यथा व्याप्याखिलं पयः ॥७१

त्वद्भासा भासतेऽर्कादिर्न त्वं तेनावभाससे ।
सर्वगं नित्यमेकं त्वां ज्ञानचक्षुर्विलोकयेत् ॥७२

नाज्ञानचक्षुस्त्वां पश्येदन्धदृग् भास्करं यथा ।
योगिनस्त्वां विचिन्वन्ति स्वदेहे परमेश्वरम् ॥७३

**त्वद्भासेति**–त्वद्भासा त्वत्प्रकाशब्रह्मणा अर्कादिर्भासते । तेन सर्वत्र व्यापकं ब्रह्माऽपि तव विभूतिरित्यर्थः । 'यदद्वैतं, ब्रह्म यस्य तनुभा, यस्य भासा सर्वमिदं विभातीति' श्रुतेः ।७२

---

१. सोऽपि तव विभूतिः इति रा० व० पु० न विद्यते ।

अतन्निरसनमुखैर्वेदशीर्षैरहर्निशम् ।
त्वद्पादभक्तिलेशेन गृहीता यदि योगिनः ॥७४
विचिन्वन्तो हि पश्यन्ति चिन्मात्रं त्वां न चान्यथा ।
मया प्रलपितं किञ्चित् सर्वज्ञस्य तवाग्रतः ।
क्षन्तुमर्हसि देवेश ! तवानुग्रहभागहम् ॥७५

**अतन्निरसनेति**–अतत् निरसनमुखैः अर्थात् 'आदेशो नेति' इत्यादि प्रमुखैर्वेदशीर्षैरुपनिषद्भिः, योगिनः त्वां हृदि विचिन्वन्त्येव न तु पश्यन्ति, अवाङ्मनसगोचरत्वात् त्वत्पादभक्तिलेशेन यदानुगृहीताः तदा त्वत्कृपया लब्धसच्चिदानन्दषष्ठशरीरचक्षुषैव त्वां पश्यन्ति इत्यर्थः । स्वेनैव स्वयं दृश्यो भवसीति भावः ।७४-७५

दिग्देशकालपरिहीनमनन्तमेकं,
चिन्मात्रमक्षरमजं चलनादिहीनम् ।
सर्वज्ञमीश्वरमनन्तगुणं व्युदस्त-
मायं भजे रघुपतिं भजतामभिन्नम् ॥७६

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
उत्तरकाण्डे द्वितीयोऽध्यायः ।२

⊙

**दिग्देशेति**–दिग्देशकालपरिहीनं सर्वाग्रे स्थितत्वादित्यर्थः । 'तदेव सोम्येदमग्र आसीदि'ति श्रुतेः । अनन्यं न अन्य ईश्वरो यस्य सर्वेषां ईश्वरत्वादित्यर्थः 'तमीश्वराणां परमं महेश्वरम्', एकं समाभ्यधिकरहितं 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः । चिन्मात्रं चैतन्यस्वरूपम् 'साक्षिश्चेताः केवलो निर्गुणश्चेति' श्रुतेः अक्षरमप्रच्युतस्वरूपम् । अजं जन्मादिहीनं चलनादिहीनम्, सर्वत्र पूर्णत्वादित्यर्थः । दिव्यानन्तगुणं रघूणां जीवानां पतिं पालकम् । तेन सर्वोपास्यत्वं ध्वनितम् । भजतां लब्धषष्ठशरीरेण सेवां कुर्वताम् अभिन्नं तच्छरीरस्यापि सच्चिदानन्दमयत्वादित्यर्थः । 'देवो भूत्वा देवं यजेदिति' श्रुतेः ।७६

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामुत्तरकाण्डे
द्वितीयोऽध्यायः ।२

⊙

---

१. इति श्री उत्तरकाण्डे ध्वनिप्रकाशिकायां द्वितीयोऽध्यायः । इति० रा० व० पु० ।

## अथ तृतीयोऽध्याय

**श्रीराम उवाच**

वालिसुग्रीवयोर्जन्म श्रोतुमिच्छामि तत्त्वतः।
रवीन्द्रौ वानराकारौ जज्ञात इति नः श्रुतम् ॥१

वालीत्यादि।१

मेरोः स्वर्णमयस्याद्रेर्मध्यशृङ्गे मणिप्रभे।
तस्मिन् सभाऽस्ते विस्तीर्णा ब्रह्मणः शतयोजना ॥२
तस्यां चतुर्मुखः साक्षात् कदाचिद् योगमास्थितः।
नेत्राभ्यां पतितं दिव्यमानन्दसलिलं बहु ॥३
तद्गृहीत्वा करे ब्रह्मा ध्यात्वा किञ्चित्तदत्यजत्।
भूमौ पतितमात्रेण तस्माज्जातो महाकपिः ॥४
तमाह द्रुहिणो वत्स ! किञ्चित् कालं वसात्र मे।
समीपे सर्वशोभाढ्ये ततः श्रेयो भविष्यति ॥५
इत्युक्ते न्यवसत्तत्र ब्रह्मणा वानरोत्तमः।
एवं बहुविधे काले गते ऋक्षाधिपः सुधीः ॥६
कदाचित् पर्यटन्नद्रौ फलमूलार्थमुद्यतः।
अपश्यद्दिव्यसलिलां वापीं मणिशिलान्विताम् ॥७
पानीयं पातुमागच्छत्तत्र छायामयं कपिम्।
दृष्ट्वा प्रतिकपिं मत्वा निपपात जलान्तरे ॥८
तत्रादृष्ट्वा हरिं शीघ्रं पुनरुत्प्लुत्य वानरः।
अपश्यत् सुन्दरीं रामामात्मानं विस्मयङ्गतः ॥९
ततः सुरेशो देवेशं पूजयित्वा चतुर्मुखम्।
गच्छन् मध्याह्नसमये दृष्ट्वा नारीं मनोरमाम् ॥१०
कन्दर्पशरविद्धाङ्गस्त्यक्तवान् वीर्यमुत्तमम्।
तामप्राप्यैव तद्वीजं वालदेशेऽपतद् भुवि ॥११

वाली समभवत्तत्र शक्रतुल्यपराक्रमः ।
तस्मै दत्त्वा सुरेशानः स्वर्णमालां दिवङ्गतः ॥१२
भानुरप्यागतस्तत्र तदानीमेव भामिनीम् ।
दृष्ट्वा कामवशो भूत्वा ग्रीवादेशेऽसृजन् महत् ॥१३
वीर्यं तस्यास्ततः सद्यो महाकायोऽभवद्धरिः ।
तस्मै दत्त्वा हनूमन्तं सहायार्थं गतो रविः ॥१४

**वीर्यमिति**—तस्य सहायार्थं हनुमन्तमित्यनेन श्रीरामसहायार्थमाविर्भूते सुग्रीवेंऽशिरूपेणाऽहं प्रविष्टस्तत्स्वरूपेण तत्सहायेन वायोरंशिनस्ते मदधीतविद्याफलभूतश्रीरामप्राप्तिर्भविष्यति इति सूचितम्। तेन रवीन्द्रौ वानराकारौ जज्ञात इति श्रीरामप्रश्नोऽपि सङ्गच्छते इति बोध्यम् ।१४

पुत्रद्वयं समादाय गत्वा सा निद्रिता क्वचित् ।
प्रभातेऽपश्यदात्मानं पूर्ववत् वानराकृतिम् ॥१५
फलमूलादिभिः सार्धं पुत्राभ्यां सहितः कपिः ।
नत्वा चतुर्मुखस्याग्रे ऋक्षराजः स्थितः सुधीः ॥१६
ततोऽब्रवीत् समाश्वास्य बहुशः कपिकुञ्जरम् ।
तत्रैकं देवतादूतमाहूयामरसन्निभम् ॥१७
गच्छ दूत ! मयाऽऽदिष्टो गृहीत्वा वानरोत्तमम् ।
किष्किन्धां दिव्यनगरीं निर्मितां विश्वकर्मणा ॥१८

**गच्छेति**—गच्छ इति मयाऽदिष्ट इति देवदूतप्रेषणेन तत्तद्देवांशिषु वानरेषु सर्वे देवाः स्वस्वांशेन स्वस्यांशिषु निलीय रामसेवार्थं गच्छन्त्विति तदाशयो व्यक्तः ।१८

सर्वसौभाग्यवलितां देवैरपि दुरासदाम् ।
तस्यां सिंहासने वीरं राजानमभिषेचय ॥१९
सप्तद्वीपगता ये ये वानरा सन्ति दुर्जयाः ।
सर्वे ते ऋक्षराजस्य भविष्यन्ति वशेऽनुगाः ॥२०
यदा नारायणः साक्षाद्रामो भूत्वा सनातनः ।
भूभारासुरनाशाय सम्भविष्यति भूतले ॥२१

**यदेति**—यदा साक्षान्नारायणः आदिनारायणो रामो भूत्वा (शरीरं) गृहीत्वा भुवः भारभूता ये असुरास्तेषां नाशाय सम्भविष्यति आविर्भविष्यति ।२१

तदा सर्वे सहायार्थे तस्य गच्छन्तु वानराः ।
इत्युक्तो ब्रह्मणा दूतो देवानां स महामतिः ॥२२
यथाज्ञप्तस्तथा चक्रे ब्रह्मणा तं हरीश्वरम् ।
देवदूतस्ततो गत्वा ब्रह्मणे तन्न्यवेदयत् ॥२३

**यथाज्ञप्त इति**—ब्रह्मणा यथाज्ञप्तस्तथा देवदूतः ऋक्षराजं हरीश्वरं [1]स्वस्मिन् स्वस्मिन् देवांशहारिणा[2] स्वस्वांशभूतदेवांशाविष्टवानराणामीश्वरं चक्रे। ततः तत्र गत्वा स्वानुष्ठितं ब्रह्मणे न्यवेदयदिति ।२३

तदादि वानराणां सा किष्किन्धाभून्नृपाश्रयः ।
सर्वेश्वरस्त्वमेवासीरिदानीं ब्रह्मणार्थितः ॥२४
भूमेर्भारो हृतः कृत्स्नस्त्वया लीलानृदेहिना ।
सर्वभूतान्तरस्थस्य नित्यमुक्तचिदात्मनः ॥२५

**भूमेर्भार इति**—लीलया मनुष्याकारवता त्वया भूभारः कृत्स्नो हृतः। अयं भावः तदावेषधारिणा तदाकारेण नारायणेन भूभारो हृतः।२५

अखण्डानन्दरूपस्य कियानेष पराक्रमः ।
तथापि वर्ण्यते सद्भिर्लीलामानुषरूपिणः ॥२६

**अखण्डेति**—अखण्डानन्दरूपस्य नित्यरासविहारिणः आवेशं धृत्वा भूभारं हृतवतः नारायणस्य तवैषः पराक्रमः कियान्तथापि मानुषरूपिणस्तव लीला वर्ण्यते एतेन सर्वेऽपि जना लीलाश्रवणेन भक्ता भवेयुरिति त्वद्धेतुर्व्यक्तः तेन च दयालुतातिशयश्च ।२६

यशस्ते सर्वलोकानां पापहत्यै सुखाय च ।
य इदं कीर्तयेन्मर्त्यो बालिसुग्रीवयोर्महत् ॥२७
जन्म त्वदाश्रयत्वात् स मुच्यते सर्वपातकैः ।
अथान्यां सम्प्रवक्ष्यामि कथां राम ! त्वदाश्रयाम् ॥२८
सीता हृता यदर्थं सा रावणेन दुरात्मना ।
पुरा कृतयुगे राम ! प्रजापतिसुतं विभुम् ॥२९
सनत्कुमारमेकान्ते समासीनं दशाननः ।
विनयावनतो भूत्वा ह्यभिवाद्येदमब्रवीत् ॥३०

---

१. १ तः २. पर्यन्तभागः रा० व० पु० नास्ति ।

कोऽन्वस्मिन् प्रवरो लोके देवानां बलवत्तरः।
देवाश्च यं समाश्रित्य युद्धे शत्रुं जयन्ति हि॥३१
कं यजन्ति द्विजा नित्यं कं ध्यायन्ति च योगिनः।
एतन्मे शंस भगवन्! प्रश्नं प्रश्नविदांवर! ॥३२
ज्ञात्वा तस्य हृदिस्थं यत्तदशेषेण योगदृक्।
दशाननमुवाचेदं शृणु वक्ष्यामि पुत्रक! ॥३३

**ज्ञात्वेति**—तस्य रावणस्य हृदिस्थं तादृशात् मे मरणं भवत्वितीच्छारूपं तस्याविहित-भक्तिं योगेन पश्यतीति योगदृक्।३३

भर्त्ता यो जगतां नित्यं यस्य जन्मादिकं नहि।
सुरासुरैर्नुतो नित्यं हरिर्नारायणोऽव्ययः॥३४

**भर्तेति**—यः जगतां भर्ता सनातनः स्वामी यस्य जन्मादिकं नहि नित्यविहारित्वात् स्वयं कदापि नाऽवतरति। आवेशेनावतरतीत्यर्थः। यः सुरासुरैर्नुतः स्वाविष्टनारायण-रूपेणेत्यर्थः, स वाङमनसगोचरातीतो रामो नारायण आदिनारायणरूपः तस्याप्यंतर्या-मित्वादित्यर्थः 'विष्ण्वाद्युत्तमदेहेषु प्रविष्टो देवताऽभवत्। मर्त्याद्यधमदेहेषु स्थितो भजति देवता॥ ओं यः श्रीरामचन्द्रः स भगवान् यो ब्रह्मा विष्णुरीश्वरः' 'सर्वदेवतान्तरात्मा' इत्यादि श्रुतेः। तस्यान्तर्यामित्वे किं निमित्तमित्यत आह अव्ययः, अविनाशी नित्यरास-विहारीत्यर्थः।३४

यन्नाभिपङ्कजाज्जातो ब्रह्मा विश्वसृजां पतिः।
सृष्टं येनैव सकलं जगत् स्थावरजङ्गमम्॥३५
तं समाश्रित्य विबुधा जयन्ति समरे रिपुन्।
योगिनो ध्यानयोगेन तमेवानुजपन्ति हि॥३६

**यन्नाभीति**—यन्नाभिपङ्कजात् विश्वसृजां पतिः ब्रह्मा जातः तं क्षीरसागरवासिनारायणं येन भूमनारायणेन सकलं स्थावरजङ्गमं सृष्टं तं भूमनारायणं, [1]एव शुद्धः, प्रसिद्धौ तेन सृष्टिपालकौ रमावैकुण्ठनारायणो गृह्यते तं नारायणचतुष्टयमाश्रित्य स्वावेशाधि-ष्ठानत्वेनाश्रित्य विबुधा विशिष्टाः बुधाः विबुधा देवास्ते सन्ति येषां चतुर्णां ते वाङमनस-गोचरातीतनित्यविहारिद्विभुजश्रीरामभरतलक्ष्मणशत्रुघ्नाः परात्परब्रह्मस्वरूपाः समरे रिपून् विरोधिनः जयन्ति। योगिनः भक्तियोगिनः तमेवावाङमनसगोचरमपि

---

१. एकः शुद्धः प्रसिद्धः तेन सृष्टिपालकः, इति समीचीनः प्रतीयते।

नारायणाविष्टत्वेन ध्येयं द्विभुजमूर्तिकं रामं ध्यानयोगेनानुजपन्ति। एतेन रामावेशयुतनारायणावतारद्विभुजरूपध्यानेन तद्रूपस्य रामेतिनाम्नः स्फूर्तिः स्वयमेव भवतीति सूचितम्। 'नामचिन्तामणी रामः चैतन्यपरविग्रहः। नित्यशुद्धो नित्ययुक्तो न भिन्नं नामनामिनः।। अतः श्रीरामनामादि न भवेद् ग्राह्यमिन्द्रियैः। स्फुरद्भिः स्वयमेवैतत् जिह्वादौ श्रवणे मुखे' इति पाद्मे। नित्यबुद्ध इत्यपि पाठः। 'यत् पृष्टवांस्तस्य च नामरूपं, लीला च धामानि तु चिन्मयानि। मनोवचोऽगोचराण्येव तानि, स्वयं कृपातः स्फुरणं प्रयान्ति'।। इति विश्वम्भरोपनिषदि च।३५-३६

महर्षेर्वचनं श्रुत्वा प्रत्युवाच दशाननः।
दैत्यदानवरक्षांसि विष्णुना निहतानि च।।३७
कां वा गतिं प्रपद्यन्ते प्रेत्य ते मुनिपुङ्गव!।
तमुवाच मुनिश्रेष्ठो रावणं राक्षसाधिपम्।।३८
देवतैर्निहता नित्यं गत्वा स्वर्गमनुत्तमम्।
भोगक्षये पुनस्तस्माद् भ्रष्टा भूमौ भवन्ति ते।।३९
पूर्वार्जितैः पुण्यपापैर्म्रियन्ते चोद्भवन्ति च।
विष्णुना ये हतास्ते तु प्राप्नुवन्ति हरेर्गतिम्।।४०

**पूर्वार्जितैः इति**—विष्णुना रामाविष्टनारायणेन ये हतास्ते हरेः भक्तक्लेशापहारिणो यस्य कस्यचित् अवाङ्मनसगोचरस्य चिद्गतिं प्राप्नुवन्ति।४०

श्रुत्वा मुनिमुखात् सर्वं रावणो हृष्टमानसः।
योत्स्येऽहं हरिणा सार्द्धमिति चिन्तापरोऽभवत्।।४१

**श्रुत्वेति**—हरिणा भक्तक्लेशापहारिणा वाङ्मनसगोचरेण सार्द्धं कथं योत्स्ये इति चिन्तापरोऽभवत्।४१

मनःस्थितं परिज्ञाय रावणस्य महामुनिः।
उवाच वत्स! तेऽभीष्टं भविष्यति न संशयः।।४२

**मनःस्थितमिति**—महामुनिः सर्वज्ञो भगवान् सनत्कुमारः तस्य रावणस्य मनःस्थितं पूर्वोक्तं चिन्तारूपं ज्ञात्वा उवाच।४२

कञ्चित् कालं प्रतीक्षस्व सुखी भव दशानन!।
एवमुक्त्वा महाबाहो! मुनिः पुनरुवाच तम्।।४३

**कञ्चिदिति**—कञ्चित् कालं प्रतीक्षस्वत्यनेन इदानीं बिम्बाद्यन्तर्यामित्वेन स्थितः।

यदा नित्यविहारिश्रीरामः नारायणे आवेशेनावतरिष्यति तदा त्वं मुक्तिं प्राप्स्यसीति व्यक्तः।४३

तस्य स्वरूपं वक्ष्यामि ह्यरूपस्यापि मायिनः ॥४४

**तस्येति**—अरूपस्य प्राकृतरूपरहितस्य मायिनः कृपावतो रूपं वक्ष्यामि। तेन तुभ्यं मुक्तिं दास्यत्येवेति व्यक्तम्।४४

स्थावरेषु च सर्वेषु नदेषु च नदीषु च।
ओंकारश्चैव सत्यं च सावित्री पृथिवी च सः।
समस्तजगदाधारः शेषरूपधरो हि सः ॥४५

विशेषरूपमुक्त्वा सामान्यरूपं दर्शयति **स्थावरेष्वित्यादिना**।४५

सर्वे देवा समुद्राश्च कालः सूर्यश्च चन्द्रमाः।
सूर्योदयो दिवा रात्रिर्यमश्चैव तथाऽनिलः ॥४६
अग्निरिन्द्रस्तथा मृत्युः पर्जन्यो वसवस्तथा।
ब्रह्मा रुद्रादयश्चैव ये चान्ये देवदानवाः ॥४७
विद्योतते ज्वलत्येष पाति चात्तीति विश्वकृत्।
क्रीडां करोत्यव्ययात्मा सोऽयं विष्णुः सनातनः ॥४८
तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥४९
नीलोत्पलदलश्यामो विद्युत्वर्णाम्बरावृतः।
शुद्धजाम्बूनदप्रख्यां श्रियं वामाङ्कसंस्थिताम्।
सदानपायिनीं देवीं पश्यन्नालिङ्ग्य तिष्ठति ॥५०

**तेनेति**—इदानीं विशेषतमं रूपं दर्शयति नीलोत्पलदलवत् श्यामः पीताम्बरयुक्तः अनपायिनीं देवीं स्वयं पश्यन् श्रियं जानकीं 'श्रीश्च ते लक्ष्मीश्च पत्न्यावि'ति श्रुतेः आलिङ्ग्य रासे सदा तिष्ठतीत्यनेन तामपि स्वदर्शनेन दृष्टिव्यापारादौ प्रवर्तयन्। नित्यविहारिरूपेण तया वियोगो नास्तीति। तेन परात्परावाङ्मनसगोचरश्रीसीतारामध्यानधारकत्वेन परममुक्तो भविष्यसीति शिक्षा व्यक्ता। तेन च एतादृशभजने [1]'तस्य यो यथा [2]भवति

---

१. स्वयमेव त्वत् वाङ्मनसगोचरीभवितस्य, रा० व० पु०। २. भजति रा०।

तदानुगुण्येन 'परममुक्तो[1] स्वव्यापकस्वभावात् [2]स्वयमेव तत् वाङ्मनसगोचरीभवितु[3]मुपायं करिष्यतीति व्यक्तम्। उक्तं गीतासु 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' ।४९-५०।

द्रष्टुं न शक्यते कैश्चिद् देवदानवपन्नगैः।
यस्य प्रसादं कुरुते स चैनं द्रष्टुमर्हति ।।५१
न च यज्ञतपोभिर्वा न दानाध्ययनादिभिः।
शक्यते भगवान् द्रष्टुमुपायैरितरैरपि ।।५२
तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैर्धूतकल्मषैः ।
शक्यते भगवान् विष्णुर्वेदान्तामलदृष्टिभिः ।।५३

ननु तस्यावाङ्मनसगोचरत्वे भवतैव कथं ज्ञातम् इत्यत आह **द्रष्टुं न शक्यत इति**–देवदानवपन्नगैः कैश्चिदपि यज्ञदानाध्ययनादिभिर्द्रष्टुं न शक्यते, अवाङ्मनसगोचरत्वात् इति। तद्भक्तैरिति वक्ष्यमाणविशेषणयुक्तेषु यस्य प्रसादं कुरुते स एनं श्रीराममवाङ्मनसगोचरं तद्दत्तषष्ठशरीरेण द्रष्टुमर्हति योग्यो भवतीति। तेन तत् प्रसादेनैव तं ज्ञातवानस्मीति सूचितम् ।५१-५३

अथवा द्रष्टुमिच्छा ते शृणु त्वं परमेश्वरम्।
त्रेतायुगे स देवेशो भविता नृपविग्रहः ।।५४

**अथवेति**–एतैः पूर्वोक्तैः उपायैर्विना तं द्रष्टुं यदि ते इच्छाऽस्ति तर्हि शृणु मद्वाक्यमिति शेषः। त्रेतायुगे स देवेशो नारायणः नृपविग्रहो भविता नृपविग्रहः नित्यविहारिश्रीरामविग्रहः तदावेशधारकत्वेन भवितेत्यर्थः। 'राजाधिराजः सर्वेषां ब्रह्मविष्णुमयो महानिति' स्मृतेः ।५४

हितार्थं देव! मर्त्यानामिक्ष्वाकूणां कुले हरिः।
रामो दाशरथिर्भूत्वा महासत्यपराक्रमः ।।५५

**हितार्थमिति**–हरिर्नारायणः दाशरथी रामो भूत्वा नित्यविहारिश्रीरामावेशेनेत्यर्थः। अत एव सत्यपराक्रमः भार्यया लक्ष्मणेन च सह वने विचरिष्यति। तेनैतन्नामादिभिरवाङ्मनसगोचरश्रीरामनामादिकं सूच्यते न तु स्वयं कृपयैव प्राप्तषष्ठशरीरं प्रतिस्फुरतीति ध्वनिः। तेन अन्येषां त्वेतद्रूपेणैव प्रत्यक्षो भवति इति त्वमपि द्रक्ष्यसि इति ध्वनिः ।५५

पितुर्नियोगात् स भ्रात्रा भार्यया दण्डके वने।
विचरिष्यति धर्मात्मा जगन्मात्रा स्वमायया ।।५६

**पितुरिति**–जगन्मात्रप्रेमरूपया लक्ष्म्या स्वमायया मूलप्रकृतिरूपया भार्यया ।५६

---

१. परममुक्तो, नास्ति रा० व० पु०। २. तः ३. पर्यन्तभागो न विद्यते रा० व० पु०।

एवं ते सर्वमाख्यातं मया रावण! विस्तरात्।
भजस्व भक्तिभावेन सदा रामं श्रिया युतम्॥५७

**एवमिति**–भक्तिभावेन विहितरूपेण अविहितरूपेण वा।५७

**अगस्त्य उवाच**

एवं श्रुत्वाऽसुराध्यक्षो ध्यात्वा किञ्चिद् विचार्य च।
त्वया सह विरोधेप्सुर्मुमुदे रावणो महान्॥५८

**एवं श्रुत्वेति**–विहितया [1]शीघ्रं तत्प्राप्तिः अविहितया वेति [2]विचार्य मुमुदे [3]चतुर्भुज-नारायणेनानेकशः कृतसमरोऽहं तेनावध्य एव-अतोऽवाङमनसगोचरो नित्यविहारी मद्वधाय नारायणे स्वावेशं विधायावतरिष्यति इति। [4]तेन-अविहितयैव [5]शीघ्रं तत् प्राप्तिरिति नश्चयो व्यक्तः।५८

युद्धार्थी सर्वतो लोकान् पर्यटन् समवस्थितः।
एतदर्थं महाराज! रावणोऽतीव बुद्धिमान्।
हृतवान् जानकीं देवीं त्वयात्मवधकाङ्क्षया॥५९

**युद्धार्थीति**–अतीव बुद्धिमानित्यनेन सनत्कुमारेण तस्यैकस्य मोक्षोपाय उपदिष्टः। अयं रावणः सकुलस्य [6]मुक्तमुपवेति व्यक्तम्।५९

इमां कथां यः शृणुयात् पठेद्वा, संश्रावयेद्वा श्रवणार्थिनां सदा।
आयुष्यमारोग्यमनन्तसौख्यं, प्राप्नोति लाभं धनमक्षयञ्च॥६०

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
उत्तरकाण्डे तृतीयोऽध्यायः।३

⊙

इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामुत्तरकाण्डे
तृतीयोऽध्यायः।३

⊙

---

१. तः २. पर्यन्तांशः रा० व० पु०। ३. तः ४. पर्यन्तांशः रा० व० पु० नास्ति। ५. शीघ्रम् रा० व० पु०। ६. मुक्तिमवापेत्युचितः।

## अथ चतुर्थोऽध्यायः

**अगस्त्य उवाच**

एकदा ब्रह्मणो लोकादायान्तं नारदं मुनिम्।
पर्यटन् रावणो लोकान् दृष्ट्वा नत्वाऽब्रवीद् वचः ॥१
भगवन्! ब्रूहि मे योद्धुं कुत्र सन्ति महाबलाः।
योद्धुमिच्छामि बलिभिस्त्वं जानासि जगत्त्रयम् ॥२
मुनिर्ध्यात्वाऽऽह सुचिरं श्वेतद्वीपनिवासिनः।
महाबला महाकायास्तत्र याहि महामते! ॥३
विष्णुपूजारता ये वै विष्णुना निहताश्च ये।
त एव तत्र सञ्जाता अजेयाश्च सुरासुरैः ॥४
श्रुत्वा तद्रावणो वेगान् मन्त्रिभिः पुष्पकेण तान्।
योद्धुकामः समागत्य श्वेतद्वीपसमीपतः ॥५
तत् प्रभाहततेजस्कं पुष्पकं नाचलत्ततः।
त्यक्त्वा विमानं प्रययौ मन्त्रिणश्च दशाननः ॥६

**तदिति**–पुष्पकं मन्त्रिणश्च विहाय रावणो गतः। एतेन भगवत्पार्षदत्वात् तस्य तत्र गतिरस्तीति सूचितम्।६

प्रविशन्नेष तद्द्वीपं धृतो हस्तेन योषिता।
पृष्टश्च त्वं कुतः कोऽसि प्रेषितः केन वा वद ॥७
इत्युक्तो लीलया स्त्रीभिर्हसन्तीभिः पुनः पुनः।
कृच्छ्राद्धस्ताद्विनिर्मुक्तस्तासां स्त्रीणां दशाननः ॥८
आश्चर्यमतुलं लब्ध्वा चिन्तयामास दुर्मतिः।
विष्णुना निहतो यामि वैकुण्ठमिति निश्चितम् ॥९

**आश्चर्यमिति**–विष्णुना निहतोऽहं वैकुण्ठं यामि-इति निश्चित्य इत्यनेन विष्णुहस्तहननेन मे वैकुण्ठप्राप्तिर्भविष्यति न तु साकेतप्राप्तिरिति निश्चयानेन तेन सह युद्धं न कृतवानिति सूचितम्।९

मयि विष्णुर्यथा कुप्येत् तथा कार्यं करोम्यहम्।
इति निश्चित्य वैदेहीं जहार विपिनेऽसुरः॥१०

**मयीति**–यथा कुप्येदित्यनेन वरप्रभावाद् विष्णुनाऽवध्यत्वेऽपि कुपितो विष्णुः श्रीरामावेशं गृहीत्वा हन्यादिति। तदा साकेतप्राप्तिरिति वैदेहीहरणे हेतुर्व्यक्तः।१०

जानन्नेव परात्मानं स जहारावनीसुताम्।
मातृवत् पालयामास त्वत्तः काङ्क्षन् वधं स्वकम्॥११

**जानन्निति**–परः श्रीरामः आत्मनि स्वरूपे आवेशेन यस्य स नारायणः तं [1]जानन्नपि [2]अवनीसुतां अवनी सुता यस्याः तां मूलप्रकृतिम्।११

राम! त्वं परमेश्वरोऽसि सकलं जानासि विज्ञानदृक्,
भूतं भव्यमिदं त्रिकालकलना साक्षी विकल्पोज्झितः।
भक्तानामनुवर्तनाय सकलां कुर्वन् क्रियासंहतिम्,
चाश्रृण्वन् मनुजाकृतिर्मुनिवचो भासीश! लोकार्चितः॥१२

**रामेति**–विकल्पोज्झितः त्यक्तसंशयः भक्तानाम् अनुवर्त्तनाय क्रियासंहतिं रामायणीयलीलां कुर्वन्नित्यनेन लीलाश्रवणमननाभ्यां सर्वे मुक्ता भविष्यन्तीति तेन च कारुण्यातिशयो व्यक्तः। मुनिवचः आशृण्वन् मनुजाकृतिः प्रमोदवनस्थनित्यद्विभुजः विभासीत्यर्थः। तेन चादिनारायणनित्यद्विभुजरामयो[3]स्तादात्म्यं सूचितम्।१२

स्तुत्वैवं राघवं तेन पूजितः कुम्भसम्भवः।
स्वाश्रमं मुनिभिः सार्द्धं प्रययौ हृष्टमानसः॥१३

रामस्तु सीतया सार्द्धं भ्रातृभिः सह मन्त्रिभिः।
संसारीव रमानाथो रममाणोऽवसद् गृहे॥१४

अनासक्तोऽपि विषयान् बुभुजे प्रियया सह।
हनुमत्प्रमुखैः सद्भिर्वानरैः परिवेष्टितः॥१५

**अनासक्तोऽपीति**–हनुमत्प्रमुखैर्वानरै परिवारितः सेवितः इत्यस्य तत्प्रेषिता स्वस्वाश्रमे गता महावेगत्वेन प्रत्यहमत्राप्यागत्य सेवां कुर्वन्तीति भावः।१५

---

१. नास्ति रा० व० पु०। २. अवनीसुताम्, न विद्यते मत्पुस्तके। ३. अभेदः सूचितः रा० व० पु०।

पुष्पकं चागमद्राममेकदा पूर्ववत् प्रभुम्।
प्राह देव! कुबेरेण प्रेषितं त्वामहं ततः॥१६
जितं त्वं रावणेनादौ पश्चाद्रामेण निर्जितम्।
अतस्त्वं राघवं नित्यं वह यावद्वसेद् भुवि॥१७
यदा गच्छेद्रघुश्रेष्ठो वैकुण्ठं याहि मां तदा।
तच्छ्रुत्वा राघवः प्राह पुष्पकं सूर्यसन्निभम्॥१८
यदा स्मरामि भद्रन्ते तदागच्छ ममान्तिकम्।
तिष्ठान्तर्धाय सर्वत्र गच्छेदानीं ममाज्ञया॥१९
इत्युक्त्वा रामचन्द्रोऽपि पौरकार्याणि सर्वशः।
भ्रातृभिर्मन्त्रिभिः सार्द्धं यथान्यायं चकार सः॥२०
राघवे शासति भुवं लोकनाथे रमापतौ।
वसुधा सस्यसम्पन्ना फलवन्तश्च भूरुहाः॥२१
जना धर्मपराः सर्वे पतिभक्तिपराः स्त्रियः।
नाऽपश्यत् पुत्रमरणं कश्चित् राजनि राघवे॥२२
समारुह्य विमानाग्र्यं राघवः सीतया सह।
वानरैर्भ्रातृभिः सार्द्धं सञ्चचारावनिं प्रभुः॥२३

**समारुह्येति**–समारुह्य चचारेत्यनेन ससीतं सभ्रातृकं सभक्तं मां जनाः निरीक्ष्य जीवन्मुक्ता भवेयुरिति हेतुर्व्यक्तः। तेन च प्रजोपरि वात्सल्यातिशयः। तेन च परात्पर-ब्रह्मणि राजनि सर्वाः प्रजाः परमहंसविज्ञानं प्राप्ता इति व्यक्तम्।२३

अमानुषाणि कार्याणि चकार बहुशो भुवि।
ब्राह्मणस्य सुतं दृष्ट्वा बालं मृतमकालतः॥२४

**अमानुषाणीति**–अकालतो मृत एतेन श्रीरामे राजनि जरामरणरोगादिभयं नाभूदिति सूचितम्।२४

शोचन्तं ब्राह्मणञ्चापि ज्ञात्वा रामो महामतिः।
तपस्यन्तं वने शूद्रं हत्वा ब्राह्मणबालकम्॥२५
जीवयामास शूद्रस्य ददौ स्वर्गमनुत्तमम्।
लोकानामुपदेशार्थं परमात्मा रघूत्तमः॥२६

**जीवयामासेति**–अनुत्तमं स्वर्गं साकेतमित्यर्थः।२६

कोटिशः स्थापयामास शिवलिङ्गानि सर्वशः।
सीताञ्च रमयामास सर्वभोगैरमानुषैः ॥२७

**कोटिश इति**—कोटिशः शिवलिङ्गानि स्थापयामासेत्यनेन श्रीरामः स्वभक्तस्यैवोपासक इति ध्वनिः। उक्तञ्च भागवते 'भगवान् भक्तभक्तिमान्' इति, तेन च तदीश्वरो न कोऽपि इति। अमानुषैर्दिव्यैः सर्वभोगैः सीतां चकारात् अन्याः सखीः रमयामास। एतेन रासं कृतवान् इति सूचितम्। तेन च एतद्रासेनावाङमनसगोचरो रासः सूचितो भविष्यतीति रासकरणे हेतुर्व्यक्तः।२७

शशास रामो धर्मेण राज्यं परमधर्मवित्।
कथाः संस्थापयामास सर्वलोकमलापहाः ॥२८
दशवर्षसहस्राणि मायामानुषविग्रहः।
चकार राज्यं विधिवल्लोकवन्द्यपदाम्बुजः ॥२९

**दशवर्षेति**—मायया मानुषस्य नित्यद्विभुजस्य श्रीरामस्य विग्रह इव विग्रहो यस्य सः।२९

एकपत्नीव्रतो रामो राजर्षिः सर्वदा शुचिः।
गृहमेधीयमखिलमाचरन् शिक्षयन् जनान् ॥३०

**एकपत्नीव्रत इति**—एकया मुख्यया पत्न्या सीतया सह यज्ञाद्यनुष्ठानं यस्य, 'इयं सीता मम सुता सह धर्मचरी तव' इति वाल्मीकीयोक्तेः। आदिरामायणकोशलखण्डेषु श्रीरामस्य बहवो विवाहाः स्पष्टमुक्ताः वाल्मीकीयेऽपि कैकेयीं प्रति मन्थरावाक्यं 'हृष्टाःखलु भविष्यन्ति रामस्य परमाः स्त्रियः' ।३०

सीता प्रेम्णानुवृत्त्या च प्रश्रयेण दमेन च।
भर्त्तुर्मनोहरा साध्वी भावज्ञा सा ह्रिया भिया ॥३१

**सीतेति**—साध्वी पतिव्रता भावज्ञा पत्युरभिप्रायज्ञा सीता प्रेम्णा अनुवृत्त्या प्रश्रयेण दमेन ह्रिया भिया च भर्त्तुर्मनोहराऽऽसीदिति शेषः। साध्वीत्यनेन स्वकीयात्वं, भावज्ञा स्वकीयात्वेऽपि पत्युः सुखाय भावानां नानानायिकाचेष्टानां ज्ञात्री, प्रेम्णेत्यनेन प्रेमगर्विताऽनुवृत्या पत्युः पश्चात् अनुवर्तनेन यदा रामो गन्तुमिच्छति तदा साप्यनुगन्तुमिच्छतीति तात्पर्यम्। एतेन प्रवत्स्यत्पतिकात्वं, प्रश्रयेणेत्यनेन विश्रब्धनवोढा। यद्वा श्रीरामात् जीवानां मुक्तियाचनहेतुकप्रार्थनया सामान्यवनितात्वम्। दमेत्यनेन श्रीरामे कुत्रचिद् गते इन्द्रियनिग्रहेण प्रोषितपतिकात्वं, ह्रियेत्यनेन मध्यात्वं भियेत्यत्र नित्यविहारिणि रामे प्रेमाऽऽधिक्येनादिरामायणाद् भयेन च परकीयात्वं, एतासां नायिकानां प्रदर्शनं दिङमात्रं तत्तत्सखीरूपेण सर्वासां नायिकानां तत्तद् भावस्य विद्यमानतया सर्वविधनायिकात्वेन

भर्तुर्मनोहरात्वं बोध्यम्। एतेन सर्वासामपि तत्सखीनां सीतास्वरूपत्वम्। तेन रामस्य एकपत्नीव्रतत्वं व्यक्तम्।३१

एकदाऽक्रीडविपिने सर्वभोगसमन्विते।
एकान्ते दिव्यभवने सुखासीनं रघूत्तमम्॥३२
नीलमाणिक्यसङ्काशं दिव्याभरणभूषितम्।
प्रसन्नवदनं शान्तं विद्युत्पुञ्जनिभाम्बरम्॥३३
सीता कमलपत्राक्षी सर्वाभरणभूषिता।
राममाह कराभ्यां सा लालयन्ती पदाम्बुजे॥३४
देवदेव! जगन्नाथ! परमात्मन्! सनातन!
चिदानन्दादिमध्यान्तरहिताशेषकारण! ॥३५
देव! देवाः समासाद्य मामेकान्तेऽब्रुवन् वचः।
बहुशोऽर्थयमानास्ते वैकुण्ठागमनं प्रति॥३६
त्वया समेतश्चिच्छक्त्या रामस्तिष्ठति भूतले।
विसृज्यास्मान् स्वकं धाम वैकुण्ठञ्च सनातनम्॥३७
आस्ते त्वया जगद्धात्रि! रामः कमललोचनः।
अतोऽग्रे याहि वैकुण्ठं त्वं तथा चेद्रघूत्तमः॥३८
आगमिष्यति वैकुण्ठं सनाथान्नः करिष्यति।
इति विज्ञापिताऽहं तैर्मया विज्ञापितो भवान्॥३९

**आस्त इत्यादि**—जानकीं प्रति देवप्रार्थनया जानकीप्रार्थनयैव श्रीरामप्राप्तिरित्याशयः।३८-३९।

यद्युक्तं तत् कुरुष्वाद्य नाहमाज्ञापये प्रभो!।
सीतायास्तद् वचः श्रुत्वा रामो ध्यात्वाऽब्रवीत् क्षणम्॥४०

**यद्युक्तमिति**—क्षणं ध्यात्वाऽब्रवीदित्यस्यैतस्याः एकरूपं नित्यजानक्या एकं आवेशरूपं आवेशिनीं नित्यां प्राप्नोतु प्रेमारूपं कमलाख्यसखीरूपसाकेतनित्यविहारिश्रीजानकीसमीपे तिष्ठतु। एकं पद्मारूपं आदिनारायणेन सह वैकुण्ठं यात्वित्याशयः।४०

देवि! जानामि सकलं तत्रोपायं वदामि ते।
कल्पयित्वा मिषं देवि! लोकवादं त्वदाश्रयम्॥४१

त्यजामि त्वां वने लोकवादाद् भीत इवापरः।
भविष्यतः कुमारौ द्वौ वाल्मीकेराश्रमान्तिके ॥४२
इदानीं दृश्यते गर्भः पुनरागत्य मेऽन्तिकम्।
लोकानां प्रत्ययार्थं त्वं कृत्वा शपथमादरात् ॥४३
भूमेर्विवरमार्गेण वैकुण्ठं यास्यसि द्रुतम्।
पश्चादहं गमिष्यामि एष एव सुनिश्चयः ॥४४

**भूमेरिति**–भूमेर्विवरमार्गेण द्रुतं वैकुण्ठं यास्यसि-इत्यस्य गुप्ताऽयोध्यास्थिता नित्यविहारि-श्रीजानकी तत्समीपसेवार्थं एकं रूपं विसृज्य द्वितीयेन वैकुण्ठे मत्समीपं गमिष्यसि इत्यभिप्रायः।४४

इत्युक्त्वा तां विसृज्याथ रामो ज्ञानैकलक्षणः।
मन्त्रिभिर्मन्त्रतत्त्वज्ञैर्बलमुख्यैश्च संवृतः ॥४५
तत्रोपविष्टं श्रीरामं सुहृदः पर्युपासत।
हास्यप्रौढकथासुज्ञा हासयन्तः स्थिता हरिम् ॥४६
कथाप्रसङ्गात् पप्रच्छ रामो विजयनामकम्।
पौरा जानपदा मे किं वदन्तीह शुभाऽशुभम् ॥४७

**तत्रोपविष्टमिति**–हास्यकथाप्रौढं विजयनामकं सखायं पप्रच्छेत्यनेन तेषां श्रीरामहार्दज्ञानमस्तीति ध्वनिः। न च वाच्यं श्रीरामहार्दज्ञा अपि ते कथमनृतं ब्रूयुरिति-'स्त्रीषु नर्मविवाहेषु नानृतं स्याज्जुगुप्सितमि'त्यादिस्मृतेर्दोषानवकाशात्। यद्वा वैकुण्ठसाकेतलोकगमनयत्नार्थं प्रजानां तस्य च श्रीरामप्रेरितत्वेन तत्कथनेऽपि न दोषाकारः।४६-४७।

सीतां वा मातरं वा मे भ्रातॄन् वा कैकयीमथ।
न भेतव्यं त्वया ब्रूहि शापितोऽसि ममोपरि ॥४८
इत्युक्तः प्राह विजयो देव! सर्वे वदन्ति ते।
कृतं सुदुष्करं सर्वं रामेण विदितात्मना ॥४९
किन्तु हत्वा दशग्रीवं सीतामाहृत्य राघवः।
अमर्षं पृष्ठतः कृत्वा स्वं वेश्म प्रत्यपादयत् ॥५०
कीदृशं हृदये तस्य सीतासम्भोगजं सुखम्।
या हृता विजनेऽरण्ये रावणेन दुरात्मना ॥५१
अस्माकमपि दुष्कर्म योषितां मर्षणं भवेत्।
यादृक् भवति वै राजा तादृश्यो नियतं प्रजाः ॥५२

श्रुत्वा तद्वचनं रामः स्वजनान् पर्यपृच्छत।
तेऽपि नत्वाऽब्रुवन् राममेवमेतन्न संशयः ॥५३
ततो विसृज्य सचिवान् विजयं सुहृदस्तथा।
आहूय लक्ष्मणं रामो वचनं चेदमब्रवीत् ॥५४
लोकापवादस्तु महान् सीतामाश्रित्य मेऽभवत्।
सीतां प्रातः समानीय वाल्मीकेराश्रमान्तिके ॥५५
त्यक्त्वा शीघ्रं रथेन त्वं पुनरायाहि लक्ष्मण!।
वक्ष्यसे यदि वा किञ्चित्तदा मां हतवानसि ॥५६
इत्युक्तो लक्ष्मणो भीत्या प्रातरुत्थाय जानकीम्।
सुमन्त्रेण रथे कृत्वा जगाम सहसा वनम् ॥५७
वाल्मीकेराश्रमस्यान्ते त्यक्त्वा सीतामुवाच सः।
लोकापवादभीत्या त्वां त्यक्तवान् राघवो वने ॥५८

**वाल्मीकेरिति**—वाल्मीकेराश्रमस्यान्ते इत्यनेन स्त्रियाः पुरुषसमीपे स्थापनानर्हत्वेन वाल्मीकेः सखी उपासना व्यक्ता। वाल्मीकेराश्रमस्य तमसातीरे स्थितस्य 'वाल्मीकेराश्रमे पुण्ये तमसातीरशोभिते' इति वाल्मीकीये-तत्समीपप्रमोदवनप्रान्त इत्यर्थः। अयोध्यां परितः प्रमोदवनमस्तीत्यादि रामायणे स्पष्टम्।५८

दोषो न कश्चिन्मे मातर्गच्छाश्रमपदं मुनेः।
इत्युक्त्वा लक्ष्मणः शीघ्रं गतवान् रामसन्निधिम् ॥५९
सीताऽपि दुःखसन्तप्ता विललापातिमुग्धवत्।
शिष्यैः श्रुत्वा च वाल्मीकिः सीतां ज्ञात्वा स दिव्यदृक् ॥६०

**सीतेति**—मुग्धवदित्यस्य स्वलीलागोपनार्थमिति भावः।६०

अर्घ्यादिभिः पूजयित्वा समाश्वास्य च जानकीम्।
ज्ञात्वा भविष्यं सकलमर्पयन् मुनियोषिताम् ॥६१

**अर्घ्यादिभिरिति**—वाल्मीकाश्रमगमनेन तत्पूजनेन च वाल्मीकेः श्रीजानक्युपासना व्यक्ता।६१

तास्तां सम्पूजयन्ति स्म सीतां भक्त्या दिने दिने।
ज्ञात्वा परात्मनो लक्ष्मीं मुनिवाक्येन योषितः ॥६२

रामोऽपि सीतारहितः परात्मा,
विज्ञानदृक् केवल आदिदेवः।
सन्त्यज्य भोगानखिलान् विरक्तः,
मुनिव्रतोऽभूत् मुनिसेविताङ्घ्रिः ॥६३

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
उत्तरकाण्डे चतुर्थोऽध्यायः ।४

⊙

**रामोऽपीति**–सीतारहितत्वात् मुनिव्रतः अत एव मुनिसेविताङ्घ्रिः। सीताविरहासहिष्णुतया वाल्मीकाश्रमसमीपे प्रमोदवने प्रासादं कारयित्वा स्थितः तदा मुनिभिः [1]सेवितोऽङ्घ्रिः यस्य स, एतेन सीतायां प्रीत्यतिशयो व्यक्तः। तेन च श्रीरामस्य रसिकशिरोमणित्वं व्यक्तम्। मुनिसेविताङ्घ्रिरभूत् वाल्मीकीये यन्नैमिषारण्ये गमनमुक्तं तत् कल्पान्तरीयम्, अपि शब्दस्वारस्येन यत्र श्रीसीता गता तत्रैव गमनस्योचितत्वात्। अन्यथाग्रे एकान्ते रामालालितपादपङ्कजमित्युक्तम्। 'ततः कुमारावादाय अयोध्यामगमत् प्रभुरिति' च वक्ष्यमाणं न सङ्गच्छेत्। एतदध्यात्म रामायणे तु वाल्मीकीयाश्रमसमीपप्रमोदवन एव गमनमनुक्तत्वादवधेयमिति ।६३

[2]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामुत्तरकाण्डे
चतुर्थोऽध्यायः ।४

⊙

---

१. सेवितो अङ्घ्री, रा० व० पु०। २. इति श्रीउत्तरकाण्डे ध्वनिप्रकाशिकायां चतुर्थोऽध्यायः ४, रा० व० पु०।

## अथ पञ्चमोऽध्यायः

ततो जगन्मङ्गलमङ्गलात्मना,
विधाय रामायणकीर्तिमुत्तमाम्।
चचार पूर्वाचरितं रघूत्तमो,
राजर्षिवर्यैरभिसेवितं यथा ॥१

श्रीसीतारामचन्द्राय नमः। अथ भगवान् बादरायणो भवभयाभितप्तलोकोद्दिधीर्षया श्रीरामलक्ष्मणसंवादमुखेनाध्यात्मविद्याविचारं प्रपञ्चयिष्यन् पूर्वग्रन्थेनास्य सङ्गतिं प्रदर्शयितुं तत्रादौ प्रथमश्लोकेन पूर्वकथां संक्षेपतः प्रस्तौति **तत-इति**-रघूत्तमः अवाङ्मनस-गोचरानन्तकल्याणगुणगणद्विभुजदिव्यमङ्गलविग्रहः परनारायणे-आवेशेन प्रविष्टः श्रीरामचन्द्रः जगन्मङ्गलमङ्गलात्मना जगतां मङ्गलं यस्मात् स चासौ मङ्गलात्मा 'मङ्गलानाञ्च मङ्गलमिति' स्मृतेः, तेन नित्यरासविलासरसिकस्वरूपेणेत्यर्थः। उत्तमां सकलकलिकलमषापहृतया सर्वोत्कृष्टां रामायणकीर्तिम्-ईयते प्राप्यते इत्ययनं बाहुलकात् कर्मणि ल्युट्, रामः अयनं यत्र प्रतिपाद्यतया तद् रामायणम्। यद्वा राम ईयते अनेनेति रामायणं, करणे ल्युट् पूर्वपदात् संज्ञायामिति णः। यद्वा रामस्यायनं गृहं रामायणं श्रीरामविहरणस्वरूपमित्यर्थः। तत्त्वेन प्रसिद्धां रावणवधादिरूपां कीर्तिं विधाय भुवनेषु विस्तार्य ततः अनन्तरं अर्थात् वाल्मीक्याश्रमसमीपवर्तिप्रकटप्रमोदवनगमनानन्तरं पूर्वाचरितं पूर्वस्मात् कालात् गुप्ततया आचरितं न तु कदाचिदपि विच्छिन्नमित्यर्थः। तादृशं नित्यरासविलासनृत्यादिकं सखिभिः सह विहारादिकं च राजर्षिवर्यैर्लक्ष्मणादिभि यथा पूर्वं नित्यविहारे परिसेवितं तथेदानीं चचारेत्यर्थः, इति सावशेषामपि कथामुपसं-हृत्योक्तवान् श्रीशिव इत्यवधेयम्।१

सौमित्रिणा पृष्ट उदारबुद्धिना,
रामः कथाः प्राह पुरातनीः शुभाः।
राज्ञः प्रमत्तस्य नृगस्य शापतो,
द्विजस्य तिर्यक्त्वमथाऽऽह राघवः ॥२

प्रकटप्रमोदवने श्रीरामस्य यद्वृत्तमभूत् तदाह **सौमित्रिणेति**-शुभाःधर्माधर्मगोचरतया निश्रेयससाधनीः पुरातनीः प्राचीनधार्मिकराजसंबन्धिनीः पुरातनीः कथा इति बहुवचनेन

धर्मनिर्णेत्रीः ब्रह्मकथा पृष्टाः, तासामुत्तरं च रामेण दत्तमिति व्यक्तम्। प्रमत्तस्य अज्ञानात् स्वगोमण्डलमिश्रविप्रगवीदानरूपप्रमादं प्राप्तस्य द्विजशापात्तिर्यक्त्वम् आह। ननु रामचन्द्रस्तं धार्मिकाग्रेसरं जानन्नपि कुतः [1]तिर्यत्काल मोचयामासेति चेत्—'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति स्मृत्या कृष्णोपासकस्य तस्य कृष्णरूपचरणस्पर्शाभिलाषं ज्ञात्वा कृष्णरूपेणैवानुग्रहोऽभिप्रेतो भगवत इत्यवधेयम्।२

कदाचिदेकान्त उपस्थितं प्रभुं,
रामं रमालालितपादपङ्कजम्।
सौमित्रिरासादितशुद्धभावनः,
प्रणम्य भक्त्या विनयान्वितोऽब्रवीत्॥३

पूर्वं पूर्वमीमांसार्थं श्रुत्वाऽथ ज्ञानकाण्डार्थमुत्तरमीमांसाविषयकप्रश्नं करोमीत्याह **कदाचिदित्यादि**-आसादितशुद्धभावनः आसादिता शुद्धा सच्चिदानन्दरामसम्बन्धिनी येन सः, एतेन शेषसंकर्षणक्षीरसागरवासिनारायणनित्यविहारि [2]रामानुजवरलक्ष्मणांश इत्येवं अंशचतुष्टयविशिष्टो लक्ष्मणः। तत्राचार्यरूपेण शेषांशे प्रश्नः। तेन प्रश्नस्य लोकोपकार एव प्रयोजनमिति ध्वनिः। रमालालितपादपङ्कजम् रमया लालिते पादपङ्कजे यस्य स तम्। तेन वाल्मीक्याश्रमात् श्रीरामदर्शनार्थं श्रीजानकी प्रत्यहमागच्छत् इति ध्वनिः। तेन च श्रीरामेण सा न त्यक्तेति।३

त्वं शुद्धबोधोऽसि हि सर्वदेहिना-
मात्माऽस्यधीशोऽसि निराकृतिः स्वयम्।
प्रतीयसे ज्ञानदृशां महामते!,
पादाब्जभृङ्गाहितसङ्गिसङ्गिनाम् ॥४

**त्वमिति**—त्वं शुद्धबोधोऽसि ज्ञानस्वरूपोऽसीत्यर्थः। 'सत्यं ज्ञानमनन्तं ब्रह्मेति' श्रुतेः। सर्वदेहिनामात्माऽसि, अन्तर्यामित्वात् 'यस्यात्मा शरीरं य आत्मानमन्तरामययती'ति श्रुतेः, अधीशोऽसि मायाजीवेश्वराणां ईशोऽसि, 'राजाधिराजः सर्वेषां ब्रह्मविष्णुमयो महान्। ईश्वरं तं विजानीमः स पिता प्रपितामहः॥' इति श्रुतेः निराकृतिः प्राकृताकृतिरहितः। यद्वा निर्गता आकृतयो येन सः, यद्भजनेन पुनर्देहसम्बन्धो न भवतीत्यर्थः। यद्वा निर्गता आविर्भूताः आकृतयो मत्स्यादयो यस्मात् सः 'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पनेति' श्रुतेः। एतेन 'तमीश्वराणां परमं महेश्वरमि'त्यादिश्रुतिप्रतिपादितसर्वेश्वरत्वं तस्य व्यक्तम्। महामते-एतेन लोकोपकारकतत्प्रश्नोत्तरदाने त्वमेव समर्थोऽसीति, तेन

---

१. तिर्यक्त्वान्न इत्युचितः। २. रामानुचर इति मत्पुस्तके।

लक्ष्मणस्यापि परमेश्वरत्वमिति व्यक्तम्। पादाब्जभृङ्गाहितसङ्गसङ्गिनां त्वच्चरण-कमलयोर्भृङ्गवदाहितः सङ्गो यैस्तेषां लब्धषष्ठशरीराणां सङ्गोऽस्ति येषां तेषां प्रतीयसे बुद्ध्यसे इत्यर्थः।४

अहं प्रपन्नोऽस्मि पदाम्बुजं प्रभो!
भवापवर्गं तव योगिभावितम्।
यथाऽञ्जसाऽज्ञानमपारवारिधिं,
सुखं तरिष्यामि तथाऽनुशाधि माम्॥५

**अहमिति**–अपारवारिधिं अज्ञानं यथा सुखं तरिष्यामि तथा मामनुशाधीयमुक्तिः परमेश्वरस्यापि विराड्रूपेण सकलजीवतादात्म्याभिमानेनेति तेन दयालुतातिशयस्तेना-चार्यत्वं व्यक्तम्।५

श्रुत्वाऽथ सौमित्रिवचोऽखिलं तदा,
प्राह प्रपन्नार्तिहरः प्रसन्नधीः।
विज्ञानमज्ञानतमः प्रशान्तये,
श्रुतिप्रपन्नं क्षितिपालभूषणः॥६

**श्रुत्वेति**–जीवानामज्ञानरूपं यत् तमः तस्योपशान्तये श्रुतिभिः 'तमेव विदित्वाऽति-मृत्युमेति' इत्यादिश्रुतिभिः (प्रपन्नं) तत्प्रापकत्वेन बोधितम्।६

आदौ स्ववर्णाश्रमवर्णिताः क्रियाः,
कृत्वा समासादितशुद्धमानसः।
समाप्य तत्पूर्वमुपात्तसाधनः,
समाश्रयेत् सद्गुरुमात्मलब्धये॥७

**आदाविति**–प्राप्तान्तःकरणशुद्धिः गृहीतसाधनचतुष्टयः आत्मनः मम लब्धये नित्यसाकेतरूपेण प्राप्तये सद्गुरुं श्रोत्रियं ब्रह्मनिष्ठं 'तद्विज्ञानार्थं सद्गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमि'ति श्रुतेः।७

क्रिया शरीरोद्भवहेतुरादृता,
प्रियाऽप्रियौ तौ भवतः सुरागिणः।
धर्मेतरौ तत्र पुनः शरीरकं,
पुनः क्रियाश्चक्रवदीर्यते भवः॥८

**क्रियेति**–भवः संसारः चक्रवत् परिवर्तमानः ईर्यते कथ्यते तदेवोपपादयति, आदृता आदरपूर्वं सम्पादिता क्रिया शरीरस्योद्भवे हेतुः कारणम्। तत्र देहे सुरागिणः अभिलाषवतः तौ शास्त्रप्रसिद्धौ धर्मेतरौ धर्माधर्मौ प्रियाऽप्रियौ सुख (दुःख) जनकौ भवतः। तत्रोत्पादित-कर्मणा पुनः शरीरं पुनः क्रिया इत्येवं चक्रवत् विपरिवृत्तिः। यावद्देहाभिमानेन कर्माणि-करोति तावत्तस्य संसार इत्यर्थः।८

अज्ञानमेवास्य हि मूलकारणं,
तद्धानमेवात्र विधौ विधीयते।
विद्यैव तन्नाशविधौ पटीयसी,
न कर्म तज्जं सविरोधमीरितम्॥९

**अज्ञानमिति**–अस्य भवस्य मूलकारणमज्ञानम् अत्र विधौ संसारनिवृत्तिलक्षणे कर्त्तव्यार्थे तद्धानमेव मूलकारणत्वात् अज्ञानहानमेव विधीयते साधनत्वेनेति शेषः। ननु कर्मैव तन्नाशकमस्तु किं ज्ञानेनेत्याशङ्क्याह—विद्यैव ज्ञानमेव तन्नाशविधौ मूलाज्ञाननाशजनने पटीयसी समर्था, न तज्जम्, अज्ञानजन्यं कर्म न समर्थमिति शेषः। आत्मस्वरूपाज्ञान-जन्यदेहाद्यभिमानजन्यत्वात् कर्मणोऽज्ञानजन्यत्वं बोध्यम्। ननु तज्जन्यस्यापि तन्नाशकत्व वृश्चिकादौ दृष्टमित्याशङ्क्य तज्जन्यत्वं न, न वा नाशकत्वं किन्तु सविरोधमेवेत्याह--यत् सविरोधं तदीरितम् नाशकमुक्तमित्यर्थः। 'विद्याऽविद्ये मम तनू विद्ध्युद्धव! शरीरिणां। बन्धमोक्षकरी, आद्ये मायया मे विनिर्मिते॥' इति भागवतोक्तेरहं बुद्धिभूतमूलाज्ञानापर-पर्यायमूलप्रकृतिभेदज्ञानाज्ञानयोरेकरूपत्वेन विरोधाभावात् कथं विद्यया तन्निवृत्तिरिति चेन्न अत्र स्वभावतो मुक्तो जीवो भ्रमात् बद्धोऽस्मीति मन्यते। आत्मदास्यं हरेः स्वाम्य-मित्युक्तचरमविद्यारूपविद्ययाऽविद्यामूलाऽज्ञाननिवृत्तिरिति--अतः मूलप्रकृतिपरिणामरूपा विद्या मोक्षकरी, चरमविद्या तु भ्रममात्रनिवृत्तिकरी स्वभावात् एव बन्धस्याभावादिति विवेकः।९

नाज्ञानहानिर्न च रागसंक्षयो,
भवेत्ततः कर्म सदोषमुद्भवेत्।
ततः पुनः संसृतिरप्यवारिता,
तस्माद् बुधो ज्ञानविचारवान् भवेत्॥१०

तदेवाह **नाज्ञानेति**—कर्मणाऽज्ञानहानिर्भवेत्, विरोधाभावादितिभावः ततः सदोषात् कर्मणः।१०

ननु क्रिया वेदमुखेन चोदिता,
तथैव विद्या पुरुषार्थसाधनम्।
कर्तव्यता प्राणभृतः प्रचोदिता,
विद्यासहायत्वमुपैति सा पुनः ॥११

इदानीं ज्ञानातिरिक्तस्य मोक्षसाधनत्वं निराकर्त्तुं ज्ञानवत् कर्मणामपि साधनत्वं वदति **नन्विति**–नन्विति शङ्कायाम्। यथा विद्या वेदमुखेन श्रुतिस्मृतिपुराणलक्षणेन 'ब्रह्मविदाप्नोति परम्' इत्यादिना पुरुषार्थसाधनं तथा 'अपामसोमममृता अभूमे' त्यादिना क्रियाऽपि तत् साधनत्वेनोक्ता। ननु कर्मणां मोक्षसाधनत्वं न घटते 'तमेव विदित्वाति-मृत्युमेति नान्यः पन्था विद्यतेऽयनाये' तिश्रुतेः, इत्याशङ्क्य विद्याङ्गतया कर्मणां मोक्षसाधनत्वं वदति। कर्त्तव्यतेति-क्रिया कर्त्तव्यता तृतीयार्थे प्रथमा कर्त्तव्यतया आवश्यके कृत्ये आवश्यक [1]कर्त्तव्यतया प्रचोदिता [2]नित्यनैमित्तिकरूपा एवं च तदकरणे प्रत्यवायो [3]त्पत्त्या ज्ञानोत्पत्तिरेव न स्यात्, तस्मात् पुनर्विद्यायाः सहायत्वं प्राप्नोति। तदेवं पूर्वार्द्धे मीमांसकमतेन केवलस्याऽपि कर्मणोऽपि मोक्षसाधनत्वमुद्भावितम्, उत्तरार्द्धेन कर्मणः विद्याङ्गत्वमुद्भावितम्।११

कर्माकृतौ दोषमपि श्रुतिर्जगौ,
तस्मात्सदा कार्यमिदं मुमुक्षुणा।
ननु स्वतन्त्रा, ध्रुवकार्यकारिणी,
विद्या न किञ्चिन्मनसाप्यपेक्षते ॥१२

**कर्मेति**–कर्मणां, अवश्यकर्त्तव्यतामाह, दोषमपि श्रुतिरिति 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति श्रुतेः दोषं जगौ तत्तु क्रियायाः विद्याङ्गत्वे न घटते, विद्यायाः निरपेक्षत्वादित्याशङ्कते नन्विति-ध्रुवं नित्यस्वाभाविकं आत्मदास्यहरिस्वामित्वरूपं तस्य कार्यं तदनुसन्धानं तस्य कारिणी सम्पादिका विद्या शास्त्रजन्या किञ्चित् सहाय-भूतं वस्तु नापेक्षते। सर्वथा निरपेक्षतां सूचयितुं मनसेति-यतः स्वतन्त्रा विनाऽपि सहायं स्वकार्यसम्पादने समर्था। तथा च प्रयोगः विद्या स्वविरोधिनिरसने निरपेक्षा स्वतन्त्रत्वात् तेजोवदिति।१२

न सत्यकार्योऽपि हि यद्वदध्वरः,
प्रकाङ्क्षतेऽन्यानपि कारकादिकान्।
तथैव विद्या विधितः प्रकाशितै-
र्विशिष्यते कर्मभिरेव मुक्तये ॥१३

---

१. कर्तव्यता रा० व० पु०। २. नित्या, रा० व० पु०। ३. उक्त्या रा० व० पु०।

पुनः कर्मणो विद्याङ्गत्वं स्थापयति नेति–त्वदुक्तं नेत्यर्थः। सत्यकार्यः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादिवेदेन बोधितकार्योऽपि यद्वत्, अन्यानपि कारकादिकान् आरादुपकारकप्रयाजाद्यङ्गानि देशकालादीनि च प्रकाङ्क्षते तथा विद्याऽपि विधितः विधिवाक्यतः 'अग्निहोत्रं जुहोति' इत्यादिविधिवाक्यतः प्रकाशितैः कर्मभिः सहितैव मुक्तये विशिष्यते इत्यर्थः।[1] विद्या चात्र प्रकृतिकार्यभूता तत्रैव मीमांसकस्य कर्माङ्गत्वेन समुच्चयवादः, न तु परमविद्यायाम्।[2] विद्या फलदाने कर्मापेक्षा अङ्गित्वात् प्रयाजाद्यङ्गापेक्षदर्शादिवदिति-सत्प्रतिपक्षानुमानमनेन सूचितम्।१३

केचिद् वदन्तीति वितर्कवादिन,-
स्तदप्यसद् दृष्टविरोधकारणात्।
देहाभिमानादभिवर्धते क्रिया,
विद्या गताहङ्कृतितः प्रसिद्ध्यति।।१४

तदेवं पक्षद्वयमुद्भाव्य सिद्धान्ती दूषयति, **केचिदिति**-केचित् कर्मतदङ्गज्ञानावलम्बिनः मीमांसकाः इति पूर्वोक्तरीत्या कर्मणः कर्माङ्गज्ञानस्य च मोक्षसाधनत्वं वदन्ति। तदसत्। वितर्कवादिनः नैयायिकाः, षोडशपदार्थतत्त्वज्ञानं मोक्षसाधनत्वं वदन्तीति शेषः। तदप्यसत्। तत्र हेतुः दृष्टविरोधकारणात् षोडशपदार्थतत्त्वज्ञानं [3]कर्ममार्गाङ्गज्ञानञ्च मनोवचनगोचरम् 'यतो वाचो निवर्तन्ते' इति श्रुतिप्रतिपादितपरमात्मसेव्यत्वानुसंधानपरत्वेन मुक्तिसाधिका चरमविद्या मनोवचनागोचरेत्येवं दृष्टे यो विरोधस्तद्रूपात् कारणात्। किञ्च कर्मफलभूतः स्वर्गादिर्न पुरुषार्थः 'यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इति श्रुत्या तस्य क्षयिष्णुत्वात्। कर्माङ्गज्ञानेनापि न पुरुषार्थसिद्धिः। जडस्य कर्मणः ज्ञानसहायकारणासम्भवात् सुषुप्तिवत्। केवल दुःखध्वंसोऽपि न पुरुषार्थः 'अस्माच्छरीरादुत्थाय परं ज्योतीरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यते। यक्षन् क्रीडन् रममाणः, 'तरति शोकमात्मवित्' 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यादि श्रुतिभिः दुःखध्वंसपूर्वकनिरतिशयानन्दस्यैव पुरुषार्थत्वेन प्रतिपादनात्। तस्मात् वाङमनसागोचर-[4]चरमविद्ययैवात्यन्तिकनिःश्रेयसप्राप्तिरिति सिद्धम्। न चैवं किमिति सर्वे नानामतावलम्बिन इति चेत् तत्राह देहाभिमानात्। [5]अनात्मनि देहादौ आत्माभिमानमात्रात् क्रिया नानामतावलम्बनरूपाऽभिवर्द्धते। गताऽहङ्कृतितः सार्वविभक्तिकस्तसिः नष्टाऽहङ्कृतेः विद्या मत्स्वामित्वानुसन्धानरूपा, चरमविद्या प्रसिद्ध्यति।१४

---

१. तः २. पर्यन्तांशः न विद्यते रा० व० पु०।३. कर्मकर्माङ्गज्ञानञ्च रा० व० पु०। ४. चर इति रा० व० पुस्तकस्थः। ५. आत्मनि, मत्पुस्तके।

विशुद्धविज्ञानविरोचनाञ्चिता,
विद्यात्मवृत्तिश्चरमेति भण्यते।
उदेति कर्माऽखिलकारकादिभि-
र्निहन्ति विद्याऽखिलकारकादिकम् ॥१५

तदेव कथयति **विशुद्धेति**–विशुद्धं यत् विज्ञानं 'विज्ञानमानन्दं ब्रह्मेति' श्रुतिपादितं ब्रह्म तस्मिन् विरोचनं विशेषेण प्रीतिः तेनाञ्चिता श्लाघिता या चरमा षष्ठशरीरे च सेव्यसेवकत्वानुसन्धानरूपा आत्मनि श्रीरामे वृत्तिः [1]सेव्यवृत्तिः सा विद्या भण्यते। विद्या-कर्मणोर्वैषम्यमाह उदेति इत्युत्तरार्द्धेन।१५

तस्मात् त्यजेत् कार्यमशेषतः सुधी-
र्विद्याविरोधान्न समुच्चयो भवेत्।
आत्मानुसंधानपरायणः सदा,
निवृत्तसर्वेन्द्रियवृत्तिगोचरः ॥१६

उपसंहरति **तस्मादिति**–तस्मात्त्यजेत् कार्यमशेषतः सुधीरित्यनेन मीमांसकमतम्-अङ्गाङ्गिभावं नैयायिकमतञ्च निराकृतम्। चरम [2]विद्यास्वरूपञ्चोक्तम् 'विद्याविरोधान्न समुच्चयो भवेत्'। तादृशे मोक्षसाधने कर्मणः सम्बन्धो न भवेदित्यर्थः। स्वतः सिद्धोपा-यातिरिक्तं तादृशे मोक्षे असदित्यभि [3]प्रेत्योक्तम् अशेषत इति। भक्त्यैव मोक्ष इत्यत्र श्रुतिः प्रमाणं 'भक्तिरेवैनं नयति, भक्तिरेवैनं दर्शयति भक्तिवशः पुरुष' इति। इदानीं जीवस्य कर्त्तव्यमाह आत्मेति। निवृत्ताः सर्वेन्द्रियवृत्तीनां गोचराः विषयाः यस्मात् स अर्थात् चिन्मात्रकैवल्यरूपः सन् आत्मनोः परमात्मजीवात्मनोः सेव्यसेवकरूपेणानुसन्धानपरायणः सदा भवेत् षष्ठशरीरेणेति शेषः।१६

यावच्छरीरादिषु माययात्मधी-
स्तावद् विधेयो विधिवादकर्मणाम्।
नेतीति वाक्यैरखिलं निषिध्य त-
ज्ज्ञात्वा परात्मानमथ त्यजेत्क्रियाः ॥१७

**यावदिति**–शरीरादिषु स्थूलशरीरादिषु आदिशब्देन सूक्ष्मकारणमहाकारणेषु मायया अज्ञानेन यावदहङ्कृतिः तावत् कर्मणां विधेयो वशवर्ती तत्कर्त्ता भवेत्। नेति-वाक्यैर्नेति

---

१. सेव्यवृत्तिः, इति रा० व० पुस्तकस्थः। २. विद्यास्वरूपञ्चोक्तम् इति रा० व० पुस्तकस्थः। ३. प्रोक्तम्, मत्पुस्तके।

इत्यतन्निरसनैः सकलं निषिध्य अनन्तरं कैवल्यशरीरे स्थित्वा तद्दत्तषष्ठशरीरेण 'मुक्तस्य विग्रहलाभ' इति श्रुतेः। परात्मानं आत्मभ्यः परम् इति परात्मानं मां ज्ञात्वा क्रिया साधनक्रियाः त्यजेत्।१७

यदा परात्मात्मविभेदभेदकं,
विज्ञानमात्मन्यवभाति भास्वरम्।
तदैव माया प्रविलीयतेऽञ्जसा,
सकारका कारणमात्मसंवृतेः॥१८

**यदेति**—यदा परात्मात्मभेदविभेदकं चित्त्वेन [1]जीवपरमात्मनोरभेदे सिद्धे [2]जीवपरमात्मविभेदः नाऽहं चित्तत्वं देहोऽस्मीति रूपः तद्भेदकं तन्नाशकं विज्ञानं भास्वरं चितत्वेनैक्यप्रकाशकं आत्मनि चिन्मात्रे स्वरूपे भाति तदैव माया नाऽहं चिदित्यज्ञानमूलभूता अनायासेन निवर्तते। एतेन जीवपरमात्मानावेकं तत्त्वं जीवावरणभूतमायादयः अचित्त्वेन द्वितीयं तत्त्वम्—इति दर्शितं तत्त्वद्वयं तिष्ठति, 'चेत्यमेकं [3]चित्तत्त्वमन्यत्र पदार्थे जातमि'ति श्रुतेः।१८

श्रुतिप्रमाणाभिविनाशिता च सा,
कथं भविष्यत्यपि कार्यकारिणी।
विज्ञानमात्रादमलाऽद्वितीयत-,
स्तस्मादविद्या न पुनर्भविष्यति॥१९

उक्तमेवार्थं पुनर्वैशद्याय आह **श्रुतीति**—'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।' 'नदत्यविद्यामात्मवित्।' 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्यादि श्रुतिभिरभिविनाशिता साऽविद्या कथमपि कार्यकारिणी भविष्यति ? काकुरत्र सर्वथा नेत्यर्थः। विनष्टायाः तस्याः [4]कार्यकारित्वासम्भवादिति भावः। पुनश्च तस्याः नोद्भव इत्याह विज्ञानेति-विज्ञानमात्रात् चिन्मात्रात् अमलः निर्मलः अद्वितीयः न द्वितीयः श्रीरामादन्यः सहायो यस्य तस्मात् भगवद्दत्तशरीरं प्राप्तात् अविद्या पुनर्न भविष्यति।१९

---

१. तः २. पर्यन्तांशः रा० व० पुस्तकस्थः। ३. चितत्वमन्यन्न विदाम किञ्चिदिति श्रुतेः, रा० व० पु०। ४. कार्यकारिता, रा० व० पु०।

यदि स्म नष्टा न पुनः प्रसूयते,
कर्ताहमस्येति मतिः कथं भवेत्।
तस्मात् स्वतन्त्रा न किमप्यपेक्षते,
विद्या विमोक्षाय विभाति केवला ।।२०

**यदीति**—यदि नष्टा नाशिता पुनः न प्रसूयते तर्हि अहं कर्त्तेति मतिः अस्य जनस्य कथं भवेत् न कथमपीत्यर्थः। कारणाभावे कार्याभावादिति भावः। सार्द्धेन तत्त्वज्ञानादविद्यानाश उक्तः, तत्र मायानाशे तत्त्वद्वयसिद्धान्तभङ्ग इति चेत्तत्राह-तस्मादिति यस्मादविद्या नष्टा तस्मात् विद्या चरमविद्या, आत्मदास्यहरिस्वामित्वानुसन्धानरूपा जीवसदातनस्वभावभूता, अचित्त्वे सति, स्वातन्त्र्येण चेतनकार्यकारित्वं दिव्याचित्त्वमिति, लक्षणलक्षिता दिव्या चिद्रूपा, तत्त्वद्वयस्य चेतनाचेतनत्वेन विभागं कृत्वा स्वभावस्याचेतनेषु परिगणितत्वात्। एतदुपलक्षितदिव्यमायाकालकर्मादयो भगवल्लीलोपयोगिनः साकेते सन्तीति-साकेतवर्णने वृन्दावनवर्णने शिवसंहितावशिष्ठसंहितादिपुराणब्रह्मसंहितादिषु प्रसिद्धा इति बोध्यम्। नन्वेवं भक्तेः सच्चिदानन्दवर्णनं कथमिति चेत् उच्यते भगवद्विषयको द्वेषप्रतिपक्षी यो रागः स एव भक्तिः दिव्या चित्, द्वेषप्रतिपक्षभावाद्रसशब्दाच्च राग इति 'सा परानुरक्तिरीश्वरे' इति शाण्डिल्यसूत्रोक्तेः, दिव्याचित्त्वेऽपि [1]'भगवत्सम्बन्धित्वाच्चिद्रूपा, यत्र वृक्षलतागुल्मपत्रपुष्पफलादिकं यत्किञ्चित् पक्षिभृङ्गादि तत् सर्वं भाति। चिन्मयमितिवत् 'मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे। अग्रतः शिवरूपाय पिप्पलाय नमो नमः।।' इत्यादि प्रमाणेन अश्वत्थे विष्णवादिभावनावत् शालग्रामशिलावच्च स्वतन्त्रा सर्वक्लेशहरणे सर्वकल्याणकरणे परमात्माकर्षणे निरपेक्षा, केवला आनन्दैकरूपा मोक्षाय किमपि विज्ञानादिकमपि नापेक्षते। मोक्षाय स्वयं विभाति, मोक्षदाने स्वयमेव समर्था सती शोभते, इत्यर्थः। एतेन मुक्तेरप्यधिका, तेन च वाङ्मनसागोचरत्वेन दुर्लभ्येति सूचितम्। उक्तञ्च भक्तिरसामृतसिन्धौ 'क्लेशघ्नी शुभदा मोक्षलघुताकृत् सुदुर्लभा। सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षिणी मतेति।।' अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतं। आनुकूल्येन कृष्णानुसेवनं भक्तिरुत्तमेति।। [2]अत्र द्वेषप्रतिपक्षचरमविद्याख्यो रागो भगवत्प्राप्तिकारण-भगवत्विषयकभक्तिशब्दवाच्यब्रह्मप्रीतिमयब्रह्मकर्तृकस्वाभाविकजगत्सर्जनेच्छारूपभेदेन द्विविधः। तत्रोत्तरः समष्टौ भावेन स्थितस्य जगतः स्पष्टीकरणहेतुर्जडतत्त्वम्, तत्र कार्यस्यैव नाशो न तु चरमविद्यायाः इति तत्त्वद्वयस्य न हानिरिति [3]बोध्यम्।२०

---

१. भगवत् इति न विद्यते रा० व० पु०। २. तः, ३. पर्यन्तांशः रा० व० पुस्तके नास्ति।

[1]सा तैत्तिरीयश्रुतिराह सादरं,
न्यासं प्रशस्ताखिलकर्मणां स्फुटम्।
एतावदित्याह च वाजिनां श्रुति-
र्ज्ञानं विमोक्षाय न कर्म साधनम् ॥२१

तत्त्वद्वये श्रुतिरपि प्रमाणमित्याह सा **तैत्तिरीयश्रुतिरिति**—न्यासं वेदेषु स्थापितं तत्त्वद्वयं सादरमाह—कीदृशं प्रशस्ताखिलकर्मणां प्रशस्तानि, अखिलानि कर्माणि येषां मुनीनां, स्फुटं व्यक्तं सा तैत्तिरीयेति—'सत्यञ्चानृतं च सत्यमभवत्' इत्यादिः तत्र सत्य-शब्देन जीवः अनृतशब्देन प्रकृतिः तयोः परमात्मशरीरत्वेन सत्यशब्दवाच्यः परमात्मैव सर्वम्। तत्र सत्यशब्देन जीवपरमात्मानौ चित्त्वेनैकं तत्त्वम्-अनृतशब्देन मायाकालकर्म-स्वभावादिकमेकं तत्त्वमित्येवं तत्त्वद्वयं सिद्धम्। तथा एतावतदित्यादि वाजिनां श्रुतिः 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' 'य आत्मनि तिष्ठन् यः पृथिव्यां तिष्ठन्नि' त्यादिवाजश्रुतौ विज्ञानघनशब्देनात्मा तदन्तर्यामिशब्देन च चित्त्वेनैकी-कृत्यजीवपरमात्मानावेकं तत्त्वं, पृथिव्यादि भूतजातं जडम् तत्त्वमिति तत्त्वद्वयम्। अथवा 'कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः। यद्प्रसादादिमे सन्ति न सन्ति यदुपेक्षयेति ॥' श्रुत्या जीवस्यापि स्वतन्त्रकर्तृत्वाभावात् परमात्माधीनकर्तृत्वाच्च जडजीवः। परतन्त्रमेकं तत्त्वं परमात्मा च स्वतन्त्रमपरं तत्त्वं, इति तत्त्वद्वयम्। तथा च शाण्डिल्यसूत्रे चित्यचितो-र्नतृतीयः मिथोऽपेक्षणात्, 'आत्मा हि परमः स्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवर' इति [2]माल्लवेयः। उक्तञ्च गारुडे 'सर्वज्ञाल्पज्ञताभेदात् सर्वशक्त्यल्पशक्तितः। स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः' इति गारुडे। 'नित्यो नित्यानां चेतन-श्चेतनानामेको बहूनां यो विदधाति कामान्। [3]तं पीठस्थं ये न भजन्ति धीरास्तेषां सिद्धिः शाश्वती नेतरेषाम् ॥' इति श्वेताश्वतरोपनिषदादिभिन्नोऽचिन्त्यः परमजीवसंघातपूर्णः यतस्त्वसौ नित्यमुक्तो स्वयं च बन्ध्यान् मोक्षं तत एवाभिवाञ्छेत्, इति सोमयाज्ञिक-कौशिकश्रुतेर्भिन्न एव जीवः। ज्ञानं-तत्त्वद्वयज्ञानं मोक्षसाधनमाह-कर्म नेत्याह।२१

विद्यासमत्वेन नु दर्शितस्त्वया,
क्रतुर्न दृष्टान्त उदाहृतः समः।
फलैः पृथक्त्वात् बहुकारकैः क्रतुः,
संसाध्यते ज्ञानमतो विपर्ययः ॥२२

तत्त्वद्वयं निरूप्येदानीं तत्त्वद्वयज्ञानानुसंधानस्फुरितया ज्ञानकर्माद्यनावृतशक्त्यैव

---

१. अस्य श्लोकस्य व्याख्या रा० व० पुस्तके न दृश्यते। २. अंशोऽयमस्पष्टः। ३. अत्रोत्तरार्द्धे प्रचलितपाठस्तु 'तत्कारणं सांख्ययोगादिगम्यं ज्ञात्वैवं मुच्यते सर्वपाशैः।' (श्वेताश्व० ६।१३)। 'तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्'। (कठो० २।२।१३) इति च समुपलभ्यते।

मोक्षः, न ज्ञानसहकृतकर्मणेति वक्तुं कर्मणः मोक्षसाधनत्वं निराकरोति **विद्यासमत्वेनेति श्लोकद्वयेन**। हे मीमांसक! त्वया विद्यासमत्वेन क्रतुरग्निष्टोमादिर्दर्शितः परन्तु समो दृष्टान्तो नोदाहृतः। अनेन क्रतुर्विद्यासमः श्रुतिबोधितकर्त्तव्यताकत्वात् इत्यनुमानं निरस्तं दृष्टान्ताभावात्। ननु विद्याकर्मणी समे एकफलत्वात् चक्रदण्डवदित्यनुमानमिति चेत्तत्राह फलैः पृथक्त्वात्। षष्ठ्यर्थे तृतीया फलानां भेदादित्यर्थः। एवञ्च स्वरूपासिद्धो हेतुरिति भावः। समानकारकत्वमपि हेतुर्नेत्याह [1]क्रतुभिः बहुभिः कारकैः अहं ममाभिमानरूपैः आन्तरैः [2]र्भास्वैश्च देशकालादिनियमैश्च साध्यते, ज्ञानं त्वतो विपर्ययवत् अतो न तयोः साम्यमिति भावः।२२

सप्रत्यवायो ह्यहमित्यनात्मधी-
रज्ञप्रसिद्धा न तु तत्त्वदर्शिनः।
तस्माद् बुधैस्त्याज्यमविक्रियात्मभि-
र्विधानतः कर्म विधिप्रकाशितम्॥२३

नन्वकरणे प्रत्यवायतया कर्म कार्यमिति चेन्नेत्याह **सप्रत्यवाय इति**-कर्मत्यागे हि निश्चयेनाहं प्रत्यवायसहितो भविष्यामीत्येवं शुद्धात्मनि अनात्मधर्मस्य धीरज्ञस्य तत्त्वज्ञानविकलस्य प्रसिद्धा न तु तत्त्वदर्शिनः तस्याहंबुद्धेरभावात्, पापादेरनात्मधर्मतानिश्चयाच्च। तस्माद् बुधैः क्रियात्मभिः षष्ठ्यर्थे तृतीया। फलासक्तचित्तानां विधानतो विधानेन कर्त्तव्यतया युक्तं कर्मविधिरवश्यकर्त्तव्यमपि त्याज्यमित्यर्थः। चित्तोरभेदेन एकं तत्त्वं मायानाशेऽपि दिव्यविद्ययाऽचिदेकं तत्त्वं संस्थापितम्। २३

श्रद्धान्वितस्तत्त्वमसीतिवाक्यतो,
गुरोः प्रसादादपि शुद्धमानसः।
विज्ञाय चैकात्म्यमथात्मजीवयोः,
सुखीभवेन्मेरुरिवाप्रकम्पनः॥२४

'अथ सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदेति' 'जीवा भिन्नाः परो भिन्न' इति 'पूर्णः परो जीवसङ्घो ह्यपूर्णः' 'ममैवांशो जीवलोके जीवभूतः सनातनः' 'भेदव्यपदेशाच्च' 'अंशो [3]नानाव्यपदेशादि, त्यादिश्रुतिस्मृतिसूत्रकदम्बकेषु जीवब्रह्मणोः पृथगुपन्यासात् तत्त्वत्रयं सिद्धमतः कथं तत्त्वद्वयमत आह **श्रद्धान्वित इति**—'तत्त्वमसी'ति वाक्यतः सामानाधिकरण्येन जीवपरमात्मनोश्चित्त्वेनैक्यं विज्ञाय सुखी भवेत्। तथाच (पूर्वश्लोकोक्ताः) भेदप्रतिपादकाः, 'अयमात्मा ब्रह्म', 'ब्रह्मैवेदं सर्वं', 'आत्मैवेदं सर्वम्', इत्याद्यभेदप्रतिपादिकाश्च श्रुतयः कथं सङ्गच्छेरन्निति चिन्तापनोदः सुखम्।२४

---

१. क्रतुरित्युचितः। २. बाह्यैश्च इत्युचितः प्रतीयते। ३. नाम मदीयपुस्तके।

आदौ पदार्थावगतिर्हि कारणं,
वाक्यार्थविज्ञानविधौ विधानतः।
तत्त्वम्पदार्थौ परमात्मजीवका-
वसीति चैकात्म्यमथानयोर्भवेत् ॥२५

महावाक्यार्थविपरीतं वाक्यार्थस्य पदार्थबोधपूर्वकत्वमाह **आदाविति**—विधानतः भ्रमप्रमादराहित्येन वाक्यार्थविज्ञानस्य विधावुत्पत्तौ आदौ प्रथमं मुख्यमिति यावत्, पदार्थावगतिः कारणम्। हि प्रसिद्धं तस्य पदत्रयं तत्त्वमसीति, तत्र तत्पदार्थः विभुः परमात्मा सर्वज्ञत्वादिगुणकः, त्वं पदार्थोऽल्पज्ञत्वादिगुणको जीवः, अनयोस्तत्त्वंपदार्थयोरैक्यात्म्यं, एकत्वं तद्बोधकमसीति पदम्।२५

प्रत्यक्परोक्षादिविरोधमात्मनो-
विहाय संगृह्य तयोश्चिदात्मताम्।
संशोधितां लक्षणया च लक्षितां,
ज्ञात्वा स्वमात्मानमथाऽद्वयो भवेत् ॥२६

ननु सर्वज्ञत्वादिगुणकेश्वराल्पज्ञत्वादिगुणकजीवयोरेकत्वं कथमित्यत आह—**प्रत्यगिति** अहंबुद्धिवेद्यत्वं प्रत्यक्त्वं जीवधर्मः परोक्षत्वमीशधर्मः आदिशब्देन सर्वज्ञत्वाल्पज्ञत्वादिधर्म-कृतमात्मनोः विरोधं विहाय तयोश्चिदात्मतां चित्त्वं युक्तिभिः सम्यक् विचारितां वक्ष्य-माणलक्षणया लक्षितां ज्ञातां सङ्गृह्य स्वमात्मानं तथा ज्ञात्वा अनन्तरमद्वयो भवेत्। अहं भगवच्छरीरं स च मम शरीरीति स्वस्मिन् भगवच्छरीरत्वेनाभेदानुसन्धानवान् भवेत्।२६

एकात्मकत्वाज्जहती न सम्भवे-
त्तथाऽजहल्लक्षणता विरोधतः।
सोऽयं पदार्थाविव भागलक्षणा,
युज्येत तत्त्वम्पदयोरदोषतः ॥२७

उक्तलक्षणस्वरूपमाह **एकात्मकेति**—एकात्मकत्वात् चित्त्वैनैकत्वात् जहती न सम्भवेत् [1]विशेष्यांशस्य त्यागाभावात्। तथा विरोधतः सर्वज्ञत्वाल्पज्ञ० विभुत्वाणुत्वविरोधतः अजहल्लक्षणापि न सम्भवति। अतः अदोषतः सोऽयं पदार्थाविव जहदजहल्लक्षणा युज्येत, विशेषणांशस्य विभुत्वाणुत्वादे[2]स्त्यागात् विशेष्यांशस्य चित्त्वस्यात्यागात्। तेन जीवपरमात्मनोः चित्त्वेनैक्येऽपि विभुत्वाणुत्वादि [3]गुणैर्भेद एव इति ध्वन्यते। तथा च तत्त्वद्वयानुसन्धानमेव मुक्तिसाधनमिति श्रीरामायणे साधितम्।२७

---

१. विशेषांश्च, मदीयपुस्तके। २. तः, ३. पर्यन्तभागः रा० व० पुस्तकस्थः।

रसादिपञ्चीकृतभूतसम्भवं,
भोगालयं दुःखसुखादिकर्मणाम्।
शरीरमाद्यन्तवदादिकर्मजं,
मायामयं स्थूलमुपाधिमात्मनः ॥२८

ननु चित्त्वेन [1]परमात्मात्मनोरेकत्वे सिद्धे परमात्मवत् कुतो न जीवस्यापि पूर्णसुखभोगादिः, कर्मभोगश्च कथमित्यत आह—**रसादीति**—सुखदुःखयोरादीनि करणानि यानि कर्माणि तेषां, भोगस्तत्कर्मजसुखदुःखानुभवस्तस्यालयम् आश्रयभूतम्।२८

[2]सूक्ष्मं मनोबुद्धिदशेन्द्रियैर्युतं,
प्राणैरपञ्चीकृतभूतसम्भवम्।
भोक्तुः सुखादेरनुसाधनं भवे-
च्छरीरमन्यद्विदुरात्मनो बुधाः ॥२९

[2](अथ सूक्ष्मोपाधिमाह **सूक्ष्ममिति**—बुधा अन्यत् स्थूलशरीरविलक्षणं शरीरं लिङ्गदेहाख्यमात्मन उपाधिं विदुः। तत्स्वरूपमाह—सूक्ष्मं चक्षुराद्यविषयम् मनोबुद्धिदशेन्द्रियैः प्राणैश्च युतम्। सङ्कल्पात्मकं मनः, निश्चयात्मिका बुद्धिः घ्राणरसनाचक्षुस्त्वक्श्रोत्रेति पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि, प्राणापानव्यानोदानसमानाश्च प्राणाः, तैर्युतमेतत् सप्तदशसमुदायात्मकम्। तदाधारभूतान्याह—अपञ्चीकृतभूतसम्भवं तेभ्य उत्पन्नमत एवादृश्यम्। तथा भोक्तुः सुखदुःखादेः सुखदुःखाद्यनुभवस्यानुसाधनम्, स्थूलशरीरस्यैतदनुगतस्यैव भोगसाधनमिति भावः।) रसादिश्लोकद्वये स्थूलसूक्ष्मशरीराभ्यां जीवस्योपाधिकृतोऽयं कर्मजन्यस्तु सुखदुःखभोगः, परमात्मसमे भोगाभावश्चेति प्रतिपादितम्।२९

अनाद्यनिर्वाच्यमपीह कारणं,
मायाप्रधानं तु परं शरीरकम्।

---

१. जीवपरमात्मनोः, रा० व० पु०। २. कोष्ठकान्तर्गतेयं व्याख्या पुस्तकद्वयेऽपि न दृश्यते। पाठकानां सौकर्याय श्रृङ्गवेरपुराधीशरामवर्मकृता टीकाऽत्राविकलमुद्ध्रियते। अस्य श्लोकस्य टीका महाराजश्री विश्वनाथेन कथन्न विहितेति न ज्ञायते। उत श्रीविश्वनाथेन तु कृता, प्रतिलिपिकारेण प्रतिद्वयेऽपि प्रतिलिपिः प्रमादवशान्न विहिता। अस्य प्रामाणिकनिर्णयस्तु तृतीयप्रतिप्राप्तावेव भविष्यतीति।

उपाधिभेदात्तु यतः पृथक् स्थितं,
स्वात्मानमात्मन्यवधारयेत् क्रमात् ॥३०

अथ कारणमहाकारणशरीरयोरपि उपाधित्वं प्रदर्शयन् शरीरचतुष्टया [१]दनन्तरं कैवल्यातीते षष्ठशरीरे प्राप्ते सति मुक्तिमाह [२]**अनादीति**–अनादि अनादिप्रवाहागतं अनिर्वाच्यं व्यवस्थितरूपेण निर्वक्तुमशक्यम् अपि कारणं शरीरं वासनात्मकं सर्वजनकमित्यर्थः। तु शब्दात् परं शरीरं तुरीयरूपं महाकारणमित्यर्थः। कीदृशं तत् माया प्रधानं, मुख्यं यस्य तत्। द्वितीयं तु शब्देन कैवल्यशरीरम् कीदृशं तत् यतः उपाधिभेदात् भुक्तशरीरचतुष्टयरूपोपाधिभेदात् तद्विशेषात् पृथक् स्थितमतःपरं पञ्चमं कैवल्यशरीरमिति योजना। एवम् आत्मानं शरीरचतुष्टयं क्रमात्, आत्मनि कैवल्यशरीर अवधारयेत्। स्थूलं सूक्ष्मे, सूक्ष्मं कारणे, कारणं महाकारणे, महाकारणं कैवल्ये अवधारयेत्, प्रविलाप्यत्वेनानुसन्दधीत। अत्रेदं बोध्यम्, [३]स्थूलं-पञ्चभूतानि, पञ्चविषयाः, दशेन्द्रियाणि मनोबुद्धिचित्ताहङ्काराः, इत्येवं चतुर्विंशत्तत्त्वात्मकं, तस्य जाग्रदवस्था विश्वाभिमानिनीदेवता, सूक्ष्मं-दशेन्द्रियाणि, पञ्चप्राणाः, मनोबुद्धिः इत्येवं सप्तदशतत्त्वात्मकं, तस्य स्वप्नावस्था, तेजसाभिमानिनी (देवता), कारणं चित्तबुद्ध्यहङ्काराः इति तत्त्वत्रयात्मकं तस्य सुषुप्त्यवस्था प्राज्ञाभिमानिनी देवता, महाकारणम्-बुद्ध्यहङ्कारात्मकं [४]द्वितत्त्वं तस्य तुरीयावस्था, ब्रह्म देवता, कैवल्यं-आत्मस्वरूपाणुचिन्मात्रं शरीरं तस्य कैवल्यावस्था आत्मा देवता। तत्र चतुर्थो जीवो मुच्यते। पञ्चमं स्वरूपमेव स्वस्य स्वसुखभोगसाधनत्वेन शरीरत्वमिति बोध्यम्। स्वात्मानमात्मन्यवधारयेत् क्रमादितीत्यनेन यः कैवल्यशरीरं प्राप्तवान् स एव षष्ठशरीरं सच्चिदानन्दमयं प्राप्नोति। 'मुक्तस्य विग्रहलाभ' इति श्रुतेः, 'तस्यैष आत्मा विवृणुते तनुं स्वाम् इति' श्रुतेश्च। तेन शरीरेण 'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुष' इति श्रुतेः, नित्यरासविहारिणं रामं मां पश्यति यदा तदा 'सोऽश्नुते सर्वान् कर्मान् सह ब्रह्मणा विपश्चिता' 'भोगमात्रसाम्यलिङ्गाच्च' इति श्रुतिसूत्रोक्तेः मया सह मम समभोगसुखान्यनुभवतीति ध्वन्यते।३०

कोशेष्वयं तेषु च तत्तदाकृति-
विभाति सङ्गात्स्फटिकोऽमलो यथा।
असङ्गरूपोऽयमजो यतोऽद्वयो,
विज्ञायतेऽस्मिन् परितो विचारिते ॥३१

---

१. तः २. पर्यंतांशः रा व० पुस्तके न विद्यते। ३. अस्थूलम् मदीयपुस्तके। ४. तत्त्वम मदीयपुस्तके।

शरीरचतुष्टयत्यागानन्तरं चिन्मात्रपञ्चमशरीरो जीवः श्रीरामदत्तषष्ठशरीरे प्रवेशेन श्रीरामं पश्यतीत्युक्तम्। अथास्मिन्नेव शरीरचतुष्टयातिरिक्तपञ्चमशरीरे [1]विज्ञस्य षष्ठशरीरप्राप्तिपूर्वकं परमात्मज्ञानप्रकारमाह **कोशेषु–इत्यादि त्रिभिः** पञ्चसु कोशेषु अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु, स्थूलसूक्ष्मकारण-महाकारणकैवल्यात्मकेषु, शरीरेषु, स्थितस्य विचारवतोऽयं जीवः सङ्गात् स्वातिरिक्तं यत् यच्छरीरं तत्तत्सङ्गतः तत्तदाकृतिः विभाति, तत्तदाकारतया भासत इत्यर्थः। तत्र दृष्टान्तः–यथा विचारवतः शुद्धस्फटिकज्ञस्य अमलः स्फटिकः जपाकुसुमादिसङ्गतः तत्तदाकारतया भाति तथेत्यर्थः। यतो यस्मिन् शरीरचतुष्टयातिरिक्ते शुद्धचिन्मात्रे जीवे षष्ठशरीरप्राप्तिमत्त्वेन विचारिते–अवगते सति तेन षष्ठशरीरेणास्मिन्नेव शरीरे, असङ्गरूपः अन्तर्यामित्वेन पुष्करपलाशवन्निर्लेपः अतो जन्मादिविकारशून्यः। अद्वयः समाभ्यधिकरहितः, अयं षष्ठशरीरेणापरोक्षतयाऽनुभूयमानः विज्ञायते, अर्थात् शरीर-चतुष्टयातिरिक्तस्वात्मविज्ञानेन षष्ठशरीरं प्राप्य तेनैव शरीरेण श्रीरामोऽपरोक्षत्वेन विज्ञायत इत्यर्थः।३१

बुद्धेस्त्रिधावृत्तिरपीह दृश्यते,
स्वप्नादिभेदेन गुणत्रयात्मनः।
अन्योऽन्यतोऽस्मिन् व्यभिचारतो मृषा,
नित्ये परे ब्रह्मणि केवले शिवे ॥३२

स्फटिकदृष्टान्तेनापाततः प्रतीयमानं शरीरधर्माधारत्वं जीवस्य तदन्तर्यामित्वा-दीश्वरस्यापि [2]आगतं तन्नेत्याह–**बुद्धेरिति**-गुणत्रयात्मनः जाग्रदवस्थायां स्थिताया एतस्या अपि[3] त्रिगुणमयत्वात् बुद्धेः स्वप्नादि-भेदः स्वप्नसुषुप्तितुरीयभेदः, तेन त्रिधावृत्तिरिहा-न्योऽन्यतः, अन्योऽन्यसम्बन्धात् बुद्ध्यादिविशिष्टे जीवे दृश्यते। अस्मिन् षष्ठशरीरेण प्रत्यक्षतयाऽनुभूयमाने नित्ये परे केवले शिवे ब्रह्मणि मृषा नास्ति, कुतः व्यभिचारतः अन्योऽन्यसम्बन्धाभावात्।३२

देहेन्द्रियप्राणमनश्चिदात्मनां,
सङ्घादजस्रं परिवर्तते धियः।
वृत्तिस्तमोमूलतयाऽज्ञलक्षणा,
यावद् भवेत्तावदसौ भवोद्भवः ॥३३

---

१. विज्ञस्य षष्ठशरीरेति रा० व० पुस्तकस्थः। २. तः ३. पर्यन्तांशः नास्ति मदीये पुस्तके।

अस्मिन्नेव शरीरे षष्ठशरीरं प्राप्य श्रीरामं जानातीत्युक्तम्। इदानीं सर्वस्य सर्वदैव षष्ठशरीरप्राप्तिः कुतो नेत्याशंक्य तत् प्रतिबन्धकप्रकारमाह **देहेन्द्रियेति**—देहेन्द्रियादीनां सङ्घातादितरेतराध्यासवशात् यावद्धियो [१]बुद्धेर्वृत्तिस्तमोमूलतयाऽज्ञलक्षणाऽज्ञत्वबोधिका सती, अजस्रं परिवर्तते तावदसौ भवोद्भवः संसारोद्भवो भवेत्। तमःपदं रजसोपलक्षणं रजस्तमःप्रधाना बुद्धिः संसारहेतुत्वात् षष्ठशरीरप्राप्तिप्रतिबन्धिकेति भावः।३३

नेतिप्रमाणेन निराकृताखिलो,
हृदा समास्वादितचिद्घनामृतः।
त्यजेदशेषं जगदात्तसद्रसं,
पीत्वा यथाम्भः प्रजहाति तत्फलम्॥३४

तन्निवृत्तिप्रकारमाह **नेतीति**—नेतिप्रमाणेनार्थादादेशो नेतीत्यादिप्रमाणेन निराकृतं ब्रह्मत्वेनाखिलं मूर्त्तामूर्त्तं येन सः, तदनन्तरं हृदा षष्ठशरीरस्यशुद्धमनसा समास्वादितं निषेधावशिष्टचिद्घनस्य ममामृतं, अनुरागात्मकभक्तिरसो येन सः तुच्छत्वेनाशेषं जगत्त्यजेत्। तत्र दृष्टान्तः—यथा तृषावान् आत्तः [२]तद्रसो माधुर्यं येन तादृशं नारिकेलफलान्तर्वर्त्यम्भः पीत्वा तत्स्थानभूतं तत्फलं जहाति तथेति, संसारे सारभूतः श्रीरामभक्तिरस एव अन्यत् सर्वं तुच्छमिति भावः। यद्भक्तिरसं पीत्वा सर्वं त्यजति तद्रूपमाह वृन्दावनमाहात्म्ये—'नित्यकिशोरमूर्तिः', 'नित्यं किशोरतां प्राप्तः', 'वृन्दावनविभूषणः' इति। 'रामं नवकिशोराङ्गं रूपिणी श्रीरनुत्तमा। आलिङ्ग्य गाढं तत्याज सर्वानिव दिवौकसः॥' इति प्रश्नरामायणे। 'तारुण्यारम्भरम्योऽलं ध्येयो रामः परः पुमानिति,' शिवसंहितायाम्।३४

कदाचिदात्मा न मृतो न जायते,
न क्षीयते नाऽपि विवर्धतेऽनवः।
निरस्तसर्वातिशयः सुखात्मकः,
स्वयम्प्रभः सर्वगतोऽयमद्वयः॥३५

**कदाचिदिति**—निरस्तः सर्वेषामतिशयो येन सः यदपेक्षयाऽन्येषामतिशयो नास्तीत्यर्थः। 'राम एव परं ब्रह्म रामात् किञ्चिन्न विद्यते' इति सनत्कुमारसंहितोक्तेः। [illegible] आनन्दात्मकः 'आनन्दरूपममृतं यद्विभाति, तदा प्रनखादानन्तमेवेति'

---

१. [illegible] रा० व० पु०। २. तद्रसः मदीये 'अद्रसः' रा० व० पुस्तके
४. तत्[illegible]

श्रुतेः। स्वयम्प्रभः स्वप्रकाशः 'यस्य भासा सर्वमिदं विभाती'ति श्रुतेः। सर्वगतः 'आकाशवत् सर्वगतश्च नित्य' इति श्रुतेः। अद्वयः समाभ्यधिकरहितः 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः।३५

एवंविधे ज्ञानमये सुखात्मके,
कथं भवो दुःखमयः प्रतीयते।
अज्ञानतोऽध्यासवशात् प्रकाशते,
विलीयतेऽज्ञानविरोधतः क्षणात्॥३६

**एवमिति**–एवंविधे जन्मादिषड्भावविकारशून्ये दिव्यलीलाशीले, सुखात्मके आनन्दस्वरूपे, ज्ञानमये, त्वयि दुःखमयः दुःखप्रचुरः भवः प्राकृतलीलासम्बन्धरूपः कथं प्रतीयते इति लक्ष्मणशङ्कामुद्भाव्य परिहरति-अज्ञानत इति-अध्यासवशात् अध्यासाधीनात् अज्ञानतः अज्ञानिनां प्रकाशते, 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रिताम्' इति गीतोक्तेः। अज्ञानविरोधतः क्षणादेव विलीयते, ज्ञानस्याज्ञानविरोधित्वात् तदुत्पत्ति [1]क्षणे एव कारणभूताज्ञाननाशात् तत् कार्यस्य प्राकृतलीलासम्बन्धरूपाज्ञानस्यापि लय इत्यर्थः 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः' इति भगवदुक्तेर्ज्ञानिनां दिव्यलीलात्वेन प्रकाशत इत्यर्थः।३६

यदन्यदन्यत्र विभाव्यते भ्रमा-
दध्यासमित्याहुरमुं विपश्चितः।
असर्पभूतेऽहिविभावनं यथा,
रज्वादिके तद्वदपीश्वरे जगत्॥३७

अध्यासस्वरूपमाह–**यदन्यदिति**। ईश्वरे चिदचिदात्मके ईश्वरशरीरे जगत् सरित्समुद्रादिरूपमतच्छरीरभेदप्रयोजकसरित्समुद्रत्वेन यत् प्रतीयते तत् भ्रान्त्येत्यर्थः। एतेन चिदचिच्छरीरकत्वेन परमात्मैव सर्वत्र लीलां करोतीति जीवेन भावना कर्त्तव्येति व्यञ्जितम्।३७

विकल्पमायारहिते चिदात्मके-
ऽहङ्कार एषः प्रथमः प्रकल्पितः।
अध्यास एवात्मनि सर्वकारणे,
निरामये ब्रह्मणि केवले परे॥३८

**विकल्पेति**–सर्वविकल्पकारणमायारहिते चिदात्मके सच्चिदानन्दस्वरूपे सर्वकारणे, निरामये केवले मुख्ये परे सर्वोत्कृष्टे, आत्मनि ब्रह्मणि व्यापके प्रथमतः, एषः अहङ्कारः

१. निरीक्षणे इति मदीयपुस्तके।

प्रकल्पितः स एवाध्यासः। अत्र एतद्विशेषणविशिष्टे ब्रह्मणि, अहङ्कारोऽस्तीति व्याहृतम्, निर्विकारे विकाराभावात्। अतः जहल्लक्षणया प्रलयकाले मशकादिसंज्ञां विस्मृत्य [1]ब्रह्मणि लीने जीवेऽहङ्काराध्यासः। पूर्वविशेषणानि तात्पर्यग्राहकाणि एतेन तदानीं जीवानां ब्रह्मणो ज्ञानन्नास्ति तेन च ते मुक्ता अपि नेति सूचितम्। तथा च श्रुतिः 'ऋते [2]ज्ञानान्न मुक्तिरि'ति। तेन च 'एकोऽहं बहु स्याम्' इति श्रुत्युक्तो ब्रह्मणो बहुभवनसंकल्पो जीववासनानुसारेणेति सूचितम्।३८

इच्छादिरागादिसुखादिधर्मिकाः,
सदा धियः संसृतिहेतवः परे।
यस्मात् प्रसुप्तौ तदभावतः परः,
सुखस्वरूपेण विभाव्यते हि नः॥३९

पूर्वमन्तःकरणचतुष्टयमध्ये जगत्कारणमहङ्कारोऽस्तीत्युक्तमिदानीं बुद्धेः कारणत्वमाह **इच्छादीति**–जीवसंसृतिहेतवः इच्छाऽनिच्छादिद्वन्द्वधर्मिकाः याः अदृष्टभूताः, वासनाः स ऐच्छत् 'एकोऽहं बहुस्याम्' इत्यादिरूपाः ताः धियः, जीवधिय एव, परे परस्य ब्रह्मणो नेति शेषः। षष्ठ्यर्थे सप्तमी। ननु जीवे किं ताः सन्ति नेत्याह-यस्मादिति! परः बुद्धेः परः शुद्धजीवः सुखस्वरूपेण नः अस्माभिर्विभाव्यते निश्चीयते कुतः सुषुप्तौ, अनादिसुषुप्तौ ताः सन्ति, अतः धियः अनादिसुषुप्त्यवगमे मुक्तौ तदभावात् बुद्धिवृत्त्यसम्भवः। सार्वविभक्तिकः तसिः। 'अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते। अजमनिद्रमस्वप्नमद्वैतं बुद्ध्यते तदे'ति श्रुतेः। यदा जीवो ज्ञानेन मुक्तः षष्ठशरीरं प्राप्तवांस्तदा षष्ठशरीरस्थदिव्यबुद्ध्याऽद्वैतं मां जानाति। एतेन जीवेषु तदानीं बुद्धिप्रवृत्तिर्नास्ति किन्तु जीववासनानुसारेण ब्रह्मण्येव बहुभवनसंकल्परूपबुद्धिवृत्तिरिति। तेन च यतो जीववासनानुसारेण ब्रह्मणि वृत्तिरतो ब्रह्मणि समष्टिरूपेण लीना जीवा एव व्यष्टिरूपेण नाना जाताः न तु निर्विकारस्य ब्रह्मणो बहुभवनन्तदा[3] तेषां मायिका इच्छादिवृत्तयो भवन्ति।३९

अनाद्यविद्योद्भवबुद्धिबिम्बितो,
जीवः प्रकाशोऽयमितीर्यते चितः।
आत्मा धियः साक्षितया पृथक्स्थितो,
बुद्ध्या परिच्छिन्नपरः स एव हि॥४०

---

१ ब्रह्मलीने रा० व० पु०। २. श्रुतिरियं श्लोकव्याख्यावसाने लिखितास्ति तत्राप्रासङ्गिकादत्र प्रदत्ता। ३. तदा च मत्पुस्तके।

जीवपरमात्मनोः स्वरूपन्निरूपयन् मनसः कारणत्वमाह **अनाद्येति**–जीवः समष्टिरूपो जीवः चितः स ऐच्छत् बहु स्यामित्येवमीक्षितुः जीववासनावशात् संकल्पवतो ब्रह्मणः प्रकाशोंऽशत्वेन पृथक् प्रकाशत इति, प्रकाशोंऽश ईर्यते कथ्यते। स एव अनाद्य-विद्योद्भवबुद्धिबिम्बितः, अनाद्यविद्योद्भवत्वात् प्रमात्मिका बुद्धिर्न किन्तु संकल्प-विकल्पात्मिका सा, [1]मनः तत्र बिम्बितः नामरूपाभ्यामाविर्भूतः स सर्वं संसारकार्यं करोतीति शेषः। 'स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वमिति' श्रुतेः। तेन मनसः कारणत्वमुक्तम्, आत्मा तु समष्टिजीवाधारभूतम् ब्रह्म तु अन्तः-करणचतुष्टयस्य जीवस्य च साक्षितया पृथक् स्थितः, सर्वदोषादिभिरलिप्त इत्यर्थः। 'सूर्यो यथा सर्वलोकस्य चक्षुर्नलिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः।' इति श्रुतेः। हि यतः स बुद्ध्या परिच्छिन्नात् जीवात परोऽत्यन्त [2]विलक्षणः। यद्वा अपरिच्छिन्नश्चासौ परश्चेति कर्मधारयः। बुद्धिलक्षण-परिच्छेदरहितोऽतः पर इत्यर्थः।४०

चिद्‌बिम्बसाक्षात्मधियां प्रसङ्गत-
स्त्वेकत्रवासादनलाक्तलोहवत्।
अन्योऽन्यमध्यासवशात् प्रतीयते,
जडाऽजडत्वं च चिदात्मचेतसोः।।४१

चेतसः कारणत्वमाह–**चिद्बिम्बेति** चिदात्मचेतसोरन्योऽन्याध्यासवशात् परस्य तादात्म्यारोपात् विपरीतं जडाऽजडत्वं प्रतीयते। चेतसो वृत्तीनां ज्ञानत्वं जीवात्मनोः जडत्वं प्रतीयते, तस्मात् तद्व्यवहारश्चाध्यासमूलकः। अध्यासे हेतुमाह चिदित्यादि-'चित्-बिम्बः चिन्मात्रस्वरूपो जीवः। अक्षैः सहितः साक्षः सेन्द्रियः स चासौ आत्मान्तः-करणं साक्षात्मा तस्य धियः वृत्तयः चिद्बिम्बस्य साक्षात्मधियां च प्रसङ्गतः प्रकृष्टस-ङ्गादध्यासो भवतीत्यर्थः। तत्र दृष्टान्तः–एकत्र वासादिति एकत्र एकस्मिन् प्रदेशे वासात्-अनलाक्तलोहवत् अग्नितप्तलोहपिण्डवत्, अग्निधर्मो दाहकत्वं लोहे लौहधर्मश्च वर्त्तुलत्वादि अनले भासत इत्यर्थः। अयम्भावः 'आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर। दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः।। नान्यथा लक्षणं तेषां बन्धमोक्षे तथैव चे' ति।। पद्मपुराणोक्तः स्वभावाविस्मरणाज्जीवस्य जडत्वं मन आदीनां जगत्कार्यकर्तृत्वेन चेतनत्वमिति। एतेनात्मदास्यहरिस्वामित्वानुसन्धानवतो जीवस्य तु संसारो नास्त्येवेति व्यज्यते।४१

---

१ अत्र च इत्यधिकः मत्पुस्तके। २. चित्तान्तरात्मालक्षणः, मत्पुस्तके।

गुरोः सकाशादपि वेदवाक्यतः,
सञ्जातविद्यानुभवो निरीक्ष्य तम् ।
स्वात्मानमात्मस्थमुपाधिवर्जितं,
त्यजेदशेषं जडमात्मगोचरम् ॥४२

एवमन्तःकरणचतुष्टयजनितसंसारस्य निवृत्त्युपायमाह **गुरोरिति**—गुरोः सकाशात् वेदवाक्यत इत्यनेन श्रवणम्, अपीत्यनेन मननं ताभ्यां सञ्जातायाः विद्यायाः चरमविद्यायाः स्वस्वरूपस्य भगवद्दास्यानुसन्धानरूपायाः, अनुभवः प्राप्तिर्यस्य स अनेन कृतनिदिध्यासन इत्यर्थः। तं भगवद्दासं ब्रह्मांशं सच्चिदानन्दरूपं विज्वरं विशोकं विमृत्युं स्वात्मानं स्वरूपं निरीक्ष्य च पुनः उपाधिवर्जितं देहगतदोषैः पुष्करपलाशवन्निर्लिप्तं तं प्रसिद्धमात्मस्थं स्वान्तर्यामिनं श्रीराममन्निरीक्ष्य षष्ठशरीरस्थदिव्यमनसा परोक्षीकृत्यात्मगोचरमशेषं जडशरीरचतुष्टयरूपम् मायाकार्यं त्यजेत् ।४२

प्रकाशरूपोऽहमजोऽहमद्वयो,
सकृद्विभातोऽहमतीव निर्मलः ।
विशुद्धविज्ञानघनो निरामयः,
सम्पूर्ण आनन्दमयोऽहमक्रियः ॥४३

निरीक्ष्यस्य स्वस्य स्वरूपमाह **प्रकाशेति—श्लोकद्वयेन,** अहं प्रकाशी रामः, प्रकाशरूपः ब्रह्मप्रकाशरूपः। प्रकाशब्रह्मादीनां स्वविभूतित्वं सूचयितुं अहमित्यस्यावृत्तिः, अजः जन्मादिरहितः यदावतरामि तदा नारायणे आवेशेन स्वतस्तु नित्यविहारी इत्यर्थः। अद्वयः समाभ्यधिकरहितः। असकृत्-पुनः पुनर्विभातः स्वभक्ताः यत्र यत्र यदा यदा स्मरन्ति तत्र तत्र तदैव तेषां प्रत्यक्षीभूत इत्यर्थः। एतेन नामरूपलीलाधामसहितस्य व्यापकता व्यज्यते। अतीवनिर्मलो मायासम्बन्धशून्यो विशुद्धविज्ञानघनः विशुद्धसान्द्रविज्ञानपूर्णः यद्वा विशुद्धानां शुद्धभक्तानां विज्ञानस्य सख्यादिविविधज्ञानस्य घनः वर्षकः तत्पोषक इत्यर्थः। निरामयो निर्विकारः सम्पूर्णश्चिदचिच्छरीरेणेति शेषः। यद्वा दिव्यानन्तकल्याण [१]गुणगणैः सम्यक् पूर्णः, आनन्दमय [२]आनन्दरूपः 'आनन्दरूपममृतं यद्विभाति' तदा 'प्रनखादानन्दमेवेति'श्रुतेः। अक्रियः प्राकृतक्रियारहितः, 'कर्तृत्वं करणत्वञ्च स्वभावश्चेतना धृतिः। यद्प्रसादादिमे सन्ति न सन्ति यदुपेक्षये'तिश्रुतिप्रतिपाद्यसर्वकर्त्तापि अहमचिन्त्यशक्तित्वात् अकर्त्ता। 'अकर्तृत्वात् प्रपञ्चस्य निष्क्रियं मां वदन्ति हि। मायागुणैर्यतो मेंऽशाः कुर्वते सर्जनादिकम्। न करोमि स्वयं किञ्चित् सृष्ट्यादिकमहं शिवे॥ इति' पाद्मोक्तेः ।४३

---

१. गुणैः रा० व० पु०। २. आनन्दरूपः रा० व० पुस्तकस्थः।

सदैवमुक्तोऽहमचिन्त्यशक्तिमा-
नतीन्द्रियज्ञानमविक्रियात्मकः ।
अनन्तपारोऽहमहर्निशं बुधै-
र्विभावितोऽहं हृदि वेदवादिभिः ॥४४

**सदैवेति**–सदैव मुक्तो येन ज्ञातेन स अर्थात् यदैव श्रीरामञ्जानाति तदा मुक्त एव, आत्मदास्यहरिस्वामित्वस्य विद्यमानत्वात् । यद्वा सदा एवं वेदैरुक्तः प्रतिपादितः यतोऽचिन्त्यशक्तिमानतीन्द्रियज्ञानं इन्द्रियाविषयज्ञानरूपो मन आदिभिरप्राप्योऽह-मित्यर्थः । 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' इति श्रुतेः । एतेन स्वदत्तज्ञानेन ज्ञातो भवामीतिध्वनिः तेन स्वदत्तज्ञानस्यापि अवाङ्मनसगोचरत्वम् । न विविधा क्रिया प्रापिका यस्य तादृश आत्मा स्वरूपं यस्य सः, भक्त्यैव प्राप्य इत्यर्थः । 'भक्तिरेवैनं नयति, भक्तिरेवैनं दर्शयति, भक्तिवशः पुरुषो भक्तिरेव भूयसीति' श्रुतेः । अत-एवानन्तपारो न अन्तो यस्य तादृशः पारो यस्य सः । मन्नामरूपलीलाधामगुणानां पारं केऽपि न जानन्तीति भावः । अहर्निशं वेदवादिभिर्बुधैः स्वभक्तैः सदा हृदि विभावितो-ऽहमिति, नान्यैरित्यर्थः ।४४

एवं सदात्मानमखण्डितात्मना,
विचारमाणस्य विशुद्धभावना ।
हन्यादविद्यामचिरेण कारकैः,
रसायनं यद्वदुपासितं रुजः ॥४५

स्वस्वरूपमुक्त्वाऽथ तत्प्राप्त्युपायमाह **एवमिति**–एवमात्मानं मामखण्डितात्मना विषयानाकृष्टमनसा सदा विचारमाणस्य ध्यायतः विशुद्धभावना भगवद्दासोऽहमित्य-नुसन्धानरूपा, चरमविद्या, कारकैः सह देहान्तरप्रापककर्मभिः सहाविद्यामचिरेण हन्यात् यथोपासितं रसायनं रुजः हन्यात् तद्वत् ।४५

विविक्तआसीन उपारतेन्द्रियो,
विनिर्जितात्मा विमलान्तराशयः ।
विभावयेदेकमनन्यसाधनो,
विज्ञानदृक् केवल आत्मसंस्थितः ॥४६

ध्यानसाधनमाह **विविक्त इति**–विविक्ते निर्जने आसीनः एतेनान्यभाषणश्रवणादिना ध्यानच्युतिरूपविक्षेपराहित्यम्, उपारतेन्द्रियः निवृत्तेन्द्रियव्यापारः निवृत्तः ध्येयभिन्न-विषयास्वादो यस्य सः । एतेनान्यरसास्वादराहित्यं विनिर्जितात्मा आसनप्राणायामा-

दिभिर्जितान्तःकरणचतुष्टयः । एतेन ध्याने कामादिजनितमनोमलिनताकषायः ध्याने स्वापः लयः ध्याने जडताप्रतिपत्तिः तद्राहित्यं व्यक्तम्। फलविक्षेपकषायरसास्वादाप्रतिपत्त्याख्यान्तरायपञ्चकनाशप्रकारमुक्त्वाऽनर्थचतुष्टयनाशप्रकारमाह——विमलेतिविमलान्तराशयः निरन्तरश्रीरामस्मरणेन विमलः-अन्तराशयो यस्य। तेन दशनामापराधराहित्यं 'सन्निन्दाऽसति नामवैभवकथा श्रीशेशयोर्भेदधीरश्रद्धाश्रुतिशास्त्रदेशिकगिरानाम्न्यर्थवादभ्रमः। नामास्तीतिनिषिद्धवृत्तिविहितत्यागौ च धर्मान्तरैः, साम्यं नामनि शङ्करस्य च हरेर्नामापराधाः दश॥ अनन्यसाधनो भक्त्येकसाधनस्तेन चतुःषष्ठिसेवापराधराहित्यम्, यानैर्वापादुकैर्वापि गमनं भगवद्गृहे । देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः। उच्छिष्टे वाप्यशौचे वा भगवत्वन्दनादिकम्। एकहस्तप्रणामश्च तत् पुरस्तात् प्रदक्षिणं॥ पादप्रसारणं चाग्रे तथा पर्यङ्कबन्धनम्। शयनं भक्षणञ्चापि मिथ्याभाषणमेव च॥ उच्चैर्भाषा मिथो जल्पो रोदनानि च विग्रहः। निग्रहानुग्रहौ चैव नृषु च क्रूरभाषणम्। कंवलावरणञ्चैव परनिन्दा परस्तुतिः। अश्लीलभाषणञ्चैव अधोवायुविमोक्षणम्। शक्तौ गौणोपचारश्च अनिवेदितभक्षणम्। तत्तत्कालोद्भवानाञ्च फलादीनामनर्पणम्॥ विनियुक्ताऽवशिष्टस्य प्रदानं व्यञ्जनादिकम्। पृष्टीकृत्यासनञ्चैव परेषामभिवादनम्। गुरौ मौनं निजस्तोत्रं देवतानिन्दनन्तथा। अपराधास्तथाविष्णोर्द्वात्रिंशत् परिकीर्तिताः। इति पाद्मे। अभक्ष्यभक्षणं १. ध्वान्तागारे हरेः स्पर्शः २. विधिं विना ह्युपसर्पणम्, ३. वाद्यं विना तद्द्वारोद्घाटनम् ४. कुक्कुरदृष्टभक्ष्यसंग्रहः ५. अर्चने मौनभङ्गः ६. भगवच्छास्त्रानादरेण तत्प्रतिपत्तिः ७. अन्यशास्त्रप्रवर्तनम् ८. तदग्रतस्ताम्बूलभक्षणम्। ९. एरण्डपुष्पैरर्चनम् १०. पूजायां ष्ठीवनम् ११. तस्यां स्वगर्वप्रतिपादनम्॥ तिर्यक्पुण्ड्रधारणम् १३. अप्रच्छालितपादत्वेन तन्मन्दिरप्रवेशः १४. अवैष्णवपक्वनिवेदनम्, १५. अवैष्णवदृष्टौ पूजनम् १६. पूजाकाले विडुत्सर्गाय सर्पणम् १७. गन्धमाल्यादिकमदत्त्वा धूपनम् १८. अनर्हपुष्पेण पूजनम् १९. अकृत्वा दन्तकाष्ठञ्च कृत्वा निधुवनन्तथा। स्पृष्ट्वा रजस्वलां दीपं तथा मृतकमेव च। रक्तनीलमधौतञ्च पारक्यमलिनम्पटम्। परिधाय मृतं दृष्टवा विमुच्यापानमारुतम्॥ क्रोधं कृत्वा श्मशानञ्च गत्वा भूत्वाप्यजीर्णभुक्। त्यक्त्वा कुसुम्भं पिण्याकन्तैलाभ्यङ्गं विधाय च। हरेः स्पर्शो हरेः कर्मकरणम्पातकावहम्। विज्ञानं दृक् दर्शनं यस्य। तेन सुकृतोत्थदुःकृतोत्थभक्त्युत्थापराधोत्थानर्थचतुष्टयनाशः प्रकाशितः, केवलोऽसहायः अहमेव दासोऽस्मि, अन्यत सर्वञ्चराचरम् मम स्वामी श्रीरामः चिदचिद्विग्रह एवेति प्रत्यभिज्ञायुक्तः, 'सरित्समुद्राश्च हरेः शरीरं यत् किञ्च भूतं प्रणमेदनन्य' इति स्मृतेः। आत्मसंस्थितः, आत्मनि चिदचिद्विग्रहेण सर्वत्र परिपूर्णे मयि रामे दास्यभावेन सम्यक् स्थितो भूत्वा एकंमुख्यं रामं मां विभावयेत् ध्यायेत।४६

विश्वं यदेतत् परमात्मदर्शनं,
विलापयेदात्मनि सर्वकारणे।
पूर्णश्चिदानन्दमयोऽवतिष्ठते,
न वेद बाह्यं न च किञ्चिदान्तरम् ॥४७

**विश्वमिति**—किञ्च यदेतत् दृश्यमानं विश्वं स्थूलं परमात्मदर्शनम् परमात्मनो दर्शनं [1]ज्ञानं यस्मिन् तत् सर्वं, अहमेव भगवद्दासोऽस्मि सर्वं मम स्वामिश्रीरामचिद्-विग्रहत्वेन मत्सेव्य एवेति पूर्वोक्तरीत्या सर्वकारणे स्थूलसर्वशरीरकारणे, आत्मनि मत्सूक्ष्मचिदचिद्विग्रहे विलापयेत्। एतत् [2]फलमाह पूर्णः, अवाप्तसमस्तकामः। चिदानन्दमयः सन्नवतिष्ठते। बाह्यम् आन्तरञ्च न किञ्चिद् वेद, अर्थात् बहिर्यद्-दृश्यमानन्तत् श्रीरामचिच्छरीरम् आन्तरं तस्य सर्वजीवान्तर्यामित्वात् आन्तरं जीवोऽपि श्रीरामचिच्छरीरमिति जानातीति। य आत्मनि तिष्ठन् यस्यात्मा शरीरम्, 'अणो-रणीयान् महतो महीयान्' इति श्रुतेः। अत एव श्रीरामचिदचिद्विग्रहात् भिन्नं बाह्यमान्तरञ्च न वेदेति फलितम्।४७

पूर्वं समाधेरखिलं विचिन्तये-
दोङ्कारमात्रं सचराचरं जगत्।
तदेव वाच्यं प्रणवो हि वाचको,
विभाव्यतेऽज्ञानवशान्न बोधतः ॥४८

पूर्वोक्तध्यानस्य प्रणवजपेन [3]साध्यत्वात्तदर्थं वक्तुमु[4]पक्रमते—**पूर्वमिति**। समाधेः पूर्वमखिलं सचराचरञ्जगत्। ओंकारमात्रम् ओंकारो मीयतेऽनेनेति मात्रा प्रमाणं बोधकत्वेन परिच्छेदको यस्य तथा जानीयात् विचिन्तयेत्। तदेव विवृणोति तदेवेति-तदेव जगदेव वाच्यम् प्रणवो वाचको विभाव्यते। इयं भावना अज्ञानवशादेव न बोधतः।४८

अकारसंज्ञः पुरुषो हि विश्वको,
ह्युकारकस्तैजस ईर्यते क्रमात्।
प्राज्ञो मकारः परिपठ्यतेऽखिलैः,
समाधिपूर्वं न तु तत्त्वतो भवेत् ॥४९

---

१. भानम् रा० व० पु०। २. फलमपूर्णः मत्पुस्तके। ३. सिद्धत्वात् मदीये पुस्तके। ४. उपचक्रमे मम पुस्तके।

पूर्वोक्तं विवृणोति अकारेत्यादिना-जाग्रत्साक्षी विश्वः पुरुषः अकारसंज्ञः तद्वाच्यः, स्वप्नसाक्षी तैजस उकारकः तद्वाच्यः, सुषुप्तिसाक्षी प्राज्ञः मकारवाच्य इति अखिलैर्वेदैः परिपठ्यते। समाधेः पूर्वमेव न तत्त्वतः तत्त्वसाक्षात्कारेण भवेत्।४९

विश्वं त्वकारस्पुरुषं विलापये-
दुकारमध्ये बहुधा व्यवस्थितम्।
ततो मकारे प्रविलाप्य तैजसं,
द्वितीयवर्णं प्रणवस्य चान्तिमे॥५०

**प्रविलापनप्रकारमाह—विश्वमिति श्लोकद्वयेन** बहुधा व्यवस्थितं स्थूलदेहनिबन्धनमूल-भोगाभिमाने स्थितं विश्वं तद्वाचकमकारञ्च, उकारमध्ये प्रविलापयेत् तत्र विलीनं भावयेदित्यर्थः। तैजसं लिङ्गदेहाभिमानिनं पुरुषं तद्वाचकं प्रणवस्य द्वितीयवर्णम्- उकारं प्रणवस्यान्तिमे मकारे प्रविलाप्य।५०

मकारमप्यात्मनि चिद्घने परे,
विलापयेत् प्राज्ञमपीह कारणम्।
सोऽहं परं ब्रह्म सदा विमुक्तिम-
द्विज्ञानदृङ्मुक्त उपाधितोऽमलः॥५१

**मकारमिति**—ततस्तादृशं मकारं तद्वाच्यं प्राज्ञं कारणम् अपिशब्दात्तुरीयावस्थास्थित-महाकारणशरीरं नादाभिन्नञ्च[1] इह चिद्घने चिदात्मके[2] परे-कैवल्ये जीवे स्वस्मिन् प्रविलापयेत् विचिन्तयेत्। मकारस्य कारणस्य महाकारणे नादे महाकारणस्य नादस्य बिन्दौ चिद्घने इति क्रमोऽवगन्तव्यः। तत उपाधितो मुक्तः। अत एवमुत्तरोत्तरं प्रणवे मात्रां प्रविलापयन् अविच्छिन्नघण्टानादवत् प्रणवजपादमलः [3]शुद्धचिन्मात्रस्वरूपः सोऽहं षष्ठविग्रहोऽहमिति भावयन् विज्ञानरूपाऽवाङ्मनसस्यापि मम साक्षात्कारहेतुर्दृक् दृष्टिर्यस्मिन् तत्, सदा विमुक्तिमत् षष्ठशरीरं प्राप्तः सन् परं ब्रह्म मां पश्यतीति शेषः।५१

एवं सदा जातपरात्मभावनः,
स्वानन्दतुष्टः परिविस्मृताऽखिलः।
आस्ते स नित्यात्मसुखप्रकाशकः,
साक्षाद् विमुक्तोऽचलवारिसिन्धुवत्॥५२

---

१. तः २. पर्यन्तस्थले 'चिदात्मके च इह चिद्घने शुद्धचिन्मात्रस्वरूपः' इति रा० व० पु०। ३. शुद्धचिन्मात्रस्वरूप इति भागः १ सङ्केतितगद्यांशः रा० व० पुस्तके।

ग्रन्थान्तरे ब्रह्मविष्णुमहेश्वरमायाब्रह्मणां वाचकत्वेन प्रसिद्धानां, अकारोकारमकार-नादबिन्दुरूपप्रणवावयवानां स्थूलसूक्ष्मकारणमहाकारणकैवल्येषु साधनावस्थायां प्रविलापनपूर्वकजपप्रकारमुक्त्वा सिद्धावस्थायां प्रणवार्थभावनाप्रकारमाह **एवमिति**— एवं पूर्वोक्तप्रकारेण विमुक्तः कैवल्ये स्थितः मुक्तः प्राप्तषष्ठशरीरो विशेषेण मुक्त इत्यर्थः। 'मुक्तस्य विग्रहलाभ' इति श्रुतेः। जाता प्रणवे परात्मनां सीताराम-भरतलक्ष्मणशत्रुघ्नानां भावना यस्य सः। 'अकाराक्षरसम्भूतः सौमित्रिर्विश्वभावनः। उकाराक्षरसम्भूतः शत्रुघ्नस्तैजसात्मकः॥ प्राज्ञात्मकस्तु भरतो मकाराक्षरसम्भवः। अर्द्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः॥ श्रीरामसान्निध्यवशाज्जगदानन्ददायिनी। सीता भगवती ज्ञेया मूलप्रकृतिसंज्ञिता॥ प्रणवत्वात् प्रकृतिरिति वदन्ति ब्रह्मवादिनः'। इति रामतापनीयश्रुतेः। तत्त्वतः रामतापनीयोक्तः प्रणवार्थस्त्वयमेवेति निश्चितवान् [1]सिद्ध्यवस्थापन्न इति यावत् स्वानन्दतुष्टः स्वस्य ममानन्देन तुष्टः। अत एव परितो विस्मृतमखिलं शरीरपञ्चकं येन सः, नित्यात्मनः [2]श्रीरामस्य दर्शनादिना यत्सुखं तत् रोमाञ्चादिना प्रकाशयति इति तथाभूतः, सन् अचलवारिसिन्धुवत् अचलं वारि यस्मिन् स अचलवारिः समुद्रः तस्मिन् सिन्धुवत् [3]नदीवत्। [4]अचल सिन्धुवारिवदिति पाठे, अचलं सिन्धौ यत् नदीवारि तद्वत् आस्ते। यथा नदीवारि समुद्रे, अचलत्वं प्राप्तः स्वगतवेगादीन् विहाय समुद्रस्थतरङ्गादीन् बिभर्ति तथा जीवोऽपि श्रीरामं प्राप्यैतच्छरीरसम्बन्धि सुखदुःखादिकं [5]विस्मृत्य श्रीराम [6]नानालीलादर्शनजन्यरस-रूपभक्तिं प्राप्य द्वादशरसानन्दं बिभर्ति। तेन [7]नानाभावभावनया श्रीरामं पश्यतीति ध्वनिः।५२

> एवं सदाभ्यस्तसमाधियोगिनो,
> निवृत्तसर्वेन्द्रियगोचरस्य हि।
> विनिर्जिताशेषरिपोरहं सदा,
> दृश्यो भवेयं जितषड्गुणात्मनः॥ ५३

उक्तभावनया स्थितस्य फलमाह **एवमिति**—सदाऽभ्यस्तो यः समाधियोगः सोऽस्यास्तीति सदाभ्यस्तसमाधियोगी तस्य श्रीरामाह्निकध्यानसहजसमाधियुक्तस्येत्यर्थः। हि-यतो निवृत्ताः सर्वेन्द्रियाणां गोचराः विषया यस्मात् स तथा तस्य, विनिर्जिता अशेषाः रिपवः कामादयो येन तस्य, जितषड्गुणात्मनः सर्वज्ञत्वनित्यतृप्तत्वबोधरूपत्व-

---

१. सिद्धावस्थापन्न, रा० व० पु०। २. श्रीराममयस्य रा० व० पु०। ३. नदीवत् मत्पुस्तके न विद्यते। ४. अचलवारिवत् इति मदीयपुस्तके। ५. विसृज्य रा० व० पु०। ६. नाम इति मम पुस्तके। ७. नाना भावनया मदीयपुस्तके।

स्वनेतृत्वनित्यम[1]लुप्तत्वानन्तत्वरूपाः षड्गुणा यस्य तादृश आत्माऽहं विनिर्जितः वशीकृतो येन तस्य, यद्वा विनिर्जिताः वशीकृताः 'क्लेशघ्नी शुभदा मोक्षलघुताकृत-सुदुर्लभा। सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षणी मते'त्युक्तभक्तिषड्गुणा येन तादृश आत्मा शरीरं यस्य तस्याऽहं सदाऽत्रैव दृश्यो भवेयम्। 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः, अथ मर्त्योऽमृतो भवतीत्यत्र ब्रह्मसमश्नुत' इति श्रुतेः। मद्भक्तियोगिनोऽहं दृश्यः। एतेन न भक्तिविमुखस्येति सूचितम्।५३

ध्यात्वैवमात्मानमहर्निशं मुनि-
स्तिष्ठेत्सदा मुक्तसमस्तबन्धनः।
प्रारब्धमश्नन्नभिमानवर्जितो,
मय्येव साक्षात् प्रविलीयते ततः॥५४

परात्परसाकेतप्राप्तिमाह **ध्यात्वैवमिति**–आत्मानं मामहर्निशमेवं ध्यात्वा मुक्त-समस्तबन्धनः स्थूलशरीराकारेण प्रारब्धमश्नन्निव, अत एवाभिमानहीनः तिष्ठेत् ततः दग्धरज्जुवत् स्थितस्थूलशरीरपातानन्तरं साक्षात् मय्येव मद्रूपे धामन्येव प्रविलीयते प्रविशति न तु बहिः प्रकाशब्रह्मणीत्यर्थः। 'सिद्धा ब्रह्मसुखे मग्ना दैत्याश्च हरिणा हताः। तज्ज्योतिर्भेदने शक्ता रसिका हरिवेदिन' इति स्मृतेः। 'रामस्य नाम रूपं च लीलाधाम परात्परम्। एतच्चतुष्टयं नित्यं सच्चिदानन्दलक्षणम्', इति धामाभेदे प्रमाणम्। साक्षात् प्रविलीयते ब्रह्मैव भवति इत्यर्थे 'कर्मक्षये याति स तत्त्वतोऽन्यो' 'जीवा भिन्नाः परो भिन्नो, भेदव्यपदेशात्' 'भेदव्यपदेशाच्चान्यः' इत्यादि श्रुतिसूत्रविरोधापत्तिः स्यात्। अखिलात्मनामात्मानं भजेदिति वक्ष्यमाणविरोधापत्तिश्च स्यात्।५४

आदौ च मध्ये च तथैव चान्ततो,
भवं विदित्वा भयशोककारणम्।
हित्वा समस्तं विधिवादचोदितं,
भजेत् स्वमात्मानमथाखिलात्मनाम्॥५५

**आदाविति**–अखिलानां [2]चेतनाचेतनानां ये आत्मानोऽन्तर्यामिनस्तेषां स्वमात्मी-यमन्तर्यामिणं 'विष्णुर्वाद्युत्तमदेहेषु प्रविष्टो देवताऽभवत्' इति श्रुतेः। अन्तर्यामिणः

---

१. अलुप्ततत्वरूपा इति मत्पुस्तके। २. चेतनानाम् मदीयपुस्तके।

प्रकाशब्रह्मण एकत्वेऽपि प्रकाशब्रह्म विष्णवादिव्यक्तीनां बहुत्वात् बहुवचनम्। आत्मानं परमेश्वरम् मां भजेत्। अन्यत्स्पष्टम्।५५

आत्मन्यभेदेन विभावयन्निदं,
भवत्यभेदेन मयात्मना तदा।
यथा जलं वारिनिधौ यथा पयः,
क्षीरे वियद् व्योम्न्यनिले यथाऽनिलः॥५६

दास्यादिभावेनोपासकानां फलमुक्त्वाऽभेदेनोपासकानां फलमाह **आत्मेति**-आत्मनि प्रकाशब्रह्मणि, इदं चिदचिदात्मकं विश्वमभेदेन विभावयन् यद्वा आत्मनि स्वस्वरूपे इदं प्रकाशब्रह्म अभेदेन ब्रह्माऽहमस्मीति भावेन विभावयन् यदा सिद्धाऽभेद-भावनः, आस्ते इति शेषस्तदा आत्मना मया मदभिन्नेन प्रकाशब्रह्मणा अभेदेन भवति, मद्विभु[1] चैतन्यप्रकाशब्रह्मणि अणुचितं प्रविलाप्य स्वस्वरूपानवगमेन स्थितो भवति। 'सिद्धा ब्रह्मसुखे मग्ना दैत्याश्च हरिणा हता' इति स्मृतेः। [2]अणुचित्त्वविभुचित्त्वादिरूप-विभाजकानवगमकाले, अभेदप्रतीतिदृष्टान्तचतुष्टयेन द्रढयति यथेति-यथा वारिनिधौ जलमिति नामरूपकृतभेदाभावे दृष्टान्तः। तत्र नामरूपकृतभेदानवगमेऽपि ततो निःसृतस्य जलस्य भेदो दृश्यत एव। सप्तसागरभेदनेन यमुनायाः निर्गमात् समुद्रात् मेघैर्मधुरजलानयनाच्चेत्याशङ्क्य तद्दोषरहितं दृष्टान्तान्तरमाह-यथेति। यथा क्षीरे दुग्धे पयः जलमभेदेन प्रतीयते तद्वत्। नन्वत्र माऽस्तु पृथक् दर्शनं तथापि यावज्जलमस्ति तावदग्निर्दुग्धं न दहति, इति सर्वानुभवसिद्धो भेदोऽस्त्येवेत्याशङ्क्य दृष्टान्तान्तरमाह-वियदिति यथा व्योम्नि महाकाशे वियत् घटाद्याकाशः तद्वत्। यथा उपाध्यपगमे घटाकाशमहाकाशयोर्भेदो नास्ति तद्वदित्यर्थः। 'तस्माद् वा एतस्मादात्मन आकाशः सम्भूत' इत्यादि श्रुतेः। उत्पद्यमानस्य जडाकाशस्य दृष्टान्तो नोत्तमः इत्याशङ्क्य पुनर्दृष्टान्तान्तरमाह-अनिल इति-यथाऽनिले अमानवे मुख्ये वायौ, अनिलः प्रवहरूपो वायुस्तद्वत्। यथा प्रवहनरूपाः वायवो मुख्यवायुं प्राप्य वायुत्वेन तदभेदे तिष्ठन्ति न तमुल्लङ्घयन्ति तथा शुद्धजीवाः प्रकाशब्रह्मणि लयं प्राप्य स्वरूपानवगमेन चित्त्वेन तदभिन्नास्तिष्ठन्तीति फलितम्। ननु वायावपि उत्पत्तित्वजडत्वयोः सत्त्वात् को विशेष इति चेन्न 'तत्पुरुषो मानवः स एतान् ब्रह्म गमयति' इति श्रुतेः। ब्रह्मसमस्य सचेतन-स्यामानवस्यादित्यामुत्पन्नानामेकोनपंचाशत् वायूनां वाद्यभिमानिनां चेतनत्वश्रवणात् घटाकाशमहाकाशाभिमानिदेवतानाञ्चेतनत्वाश्रवणाच्च।५६

---

१. विघ रा० व० पु०। २. अणुचित्य रा० व० पु० अणुचित्वा मदीयपुस्तके च 'अणुचित्त्व' इत्युचितः।

इत्थं यदीक्षेत हि लोकसंस्थितो,
जगन्मृषैवेति विभावयन् मुनिः।
निराकृतत्वाच्छ्रुतियुक्तिमानतो,
यथेन्दुभेदो दिशि दिग्भ्रमादयः ॥५७

भेदश्रुत्यविरोधिनीं अभेदश्रुत्यविरोधिनीञ्च भावनामुक्त्वा भेदाभेदप्रतिपादकश्रुत्यविरोधिनीं भावनामाह इत्थमिति—जगत्-अहन्ताममतास्पदं मृषैवेति विभावयन् मुनिर्मननशीलो-हिरण्यर्थे-लोकसंस्थितोऽपि विद्यमानशरीरोऽपि, इत्थं विग्रहविग्रहित्वदृष्ट्या भेदः विग्रहविग्रहिणोः सच्चिदानन्दात्मकदृष्ट्या अभेद इति प्रकारद्वयेन यदि यदा ईक्षेत-जानीयात् तदा सकलश्रुत्यविरुद्धसिद्धान्तमतज्ञो भवतीति शेषः। जगन्मृषात्वे हेतुः-श्रुतियुक्तिमानतो निराकृतत्वादिति 'अतोऽन्यदार्त्तं सर्वमिति' श्रुतिरूपात्। अहन्ताममतास्पदं जगन्मृषा-आरोपितत्वात् शुक्तिकारजतवदित्यनुमानरूपात् मानतः प्रमाणतः निराकृतत्वात्। तत्र दृष्टान्तो यथेति-यथा-इन्दुभेदः एकस्मिन् चन्द्रे-द्विचन्द्रत्वभ्रमस्तदेकत्वज्ञानेन निवर्तते। यथा-दिशि-प्राच्यादौ अन्यदिक्कृतभ्रमः सोऽपि तत्त्वज्ञानान्निवर्तते। एवं भ्रमतः [1]पुरुषस्य दिक्षु भ्रमणभ्रमः निकटवर्तिवृक्षादौ च भ्रमणभ्रमस्तत्स्थैर्यज्ञानेन निवर्तते। भगवच्चिदचिद्विग्रहज्ञान [2]तया द्वितत्त्वज्ञानेन संसारे भगवच्छरीरभिन्नत्वेन भ्रमो निवर्तते। तथा च 'किमात्मको भगवान् किमात्मिकाऽस्य व्यक्तिः सच्चिदानन्दात्मको भगवान् सच्चिदानन्दात्मिकाऽस्य व्यक्तिरिति', भेदाऽभेदप्रतिपादकश्रुत्या, नित्यचिदचित्व्यक्तिव्यक्तिमतोः सच्चिदानन्दात्मत्वेनाभेदसंस्थापनेन विग्रहविग्रहित्वदृष्ट्या भेदप्रतिपादनेन च 'य आत्मनि तिष्ठन् यमात्मा न वेद यस्यात्मा शरीरं' 'य आत्मानमन्तरो यमयति' 'यः पृथिव्यां तिष्ठन् यं पृथिवी न वेद यस्य पृथिवी शरीरं' 'नित्यो नित्यानाञ्चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।' 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' 'जीवा भिन्नाः परो भिन्नः, इत्यादि भेदप्रतिपादिकाः श्रुतयः 'सर्वं खल्विदं ब्रह्म' 'आत्मैवेदं सर्वं' [3]'ब्रह्मैव सर्वम्' 'अयमात्मा ब्रह्म' 'एकमेवाद्वितीयं ब्रह्म' 'मनसैवानुद्रष्टव्यम्' 'नेह नानास्ति किञ्चन' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवा [4]भूत् तत् केन कं पश्येत् केन कं विजानीयात्' 'प्रपञ्चो यदि निवर्तेत न संशयः' 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इत्याद्यभेदप्रतिपादिकाः श्रुतयश्च

---

१. पुरुषस्य दिक्षुभ्रमणभ्रमः, इति रा० व० पुस्तकस्थः। २. तया द्वितत्त्वज्ञानेन इति रा० व० पु० नास्ति। ३. ब्रह्मैव सर्वम्, इति रा० व० पुस्तकस्थः। ४. अभवत् रा० व० पु०।

सङ्गता। इति सर्वं समञ्जसम्। ननु देहिदेहविभागो न, 'सच्चिदानन्दविग्रहादिति' श्रुत्या व्यक्तिव्यक्तिमतोर्विभागस्याभावात् कथं तद्भेद इति चेदुच्यते- 'आनन्दो द्विविधः प्रोक्तः मूर्तश्चामूर्त्त एव च। अमूर्तस्याश्रयो मूर्तः परमात्मा नराकृतिः॥' इति श्रुतिप्रतिपादितस्य चिदचिदश्रमप्रकाशब्रह्माश्रयस्य परमात्मनो नराकृतेः श्रीरामस्यैव स्वरूपे देहिदेहविभागाभावो न तु चिदचिद्विग्रहस्य विभागाभाव इति। नन्वेवं जडव्यक्तेः कथं सच्चिदानन्दत्वमिति चेत् तत्सम्बन्धादेवेति गृहाण। 'मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे। अग्रतः शिवरूपाय पिप्पलाय नमो नमः॥' इत्यादि प्रामाण्येन अश्वत्थे विष्णवादिभावनावत् शालग्रामशिलावच्च [1]जीवस्यापि आत्मैवेदं सर्वमित्यादिना चित्त्वेनाभेदोपगमात् तथात्वं [2]बोध्यम्।५७

यावन्न पश्येदखिलं मदात्मकं,
तावन्मदाराधनतत्परो भवेत्।
श्रद्धालुरत्यूर्जितभक्तिलक्षणो,
यस्तस्य दृश्योऽहमहर्निशं हृदि॥५८

**यावदिति**—यावदखिलं विश्वं मदात्मकं पूर्वोक्तप्रकारेण मत्स्वरूपं न पश्येत् तावत् श्रद्धालुः सन् तत् सिद्धान्तमतज्ञानार्थं सगुणभक्त्या मदाराधने तत्परो भवेत्। यदोक्तसिद्धान्तमतज्ञानसिद्धिस्तदा, अत्यूर्जितभक्तिलक्षणो भवति। तया भक्त्या मां तत्त्वतो ज्ञात्वा मद्धाम प्रविश्य [3]षष्ठशरीरेण मां पश्यति। तस्य प्राप्तषष्ठशरीरेण मामाराधयतः हृदि यथास्थितोऽहं तथैवाहर्निशं दृश्यो भवेयम्। 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्। भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति, स्मृतेः।५८

रहस्यमेतच्छ्रुतिसारसङ्ग्रहं,
मया विनिश्चित्य तवोदितं प्रिय!।
यस्त्वेतदालोचयतीह बुद्धिमान्,
स मुच्यते पातकराशिभिः क्षणात्॥५९

**रहस्यमिति**—अखिलश्रुतिसारं सर्वश्रुतितात्पर्यरूपं मयोदितमवाङ्मनसगोचरत्वादेतद्रहस्यं य आलोचयति स पापराशिभिः क्षणादेव मुक्तो भवति। य आलोचयति

---

१. तः २. पर्यन्तभागः रा० व० पु० न विद्यते। ३. षष्ठशरीरेण इति रा० व० पु० न विद्यते।

स मुक्तो भवतीत्येतेन जीवोद्धारार्थमेव लक्ष्मणेन प्रश्नः कृत इति, तेन च तस्य दयालुतातिशयो व्यक्तः।५९

भ्रातर्यदीदं परिदृश्यते जग-
न्मायैव सर्वं परिहृत्य चेतसा।
मद्भावनाभावितशुद्धमानसः,
सुखी भवानन्दमयो निरामयः॥६०

**भ्रातरिति**—हे भ्रातः! यदि यत् इदं परिदृश्यते तत्सर्वं मायैव मच्छरीरभिन्नत्वेन मिथ्यैव अतः सर्वं परिहृत्य मच्छरीरभिन्नविषयत्वेन परित्यज्य सर्वत्र मच्छरीरभावनया भावितं-आविर्भूतं शुद्धं [1]षष्ठशरीरस्थं ज्ञानानन्दात्मकं मानसं यस्य सः, एवम्भूतो जन आनन्दमयो [2]निराश्रयश्च भवेत् [3]अत इममुपदिश्य सुखी भव चिन्तां त्यज। वाङ्मनसगोचरातीतस्य ज्ञानस्य दौर्लभ्यात् सर्वजीवदुःखानि निरीक्ष्य दुःखितः सर्वेभ्यः इममुपदेशं दत्त्वा सुखिनः कृत्वा सुखी भवेति ध्वनिः।६०

यः सेवते मामगुणं गुणात्परं,
हृदा कदा वा यदि वा गुणात्मकम्।
सोऽहं स्वपादाञ्चितरेणुभिः स्पृशन्,
पुनाति लोकत्रितयं यथा रविः॥६१

स्वगीतोक्तज्ञानवतां सगुणनिर्गुणगुणातीतस्वरूपाराधकानां माहात्म्यमाह **य इति**—अगुणं मत्प्रकाशरूपं ब्रह्मगुणात्मकं विशुद्धसत्त्वाभिमानिनारायणरूपं गुणात् परं सगुणनिर्गुणातीतं श्रीकृष्णरूपं गोलोकनिवासिनम् एवम्भूतं। मां यः कदाऽपि हृदा सेवते स त्रिविधोऽपि, उपासकः अहं मामक इत्यर्थः। 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' 'ज्ञानी त्वात्मैव मे मतः' इति गीतोक्तेः। एवं भूतो भक्तः स्वपादलग्नरेणुभिः स्पृशन् लोकत्रयमपि पुनाति। अज्ञानध्वान्तनिरसनेन पवित्रीकरोति। यथा रविरिति दृष्टान्तेन यथा सूर्यकिरणे सर्वतीर्थानि तथा भक्तचरणेऽपीति सूचितम्। एतेनावाङ्मनसगोचरनित्यरासविहारिममोपासकाः लोकत्रयं पुनन्तीति किमुतेति काव्यार्थापत्तिरलङ्कारो व्यज्यते।६१

---

१. षष्ठशरीरस्थम् इति रा० व० पु० नास्ति। २. निरामयश्च इत्युचितः। ३. अस्मात् पूर्वम्—'अतः इमं च भवेत्' इति मदीयपुस्तकस्थपाठः अप्रासङ्गिकत्वाद् हेयः।

विज्ञानमेतदखिलं श्रुतिसारमेकं,
वेदान्तवेद्यचरणेन मयैव गीतम्।
यः श्रद्धया परिपठेत् गुरुभक्तियुक्तो,
मद्रूपमेति यदि मद्वचनेषु भक्तिः॥६२

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
उत्तरकाण्डे [1]रामगीतायाम् पञ्चमोऽध्यायः।५

⊙

इदानीमेतद्रूपार्थालोचनासमर्थस्य पाठमात्रतोऽपि महत्फलमाह **विज्ञानमिति–** विज्ञानं विज्ञानजनकं करणव्युत्पत्त्येति बोध्यमिति। वेदान्तैरुपनिषद्वाक्यैस्तात्पर्यवृत्त्या वेद्यं ज्ञेयं चरणं यस्य तेन वेदान्तवेद्यचरणेन मयैव गीतम्। एतेनेदं ज्ञानमपि अवाङ्मनसगोचरमिति ध्वनिः। मद्रूपमेति। मद्दत्तसच्चिदानन्दषष्ठशरीरं प्राप्नोति। ननु पठनमात्रादेतादृशी महत्फलप्राप्तिः कथमित्याशङ्क्य भक्त्यैवेति सूचयन् तत्र हेतुमाह मद्वचनेषु भक्तिर्विश्वासो यदीत्यर्थः, गुरुवाक्यविश्वासस्यैव फलदायकत्वादिति भावः।६२

⊙

[2]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामुत्तरकाण्डे
पञ्चमोऽध्यायः।५

---

१. रामगीतात्मकः इत्युचितः। २. इति ध्वनिप्रकाशिकायां पञ्चमोऽध्यायः।
रा० व० पु०।

## अथ षष्ठोऽध्यायः

**सूत उवाच**

वाल्मीकाश्रमान्नातिदूरे नातिसन्निहितप्रदेशे प्रसादं निर्माय तत्र सर्वजीवोद्धारकं स्वज्ञानमुपदिश्य स्थितस्य श्रीशिव आह **सूत उवाचेत्यादिना**—

एकदा मुनयः सर्वे यमुनातीरवासिनः।
आजग्मू राघवं द्रष्टुं भयाल्लवणरक्षसः ॥१
कृत्वाग्रे तु मुनिश्रेष्ठं भार्गवं च्यवनं द्विजाः।
असङ्ख्याताः समायाता रामादभयकाङ्क्षिणः ॥२
तान् पूजयित्वा परया भक्त्या रघुकुलोत्तमः।
उवाच मधुरं वाक्यं हर्षयन् मुनिमण्डलम् ॥३
करवाणि मुनिश्रेष्ठाः! किमागमनकारणम्।
धन्योऽस्मि यदि यूयं मां प्रीत्या द्रष्टुमिहागताः ॥४
दुष्करञ्चापि यत्कार्यं भवतां तत् करोम्यहम्।
आज्ञापयन्तु मां भृत्यं ब्राह्मणा दैवतं हि मे ॥५
तच्छ्रुत्वा सहसा हृष्टश्च्यवनो वाक्यमब्रवीत्।
मधुनामा महादैत्यः पुरा कृतयुगे प्रभो! ॥६
आसीदतीवधर्मात्मा देवब्राह्मणपूजकः।
तस्य तुष्टो महादेवो ददौ शूलमनुत्तमम् ॥७
प्राह चानेन यं हंसि स तु भस्मीभविष्यति।
रावणस्यानुजा भार्या तस्य कुम्भीनसी प्रिया ॥८
तस्यां तु लवणो नाम राक्षसो भीमविक्रमः।
आसीद् दुरात्मा दुर्धर्षो देवब्राह्मणहिंसकः ॥९
पीडितास्तेन राजेन्द्र! वयं त्वां शरणं गताः।
तच्छ्रुत्वा राघवोऽप्याह मा भीर्वो मुनिपुङ्गवाः! ॥१०

**पीडिता इति**—वः युष्माकं भीः भयं मा भूत्।१०

लवणं नाशयिष्यामि गच्छन्तु विगतज्वराः।
इत्युक्त्वा प्राह रामोऽपि भ्रातॄन् को वा हनिष्यति ॥११
लवणं राक्षसं हत्वा ब्राह्मणेभ्योऽभयं महत्।
तच्छ्रुत्वा प्राञ्जलिः प्राह भरतो राघवाय वै ॥१२

**लवणमिति**–भरतः प्राञ्जलिः सन्नाह, तेन श्रीमतां यशस्तु रावणवधादिना त्रैलोक्ये व्याप्तम्। लवणहननेन मद्यशोऽपि ख्यातिं [1]ज्ञापितमिति ध्वनिः।१२

अहमेव हनिष्यामि देवाज्ञापय मां प्रभो!।
ततो रामं नमस्कृत्य शत्रुघ्नो वाक्यमब्रवीत् ॥१३
लक्ष्मणेन महत्कार्यं कृतं राघव! संयुगे।
नन्दिग्रामे महाबुद्धिर्भरतो दुःखमन्वभूत् ॥१४
अहमेव गमिष्यामि लवणस्य वधाय च।
त्वत् प्रसादाद् रघुश्रेष्ठ! हन्यां तं राक्षसं युधि ॥१५

**अहमेवेति**–त्वत्प्रसादादित्यनेन तेन गुरूक्तिं सत्यां कुर्विति।१५

तच्छ्रुत्वा स्वाङ्कमारोप्य शत्रुघ्नं शत्रुसूदनः।
प्राहाऽद्यैवाभिषेक्ष्यामि मथुराराज्यकारणात् ॥१६
आनाय्य च ससम्भारांल्लक्ष्मणेनाभिषेचने।
अनिच्छन्तमपि स्नेहादभिषेकमकारयत् ॥१७
दत्त्वा तस्मै शरं दिव्यं रामः शत्रुघ्नमब्रवीत्।
अनेन जहि बाणेन लवणं लोककण्टकम् ॥१८

**दत्त्वेति**–तद्धनने समर्थायापि तस्मै दिव्यं शरं ददौ एतेन वात्सल्यातिशयो व्यक्तः।१८

स तु सम्पूज्य तच्छूलं गेहे गच्छति काननम्।
भक्षणार्थं तु जन्तूनां नानाप्राणिवधाय च ॥१९
स तु नायाति सदनं यावद् वनचरो भवेत्।
तावदेव पुरद्वारि तिष्ठ त्वं धृतकार्मुकः ॥२०
योत्स्यते स त्वया क्रुद्धस्तदा वध्यो भविष्यति।
तं हत्वा लवणं क्रूरं तद्वनं मधुसंज्ञितम् ॥२१

---

१. उभयमातृकायां ज्ञापितमिति पाठः। जायतामित्युचितः।

निवेश्य नगरं तत्र तिष्ठ त्वं मेऽनुशासनात्।
अश्वानां पञ्चसाहस्रं रथानाञ्च तदर्धकम् ॥२२
गजानां षट्शतानीह पत्तीनामयुतत्रयम्।
आगमिष्यति पश्चात्त्वमग्रे साधय राक्षसम् ॥२३

**गजानामिति**—साधय नाशय।२३

इत्युक्त्वा मूर्ध्न्यवघ्राय प्रेषयामास राघवः।
शत्रुघ्नं मुनिभिः सार्द्धमाशीर्भिरभिनन्द्य च ॥२४
शत्रुघ्नोऽपि तथा चक्रे यथा रामेण चोदितः।
हत्वा मधुसुतं युद्धे मथुरामकरोत् पुरीम् ॥२५

**शत्रुघ्न इति**—तथा चक्रे-धृतकार्मुकः पुरद्वारि स्थित्वा लवणं निरायुधं जघान।२५

स्फीतां जनपदां चक्रे मथुरां दानमानतः।
सीताऽपि सुषुवे पुत्रौ द्वौ वाल्मीकेरथाश्रमे ॥२६
मुनिस्तयोर्नाम चक्रे कुशो ज्येष्ठोऽनुजो लवः।
क्रमेण विद्यासम्पन्नौ सीतापुत्रौ बभूवतुः ॥२७
उपनीतौ च मुनिना वेदाध्ययनतत्परौ।
कृत्स्नं रामायणं प्राह काव्यं बालकयोर्मुनिः ॥२८
शङ्करेण पुरा प्रोक्तं पार्वत्यै पुरहारिणा।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥२९

**शङ्करेणेति**—यच्छङ्करेण पुरा पार्वत्यै प्रोक्तं तदेव कृत्स्नं रामायणं मुनिर्विस्तरेण बालकयोः प्राह।२९

कुमारौ स्वरसम्पन्नौ सुन्दरावश्विनाविव।
तन्त्रीतालसमायुक्तौ गायन्तौ चेरतुर्वने ॥३०
तत्र तत्र मुनीनां तौ समाजे सुरूपिणौ।
गायन्तावभितो दृष्ट्वा विस्मिता मुनयोऽब्रुवन् ॥३१
गन्धर्वेष्विव किन्नरेषु भुवि वा देवेषु देवालये,
पातालेष्वथ वा चतुर्मुखगृहे लोकेषु सर्वेषु च।
अस्माभिश्चिरजीविभिश्चिरतरं दृष्ट्वा दिशः सर्वतो,
नाज्ञायीदृशगीतवाद्यगरिमा नादर्शि नाश्रावि च ॥३२

**गन्धर्वेष्विति**-ईदृशो गायको नाज्ञायि न ज्ञातः—तस्यैव विवरणं नादर्शि, साक्षादीदृशं गानं स्वकर्णाभ्यां न श्रुतमित्यर्थः। नाश्रावि, कर्णोपकर्णिकया उक्तदेशे ईदृशं न श्रुतं मयेत्यर्थः। ३२

एवं स्तुवद्भिरखिलैर्मुनिभिः प्रतिवासरम्।
आसाते सुखमेकान्ते वाल्मीकेराश्रमे चिरम्॥३३
अथ रामोऽश्वमेधादींश्चकार बहुदक्षिणान्।
यज्ञान् स्वर्णमयीं सीतां विधाय विपुलद्युतिः॥३४

**अथेति**—नित्यविहारस्थलयात्रार्थं पूर्वसङ्केतेन वाल्मीकाश्रमे प्रेषितत्वात् वाल्मीकाश्रमसन्निहितप्रदेशे स्थितोऽपि यज्ञारम्भे तां नानीतवान्। अतः स्वर्णमय्याः सीतायाः विधानम्। ३४

तस्मिन् विताने ऋषयः सर्वे राजर्षयस्तथा।
ब्राह्मणाः क्षत्रिया वैश्याः समाजग्मुर्दिदृक्षवः॥३५
वाल्मीकिरपि सङ्गृह्य गायन्तौ तौ कुशीलवौ।
जगाम ऋषिवाटस्य समीपं मुनिपुङ्गवः॥३६
तत्रैकान्ते स्थितं शान्तं समाधिविरमे मुनिम्।
कुशः पप्रच्छ वाल्मीकिं ज्ञानशास्त्रं कथान्तरे॥३७
भगवञ्छ्रोतुमिच्छामि संक्षेपाद् भवतोऽखिलम्।
देहिनः संसृतिर्बन्धः कथमुत्पद्यते दृढः॥३८
कथं विमुच्यते देही दृढबन्धाद्भवाभिधात्।
वक्तुमर्हसि सर्वज्ञ! मह्यं शिष्याय ते मुने!॥३९

**वाल्मीकिरुवाच**

शृणु वक्ष्यामि भद्रं ते संक्षेपाद् बन्धमोक्षयोः।
स्वरूपं साधनञ्चापि मत्तः श्रुत्वा यथोदितम्॥४०
तथैवाचर भद्रं ते जीवन्मुक्तो भविष्यसि।
देह एव महागेहमदेहस्य चिदात्मनः॥४१

**तथैवेति**—आदिकालादयं क्रमो महाप्रलये जीवो नामरूपविभागानर्हः वासनामात्रविशिष्टः सन् ब्रह्मणि चिद्रूपेण स्थितो भवति। पुनः सृष्टिसमये नामरूपविभागार्हत्वेनोद्भवति। तत्र लीनानामुद्भवप्रकारमाह देह एवेत्यादिना—देहस्य महत्त्वं शरीरचतुष्टयाभिप्रायेण। अदेहस्य नामरूपविभागानर्हस्य वासनामात्रविशिष्टचिदात्मनः चिद्रूपेण ब्रह्मणि स्थितस्य जीवस्योत्पत्तिकाले देह एव महागेहम्। ४१

तस्याऽहङ्कार एवास्मिन् मन्त्री तेनैव कल्पितः।
देहगेहाभिमानं स्वं समारोप्य चिदात्मनि ॥४२
तेन तादात्म्यमापन्नः स्वचेष्टितमशेषतः।
विदधाति चिदानन्दे तद्भासितवपुः स्वयम् ॥४३

तदुत्पत्तिमाह–तस्येति–अस्मिन् देहोत्पादे तस्य नामरूपविभागानर्हजीवस्य, अहङ्कारो मन्त्री, य एव देहोत्पत्तिकारणम्। न चाहङ्कारः कुत आगत इति चेदत आह-तेनैव कल्पितः, स्ववासनयेति शेषः। स चाहङ्कारः स्वं स्वीयं देहगेहाभिमानं चिदात्मनि जीवे समारोप्य, तेन तादात्म्यमभेदमापन्नो यतोऽतः स्वचेष्टितं चिदानन्दजीवे विदधाति। ननु जडाहङ्कारस्य कथं चेष्टितत्वमत आह–तद्भासितवपुः तत्संपर्कादेव तादृशसामर्थ्यवानयञ्जात इत्यर्थः। एतेनाज्ञानकृतोऽयं संसार इति ध्वनिः।४२-४३।

तेन संकल्पितो देही संकल्पनिगडावृतः।
पुत्रदारगृहादीनि सङ्कल्पयति चाऽनिशम् ॥४४
सङ्कल्पयन् स्वयं देही परिशोचति सर्वदा।
त्रयस्तस्याहमो देहा अधमोत्तममध्यमाः ॥४५
तमः सत्त्वरजः संज्ञा जगतः कारणं स्थितेः।
तमोरूपाद्धि सङ्कल्पान्नित्यं तामसचेष्टया ॥४६
अत्यन्तं तामसो भूत्वा कृमिकीटत्वमाप्नुयात्।
सत्त्वरूपो हि सङ्कल्पो धर्मज्ञानपरायणः ॥४७
अदूरमोक्षसाम्राज्यः सुखरूपो हि तिष्ठति।
रजोरूपो हि सङ्कल्पो लोके सव्यवहारवान् ॥४८

**अत्यन्तमिति**–उत्तममध्यमाधमभेदेन सत्त्वं त्रिविधम्। तत्राधमं त्यक्तम्। मध्यमस्थः धर्मपरायणः सन् 'ऊर्ध्वं गच्छन्ति सत्त्वस्था' इति गीतोक्तेः ऊर्ध्वं याति, ऊर्ध्वं गच्छति। उत्तमस्थः ज्ञानपरायणः सन् अदूरमोक्षसाम्राज्यः सुखरूपः तिष्ठति, प्रकाशब्रह्मणि स्थितो भवतीत्यर्थः। कैवल्यं सात्त्विकं ज्ञानं मन्निष्ठं निर्गुणं स्मृतमिति स्मृतेः।४७-४८।

परितिष्ठति संसारे पुत्रदारानुरञ्जितः।
त्रिविधं तु परित्यज्य रूपमेतन्महामते! ॥४९
सङ्कल्पः परमाप्नोति पदमात्मपरिक्षये।
दृष्टीः सर्वाः परित्यज्य नियम्य मनसा मनः ॥५०

**सङ्कल्प इति**—सङ्कल्पोऽहं ब्रह्मास्मीत्यनुसन्धानरूपः परं पदं, प्रकाशब्रह्म प्राप्नोति। 'येऽन्येऽरविन्दाक्ष! विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः। आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः॥' इति स्मृत्या एतस्य न्यूनफलत्वात् निर्गुण-ज्ञानमाह, आत्मेति-आत्मपरिक्षये शरीरचतुष्टयपरिक्षयार्थं नाशार्थं सर्वा दृष्टीः परित्यज्य दिव्यमनसा सङ्कल्पविकल्पात्मकं मनो नियम्य विषयेभ्यो निवर्त्य इत्यर्थः।५०

सबाह्याऽभ्यन्तरार्थस्य सङ्कल्पस्य क्षयङ्कुरु।
यदि वर्षसहस्राणि तपश्चरति दारुणम्॥५१

**सबाह्येति**—बाह्येन्द्रियविषयसहितो योऽभ्यन्तरेन्द्रियविषयार्थः सप्तमीभूमिकाभूततुर्यग-स्थितशुद्धसत्त्वभूताहं ब्रह्मास्मीत्यनुसन्धानरूपस्तस्य सङ्कल्पस्य क्षयं कुरु। तुर्यगातीतचिन्मात्रे स्वस्वरूपे यदा स्थितो भवसि तदा प्राप्तषष्ठशरीरेण सच्चिदानन्दमयेन श्रीरामं द्रक्ष्यसीत्याशयः।५१

पातालस्थस्य भूस्थस्य स्वर्गस्थस्यापि तेऽनघ!।
नाऽन्यः कश्चिदुपायोऽस्ति सङ्कल्पोपशमादृते॥५२

**पातालेति**—त्रिलोके सङ्कल्पोपशमादृते अन्य उपायो नास्ति। सङ्कल्पेनास्य स्वरूपे स्थित्य-भावः, ततश्च श्रीरामदर्शनाभाव इत्यतोऽयमेवोपायः श्रीरामदर्शनस्य नान्य इति।५२

अनाबाधे विकारे स्वे सुखे परमपावने।
सङ्कल्पोपशमे यत्नं पौरुषेण परं कुरु॥५३

**अनाबाध इति**—अनाबाधे दुःखामिश्रे अविकारे विषयसम्बन्धं विनैव प्राप्ये परमपावने स्वे सुखे प्राप्तिनिमित्तं सङ्कल्पोपक्रमादन्यः कश्चिदुपायो नास्ति। अतः सङ्कल्पोपशमे यत्नं कुरु।५३

सङ्कल्पतन्तौ निखिला भावाः प्रोक्ताः किलानघ!।
छिन्ने तन्तौ न जानीमः क्व यान्ति विभवाः पराः॥५४

सङ्कल्पस्यैव सर्वाधारत्वात्तन्नाशे एव सर्वविषयनिवृत्तिरित्याह **सङ्कल्पतन्ताविति**—सङ्कल्पतन्तौ सङ्कल्परूपायां तन्तौ निखिला भावाः पदार्थाः प्रोक्ताः। तन्तौ विच्छिन्ने सति विभवाः विशिष्टो भवः संसारो येभ्यः तादृशाः पराः भवाः क्व यान्ति, इति न जानीते जन इति शेषः।५४

निःसङ्कल्पो यथाप्राप्तव्यवहारपरो भव।
क्षये सङ्कल्पजालस्य जीवो ब्रह्मत्वमाप्नुयात्॥५५

**निःसङ्कल्प इति**—यथाप्राप्तव्यवहारपरो भव। यथाप्राप्तं व्यवहारं कुरु। संकल्पक्षयमाह—क्षय इति-ब्रह्मत्वं श्रीरामदत्तसच्चिदानन्दमयषष्ठशरीरं प्राप्नुयात् अर्थात्

सखी सखिदासादिषु कोऽपि भवतीत्यर्थः। 'दिव्यगुणा वर्द्धन्ते यस्मिन् तद् ब्रह्मेति, बृंहतो ह्यस्मिन् गुणास्तद् ब्रह्मेति' श्रुतेः।५५

अधिगतपरमार्थतामुपेत्य प्रसभमपास्य विकल्पजालमुच्चैः।
अधिगमय पदं तदद्वितीयं विततसुखाय सुषुप्तचित्तवृत्तिः ॥५६

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे षष्ठोऽध्यायः।६

⊙

उपसंहरति **अधिगतेति**—विकल्पजालं शरीरचतुष्टयं विहाय सुषुप्ता चित्तवृत्तिर्यस्य केवले चिन्मात्रे स्थित इत्यर्थः। तदनन्तरं हरिशरीरं प्राप्याधिगतपरमार्थतामधिगता ज्ञाता परमार्थता परदेवता पारमार्थ्यं यया सा तां परमप्रेमरूपां भक्तिं प्राप्य तया भक्त्या तत्त्वतः श्रीरामं ज्ञात्वा अद्वितीयं समाभ्यधिकरहितं पदं लोकं साकेताख्यमधिगमय प्राप्नुहि। विततसुखाय वेशं कुर्विति यावदिति योजना 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति' 'समः सर्वेष भूतेषु मद्भक्तिं भजते परां। भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः, ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति' गीतोक्तेः।५५

[1]इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां व्यङ्ग्यप्रकाशिकायामुत्तरकाण्डे षष्ठोऽध्यायः।६

⊙

---

१. इति श्रीमदध्यात्मरामायणे उत्तरकाण्डे ध्वनिप्रकाशिकायां षष्ठोऽध्यायः।६ रा० व० पु०।

## अथ सप्तमोऽध्यायः

वाल्मीकिना बोधितोऽसौ कुशः सद्यो गतभ्रमः।
अन्तर्मुक्तो बहिः सर्वमनुकुर्वंश्चचार सः॥१
वाल्मीकिरपि तौ प्राह सीतापुत्रौ महाधियौ।
तत्र तत्र च गायन्तौ पुरे वीथिषु सर्वतः॥२
रामस्याग्रे प्रगायेतां शुश्रूषुर्यदि राघवः।
न ग्राह्यं वै युवाभ्यां तद्यदि किञ्चित् प्रदास्यति॥३
इति तौ चोदितौ तत्र गायमानौ विचेरतुः।
यथोक्तमृषिणा पूर्वं तत्र तत्राभ्यगायताम्॥४
ताञ्च शुश्राव काकुत्स्थः पूर्वचर्यां ततस्ततः।
अपूर्वपाठजातिञ्च गेयेन समभिप्लुताम्॥५
बालयो राघवः श्रुत्वा कौतूहलमुपेयिवान्।
अथ कर्मान्तरे राजा समाहूय महामुनीन्॥६
राज्ञश्चैव नरव्याघ्रः पण्डितांश्चैव नैगमान्।
पौराणिकान् शब्दविदो ये च वृद्धा द्विजातयः॥७
एतान् सर्वान् समाहूय गायकौ समवेशयत्।
ते सर्वे हृष्टमनसो राजानो ब्राह्मणादयः॥८
रामं तौ दारकौ दृष्ट्वा विस्मिता ह्यनिमेषणाः।
अवोचन् सर्व एवैते परस्परमथागताः॥९
इमौ रामस्य सदृशौ बिम्बाद् बिम्बमिवोदितौ।
जटिलौ यदि न स्यातां न च वल्कलधारिणौ॥१०
विशेषं नाधिगच्छामो राघवस्यानयोस्तदा।
एवं संवदतां तेषां विस्मितानां परस्परम्॥११

**विशेषमिति**–विशेषं नाधिगच्छामो राघवस्यानयोस्तदेत्यनेन श्रीरामस्य नित्यकिशोरत्वं व्यक्तम्।११

उपचक्रमतुर्गातुं तावुभौ मुनिदारकौ।
ततः प्रवृत्तं मधुरं गान्धर्वमतिमानुषम् ॥१२

**उपचक्रमतुरिति**—मनुष्यलोकीयगानमतिक्रान्तम्।१२

श्रुत्वा तन्मधुरं गीतमपराह्णे रघूत्तमः।
उवाच भरतं चाभ्यां दीयतामयुतं वसु ॥१३
दीयमानं सुवर्णं तु न तज्जगृहतुस्तदा।
किमनेन सुवर्णेन राजन्नौ वन्यभोजनौ ॥१४
इति सन्त्यज्य सन्दत्तं जग्मतुर्मुनिसन्निधिम्।
एवं श्रुत्वा तु चरितं रामः स्वस्यैव विस्मितः ॥१५
ज्ञात्वा सीताकुमारौ तौ शत्रुघ्नं चेदमब्रवीत्।
हनूमन्तं सुषेणं च विभीषणमथाङ्गदम् ॥१६
आनयध्वं मुनिवरं ससीतं देवसम्मितम्।
अस्यास्तु पार्षदो मध्ये प्रत्ययं जनकात्मजा ॥१७
करोतु शपथं सर्वे जानन्तु गतकल्मषाम्।
भगवन्तं महात्मानं वाल्मीकिं मुनिपुङ्गवम् ॥१८
सत्यं तद्वचनं श्रुत्वा गताः सर्वेऽतिविस्मिताः।
ऊचुर्यथोक्तं रामेण वाल्मीकिं रामपार्षदाः ॥१९

**सत्यमिति**—सर्वेऽतिविस्मिताः, एतेन पूर्वं लङ्कायां श्रीसीतां वह्निवचनादिना स्वयमपि शुद्धां ज्ञात्वाऽपि पुनः शपथं कारयितुमिच्छतीत्यन्य एव कश्चन श्रीरामस्याभिप्रायो भवेदिति ध्वनितम्।१९

रामस्य हृद्गतं सर्वं ज्ञात्वा वाल्मीकिरब्रवीत्।
श्वः करिष्यति वै सीता शपथं जनसंसदि ॥२०

**रामस्येति**—सर्वं रामस्य हृद्गतमन्तर्द्धानिच्छादिकम्।२०

योषितां परमं दैवं पतिरेव न संशयः।
तच्छ्रुत्वा सहसा गत्वा सर्वे प्रोचुर्मुनेर्वचः ॥२१
राघवस्याथ रामोऽपि श्रुत्वा मुनिवचस्तदा।
राजानो मुनयः सर्वे शृणुध्वमिति चाब्रवीत् ॥२२

**राघवस्येति**—हे राजानः! हे मुनयः! यूयं शृणुध्वं इति रामोऽब्रवीत्।२२

सीतायाः शपथं लोका विजानन्तु शुभाशुभम्।
इत्युक्ता राघवेणाथ लोकाः सर्वे दिदृक्षवः॥२३

सीताया इति—सीतायाः शपथं दृष्ट्वा तस्याः शुभाशुभं धर्माधर्मं विजानन्तु निर्णयन्तु।२३

ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्चैव महर्षयः।
वानराश्च समाजग्मुः कौतूहलसमन्विताः॥२४
ततो मुनिवरस्तूर्णं ससीतः समुपागमत्।
अग्रतस्तमृषिं कृत्वा यान्ती किञ्चिदवाङ्मुखी॥२५
कृताञ्जलिर्बाष्पकण्ठी सीता यज्ञे निवेशिता।
दृष्ट्वा लक्ष्मीमिवायान्तीं ब्रह्माणमनुयायिनीम्॥२६
वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत्।
तदा मध्ये जनौघस्य प्रविश्य मुनिपुङ्गवः॥२७
सीतासहायो वाल्मीकिरिति प्राह च राघवम्।
इयं दाशरथे! सीता सुव्रता धर्मचारिणी॥२८
अपापा ते पुरा त्यक्ता ममाश्रमसमीपतः।
लोकापवादभीतेन त्वया राम! महावने॥२९
प्रत्ययं दास्यते सीता तदनुज्ञातुमर्हसि।
इमौ तु सीतातनयाविमौ यमलजातकौ॥३०
सुतौ तु तव दुर्धर्षौ तथ्यमेतद् ब्रवीमि ते।
प्रचेतसोऽहं दशमः पुत्रो रघुकुलोद्वह!॥३१
अनृतं न स्मराम्युक्तं तथेमौ तव पुत्रकौ।
बहून् वर्षगणान् सम्यक् तपश्चर्या मया कृता॥३२
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली।
वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत॥३३

नोपाश्नीयामिति—यदि मैथिली दुष्टा तर्हि स्वतपःफलं नोपाश्नीयामिति त्रिकालज्ञत्वेन श्रीसीता शुद्धेति श्रीरामो जानातीति, जानन्नपि वाल्मीकिः रामं प्रत्युक्तवान् तेन स्वतपः फलं श्रीसीतायै समर्पयामासेति सूचितम्।३३

एवमेतन्महाप्राज्ञ! यथा वदसि सुव्रत!।
प्रत्ययो जनितो मह्यं तव वाक्यैरकिल्बिषैः॥३४

लङ्कायामेव दत्तो मे वैदेह्या प्रत्ययो महान्।
देवानां पुरतस्तेन मन्दिरे सम्प्रवेशिता ॥३५
सेयं लोकभयाद् ब्रह्मन्नपापाऽपि सती पुरा।
सीता मया परित्यक्ता भवांस्तत्क्षन्तुमर्हति ॥३६
ममैव जातौ जानामि पुत्रावेतौ कुशीलवौ।
शुद्धायां जगतो मध्ये सीतायां प्रीतिरस्तु मे ॥३७

**ममैवेति**—गच्छति प्राप्नोति सर्वत्र व्याप्नोति इति जगत् साकेततृतीयावरणं, ब्रह्म। ब्रह्म साकेतस्य तृतीयावरणम् इत्यत्र प्रमाणम्—निर्वाच्यं निर्गुणं नित्यमनन्तं सर्वसाक्षिकम्। इन्द्रियैर्विषयैः सर्वैरग्राह्यं तत्प्रकाशकम्॥ न्यासिनां योगिनां यच्च ज्ञानिनां च लयास्पदम्। तृतीयावरणं तद्वै साकेतस्य विदुर्बुधाः॥ इति वसिष्ठसंहितावचनात्—तन्मध्ये[1]वर्तमानायां[2]शुद्धायां शुद्धानन्दरूपिण्याम् [3]अपराजितायां नित्यरासविहारिण्यां [4]मदुपास्यायां [5]सीतायां मे प्रीतिरस्त्वित्यनेन श्रीरामोपास्या [6]सीता तदुपास्य श्रीराम इत्यन्योऽन्याऽलङ्कारो व्यक्तः।३७

देवाः सर्वे परिज्ञाय रामाभिप्रायमुत्सुकाः।
ब्रह्माणमग्रतः कृत्वा समाजग्मुः सहस्रशः ॥३८
प्रजाः समागमन् हृष्टाः सीताकौशेयवासिनी।
उदङ्मुखी ह्यधोदृष्टिः प्राञ्जलिर्वाक्यमब्रवीत् ॥३९
रामादन्यं यथाहं वै मनसापि न चिन्तये।
तथा मे धरणी देवी विवरं दातुमर्हति ॥४०
तथा शपन्त्याः सीतायाः प्रादुरासीन् महाद्भुतम्।
भूतलाद्दिव्यमत्यर्थं सिंहासनमनुत्तमम् ॥४१
नागेन्द्रैर्ध्रियमाणञ्च दिव्यदेहैः रविप्रभम्।
भूदेवी जानकीं दोर्भ्यां गृहीत्वा स्नेहसंयुता ॥४२

---

१. तन्मध्ये वर्तमानायाम्-शुद्धायामपराजितायाम् सीतायाम्, इत्याकारकं मदीयपुस्तके साकेततृतीयावरणं ब्रह्म इत्यस्यानन्तरमस्ति, तत्रैव तन्मध्ये वर्तमानायाम्, इति रा० व० पु० च। २. शुद्धायां शुद्धानन्दरूपिण्याम्—इति मत्पुस्तके नास्ति। ३. अपराजितायाम् इति रा० व० पु० नास्ति, मत्पुस्तकेऽपि १ सङ्केतानुसारमस्य पाठः। ४. मदुपास्य इति रा० व० पु०। ५. सीतायाम् इति १ सङ्केतितस्थले उभयमातृकायामपि। ६. अग्रतनवाक्यस्थले सीतेति व्यक्तम् इति मत्पुस्तके।

स्वागतं तामुवाचैनामासने संन्यवेशयत् ।
सिंहासनस्थां वैदेहीं प्रविशन्तीं रसातलम् ॥४३

**स्वागतमिति**—रसातलं रसः आसमन्तात् तलते प्रतिष्ठते यस्मिंस्तद्रसातलम् रसाधारं नित्यरासस्थलमिति यावत्। तेन प्रेमासीता नित्यासीतासमीपं प्राप्ता नान्यत्रेति, [१]तत्रैव पद्माऽपि गता पुनः श्रीरन्तर्धानसमये श्रीरामसविधमागत्य श्रीविष्णुना समं वैकुण्ठं यास्यतीति [२]सूचितम्।४३

निरन्तरा पुष्पवृष्टिर्दिव्या सीतामवाकिरत् ।
साधुवादश्च सुमहान् देवानां परमाद्भुतः ॥४४
ऊचुश्च बहुधा वाचो ह्यन्तरिक्षगताः सुराः ।
अन्तरिक्षे च भूमौ च सर्वे स्थावरजङ्गमाः ॥४५
वानराश्च महाकायाः सीताशपथकारणात् ।
केचिच्चिन्तापरास्तस्य केचिद्ध्यानपरायणाः ॥४६

**वानरा इति**—केचित् हनुमदादयः ध्यानपरायणास्तेन तेषां प्रेमासीता रामं प्राप्तेति हर्षातिशयो व्यक्तः।४६

केचिद्रामं निरीक्षन्तः केचित्सीतामचेतसः ।
सुमुहूर्त्तन्तु तत्सर्वं भूमीभूतमचेतनम् ॥४७

**केचिदिति**—केचित् रामवर्गाः रामं निरीक्षन्तः सीताविसर्जनात् कथं रामस्याभिरामता भवेदिति निरीक्षणपूर्वकं चिन्तयन्तः। केचित् सीतावर्गस्थाः सीतां निरीक्षन्तः तादृशीं नित्यरासमण्डलं प्रविशन्तीं सिंहासनस्थां सीतां ध्यात्वा कदा तत्समीपं प्राप्स्याम इत्युत्कण्ठा [३]वतुः। केचित् उभयवर्गस्थाः अचेतसः वियोगाभासेन चेतनारहिताः। भूमीभूतं विद्यमानं तत्सर्वमचेतनञ्जातमिति शेषः।४७

सीतानिवेशनं दृष्ट्वा सर्वं सम्मोहितं जगत् ।
रामस्तु सर्वं ज्ञात्वैव भविष्यत्कार्यगौरवम् ॥४८
अजानन्निव दुःखेन शुशोच जनकात्मजाम् ।
ब्रह्मणा ऋषिभिः सार्धं बोधितो रघुनन्दनः ॥४९

**अजानन्निति**—अजानन्निवेत्यनेन स्वकर्मकत्वात् सर्ववृत्तान्तं श्रीरामो जानातीति व्यज्यते। तेन च देवगणप्रार्थनया श्रीजानक्या अन्तर्द्धानं कारयित्वा श्रीरामो नारायणश्च

---

१. तः २. पर्यन्तभागः नास्ति रा० व० पु०। ३. वन्तः इत्युचितः।

नित्यविहारस्थलं वैकुण्ठं च जिगमिषतीति ऋषिभिः सह ब्रह्मा जानाति न वेति स्वाचरणेन श्रीरामः परीक्षते इति व्यक्तं बोधितः।४९

प्रतिबुद्ध इव स्वप्नाच्चकारानन्तराः क्रियाः।
विससर्ज ऋषीन् सर्वानृत्विजो ये समागताः॥५०

**प्रतिबुद्ध इति**—यद् ब्रह्मादिपरीक्षार्थं शोकः कृतस्तस्मात् स्वप्नादिव प्रतिबुद्धः, उपमेयलुप्तोपमालङ्कारः। अनन्तरा अवशिष्टा दक्षिणादानरूपाः।५०

तान् सर्वान् धनरत्नाद्यैस्तोषयामास भूरिशः।
उपादाय कुमारौ तावयोध्यामगमत्प्रभुः॥५१
तदादि निःस्पृहो रामः सर्वभोगेषु सर्वदा।
आत्मचिन्तापरो नित्यमेकान्ते समुपस्थितः॥५२

**तदादीति**—तदादि तत्प्रभृति सर्वभोगेषु बाह्यलीलासम्बधिभोगेषु निःस्पृहः आत्मचिन्तापरो मच्छरीरभूतनारायणः चतुर्भुजरूपेण वैकुण्ठं कथं प्राप्नुयात्। आवेशरूपोऽहं नित्यविहारिणं कथं प्राप्नुयाम् इति विचारपरः।५२

एकान्ते ध्याननिरते एकदा राघवे सति।
ज्ञात्वा नारायणं साक्षात् कौशल्या प्रियवादिनी॥
भक्त्याऽगत्य प्रसन्नं तं प्रणता प्राह हृष्टधीः॥५३

**एकान्त इति**—एवं पूर्वोक्तरीत्या एकान्ते राघवे ध्याननिरते सति प्रसन्नं तं पुत्रं रामं साक्षात् नारायणाविष्टं ज्ञात्वा प्रियवादिनी श्रीरामे परमवात्सल्यवती कौशल्याऽऽगत्य प्रहृष्टधीः प्रणता च सती भक्त्या आह। ननु बालकाण्डोक्तरीत्या नारायणाविष्टं रामं ज्ञातवत्याः कौशल्यायाः कथमिदानीं ज्ञात्वा नारायणमित्युक्तिः, कथञ्च परमविज्ञानवत्याः तस्याः ज्ञानापेक्षेति चेदुच्यते प्रेम्णः पराकाष्ठायामेकरसज्ञानं न तिष्ठतीति प्रेमवैचित्र्येण तस्मान्नानाविधभावा उत्पद्यन्ते। उक्तं वैचित्र्यं भागवते 'न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृग्' इति। 'कितव ! योषितः कस्त्यजेन्निशि' इति।५३

राम ! त्वं जगतामादिरादिमध्यान्तवर्जितः॥५४
परमात्मा परानन्दः पूर्णः पुरुष ईश्वरः।
जातोऽसि मे गर्भगृहे मम पुण्यातिरेकतः॥५५

**रामेति**—हे राम ! त्वं जगतामादिः कारणं स्वयमादिमध्यान्तवर्जित उत्पत्तिनाशरहितः परमात्मा परानन्दः पूर्णः दिव्यगुणैरिति शेषः। पुरुषः नित्यद्विभुज ईश्वरः सर्वनियन्ता मे गर्भगृहे जातोऽसि। ननु जगतामादिरित्यादिविशेषणविशिष्टं प्रति मम पुण्यातिरेकतः मे गर्भगृहे जातोऽसीत्युक्तिः कथमिति चेत् प्रेमवैचित्र्येण पूर्वपरानुसन्धानाभावादिति गृहाण।५४-५५।

अवसाने ममाप्यद्य समयोऽभूद् रघूत्तम ! ।
नाद्याप्यबोधजः कृत्स्नो भवबन्धो निवर्तते ॥५६

**अवसान इति**—अवसाने वार्द्धक्ये एषः समयः प्रश्नकालोऽभूत् तदेवाह, अबोधजः कृत्स्नः समयो भवबन्धः। अबोधानां जनानामद्यापि न निवर्तते। एतेन केवलमात्मार्थं तपसा भक्त्या च न त्वामवतारितवती किन्तु सर्वलोकोद्धारार्थमेव, तथा तेषामज्ञानं दूरीकृत्य तानुद्धरस्वेति। तेन चैतेन ज्ञानेन परम्परया भाविनामपि जीवानामुद्धारो भविष्यतीति सूचितम्।५६

इदानीमपि मे ज्ञानं भवबन्धनिवर्तकम्।
यथा संक्षेपतो भूयात्तथा बोधय मां विभो ! ॥५७

तदेवाह **इदानीमपीति**—इदानीमपि जनानां भवबन्धनिवर्तकं ज्ञानं मेऽस्ति तथापि मदुपदेशे तेषां सम्यक् विश्वासो न भविष्यत्यतः येन ज्ञानेन परं परोपदेशद्वारा जनानामज्ञाननिवृत्तिर्भूयात् तज्ज्ञानं तथा संक्षेपतः मां बोधय।५७

निर्वेदवादिनीमेवं मातरं मातृवत्सलः।
दयालुः प्राह धर्मात्मा जराजर्जरितां शुभाम् ॥५८

**निर्वेदवादिनीमिति**—निर्वेदवादिनीं जनानां दुःखं दृष्ट्वा निर्वेदं वदन्तीं।५८

मार्गास्त्रयो मया प्रोक्ताः पुरा मोक्षाधिसाधकाः।
कर्मयोगो ज्ञानयोगो भक्तियोगश्च शाश्वतः॥
तेषां तु सुलभो मार्गो भक्तियोगः सुपूजितः॥५९
भक्तिर्विभिद्यते मातस्त्रिविधा गुणभेदतः।
स्वभावो यस्य यस्तेन तस्य भक्तिर्विभिद्यते॥६०
यस्तु हिंसां समुद्दिश्य दम्भं मात्सर्यमेव वा।
भेददृष्टिश्च संरम्भी भक्तो मे तामसः स्मृतः॥६१
फलाभिसन्धिर्भोगार्थी धनकामो यशस्तथा।
अर्चादौ भेदबुद्ध्या मां पूजयेत् स तु राजसः॥६२

**फलाभिसन्धिरिति**—फलं स्वर्गस्तदभिसन्धिस्तत्कामः, भोगः ऐहिकः। ऐहिकं यश इत्यस्य यशः काम इत्यर्थः, गोवलीवर्दन्यायेन पृथक् निर्देशः।६२

परस्मिन्नर्पितं यस्तु कर्मनिर्हरणाय वा।
कर्तव्यमिति वा कुर्याद् भेदबुद्ध्या स सात्त्विकः॥६३

**परस्मिन्निति**—यस्त्वित्यारभ्य स सात्त्विक इत्यन्तेन सगुणा भक्तिरुक्ता, सा च 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदम्॥' नवविधा, तत्र सात्त्विकराजसतामसभेदेन सप्तविंशतिभेदयुक्ता। पुनः उत्तममध्यमाऽधमभेदेनै-काशीतिभेदयुक्ता सोक्ता।६३

मद्‍गुणश्रवणादेव मय्यनन्तगुणालये।
अविच्छिन्ना मनोवृत्तिर्यथा गङ्गाम्बुनोऽम्बुधौ॥६४
तदेव भक्तियोगस्य लक्षणं निर्गुणस्य हि।
अहैतुक्यव्यवहिता या भक्तिर्मयि जायते॥६५
सा मे सालोक्यसामीप्यसार्ष्टिसायुज्यमेव च।
ददात्यपि न गृह्णन्ति भक्ताः मत्सेवनं विना॥६६
स एवात्यन्तिको योगो भक्तिमार्गस्य भामिनि!।
मद्‍भावं प्राप्नुयात्तेन अतिक्रम्य गुणत्रयम्॥६७

अथ निर्गुणामाह **मद्‍गुणश्रवणादेवेति**—उपलक्षणञ्चेयं कीर्तनाद्यष्टविधभक्तीनाम्। तासु अनुरागात् अनन्तगुणालये मयि सा अम्बुधौ गङ्गाम्बुवदविच्छिन्ना मनोवृत्तिः सा निर्गुणस्य भक्तियोगस्य लक्षणम्। निर्गुणापि अहैतुकी हैतुकीभेदेन द्विविधा। तत्र सालोक्यादिवाञ्छायुक्ता हैतुकी, तद्‍भिन्नाऽहैतुकी। एतद्‍रूपमाह-अहैतुकीति-'सालोक्य-सामीप्यसार्ष्टिसायुज्यं चकारात् सारूप्यमपि ददत्यपि न गृहणन्ति भक्ता मत्सेवनं विना,' एतेन हैतुकी विज्ञानं प्राप्य ब्रह्मरूपताया अपि श्रेष्ठतमेति व्यक्ता। तेन भक्ति-योगेन गुणत्रयमतिक्रम्य मद्‍भावं दास्यादिपञ्चभावं प्राप्नुयात्, प्रेमाद् भक्तिः पुष्टा सती शान्तदास्यसख्यवात्सल्यशृङ्गाररूपेण रसरूपा भवतीत्यर्थः।६४-६७।

महता कामहीनेन स्वधर्माचरणेन च।
कर्मयोगेन शस्तेन वर्जितेन विहिंसनात्॥६८
मद्दर्शनस्तुतिमहापूजाभिः स्मृतिवन्दनैः।
भूतेषु मद्‍भावनया सङ्गेनासत्यवर्जनैः॥६९
बहुमानेन महतां दुःखिनामनुकम्पया।
स्वसमानेषु मैत्र्या च यमादीनां निषेवया॥७०
वेदान्तवाक्यश्रवणान्मम नामानुकीर्तनात्।
सत्सङ्गेनार्जवेणैव ह्यहमः परिवर्जनात्॥७१
काङ्क्षया मम धर्मस्य परिशुद्धान्तरो जनः।
मद्‍गुणश्रवणादेव याति मामञ्जसा जनः॥७२

यथा वायुवशाद् गन्धः स्वाश्रयाद् घ्राणमाविशेत् ।
योगाभ्यासरतं चित्तमेवमात्मानमाविशेत् ॥७३

अहैतुक्याः भक्तेः साधनान्याह **महतेत्यादिना**—महतेत्यारभ्य दुःखिनामनुकम्पयेत्यन्तेन कर्मयोगः साधनत्वेनोपन्यस्तः। स्वसमानेष्वित्यादिना यमादीनां निषेवयेत्यन्तेन यमनियमप्राणायामादीनामुक्तत्वात् हठयोगः साधनत्वेनोपन्यस्तः। वेदान्तवाक्यश्रवणादित्यनेन ज्ञानयोगः साधनत्वेनोपन्यस्तः। मम नामानुकीर्तनादित्युपलक्षितश्रवणादीनां ग्रहणात् सगुणभक्तियोगः। सत्सङ्गेनेत्यारभ्य परिशुद्धान्तरो जन इत्यन्तेन सगुणभक्तिभेदो निर्गुणत्वे साधनान्युक्तानि, एवं सगुणां कृतवतः श्रवणादौ रागो भवति तद्रागात् सगुणा निर्गुणा भवति। तस्याः फलमाह मद्गुणेति-मद्गुणादित्युपलक्षणं कीर्तनाद्यष्टानां, नवविधमद्भक्त्येत्यर्थः। अञ्जसा शीघ्रमायाति तत्र दृष्टान्तमाह यथा वायुवशादिति।६८-७३।

सर्वेषु प्राणिजातेषु ह्यहमात्मा व्यवस्थितः।
तमज्ञात्वा विमूढात्मा कुरुते केवलं बहिः॥७४
क्रियोत्पन्नैर्नैकभेदैर्द्रव्यैर्मे नाम्ब ! तोषणम्।
भूतावमानिनार्चायामर्चितोऽहं न पूजितः॥७५
तावन्मामर्चयेद्देवं प्रतिमादौ स्वकर्मभिः।
यावत् सर्वेषु भूतेषु स्थितं चात्मनि न स्मरेत्॥७६

कनिष्ठमध्यमोत्तमभेदेन भक्तेः त्रिविधाधिकारिण आह—**सर्वेष्विति**—हेऽम्ब ! सर्वत्र स्थितं मां अज्ञात्वा केवलं बहिः क्रियोत्पन्नैः अनेकभेदैर्द्रव्यैः प्रतिमादौ मे पूजां कुरुते स मे तोषणं न कुरुते अर्थात् अर्चायामेव पूजां कुरुते न तु सर्वभूतेषु, अत एव स मूढात्मा कनिष्ठाधिकारी भागवतः। उक्तञ्च भागवते 'अर्चायामेव हरये पूजा या श्रद्धयेहते। मद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः'।७४-७६।

यस्तु भेदं प्रकुरुते स्वात्मनश्च परस्य च।
भिन्नदृष्टेर्भयं मृत्युस्तस्य कुर्यान्न संशयः॥७७

**यस्त्विति**—यस्तु स्वात्मनः स्वस्वामिनः अर्चाविग्रहस्य परस्य स्वपूज्यस्य गुरुवैष्णवब्राह्मणादेश्च भेदं कुरुते [1]तस्य भिन्नदृष्टेः मृत्युः भयं कुर्यात् संशयः न, अर्थात् विग्रहस्य गुरुवैष्णवब्राह्मणानां भेदं यः प्रकुरुते [2]स मध्यमाधिकारीत्यर्थः। यद्वा स्वात्मनः स्वस्वामिनः परस्य तदधीनस्य भक्तस्य चकारात् द्विषतो, वालिशस्य च यो भेदं प्रकुरुते। प्रेममैत्रीकृपोपेक्षां प्रकुरुते तस्य भिन्नदृष्टेर्मृत्युर्भयं कुर्यात्, अर्थात् एतेषु प्रेमादिकं यः

---

१. तः २. पर्यन्तांशः रा० व० पुस्तकस्थः।

कुरुते स मध्यमाधिकारी भागवत इत्यर्थः। उक्तञ्च भागवते 'ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च। प्रेममैत्रीकृपोपेक्षां यः करोति स मध्यमः'।७७

मामतः सर्वभूतेषु परिच्छिन्नेषु संस्थितम्।
एकं ज्ञानेन मानेन मैत्र्या चार्चेदभिन्नधीः॥७८॥

उत्तमाधिकारिणं भागवतमाह **मामिति**–अभिन्नधीः [1]अर्चयेत् स उत्तमाधिकारी भागवतः। उक्तञ्च भागवते 'सर्वभूतेषु यः पश्येत् भगवद्भावमात्मनः। भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥' 'देवो भूत्वा देवं यजेत्' इति श्रुतेः।७८

चेतसैवानिशं सर्वभूतानि प्रणमेत् सुधीः।
ज्ञात्वा मां चिद्घनं शुद्धं जीवरूपेण संस्थितम्॥७९

बाह्यद्रव्यैः सर्वत्र पूजाकर्तव्यतायाः, असम्भवमाशङ्क्याह **चेतसैवेति**–चिद्घनं मां जीवरूपेण संस्थितं चिच्छरीरेण संस्थितम्। जडानुक्तिस्तु 'तस्मात् [2]पश्यन्ति पादपा' इति भारतोक्तेः जडेऽपि जीवस्य विद्यमानत्वाभिप्रायेण। यद्वा उपलक्षणञ्चेदं अचिच्छरीरस्यापि, अचिच्छरीरेण ह्यन्तःस्थितं ज्ञात्वा सर्वभूतानि प्रणमेत्।७९

तस्मात् कदाचिन्नेक्षेत भेदमीश्वरजीवयोः।
भक्तियोगो ज्ञानयोगो मया मातरुदीरितः॥८०

**तस्मादिति**–तस्मात् चिदचितोर्भगवच्छरीरत्वाज्जीवेश्वरयोर्भेदं कदाचिन्नेक्षेत। अर्थादभेदबुद्ध्या मामर्चयेदित्यर्थः। 'सर्वं खल्विदं ब्रह्मेति, तज्जलानिति उपासीत' इति श्रुतेः। हठयोगे मनोनियमस्य भक्तौ परिचर्यारूपकर्मणः सत्त्वात्। योगद्वयोक्तिस्तु रूढयोगस्य ज्ञानयोगे कर्मयोगस्य भक्तियोगे अन्तर्भावाभिप्रायेण।८०

आलम्ब्यैकतरं वापि पुरुषः शममृच्छति।
ततो मां भक्तियोगेन मातः! सर्वहृदि स्थितम्॥८१
पुत्ररूपेण वा नित्यं स्मृत्वा शान्तिमवाप्स्यसि।
श्रुत्वा रामस्य वचनं कौशल्याऽनन्दसंयुता॥८२

**आलम्ब्येति**–अनयोरेकतरमालम्ब्य पुरुषः शमं शान्तिं परां भक्तिमिति यावत्, ऋच्छति प्राप्नोति। 'सा परानुरक्तिरीश्वरे' इति शाण्डिल्यसूत्रप्रतिपाद्यपराभक्तिः शुद्धेत्युच्यते। एतल्लक्षणं तु दास्यादिपञ्चभावा उत्पद्यन्ते यस्यां सा शुद्धेति। सा शान्तिः शुद्धसामान्यभेदेन द्विधा, तत्र सर्वोत्कृष्टत्वेन मय्यनुरागरूपा शान्तिः शुद्धा। सामान्या तु एतज्ज्ञानविरहादप्यनुरागरूपा। ततः तस्मात् शान्तिभक्तियोगेन [3]सर्वोत्कृष्टत्वेन, सर्वोत्कृष्टत्वज्ञानविधुरेण सामान्यभक्तियोगेन केवलकौशल्यापुत्रत्वरूपेण

---

१. श्लोकपाठानुसारम् अर्चेदित्युचितः। २. प्रपञ्चयति रा० व० पु०। ३. सर्वोत्कृष्टत्वेन रा० व० पु०।

वा मां स्मृत्वा हे मातः! जनः शान्तिं सर्वोत्कृष्टज्ञानत्वेनानुरागात्मिकां भक्तिमवाप्स्यति। पराभक्तेः तदेव फलं नान्यदिति भावः। स्फुटञ्चैतद्विस्तरेण भक्तिरसामृतसिन्धु-सुसिद्धान्तोत्तमादिग्रन्थेषु। आनन्दसंयुता, श्रीरामोपदिष्टज्ञानेन जीवाः मुक्ताः भवेयुरिति निश्चयेनानन्दव्याप्ता।८१-८२।

रामं सदा हृदि ध्यात्वा छित्वा संसारबन्धनम्।
अतिक्रम्य गतीस्तिस्रोऽप्यवाप परमां गतिम्॥८३

**राममिति**–रामं हि ध्यात्वा उपदेशेन जीवानां संसारबन्धनं छित्वा तिस्रः त्रीणि स्थानानि, अधोमध्योर्ध्वानि, अतिक्रम्य गतिं अप्रकटायोध्यायां सनातनजननीभावरूपां श्रीरामे परमवात्सल्यभक्तिरूपाम्।८३

कैकेयी चापि योगं रघुपतिगदितं पूर्वमेवाधिगम्य,
श्रद्धाभक्तिप्रशान्ता हृदि रघुतिलकं भावयन्ती गतासुः।
गत्वा स्वर्गं स्फुरन्ती दशरथसहिता मोदमानाऽवतस्थे,
माता श्रीलक्ष्मणस्याप्यतिविमलमतिः प्राप भर्त्तुःसमीपम्॥८४

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
उत्तरकाण्डे सप्तमोऽध्यायः।७

⊙

**कैकेयीति**–पूर्वमेव गतासुः गताः रामे प्राप्ताः असवः प्राणाः यस्याः सा अत एव रघुतिलकं भावयन्ती कैकेयी स्वर्गं 'स्वर्गो लोको ज्योतिषावृत्त' इति श्रुत्युक्तसाकेताख्यं गत्वा मोदमाना सती दशरथसहिताऽवतस्थे।८४

इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामुत्तरकाण्डे
सप्तमोऽध्यायः।७

⊙

## अथाष्टमोऽध्यायः

अथ काले गते तस्मिन् भरतो भीमविक्रमः।
युधाजिता मातुलेन ह्याहूतोऽगात् ससैनिकः॥१
रामाज्ञया गतस्तत्र हत्वा गन्धर्वनायकान्।
तिस्रः कोटीः पुरे द्वे तु निवेश्य रघुनन्दनः॥२
पुष्करं पुष्करावत्यां तक्षं तक्षशिलाह्वये।
अभिषिच्य सुतौ तत्र धनधान्यसुहृद्वृतौ॥३
पुनरागत्य भरतो रामसेवापरोऽभवत्।
ततः प्रीतो रघुश्रेष्ठो लक्ष्मणं प्राह सादरम्॥४
उभौ कुमारौ सौमित्रे! गृहीत्वा पश्चिमां दिशम्।
तत्र भिल्लान् विनिर्जित्य दुष्टान् सर्वापकारिणः॥५
अङ्गदश्चित्रकेतुश्च महासत्त्वपराक्रमौ।
द्वयोर्द्वे नगरे कृत्वा गजाश्वधनरत्नकैः॥६
अभिषिच्य सुतौ तत्र शीघ्रमागच्छ मां पुनः।
रामस्याज्ञां पुरस्कृत्य गजाश्वबलवाहनः॥७
गत्वा हत्वा रिपून् सर्वान् स्थापयित्वा कुमारकौ।
सौमित्रिः पुनरागत्य रामसेवापरोऽभवत्॥८

ततस्तु काले महति प्रयाते,
रामं सदा धर्मपथे स्थितं हरिम्।
द्रष्टुं समागादृषिवेषधारी,
कालस्ततो लक्ष्मणमित्युवाच॥९

**तत इति**—ऋषिवेषधारीत्यनेन तस्य भयातिशयो व्यक्तः। तेन च श्रीरामेच्छयैव स ब्रह्मणा प्रेषित इति व्यक्तम्। तेन श्रीरामस्य कालस्यापि कालत्वं व्यक्तम्। 'ज्ञः कालकालो गुणी सर्वविद्य' इति श्रुतेः।९

निवेदयस्वातिबलस्य दूत मां द्रष्टुकामं पुरुषोत्तमाय।
रामस्य विज्ञापनमस्ति तस्य महर्षिमुख्यस्य चिराय धीमन्! ॥१०

तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयान्वितः।
आचचक्षेऽथ रामाय स सम्प्राप्ततपोधनम् ॥११
एवं ब्रुवन्तं प्रोवाच लक्ष्मणं राघवो वचः।
शीघ्रं प्रवेश्यतां तात! मुनिः सत्कारपूर्वकम् ॥१२
लक्ष्मणस्तु तथेत्युक्त्वा प्रावेशयत तापसम्।
स्वतेजसा ज्वलन्तं तं घृतसिक्तं यथाऽनलम् ॥१३
सोऽभिगम्य रघुश्रेष्ठं दीप्यमानः स्वतेजसा।
मुनिर्मधुरवाक्येन वर्धस्वेत्याह राघवम् ॥१४
तस्मै स मुनये रामः पूजां कृत्वा यथाविधि।
पृष्ट्वाऽनामयमव्यग्रो रामः पृष्टोऽथ तेन सः ॥१५
दिव्यासने समासीनो रामः प्रोवाच तापसम्।
यदर्थमागतोऽसि त्वमिह तत् प्रापयस्व मे ॥१६
वाक्येन चोदितस्तेन रामेणाऽह मुनिर्वचः।
द्वन्द्वमेव प्रयोक्तव्यमनालक्ष्यं तु तद्वचः ॥१७

**वाक्येनेति**–द्वन्द्वमेव रहस्यमेवाऽनालक्ष्यं तृतीयेनेति शेषः।१७

नान्येन च तच्छ्रोतव्यं नाख्यातव्यं च कस्यचित्।
शृणुयाद्वा निरीक्षेद्वा यः स वध्यस्त्वया प्रभो! ॥१८

**नान्येनेति**–निरीक्षेद्वा कथयन्तावावामिति शेषः।१८

तथेति च प्रतिज्ञाय रामो लक्ष्मणमब्रवीत्।
तिष्ठ त्वं द्वारि सौमित्रे! नाऽऽयात्वत्र जनो रहः ॥१९

**तथेति**–अत्र रहः स्थाने आवाभ्यामतिमुक्तो जनस्तृतीयो जनः नायात्वित्यर्थः।१९

यद्यागच्छति को वाऽपि स वध्यो मे न संशयः।
ततः प्राह मुनिं रामो येन वा त्वं विसर्जितः ॥२०
यत्ते मनीषितं वाक्यं तद्वदस्व ममाग्रतः।
ततः प्राह मुनिर्वाक्यं शृणु राम! यथायथम् ॥२१

ब्रह्मणा प्रेषितोऽस्मीश ! कार्यार्थी तेऽन्तिकं प्रभो ! ।
अहं हि पूर्वजो देव ! तव पुत्रः परन्तप ! ॥२२
मायासङ्गमजो वीर ! कालः सर्वहरः स्मृतः ।
ब्रह्मा त्वामाह भगवान् सर्वदेवर्षिपूजितः ॥२३
रक्षितुं स्वर्गलोकस्य समयस्ते महामते ! ।
पुरा त्वमेक एवासीर्लोकान् संहृत्य मायया ॥२४

अथ ब्रह्मवाक्यमाह **रक्षितुमिति**—समयः कृतः, एतावन्तं कालं भूलोके स्थित्वा पुनः स्वर्गमागन्तास्मीत्येवं रूपः, एतेन तव गुप्तलीलाकरणेच्छां विज्ञाय ब्रह्मणा प्रेषितोऽस्मीति सूचितम्। मायया लोकान् संहृत्य सर्वान् लोकान् च जठरे कृत्वा पुरा त्वं एक एवासीः त्वमादिनारायणोऽसीति भावः।२४

भार्यया सहितस्त्वं मामादौ पुत्रमजीजनः ।
भोगवन्तं तथा नागमनन्तमुदकेशयम् ॥२५
मायया जनयित्वा त्वं द्वौ ससत्त्वौ महाबलौ ।
मधुकैटभकौ दैत्यौ हत्वा मेदोऽस्थिसञ्चयम् ॥२६
इमां पर्वतसम्बद्धां मेदिनीम् पुरुषर्षभ ! ।
पद्मे दिव्यार्कसङ्काशे नाभ्यामुत्पाद्य मामपि ॥२७
मां विधाय प्रजाध्यक्षं मयि सर्वं न्यवेदयत् ।
सोऽहं संयुक्तसम्भारस्त्वामवोचं जगत्पते ! ॥२८
रक्षां विधत्स्व भूतेभ्यो ये मे वीर्यापहारिणः ।
ततस्त्वं कश्यपाज्जातो विष्णुर्वामनरूपधृक् ॥२९

**भार्ययेति**—भार्यया माययाऽविच्छिन्नात्मा इत्यर्थः। भार्यया सहितस्त्वं मामादौ पुत्रमजीजनः, इत्यारभ्य ततस्त्वं कश्यपाज्जातो विष्णुर्वामनरूपधृगित्यस्यायं भावः यथा सर्वावतारे तव लीलाक्रमो वेदे निबद्धस्तथा रामायणीयलीलाया अपि एकादशसहस्रवर्षस्थितिर्निबद्धास्त्यतः त्वां विज्ञापयामीति भावः। तन्मेदोऽस्थिसञ्चयं तद्रूपामिमां मेदिनीं निर्मितवानिति शेषः।२५-२९।

हृतवानसि भूभारं वधाद्रक्षोगणस्य च ।
सर्वासूत्सार्यमाणासु प्रजासु धरणीधरः ॥३०
रावणस्य वधाकाङ्क्षी मर्त्यलोकमुपागतः ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥३१

कृत्वा वासस्य समयं त्रिदशेष्वात्मनः पुरा।
स ते मनोरथः पूर्णः पूर्णे चायुषि ते नृषु ॥३२
कालस्तापसरूपेण त्वत्समीपमुपागमत्।
ततो भूयश्च ते बुद्धिर्यदि राज्यमुपासितुम् ॥३३

**कृत्वेति**–तेन च नृषु त्वत्संबंधिषु नृषु विद्यमाने आयुषि पूर्णे सति-अर्थात् तेषां मुक्तिकाले सन्निहिते सति तव गुप्तलीलाकरणेच्छां विज्ञाय ब्रह्मणा प्रेषितः कालोऽहं तापसरूपेण विज्ञप्त्यर्थं त्वत्समीपमिहागतः, प्राप्तोऽस्मीत्यर्थः।३२-३३।

तत्तथा भव भद्रं ते एवमाह पितामहः।
यदि ते गमने बुद्धिर्देवलोकं जितेन्द्रिय! ॥३४
सनाथा विष्णुना देवा भवन्तु विगतज्वराः।
चतुर्मुखस्य तद्वाक्यं श्रुत्वा कालेन भाषितम् ॥३५

**तत्तथेति**–ततस्तस्मात् यदि राज्यमुपासितुं ते बुद्धिस्तर्हि भूयस्तथा भव राज्यमुपास्व। एतेन तेऽघटितघटनापटीयस्त्वं व्यक्तम्। यदि च देवलोकं दीव्यति अस्मिन्निति देवः स चासौ लोकश्च तं क्रीडालोकं प्रमोदवनाख्यं प्रति गमने ते बुद्धिस्तर्हि विष्णुना अर्थात् विष्णोः तत्र प्रेषणेन देवाः सनाथाः सन्तः विगतज्वराः भवन्तु। जितेन्द्रिय इत्यनेन मदुक्तं 'समीचीनं वा सर्वं क्षमस्वेति प्रार्थना व्यक्ता। एवं पितामह आह–एतेन नाहं स्वत आगत्य स्वकपोलकल्पितं निवेदयामि, अपि तु ब्रह्मोक्तं सर्वमिति। तेन जानक्या सह श्रीरामकृतरहस्यं ब्रह्मा ज्ञातवानिति ध्वनिः। तेन च त्वद्दत्ताज्ञायामहं ब्रह्मा च स्थित इति विज्ञापयितुं' ममागमनप्रयोजनं व्यक्तम्।३४-३५।

हसन् रामस्तदा वाक्यं कृत्स्नस्यान्तकमब्रवीत्।
श्रुतं तव वचो मेऽद्य ममापीष्टतरं तु तत् ॥३६
सन्तोषः परमो ज्ञेयस्त्वदागमनकारणात्।
त्रयाणामपि लोकानां कार्यार्थं मम सम्भवः ॥३७
भद्रं तेऽस्त्वागमिष्यामि यत एवाहमागतः।
मनोगतस्तु सम्प्राप्तो न मेऽत्रास्ति विचारणा ॥३८
मत्सेवकानां देवानां सर्वकार्येषु वै मया।
स्थातव्यं मायया पुत्र! यथा चाह प्रजापतिः ॥३९

**मत्सेवकानामिति**–मायया कृपया इत्यर्थः।३९

---

१. समीचीनमसमीचीनम्, इत्युचितः पाठः।

एवं तयोः कथयतोर्दुर्वासा मुनिरभ्यगात् ।
राजद्वारं राघवस्य दर्शनापेक्षया द्रुतम् ॥४०
मुनिर्लक्ष्मणमासाद्य दुर्वासा वाक्यमब्रवीत् ।
शीघ्रं दर्शय रामं मे कार्यं मेऽत्यन्तमाहितम् ॥४१
तच्छ्रुत्वा प्राह सौमित्रिर्मुनिं ज्वलनतेजसम् ।
रामेण कार्यं किं तेऽद्य किं तेऽभीष्टं करोम्यहम् ॥४२
राजा कार्यान्तिरे व्यग्रो मुहूर्तं सम्प्रतीक्ष्यताम् ।
तच्छ्रुत्वा क्रोधसन्तप्तो मुनिः सौमित्रिमब्रवीत् ॥४३
अस्मिन् क्षणे तु सौमित्रे ! न दर्शयसि चेद्विभुम् ।
रामं सविषयं वंशं भस्मीकुर्यां न संशयः ॥४४
श्रुत्वा तद्वचनं घोरमृषेर्दुर्वाससो भृशम् ।
स्वरूपं तस्य वाक्यस्य चिन्तयित्वा स लक्ष्मणः ॥४५

**श्रुत्वेति**–[1]लक्ष्मणदुर्वाससः संवादेनोभयोरपि श्रीरामस्य गुप्तलीलाकरणेच्छाज्ञानमस्तीति ध्वनिः ।४५

सर्वनाशाद्वरं मेऽद्य नाशो ह्येकस्य कारणात् ।
निश्चित्यैवं ततो गत्वा रामाय प्राह लक्ष्मणः ॥४६

**सर्वेति**–कारणात् दुर्वाससः शापरूपाद्धेतोःसर्वनाशात् एषः श्रीरामात् मे नाशः वरम् । 'नश् अदर्शने' इति धातोः निष्पन्नो नाशशब्द अदर्शनवाची । सपरिकरस्य श्रीरामस्य गुप्तलीलाकरणेच्छास्ति सा तु भविष्यत्येव परन्तु मुनिशापेन ब्रह्मण्यदेवस्य श्रीरामस्य ब्रह्मण्यताहानिर्भविष्यत्यतो मुनिशापात्तन्मा भवतु किन्तु स्वेच्छयैव । ममादर्शनं तु श्रीरामाज्ञयाऽग्रे भविष्यति चेन्ममाभीष्टमेव साकेते विद्यमानत्वेन श्रीरामस्य वियोगाभावादिति तात्पर्यम् ।४६

सौमित्रेर्वचनं श्रुत्वा रामः कालं व्यसर्जयत् ।
शीघ्रं निर्गम्य रामोऽपि ददर्शात्रेः सुतम् मुनिम् ॥४७
रामोऽभिवाद्य सम्प्रीतो मुनिं पप्रच्छ सादरम् ।
किं कार्यं ते करोमीति मुनिमाह रघूत्तमः ॥४८
तच्छ्रुत्वा रामवचनं दुर्वासा राममब्रवीत् ।
अद्य वर्षसहस्राणामुपवाससमापनम् ॥४९

---

१. लक्ष्मणदुर्वाससोः इत्युचितः ।

अतो भोजनमिच्छामि सिद्धं यत्ते रघूत्तम ! ।
रामो मुनिवचः श्रुत्वा सन्तोषेण समन्वितः ॥५०
स सिद्धमन्नं मुनये यथावत् समुपाहरत् ।
मुनिर्भुक्त्वान्नममृतं सन्तुष्टः पुनरभ्यगात् ॥५१
स्वमाश्रमं गते तस्मिन् रामः सस्मार भाषितम् ।
कालेन शोकदुःखार्त्तो विमनाश्चातिविह्वलः ॥५२
अवाङ्मुखो दीनमना न शशाकाभिभाषितुम् ।
मनसा लक्ष्मणं ज्ञात्वा हतप्रायं रघूत्तमः ॥५३
अवाङ्मुखो बभूवाथ तूष्णीमेवाखिलेश्वरः ।
ततो रामं विलोक्याह सौमित्रिर्दुःखसम्प्लुतम् ॥५४
तूष्णीम्भूतं, चिन्तयन्तं गर्हन्तं स्नेहबन्धनम् ।
मत्कृते त्यज सन्तापं जहि मां रघुनन्दन ! ॥५५
गतिः कालस्य कलिता पूर्वमेवेदृशी प्रभो ! ।
त्वयि हीनप्रतिज्ञे तु नरको मे ध्रुवं भवेत् ॥५६
मयि प्रीतिर्यदि भवेद्यद्यनुग्राह्यता तव ।
त्यक्त्वा शङ्कां जहि प्राज्ञ ! मा मा धर्मं त्यज प्रभो ! ॥५७
सौमित्रिणोक्तं तच्छ्रुत्वा रामश्चलितमानसः ।
आहूय मन्त्रिणः सर्वान् वसिष्ठञ्चेदमब्रवीत् ॥५८
मुनेरागमनं यत्तु कालस्यापि हि भाषितम् ।
प्रतिज्ञामात्मनश्चैव सर्वमावेदयत्प्रभुः ॥५९

**सौमित्रेरिति**—सौमित्रेरित्यादित्रयोदशश्लोकाः स्पष्टाः। अत्रेः सुतमित्यनेन दुर्वाससः चन्द्रसहोदरत्वात् तत्सादृश्यं तेन 'चन्द्रमा मनसो जात' इति श्रुत्या 'आत्मा वै जायते पुत्र' इति श्रुत्या च दुर्वासा श्रीराममन एवेति तेन सर्वं तद्वचनं श्रीरामेच्छयैवेति व्यक्तम् ।४७-५९ ।

श्रुत्वा रामस्य वचनं मन्त्रिणः सपुरोहिताः ।
ऊचुः प्राञ्जलयः सर्वे राममक्लिष्टकारिणम् ॥६०
पूर्वमेव हि निर्दिष्टं तव भूभारहारिणः ।
लक्ष्मणेन वियोगस्ते ज्ञातो विज्ञानचक्षुषा ॥६१

**पूर्वमेवेति**—भूभारहारिणस्तव लक्ष्मणेन वियोगो विज्ञानचक्षुषा ज्ञातो निर्दिष्टं च जनान् प्रति भूभारापाकरत्वेन कृताशेषकार्यत्वात् लक्ष्मणत्यागेन स्वयमपि लोकं यास्यतीति जानामीत्याशयः। तेन वसिष्ठस्य त्रिकालज्ञत्वं व्यक्तम्।६१

त्यजाशु लक्ष्मणं राम! मा प्रतिज्ञां त्यज प्रभो!।
प्रतिज्ञाते परित्यक्ते धर्मो भवति निष्फलः॥६२
धर्मे नष्टेऽखिले राम! त्रैलोक्यं नश्यति ध्रुवम्।
त्वं तु सर्वस्य लोकस्य पालकोऽसि रघूत्तम!॥६३
त्यक्त्वा लक्ष्मणमेवैकं त्रैलोक्यं त्रातुमर्हसि।
रामो धर्मार्थसहितं वाक्यं तेषामनिन्दितम्॥६४

**त्यक्त्वेति**—त्रैलोक्यं त्रातुमर्हसीत्यनेन भूलोकस्य त्राणं तु जातमेव इदानीं लक्ष्मण-विसर्जनात् नारायणरूपेण तेन शेषसंकर्षणरूपाभ्यां त्रैलोक्यपालनावसर इति सूचितम्।६४

सभामध्ये समाश्रुत्य प्राह सौमित्रिमञ्जसा।
यथेष्टं गच्छ सौमित्रे! माभूद्धर्मस्य संक्षयः॥६५
परित्यागो वधो वाऽपि सतामेवोभयं समम्।
एवमुक्ते रघुश्रेष्ठेऽदुःखव्याकुलितेक्षणः॥६६

**परित्याग इति**—न दुःखेन व्याकुलिते ईक्षणे यस्य सः।६६

रामं प्रणम्य सौमित्रिः शीघ्रं गृहमगात् स्वकम्।
ततोऽगात् सरयूतीरमाचम्य स कृताञ्जलिः॥६७
नव द्वाराणि संयम्य मूर्ध्नि प्राणमधारयत्।
यदक्षरं परं ब्रह्म वासुदेवाख्यमव्ययम्॥६८
पदं तत्परमं धाम चेतसा सोऽभ्यचिन्तयत्।
वायुरोधेन संयुक्तं सर्वे देवाः महर्षयः॥६९

**नव द्वाराणीति**—नव द्वाराणि चक्षुषी कर्णौ नासिके मुखं पायूपस्थे ब्रह्मरन्ध्रे चेति। अभ्यचिन्तयत् वासुदेवोऽहमित्यध्यायत्।६८-६९।

साग्नयो लक्ष्मणं पुष्पैस्तुष्टुवुश्च समाकिरन्।
अदृश्यं विबुधैः कैश्चित् सशरीरं स वासवः॥
गृहीत्वा लक्ष्मणं शक्रः स्वर्गलोकमथागमत्॥७०

**साग्नय इति**—कैश्चिदपि विबुधैरदृश्यं लक्ष्मणावेशरूपं नित्यविहारस्थलयात्रासमये

साग्नयो देवाः पुष्पैः समाकिरन् तुष्टुवुश्च सशरीरं येन शरीरेण वासुदेवोऽहमित्यध्यायत् तेन सहितं वासुदेवाख्यं लक्ष्मणं, गृहीत्वा वासवः स्वर्गमगमत्।७०

ततो विष्णोश्चतुर्भागं तं देवं सुरसत्तमाः।
सर्वे देवर्षयो दृष्ट्वा लक्ष्मणं समपूजयन्॥७१

**तत इति**–विष्णोः प्रद्युम्नानिरुद्धसङ्कर्षणवासुदेवरूपचतुर्व्यूहस्य चतुर्भागं वासुदेवाख्यं लक्ष्मणं तं सङ्कर्षणं देवं च सर्वे सुरसत्तमाः देवर्षयश्च दृष्ट्वा समपूजयन्।७१

लक्ष्मणे हि दिवमागते हरौ, सिद्धलोकगतयोगिनस्तदा।
ब्रह्मणा सह समागमन्मुदा, द्रष्टुमाहितमहाहिरूपकम्॥७२

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे
उत्तरकाण्डे अष्टमोऽध्यायः।८



**लक्ष्मण इति**–लक्ष्मणे आवेशरूपे नित्यविहारे आवेशिनं प्राप्ते सति हरौ वासुदेवाख्ये अपिशब्देन सङ्कर्षणे च दिवं क्षीरसागरमागते सति ब्रह्मणा सह सिद्धलोकगता योगिनस्तमाहितं प्राप्तं शय्यात्वेन महाहिरूपं यस्य तं शेषशायिनारायणं द्रष्टुं मुदा समागमन्। एतेन सङ्कर्षणः स्वरूपेण स्वलोकं गतः एकरूपेण स्वर्लोकं गतः एकरूपेण शेषरूपेण शय्याऽभूत्। तत्र वासुदेवोऽशयिष्टेति ध्वनितम्। अयं भावः लक्ष्मणस्य रूपत्रयम् एकम् केवललक्ष्मणोक्त्या [सूचितन्नित्यविहारिश्रीरामानुजोऽपि आवेशरूपं तच्च श्रीरामेण सह नित्यविहारे लक्ष्मणं प्रापेति। द्वितीयं तृतीयन्तु सङ्कर्षणक्षीरसागरशायिवासुदेवनारायणरूपौ तौ च क्षीरसागरे शेषशायिरूपेण स्थिताविति। अयमेवार्थः 'शेषो बभूवेश्वरतल्पभूत' इत्यादिना वक्ष्यते।७२

इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-
सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां
बृहद्ब्रह्माण्डपुराणान्तर्गताध्यात्मरामायणटीकायां
व्यङ्ग्यप्रकाशिकायामुत्तरकाण्डे
अष्टमोऽध्यायः।८



## अथ नवमोऽध्यायः

सूत उवाच

लक्ष्मणन्तु परित्यज्य रामो दुःखसमन्वितः ।
मन्त्रिणो नैगमांश्चैव वसिष्ठञ्चेदमब्रवीत् ॥१
अभिषेक्ष्यामि भरतं मध्यराज्ये महामतिम् ।
अद्य चाहं गमिष्यामि लक्ष्मणस्य पदानुगः ॥२
एवमुक्ते रघुश्रेष्ठे पौरजानपदास्तदा ।
द्रुमा इव च्छिन्नमूला दुःखार्ताः पतिता भुवि ॥३
मूर्च्छितो भरतो वापि श्रुत्वा रामाभिभाषितम् ।
गर्हयामास राज्यं स प्राहेदं रामसन्निधौ ॥४
सत्येन च शपे नाहं त्वां विना दिवि वा भुवि ।
काङ्क्षे राज्यं रघुश्रेष्ठ ! शपे त्वत्पादयोः प्रभो ! ॥५
इमौ कुशलवौ राजन्नभिषिञ्चस्व राघव ! ।
कोशलेषु कुशं वीरमुत्तरेषु लवं तथा ॥६
गच्छन्तु दूतास्त्वरितं शत्रुघ्नानयनाय हि ।
अस्माकमेतद्गमनं स्ववासाय शृणोतु सः ॥७
भरतेनोदितं श्रुत्वा पतितास्ताः समीक्ष्य तम् ।
प्रजाश्च भयसंविग्ना रामविश्लेषकातराः ॥८
वसिष्ठो भगवान् राममुवाच सदयं वचः ।
पश्य तातादरात् सर्वाः पतिता भूतले प्रजाः ॥९
तासां भावानुगं राम ! प्रसादं कर्त्तुमर्हसि ।
श्रुत्वा वसिष्ठवचनं ताः समुत्थाप्य पूज्य च ॥१०

**तासामिति**—भावानुगं शान्तदास्यसख्यवात्सल्यप्रियतारूपपञ्चविधभावानुसारिणं प्रसादं कर्त्तुमर्हसि। पूज्य सम्मान्य ल्यबार्षः। एतेन सर्वेषामयोध्यावासिनां परा भक्तिर्व्यक्ता।१०

सस्नेहो रघुनाथस्ताः किं करोमीति चाऽब्रवीत्।
ततः प्राञ्जलयः प्रोचुः प्रजा भक्त्या रघूद्वहम् ॥११
गन्तुमिच्छसि यत्र त्वमनुगच्छामहे वयम्।
अस्माकमेषा परमा प्रीतिर्धर्मोऽयमक्षयः ॥१२
तवानुगमने राम! हृद्गता नो दृढा मतिः।
पुत्रदारादिभिः सार्द्धमनुयामोऽद्य सर्वथा ॥१३
तपोवनं वा स्वर्गं वा पुरं वा रघुनन्दन! ॥१४

**तपोवनमिति**–पुरं साकेतम्।१४

ज्ञात्वा तेषां मनोदार्ढ्यं कालस्य वचनं तथा।
भक्तं पौरजनञ्चैव वाढमित्याह राघवः॥
कृत्वैवं निश्चयं रामस्तस्मिन्नेवाहनि प्रभुः॥१५

**ज्ञात्वेति**–यथा कालस्य वचनं पूर्णे चायुषि नृष्वित्यादिरूपं तथा तेषां मनोदार्ढ्यं ज्ञात्वा।१५

प्रस्थापयामास च तौ रामभद्रः कुशीलवौ।
अष्टौ रथसहस्राणि सहस्रञ्चैव दन्तिनाम् ॥१६

**प्रस्थापयामासेति**–अष्टौ रथसहस्राणीत्यादिसंख्याकथनेनैतावन्त एव जीवाः युवयोः सेवायां स्थास्यति। अनन्तरं युवाभ्यां सह साकेतेऽपि मत्समीपं प्राप्स्यन्तीति सूचितम्।१६

षष्टिं चाश्वसहस्राणामेकैकस्मै ददौ बलम्।
वहुरत्नौ बहुधनौ हृष्टपुष्टजनावृतौ ॥१७
अभिवाद्य गतौ रामं कृच्छ्रेण तु कुशीलवौ।
शत्रुघ्नानयने दूतान् प्रेषयामास राघवः ॥१८
ते दूतास्त्वरितं गत्वा शत्रुघ्नाय न्यवेदयन्।
कालस्यागमनं पश्चादत्रिपुत्रस्य चेष्टितम् ॥१९
लक्ष्मणस्य च निर्याणं प्रतिज्ञां राघवस्य च।
पुत्राभिषेचनञ्चैव सर्वं रामचिकीर्षितम् ॥२०
श्रुत्वा तद्दूतवचनं शत्रुघ्नः कुलनाशनम्।
व्यथितोऽपि धृतिं बद्ध्वा पुत्रावाहूय सत्वरः ॥२१

अभिषिच्य सुबाहुं वै मथुरायां महाबलः।
यूपकेतुं च विदिशानगरे शत्रुसूदनः ॥२२
अयोध्यां त्वरितं प्रागात् स्वयं रामदिदृक्षया।
ददर्श च महात्मानं तेजसा ज्वलनप्रभम् ॥२३

**श्रुत्वेति**–व्यथितोऽपि मार्गश्रमेण व्यथितोऽपि दूतो धृतिं बद्ध्वा यद्वचनं प्राह तत् यद्वा श्रीरामः स्वसाकन्नयेत् न वेति शङ्कया व्यथितः कुलनाशनम् कुलस्यादर्शनं तद्वचनं श्रुत्वा पुत्रावाहूयाभिषिच्य च राममागात्, तेन मां विना श्रीरामो माऽन्तर्दध्यादिति, अतिशीघ्रमागत इति व्यक्तम्।२१-२३।

दुकूलयुगसंवीतं ऋषिभिश्चाक्षयैर्वृतम्।
अभिवाद्य रमानाथं शत्रुघ्नो रघुपुङ्गवम् ॥२४

**दुकूलेति**–अक्षयैः ऋषिभिः-अतिचिरं[1]जीविभिः वसिष्ठाद्यैः। उपलक्षणञ्चैतत् पुरवासिनाम्।२४

प्राञ्जलिर्धर्मसहितं वाक्यं प्राह महामतिः।
अभिषिच्य सुतौ तत्र राज्ये राजीवलोचन! ॥२५
तवानुगमने राजन्! विद्धि मां कृतनिश्चयम्।
त्यक्तुं नार्हसि मां वीर! भक्तं तव विशेषतः ॥२६
शत्रुघ्नस्य दृढां बुद्धिं विज्ञाय रघुनन्दनः।
सज्जीभवतु मध्याह्ने भवानित्यब्रवीद्वचः ॥२७
अथ क्षणात् समुत्पेतुर्वानराः कामरूपिणः।
ऋक्षाश्च राक्षसाश्चैव गोपुच्छाश्च सहस्रशः ॥२८
ऋषीणां देवतानाञ्च पुत्रा रामस्य निर्गमम्।
श्रुत्वा प्रोचू रघुश्रेष्ठं सर्वे वानरराक्षसाः ॥२९
तवानुगमने विद्धि निश्चितार्थान्हि नः प्रभो!।
एतस्मिन्नन्तरे रामं सुग्रीवोऽपि महाबलः ॥३०
यथावदभिवाद्याह राघवं भक्तवत्सलम्।
अभिषिच्याङ्गदं राज्ये आगतोऽस्मि महाबल! ॥३१

---

१. जीवद्भिः मत्पुस्तके।

तवानुगमने राम! विद्धि मां कृतनिश्चयम्।
श्रुत्वा तेषां दृढं वाक्यं ऋक्षवानररक्षसाम् ॥३२
विभीषणमुवाचेदं वचनं मृदु सादरम्।
धरिष्यति धरा यावत् प्रजास्तावत् प्रशाधि मे ॥३३
वचनाद्राक्षसं राज्यं शापितोऽसि ममोपरि।
न किञ्चिदुत्तरं वाच्यं त्वया मत्कृतकारणात् ॥३४

**विभीषणमिति**–मे वचनात् राक्षसं राज्यं शाधि–अत्र प्रशाधीत्युक्तं न तु स्थितो भवेति एतेन मुख्येन दिव्यरूपेण मत्समीपे स्थित एवासीति ध्वनिः।३३-३४।

एवं विभीषणं तूक्त्वा हनूमन्तमथाब्रवीत्।
मारुते! त्वं चिरञ्जीव ममाज्ञां मा मृषा कृथाः ॥३५

**एवमिति**–हे मारुते! त्वं चिरञ्जीव इत्येवं ममाज्ञां मृषा मा कृथाः। एतेन त्वमपि मुख्यदिव्यरूपेण मत्समीपे प्राप्तोऽसीति ध्वनिः। एतेषां रूपद्वयमस्ति एकरूपेण नित्य-विहारे, एकरूपेण चात्र स्थिता इति नित्यविहारिश्रीरामावरणे, उक्तत्वात्। एतेषां द्विरूपत्वे बहूनि प्रमाणानि सन्ति। तत्र हनूमतः 'माधुर्ये च वयस्योऽहमैश्वर्ये हनुमान् कपिः।' ३५

जाम्बवन्तमथ प्राह तिष्ठ त्वं द्वापरेऽन्तरे।
कृष्णोऽहं यादवो भूत्वा आगमिष्यामि भूतले ॥३६

**जाम्बवन्तमिति**।३६

तत्रैव च हरिष्यामि भुवो भारमभीक्ष्णशः।
मया सार्द्धं भवेद्युद्धं यत्किञ्चित्कारणान्तरे ॥३७

**तत्रैवेति**–चकारेण नन्दनन्दनकृष्णोऽहं वृन्दावने सदैव विहरामि तं द्रक्ष्यसीति सङ्गृह्यते।३७

ततस्त्वं यास्यसि स्वर्गं योगिनाञ्चैव दुर्लभम्।
ततस्तान् राघवः प्राह ऋक्षराक्षसवानरान्।
सर्वानिव मया सार्द्धं प्रयातेति दयान्वितः ॥३८

ततः प्रभाते रघुवंशनाथो,
विशालवक्षाः सितकञ्जनेत्रः।
पुरोधसं प्राह वसिष्ठमार्यं,
यान्त्वग्निहोत्राणि पुरो गुरो! मे ॥३९

ततो वसिष्ठोऽपि चकार सर्वं,
प्रास्थानिकं कर्म महद्विधानात्।
क्षौमाम्बरो दर्भपवित्रपाणि-
र्महाप्रयाणाय गृहीतबुद्धिः॥४०
निष्क्रम्य रामो नगरात् सिताभ्रा-
च्छशीव यातः शशिकोटिकान्तिः।
रामस्य सव्ये सितपद्महस्ता,
पद्मा गता पद्मविशालनेत्रा॥४१
पार्श्वे च दक्षेऽरुणकञ्जहस्ता,
श्यामा ययौ भूरपि दीप्यमाना।
शास्त्राणि शस्त्राणि धनुश्च बाणा,
जग्मुः पुरस्ताद् धृतविग्रहास्ते॥४२

**निष्क्रम्येति**—रामस्य सव्ये पार्श्वे पद्मविशालनेत्रा सितपद्महस्ता पद्मा लक्ष्मीरूपप्रेमासीता आगता ततो दक्षे पार्श्वे अरुणकञ्जहस्ता श्यामा मूलप्रकृतिरूपा छायासीता आययौ। भूः प्रेमासीतायां या सीतावेशरूपा, अतः दीप्यमाना सीता रामावेशानयनार्थमाययौ आविर्बभूव। अपि शब्दात् वेदवतीश्रीभूलीलाशक्तय आविर्बभूवुः। श्रीरामावेशायुधानि अस्त्रैः समाहितानि शस्त्राणि धनुर्बाणाः धृतविग्रहाः सन्तः पुरस्तादग्रे जग्मुः।४१-४२।

[१]शङ्खश्च चक्रञ्च गदा च पद्मं,
स्वरूपमास्थाय सविग्रहञ्च।
वेदाश्च सर्वे धृतविग्रहाश्च,
ययुश्च सर्वे मुनयश्च दिव्याः॥४३

**शङ्खश्चेति**—नारायणस्यायुधानि शङ्खादीनि सविग्रहं स्वरूपमास्थाय ययुः।४३

गच्छन्तमेवानुगता जनास्ते,
सपुत्रदाराः सह बन्धुवर्गैः
अनावृतद्वारमिवापवर्गं,
रामं व्रजन्तं ययुराप्तकामाः॥४४

**गच्छन्तमिति**—अनावृतद्वारमिवापवर्गं रामं व्रजन्तमिवेत्यनेन 'अन्यदत्तापवर्गं

---

१. रामान्य इति रा० व० पु०।

आवृतद्वार एव [1]'रामदत्तापवर्गोऽनावृतद्वारमेवेति ध्वनितम्। अनावृतद्वारमेवापवर्गं गुप्तसाकेतं व्रजन्तं राममाप्तकामाः सर्वे ययुः। अनावृतद्वार इवेति पाठे जनानां विशेषणम्, अनावृतद्वारः इव आप्तकामा जना व्रजन्तं राममपवर्गस्वरूपं रामं ययुः अनुययुरित्यर्थः। इव शब्देनैषां मुक्तिर्न भविता अत्रापि मुक्ता तत्रापि मुक्ताः।४४

सान्तःपुरः सानुचरः सभार्यः,
शत्रुघ्नयुक्तो भरतोऽनुयायात्।
गच्छन्तमालोक्य रसासमेतं,
श्रीराघवं पौरजनाः समस्ताः॥४५

**सान्तः पुर इति**—रसयाऽऽविर्भूतगुप्तसाकेतभूम्या समेतं सहितम्।४५

सबालवृद्धाश्च ययुर्द्विजाग्र्याः,
सामात्यवर्गाश्च समन्त्रिणो ययुः।
सर्वे गताः क्षत्रमुखाः प्रहृष्टाः,
वैश्याश्च शूद्राश्च तथा परे च॥४६
सुग्रीवमुख्या हरिपुङ्गवाश्च,
स्नाता विशुद्धा शुभशब्दयुक्ताः।
न कश्चिदासीद् भयदुःखयुक्तो,
दीनोऽथवा बाह्यसुखेषु सक्तः॥४७
आनन्दरूपानुगता विरक्ता,
ययुश्च रामं पशुभृत्यवर्गैः।
भूतान्यदृश्यानि च यानि तत्र,
ये प्राणिनः स्थावरजङ्गमाश्च॥४८
साक्षात् परात्मानमनन्तशक्तिं,
जग्मुर्विरक्ताः परमेकमीशम्।
नासीदयोध्यानगरे तु जन्तुः,
कश्चित्तदा राममनानुयातः॥४९

**साक्षादिति**—रामम् असम्यक् अनुयातो न भवतीति राममनानुयातः।४९

---

१. रामदत्तापवर्गस्तु, रा० व० पु०।

शून्यं बभूवाखिलमेव तत्र,
पुरङ्गते राजनि रामचन्द्रे।
ततोऽतिदूरं नगरात्स गत्वा,
दृष्ट्वा नदीं तां हरिनेत्रजाताम्॥५०
ननन्द रामः स्मृतपावनोऽतो,
ददर्श चाशेषमिदं हृदिस्थम्।
अथागतस्तत्र पितामहो महान्,
देवाश्च सर्वे ऋषयश्च सिद्धाः॥५१

**शून्यमिति**–राजनि आविर्भूतप्रेमसीतावेशधनुर्बाणादिशस्त्रादिप्रकटायोध्यासहिते रामचन्द्रे राजद्विभुजश्रीरामचन्द्रावेशे पुरं वाङ्मनसगोचरातीतायोध्याख्यं प्राप्ते सति अखिलं शून्यं बभूव। नित्यविहारिश्रीरामस्य स्वनित्यधामप्राप्तिमुक्त्वा सपरिकरस्य नारायणस्य धामप्राप्तिमाह तत इत्यादिना। ततः श्रीरामान्तर्द्धानानन्तरं सः रामवेषधारी नारायणो नगरादतिदूरं गत्वा हरिनेत्रजातां तां नदीं सरयूं दृष्ट्वा ननन्द। स्मृतं पावनं स्वीयं चतुर्भुजरूपं येन सः अशेषं हृदिस्थमिदं चतुर्भुजं ददर्श च। अथ च चतुर्भुजरूपस्मरणानन्तरं ब्रह्मादय आगता। हरिनेत्रजातामित्यनेन नित्यप्रमोदवनपरिसरवाहिनीसरयूः श्रीरामेण सह गुप्ताऽभूदिति। इयन्तु श्रीरामध्यानानन्दजनितनारायणाश्रुपातो मानसरोवरे ब्रह्मणा स्थापितः तत उत्पन्नेयमित्याख्यायिका सत्योपाख्यानादिषु प्रसिद्धा।५०-५१।

विमानकोटीभिरपारपारं,
समावृतं खं सुरसेविताभिः।
रविप्रकाशाभिरभिस्फुरत्स्वं,
ज्योतिर्मयं तत्र नभो बभूव॥५२
स्वयंप्रकाशैर्महतां महद्भिः,
समावृतं पुण्यकृतां वरिष्ठैः।
ववुश्च वाताश्च सुगन्धवन्तो,
ववर्ष वृष्टिः कुसुमावलीनाम्॥५३
उपस्थितैर्देवमृदङ्गनादै,
र्गायत्सु विद्याधरकिन्नरेषु।
रामस्तु पद्भ्यां सरयूजलं सकृत्,
स्पृष्ट्वा परिक्रामदनन्तशक्तिः॥५४

ब्रह्मा तदा प्राह कृताञ्जलिस्तं,
राम परात्मन्! परमेश्वरस्त्वम्।
विष्णुः सदानन्दमयोऽसि पूर्णो,
जानासि तत्त्वं निजमैशमेकम्॥५५

**ब्रह्मेति**–निजं स्वात्मीयमेकं समाभ्यधिकरहितं तत्त्वं ऐशं सर्वैरीशैरुपास्यं, 'तमीश्वराणां परमं महेश्वरम्' इत्यादि श्रुतेः। नित्यविहारिश्रीरामं जानासि, 'राम एव परं ब्रह्म राम एव परन्तपः। राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम्' इति श्रुतेः। 'रामः पूर्णतमः श्रीमान् सच्चिदानन्दविग्रहः। अयोध्यां क्वापि संत्यज्य पादमेकं न गच्छति'॥ इति वसिष्ठसंहितोक्तेश्च। तेनास्य ये ये अवाङ्मनसगोचरं श्रीरामनामादिकं जानन्ति ते ते त्वन्नामादिभिरेव सर्वथा तत्त्वमेव जानन्तीत्याशयः। तेन श्रीरामोऽन्यद्रूपादिकं यद्यत् धारणं करोति [1]तत्तत्त्वद्रूपत्वेन। स्वयं तु नित्यरासे एव स्थित इति व्यज्यते। 'उपासकानां कार्यर्थं ब्रह्मणो रूपकल्पना' इति श्रुतेः। विष्णुर्व्यापकं ब्रह्म त्वमेव, परात्मन्! सर्वान्तिर्यामिन्! त्वमेव परमेश्वरः साकेतोत्तरद्वारवासि-आदिनारायणरूपः सदानन्दमयोऽसि।५५

तथापि दासस्य ममाखिलेश!
कृतं वचो भक्तपरोऽसि विद्वन्!।
त्वं भ्रातृभिर्वैष्णवमेकमाद्यं,
प्रविश्य देहं परिपाहि देवान्॥५६
यद्वा परं वा यदि रोचतेऽन्तः,
प्रविश्य देहं परिपाहि नस्त्वम्।
त्वमेव देवाधिपतिश्च विष्णु,-
र्जानन्ति न त्वां पुरुषा विना माम्॥५७

**तथापीति**–तथापि एवम्भूतोऽपि त्वं यतो भक्तपरोऽसि अतः भ्रातृभिः सह मे वचः कृतं वैष्णवदेहं साकारनारायणरूपम्, यद्वा परं देहं निराकारप्रकाशब्रह्मरूपं प्रविश्याऽस्मान् पाहि रक्षेत्यर्थः। सर्वेषामादिनारायणरूपत्वात् यस्माद् वैकुण्ठाद् यो य आगतः स तं तं वैकुण्ठं प्रविशत्विति भावः।५६-५७।

---

१. तत्तत्त्वद्रूपत्वम् मदीयपुस्तके।

सहस्रकृत्वस्तु नमो नमस्ते,
प्रसीद देवेश ! पुनर्नमस्ते ।
पितामहप्रार्थनया स रामः,
पश्यत्सु देवेषु महाप्रकाशः ॥५८

मुष्णंश्च चक्षूंषि दिवौकसां स,
बभूव चक्रादियुतश्चतुर्भुजः ।
शेषो बभूवेश्वरतल्पभूतः,
सौमित्रिरत्यद्भुतभोगधारी ॥५९

**मुष्णंश्चेति**–स रामो नारायणावताररामः। चक्रादियुतः, यानि शङ्खचक्राद्यायुधानि पुरुषविग्रहास्तानि हस्तेष्वभवन्निति भावः। चतुर्भुजो बभूव [1]ह्यादिनारायणरूपं दर्शयामासेत्यर्थः।५९

बभूवतुश्चक्रधरौ च दिव्यौ।
कैकेयिसूनुर्लवणान्तकश्च ॥६०

**बभूवतुरिति**–भ्रातृयात्राप्रसङ्गात् पूर्वोक्तमनुवदति [2]पूर्वोपलक्षणस्य सङ्कर्षणनारायणरूपभेदः तत्र ईश्वरस्य [3]नारायणरूपस्य सङ्कर्षणरूपं तल्पभूतः शेषो बभूव। कैकेयिसूनुः दिव्यचक्रादिधरो भरतो रमावैकुण्ठवासिनारायणो बभूव। लवणान्तकः शत्रुघ्नोऽपि तथाभूतो भूमनारायणो बभूवेत्यर्थः। तेन यदा लक्ष्मणो नित्यरासञ्जगाम तदैव नित्यपरिकरौ भरतशत्रुघ्नावपि जग्मतुरिति ध्वनिः। 'वैकुण्ठेशस्तु भरतः क्षीराब्धीशश्च लक्ष्मणः। शत्रुघ्नस्तु स्वयं भूमा रामसेवार्थमागता ॥' इति नारदपञ्चरात्रोक्तेः। बालकाण्डेऽवतारकथनोपक्रमे यदुक्तमुपसंहारेऽपि तदेव सङ्गतमिति।६०

सीता च लक्ष्मीरभवत्पुरा वै,
रामो हि विष्णुः पुरुषः पुराणः ।
सहानुजः पूर्वशरीरकेण,
बभूव तेजोमयदिव्यमूर्तिः ॥६१

**सीतेति**–पद्मारूपेणागता सीता पुरा इव वै शब्द इवार्थे-लक्ष्मीरभवत् स्वकीयं रूपं धृतवती। रामस्तु पुराणः पुरुष आदिनारायणः पूर्वशरीरकेण साकेतपञ्चमावरणस्योत्तरद्वारिस्थितवैकुण्ठाधीशरूपेण बभूवेत्यर्थः।६१

---

१. स्वादि, रा० व० पु०। २. पूर्वोक्त रा० व० पु०। ३. नारायणस्य मत्पुस्तके।

विष्णुं समासाद्य सुरेन्द्रमुख्या,
देवाश्च सिद्धा मुनयश्च यक्षाः।
पितामहाद्याः पितरः परेशं,
स्तवैर्गृणन्तः परिपूजयन्तः ॥६२
आनन्दसंप्लावितपूर्णचित्ताः,
बभूविरे प्राप्तमनोरथास्ते।
तदाह विष्णुर्द्रुहिणं महात्मन्!
ह्येते हि भक्ता मयि चानुरक्ताः ॥६३
यान्तं दिवं मामनुयान्ति सर्वे,
तिर्यक्शरीरा अपि पुण्ययुक्ताः।
वैकुण्ठसाम्यं परमं प्रयान्तु,
समाविशस्वाशु ममाज्ञया त्वम् ॥६४

**यान्तमिति**–वैकुण्ठसाम्यं वैकुण्ठस्य साम्यं येन तत् परमं पदमिति शेषः। समाविशस्व प्रवेशयस्व। परमत्वञ्च साकेतपञ्चमावरणोत्तरषष्ठावरणे स्थितप्रमोदवनस्थलविशेषस्य सान्तानिकत्वेन वर्णनात् साकेतसन्निधानं, प्रयुक्तत्वम्। साकेतसप्तावरणप्रमाणन्तु तिलकान्ते वर्णयिष्यामः।६४

श्रुत्वा हरेर्वाक्यमथाब्रवीत्कः,
सान्तानिकान् यान्तु विचित्रभोगान्।
लोकान् मदीयोपरि दीप्यमानां-
स्त्वद्भावयुक्ताः कृतपुण्यपुञ्जाः ॥६५
ये चापि ते राम! पवित्रनाम,
गृणन्ति मर्त्या लयकाल एव।
अज्ञानतो वाऽपि भजन्तु लोकां-
स्तानेव योगैरपि चाधिगम्यान् ॥६६

**श्रुत्वेति**–हरेर्वाक्यं श्रुत्वा को ब्रह्माऽब्रवीत्। विचित्रभोगान् मदीयोपरि दीप्यमानान् सान्तानिकान् लोकान् प्रमोदवनस्थलविशेषान् यान्तु। तेन ब्रह्मण आचार्यत्वं व्यक्तम्। ये मनुष्या लयकाले मरणकाले एव न तु ततः प्रागपि कदाचित् तत्राप्यज्ञानत एव त्वत् पवित्रनाम रामेति गृणन्ति तेऽपि तानेव लोकान् भजन्तु। तेन एते तु तत्रत्या रामोपासकाः कर्मसम्बन्धगन्धरहिता एव तं प्राप्नुवन्त्येवेति किं वक्तव्यमिति काव्यार्थापत्तिरलङ्कारो

व्यक्तः। रामोपासकस्य विधिनिषेधाभावे प्रमाणं 'यथा विधिनिषेधौ हि मुक्तं नैवोपसर्पतः। तथा न स्पृशतो रामोपासकं विधिपूर्वकमिति।' [1]'लयकाले इत्यनेन नामोच्चारणेन सर्वपापक्षयो भवति। पुनश्च यदा पापं करोति तदा पापी भवति। मरणकाले तत्करणासम्भवात् सद्योमुक्तिं प्राप्नोतीति सूचितम्'[2]।६५-६६।

ततोऽतिहृष्टा हरिराक्षसाद्याः, स्पृष्ट्वा जलं त्यक्तकलेवरास्त।
प्रपेदिरे प्राक्तनमेव रूपं, यदंशजा ऋक्षहरीश्वरास्ते ॥६७

**तत इति**—त्यक्तानि कलेवराणि स्वलीनाः सूर्याद्यंशाः यैः, श्रीरामसेवार्थं स्वस्वांशिषु सुग्रीवादिषु स्वस्वांशेन सूर्यादयो लीनास्ते त्यक्ताः इत्यर्थः। ते आवेशिनो नित्यपार्षदाः प्राक्तनमेव रूपं सान्तानिकविहारिपूर्वरूपं प्रपेदिरे। यदंशजाः ऋक्षहरीश्वरा ऋक्षहरीश्वरकलेवराणि तत् प्राक्तनं स्वस्वांशिनं सूर्यादिकं प्रपेदिरे प्रापुरित्यर्थः। सरय्वां शवो नासीदिति भावः।६७

प्रभाकरं प्राप हरिप्रवीरः, सुग्रीव आदित्यजवीर्यजत्वात्।
ततो निमग्ना सरयूजलेषु, नरा परित्यज्य मनुष्यदेहान् ॥६८
आरुह्य दिव्याभरणा विमानं, प्रापुश्च ते [3]सान्तनिकाख्यलोकान्।
तिर्यक्प्रजाता अपि रामदृष्टाः, जलं प्रविष्टा दिवमेव याताः ॥६९
दिदृक्षवो जानपदाश्च लोका, रामं समालोक्य विमुक्तसङ्गाः।
स्मृत्वा हरिं लोकगुरुं परेशं, स्पृष्ट्वा जलं स्वर्गमवापुरञ्जः ॥७०

तदेव दर्शयति **प्रभाकरमित्यादि**—सुग्रीवः सुग्रीवशरीरम्। उपलक्षणञ्चैतदन्येषाम्। मनुष्यं ददातीति मनुष्यदा सा ईहा येषु भावेषु तान् मनुष्यदेहान् मनुष्यभावनान्। सान्तनिकाख्यलोकान् 'अपि मासं मसं कुर्यात् छन्दोभङ्गं न कारयेत्' इत्युक्तेः। वानरऋक्षमनुष्यादयो ये ये देवांशाः ते अंशाः स्वस्वशरीरेण देवेषु लीना। ये तिर्यक्प्रजाता कृमिपक्षिमृगाद्या रामेण दृष्टा सन्तोऽन्यदेशीया अत्रागताः ये जलप्रविष्टा मत्स्यादयः तेऽपि तेनैव शरीरेण दिवं साकेतं प्राप्ता दिव्यरूपेण सान्तानिकं प्राप्ता इति भावः। ये रामयात्रां श्रुत्वा तद्दर्शनार्थमागताः पश्चात् प्राप्तास्तेऽपि हरिं श्रीरामं स्मृत्वा समालोक्य स्वर्गमपवर्गमापुः। तेनायोध्यायां श्रीरामः सदा वर्तमान एव, तेनावाङमनसगोचरश्रीरामशालग्रामयोर्यथाऽभेदःस्तथाऽत्रत्याऽयोध्यासाकेतयोरभेद इति दृष्टान्तालङ्कारो व्यक्तः।६८-७०।

---

१. तः २. पर्यन्तांशः न विद्यते रा० व० पु०। ३. सान्तानिक इति प्रयोक्तव्ये ह्रस्वपाठः छन्दोभङ्गभिया।

एतावदेवोत्तरमाह शम्भुः, श्रीरामचन्द्रस्य कथावशेषम्।
यः पादमप्यत्र पठेत् स पापाद्विमुच्यते जन्मसहस्रजातात्॥७१

**एतावदिति**—कथावशेषं श्रीरामो लक्ष्मणमुपदिश्य नित्यविहारे स्थित इत्येवं संवर्ण्य तूष्णीम्भूतं शङ्करं प्रति यद्रामायणीयावशिष्टकथारूपं पार्वत्या पृष्टं तस्योत्तरं शम्भुः एतावदेवाह।७१

दिने दिने पापचयान् प्रकुर्वन्, पठेन्नरः श्लोकमपीह भक्त्या।
विमुक्तसर्वाघचयः प्रयाति, रामस्य सालोक्यमनन्यलभ्यम्॥७२

**दिने दिन इति**—श्लोकं पादं वा साहचर्याद् वर्णमपि यः पठेत् जन्मसहस्रकृतपापैर्मुक्तो भवेत्। 'चरितं रघुनाथस्य शतकोटिप्रविस्तरम्। एकैकमक्षरं पुंसां महापातकनाशनम्॥' इत्युक्तेः।७२

आख्यानमेतद्रघुनायकस्य, कृतं पुरा राघवचोदितेन।
महेश्वरेणाप्तभविष्यदर्थं, श्रुत्वा तु रामः परितोषमेति॥७३

**आख्यानमिति**—रघुनाथस्यैतदाख्यानं भविष्यदर्थं भविष्यदर्थो यत्र तत् राघवचोदितेन महेश्वरेणापि पुरा कृतम् अपिशब्दादन्यैर्वाल्मीक्यादिभिः कृतम्। भविष्यदर्थमित्यनेन श्रीरामायणस्यानादित्वं व्यक्तम्। रामः श्रुत्वा परितोषं परीत्यनेन सर्वाऽपि कथा वाच्य-व्यङ्ग्यार्थरूपा सत्यभूतेति ध्वनिः।७३

रामायणं काव्यमनन्तपुण्यं, श्रीशङ्करेणाभिहितं भवान्यै।
भक्त्या पठेद्यः शृणुयात् स पापैर्विमुच्यते जन्मशतोद्भवैश्च॥७४

**रामायणमिति**—अनन्तपुण्यम् अनन्तं क्षयशून्यं पुण्यम्। यज्ञादिकृतपुण्यं तु सक्षयमिति भावः। 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतेः।७४

अध्यात्मरामं पठतश्च नित्यं, श्रोतुश्च भक्त्या लिखितुश्च रामः।
अतिप्रसन्नश्च सदा समीपे, सीतासमेतः श्रियमातनोति॥७५

**अध्यात्मराममिति**—श्रियमा[1]तनोत्विति सूतोक्त्या व्यासोक्त्या च एतदाख्यानस्य माहात्म्यमपि सत्यमेव न त्वर्थवाद इति। अध्यात्मरामायणमिति वक्तव्ये अध्यात्मराम-मित्युक्तं तेन श्रीरामस्वरूपमेवेदमित्यर्थः।७५

---

१. आतनोतीत्युचितः।

रामायणं जनमनोहरमादिकाव्यं,
ब्रह्मादिभिः सुरवरैरपि संस्तुतञ्च।
श्रद्धान्वितः पठति यः शृणुयात्तु नित्यं,
विष्णोः प्रयाति सदनं स विशुद्धदेहः॥७६

इति श्रीबृहद्ब्रह्माण्डपुराणेऽध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे नवमोऽध्यायः।९

⊙

एतद्रामायणपाठफलमुक्त्वेदानीं यदर्थमुपजीव्योक्तं तत् फलमाह-रामायणमित्यादिना। आदिकाव्यं वाल्मीकीयरामायणम्। एतच्चरितस्य वाङ्मनसगोचरातीतत्वात् श्रीरामकथनमन्तरा सर्वैरपि वक्तुमशक्यम्। यद् श्रीरामेण शिवायोक्तं तदेव वाल्मीकिना विस्तरेणोक्तमित्यर्थः। एतेन पार्वत्यै श्रीशिवेनोक्तः स एव वाल्मीकीयरामायणार्थ इति व्यक्तम्।७६

प्रियायै गिरिश[1]स्तस्मै गूढं व्याख्यातवान् स्वयम्।
वाल्मीकिना च तत्प्रोक्तं विस्तृतं सुमनोहरम्॥
श्रीरामो जयति[2]सुरासरसिकः श्रीजानकीसंयुतः,
श्रीवाणी हनुमान्हरो गणपतिर्वाल्मीकिकृष्णौ शुकः।
श्रीगौरीपतिना प्रकाशितमिदञ्चाध्यात्मरामायणं,
पूर्णब्रह्मविचारवर्यगुरवः श्रीमत्प्रियादासकाः॥
अध्यात्मरामायणस्य टीका व्यङ्ग्यप्रकाशिका।
श्रीविश्वनाथस्वान्तःस्थश्रीरामेण प्रकाशिता॥

इति श्रीसिद्धिश्रीमहाराजाधिराजश्रीमहाराजश्रीराजाबहादुर-सीतारामचन्द्रकृपापात्राधिकारिविश्वनाथसिंहजूदेवविरचितायां बृहद्ब्रह्माण्डपुराणान्तर्गताध्यातमरामायणटीकायां व्यङ्ग्यप्रकाशिकायामुत्तरकाण्डे नवमोऽध्यायः।९



---

१. तस्यै इत्युचितः। २. स्वरासरसिकः इति स्वीकृत्य वृत्तदोषोद्धारः शक्यः।

# परिशिष्टम्

## विचित्रा व्युत्पत्तयः

⊙

अदृश्यः=अनधिकः दृश्यो यस्मात् सः सर्वदृश्य इत्यर्थः।

अदेहः=न विद्यते देहो यस्मात् सः स्वस्मरणेन संसारनिवर्तकः।

अवनीसुता=अवनी सुता यस्याः सा मूलप्रकृतिः।

अद्वितीयः=अः वासुदेवः द्वितीयः यस्य सः।

अधमः=न धमति शब्दविषयो भवतीति अधमः, न शब्दवाच्यः।

अद्वयत्वतः=अः श्रीरामः द्वयं द्वितीयः स्वामित्वेन यस्य सः तस्य भावः तस्मात्।

अध्यात्मरामगङ्गा=अध्यात्मे परमात्मनि श्रीरामे रमते बोधकत्वेन विहरतीति अध्यात्म-रामः (रामायणमित्यर्थः) स एव गङ्गेति।

अचलवारिसिन्धुवत्=अचलं वारि यस्मिन् स अचलवारिः समुद्रः तस्मिन् सिन्धुवत्।

अनन्तपारः=न अन्तो यस्य, तादृशः पारो यस्य सः।

आत्मारामायरामाय=आत्मनि स्वरूपे आरामः क्रीडा येषां ते (शुकादयः) तान् अयते परनारायणादिरूपेण प्राप्नोतीति आत्मारामायः परब्रह्मप्रकाशित्वेन तद्रूपप्रतीत्या आत्मारामायः रामः तस्मै।

क्षत्रियाधमः=क्षत्रिया अधमा यस्मात् सः।

कृपणम्=परमसमर्थम् (कृपू सामर्थ्ये धातोः ल्युट्)।

गतासुः=गता रामे प्राप्ता असवः प्राणाः यस्य सः।

ज्ञानयोगाख्यम्=ज्ञानं त्वत्सम्बन्धि, तदेव योगः उपायो यस्य सः, स एव आख्या यस्य सः, प्रेमापरपर्यायः। यद्वा—ज्ञानं त्वत्सम्बन्धि योगः तत्प्राप्तिश्च यस्मिन् साकेते सः आख्या ख्यातिर्यस्य तम्।

दुष्टात्मा=दुष्टानामप्यात्मा।

नराधमः=न राधसे नराः ते अधमाः यस्मात् सः नरोत्तम इत्यर्थः।

नारायणः=नारं जीवसमूहः तदयनं स्थानं यस्य अन्तर्यामितया स्थितत्वात् सः।

निराकृतिः=निर्गता आकृतयो येन सः। निर्गताः आविर्भूताः आकृतयो यस्मात् सः।

निर्विषयज्ञानम्=निर्गताः विषया यस्मात् तत् निर्विषयम् आनन्दात्मकं नामरूपलीला-धामज्ञानं परिचायकं यस्य तम्।

परात्मा=परस्य ब्रह्मणोऽपि प्रकाशित्वेनात्मा इति।

परः=पिपर्ति इति परः पूर्णः।

परानन्दरूपम्=परेषां शत्रूणां आनन्दम् आनन्दजनकं रूपं यस्य तम्।

परात्मानम्=परः श्रीरामः आत्मनि स्वरूपे आवेशेन यस्य सः नारायणः तम्।

भार्या=भर्तारं प्रेमातिशयेन आयाति इति (पृषोदरादित्वात् तृचो लोपः)।

भार्या=सृष्टिस्थितिसंहाररूपे आर्याः मुख्याः तेषां भ्रमणकारिणी मूलप्रकृतिः।

महान्तः=महतः व्यापकब्रह्मणः अन्तःसमाप्तिः यस्मिन् सः।

मनुष्यदेहान्=मनुष्यं ददातीति मनुष्यदा, सा ईहा येषु भावेषु तान्।

मायामनुष्यः=मां लक्ष्मीं याति अन्तर्यामितया व्याप्नोति इति माया सीता तया सहितो मनुष्यः।

मुनिमान्यः=मुनिभिः मननेन भवत्प्रसादलभ्यदिव्यदृष्टिभिः मान्यते बोध्यते सेवकान् प्रति इति।

यमान्तिकम्=यमाः विद्यन्ते येषां ते यमाः योगिनः, तेषामन्तिकम्, अन्ते प्राप्यम्।

योगिगम्यम्=योगः भगवद्दत्तषष्ठशरीरसम्बन्धः सोऽस्ति येषामिति योगिनः, तैः गम्यम्।

रसातलम्=रसः आसमन्तात् तलते प्रतिष्ठते यस्मिन् तत्।

राघवः=रंघते सर्वत्र गच्छतीति रघुः रघुरेव राघवः।

रक्षः कुलावमः=रक्षः कुलमवमं यस्मात् सः रक्षः कुलश्रेष्ठः।

रघुपतिः=रघवो जीवाः तेषां पतिः।

रामायणम्=ईयते प्राप्यते इति अयनं बाहुलकात् कर्मणि ल्युट्। रामः अयनं प्रतिपाद्यतया यत्र तद् रामायणम्। यद्वा-रामस्यायनं गृहं रामायणम्। यद्वा-राम ईयते अनेनेति करणे ल्युट्।

रामः=रमणात् मुक्तानां रासमण्डलगतानां रमणात् रामः। रमणं रामः भावे घञ्। तत्करोति रामयति-(णिच्) रामयति इति रामः (णिजन्तादच्)।

रघवः=रंघन्ते लोकाल्लोकान्तरं गच्छन्तीति रघवो जीवाः।

विभवाः=विशिष्टो भवः संसारो येभ्यः तादृशाः।

शाखामृगाश्रयः=शाखाः वेदशाखाः मार्गतीति शाखामृगो ब्रह्मा, तस्याश्रयः।

सीता=सा (लक्ष्मी) च अश्च आश्च ऐश्च एतेषां समाहारः सि लक्ष्मीवासुदेवपितामहमहेश्वरं, तत् इता अन्तर्यामितया प्राप्ता।

सीतारामः=रासे सीतया आ नित्यं रमते इति।

सर्वलोकः=सर्वे लोकाः यस्मिन् सः।

सुमध्यमा=शोभनः मध्यमः रजोगुणो यस्याः सा।

सौधम्=सुधायाः समूहः सौधः तम्।

सत्तामात्रम्=सत्तया शक्त्या जगत् माति त्राति त्रायते इति सत्तामात्रस्तम्। यद्वा सत्तारूपं मां शोभां त्रायते इति तम्। स्वप्रकाशेन ब्रह्मणा नित्ययुक्तमित्यर्थः।

स्वर्गः=स्वरिति स्वर्गे गीयते इति।

स्त्रीवधम्=स्त्रियः मूलप्रकृतेः सकाशाद् वधम् इति।

हरिः=हरति भक्तानां क्लेशमिति।

●

## काश्चन सूक्तयः

⊙

| | |
|---|---|
| असत्याद् भीतिरधिका महतां नरकादपि | २।९।३५ |
| अतः सङ्गः परित्याज्यो दुष्टानां सर्वदैव हि | २।२।३ |
| चिन्ता कार्यविनाशिनी | ६।५८६ |
| ज्येष्ठो भ्राता पितुः समः | ४।२।३५ |
| तत्सत्यमिति न ग्राह्यं भ्रान्तवाक्यं यथा सुधीः | २।९।३३ |
| दुःसङ्गी च्यवते स्वार्थात् यथेयं राजकन्यका | २।२।८३ |
| दैवाधीनमिदं भद्रे ! जीवता किं न दृश्यते | ६।१०।३ |
| परित्यागो वधो वापि सतामेवोभयं मतम् | ७।८।६६ |
| प्रतिज्ञाते परित्यक्ते धर्मो भवति निष्फलः | ७।८।६२ |
| यादृग्भवति वै राजा तादृश्यो नियतं प्रजाः | ७।४।५२ |
| लोकं पुनानाः सञ्चारैरतस्तान्नातिभाषयेत् | ४।२।६३ |
| विधिर्बलीयानिति मे मनीषा | २।७।८६ |
| विनाशमभिकाङ्क्षन्ति ज्ञातीनां ज्ञातयः सदा | ४।२।३० |
| शपे त्वत्पादयोः प्रभो ! | ७।९।५ |
| सतां मनः स्वच्छजलं पद्मकिञ्जल्कवासितम् | ४।१।४ |
| सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्।<br>द्वयमेतद्धि जन्तूनामलङ्घ्यं दिनरात्रिवत्॥ | २ |
| स्वकर्मसूत्रग्रथितो हि लोकः | २।६।६ |
| हिंसा यत्र न कस्यचित् | ७।१।४० |

●

## टीकायां निर्दिष्टग्रन्थानां नामानि

⊙

१. अगस्त्यसंहिता
२. अनादिरामायणीयलीला
३. आनन्दसंहिता
४. गरुडपुराणम्
५. गीतावलीरामायण (हिन्दी)
६. छान्दोग्योपनिषद्
७. जैमिनीयाख्यायिका
८. नारदपाञ्चरात्रम्
९. पद्मपुराणम्
१०. पारमहंसपरमसिद्धान्तसंहिता
११. पुराणसमुदायमाहात्म्यम्
१२. प्रश्नरामायणम्
१३. बृहद्ब्रह्मसंहिता
१४. बृहद्वामनपुराणम्
१५. ब्रह्मसंहिता
१६. ब्रह्मयामलम्
१७. ब्रह्मसूत्रम् (मध्वाचार्यभाष्यम्)
१८. भगवद्गीता
१९. भक्तिरसामृतसिन्धु :
२०. भाषाप्रबन्धः
२१. यजुर्वेदः
२२. याज्ञवल्क्यीयसंहिता
२३. रामतत्त्वप्रकाशः
२४. रामतापनीयोपनिषद्
२५. वशिष्ठसंहिता
२६. वायुपुराणम्
२७. वाल्मीकीयरामायणम्
२८. विश्वम्भरोपनिषद्
२९. विष्णुपुराणस्मृतिः
३०. विष्णुसहस्रनाम (शाङ्करभाष्यम्)
३१. वृन्दावनमाहात्म्यम्
३२. शाण्डिल्यसूत्रम्
३३. शिवसंहिता
३४. श्वेताश्वतरोपनिषद्
३५. श्रीमद्भागवतपुराणम्
३६. सत्योपाख्यानम्
३७. सदाशिवसंहिता
३८. सनत्कुमारसंहिता
३९. सुदर्शनसंहिता
४०. सुसिद्धान्तोत्तमः
४१. स्कन्दपुराणम्
४२. हनुमदुपनिषद्

●

## सहायकग्रन्थाः




१. वाल्मीकिरामायणम् (तृतीयसंस्करणम्), गीताप्रेस, गोरखपुरम्

२. वाल्मीकिरामायणम् (प्रथमसंस्करणम्), ओरियण्टल इन्स्टीट्यूट, बड़ौदा

३. आनन्दरामायणम् (प्रथमसंस्करणम्), पण्डित-पुस्तकालयः, काशी

४. अध्यातमरामायणम् (प्रथमसंस्करणम्), कलकत्ता संस्कृत सीरीज, कलकत्ता

५. अध्यात्मरामायणम् (षोडशसंस्करणम्) गीताप्रेस, गोरखपुरम्

६. भुशुण्डिरामायणम्-पूर्वखण्डम् (प्रथमसंस्करणम्), विश्वविद्यालयप्रकाशनम्, वाराणसी

७. श्रीमद्भागवतम् (द्वादशसंस्करणम्), गीताप्रेस, गोरखपुरम्

८. रामतापनीयोपनिषद् (प्रथमसंस्करणम्), गवर्नमेंट संस्कृत लाइब्रेरी, वाराणसी

९. संस्कृत साहित्य का इतिहास (अष्टमसंस्करणम्), शारदामन्दिर, वाराणसी

१०. रामभक्ति में रसिक सम्प्रदाय (प्रथमसंस्करणम्), अवधसाहित्यमन्दिरबलरामपुरम्, गोण्डा

११. रामभक्ति साहित्य में मधुर उपासना (प्रथमसंस्करणम्), बिहारराष्ट्रभाषापरिषद्, पटना

१२. भारतीय पाठालोचन की भूमिका (प्रथमसंस्करणम्), मध्यप्रदेश हिन्दी ग्रन्थ अकादमी, भोपालः

१३. रामकथा (तृतीयसंस्करणम्), हिन्दीपरिषद्, प्रयागविश्वविद्यालयप्रयागः

१४. राधावल्लभ सम्प्रदाय सिद्धान्त और साहित्य (प्रथमसंस्करणम्), नेशनल पब्लिशिंग हाउस, दिल्ली

१५. अध्यात्मरामायण एक विवेचनात्मक अध्ययन (प्रथमसंस्करणम्), अलंकार प्रकाशनम्, ६६६-झील, दिल्ली

१६. संस्कृत साहित्य को बान्धव नरेशों की देन (प्रथमसंस्करणम्), बलदेवप्रसाद अवस्थी, मार्तण्डप्रेस, रीवाँ

१७. हनुमन्नाटकम् (तृतीयसंस्करणम्), गुजराती मुद्रणालयः, बम्बई

१८. जानकीहरणम् (प्रथमसंस्करणम्), मित्रप्रकाशनम्, प्रयागः

१९. वैष्णवमताब्जभास्करः (प्रथमसंस्करणम्) श्री १०८ श्री स्वामी रामकृष्णानन्दजी महाराजः, जयपुरम्।

२०. जातकः (चतुर्थखण्डम्) : (प्रथमसंस्करणम्) हिन्दीसाहित्यसम्मेलनप्रयागः
२१. रामचरितमानस का तुलनात्मक अध्ययन (प्रथमसंस्करणम्), राधाकृष्ण-प्रकाशनम्, दिल्ली
२२. कैटलागस कैटलागारम् : डॉ० थियोडोर आफ्रेड—फैज स्टीनर वर्लाग् जी० विस्वाडेन (जर्मनी) १९६२
२३. न्यूकैटलागसकैटलागारम् डॉ० बी० राघवन्-मद्रास विश्वविद्यालयप्रकाशनम्, १९६८
२४. हिन्दी साहित्य कोशः (प्रथमसंस्करणम्), ज्ञानमण्डल लिमिटेड, वाराणसी
२५. हिन्दी साहित्य का इतिहास (प्रथमसंस्करणम्), नागरीप्रचारिणीसभा, वाराणसी
२६. हरिवंशपुराणम्, महाभारत, मुरादाबाद।
२७. ए हिस्ट्री आॅफ इण्डियन फिलासफी, यूनिवर्सिटी प्रेस, कैम्ब्रिज १९५५
२८. पुराण-विमर्शः (प्रथमसंस्करणम्), चौखम्बाविद्याभवन, वाराणसी–१
२९. भारतीयदर्शन (प्रथमसंस्करणम्), प्रकाशन ब्यूरो, सूचना-विभागः उत्तरप्रदेशसरकार, लखनऊ
३०. पुराणतत्त्वमीमांसा (प्रथमसंस्करणम्), हिन्दी-प्रचारक-मण्डलम् लखनऊ
३१. कम्बरामायणम् प्रकाशकः बिहारराष्ट्रभाषापरिषद्
३२. आचार्य सायण और माधव (प्रथमसंस्करणम्) हिन्दीसाहित्यसम्मेलनप्रयागः
३३. ब्रह्मसूत्रम् (माध्वभाष्यम्)
३४. सङ्गीतरघुनन्दनम् (संगमनीपत्रिकायां प्रकाशितम्)
३५. भविष्यपुराणम् प्रकाशकः खेमराजश्रीकृष्णदासः, बम्बई।
३६. ब्रह्माण्डपुराणम् प्रकाशकः खेमराजश्रीकृष्णदासः, बम्बई।
३७. रामरसिकावली प्रकाशकः खेमराजश्रीकृष्णदासः, बम्बई।
३८. हिस्ट्री आफ क्लासिकल्स संस्कृतलिट्रेचर प्रकाशकः, तिरुमलतिरुपीठदेवस्थान-मुद्रणालयः मद्रास।
३९. रामचरितमानस और वाल्मीकिरामायणम् (आनन्दप्रकाशनम्) फैजाबाद।



